# धर्मशास्त्रशब्दकोषः

(अ-ध)

ग्रन्थकारः

राष्ट्रपतिसम्मानितः पण्डितश्रीकुलमणिमिश्रशर्मा

## प्रथमभागः

ORISSAN ORIENTAL TEXT SERIES ( SANSKRIT)—15

# DHARMASASTRASABDAKOSA

( A—DHA )


by

PANDITA SRI KULAMANI MISHRA SHARMA
SAHITYA-DHARMASASTRACHARYA-VEDA SHASTRI
PRAKTANA-DHARMASASTRADHYAPAKA
SRI SADASIVA KENDRIYA SANSKRIT VIDYAPITHA, PURI.


## Vol.-I


Edided by

SRI BHAGABAN PANDA, M.A. Ph.D
SAHITYACHARYA
Editor



DIRECTORATE, OF TOURISM, SPORTS AND CULTURE.
ORISSA, BHUBANESWAR

उत्कलीय-प्राच्यग्रन्थमाला (संस्कृतम्)-१५

# धर्मशास्त्रशब्दकोषः

(अ-ध)

ग्रन्थकारः
पण्डितश्रीकुलमणिमिश्रशर्मा
साहित्य-धर्मशास्त्राचार्य्य-वेदशास्त्री
प्राक्तन-धर्मशास्त्राध्यापकः
श्रीसदाशिवकेन्द्रीयसंस्कृतविद्यापीठः पुरी

प्रथमो भागः

सम्पादकः
श्री भगवान्पण्डाशर्मा, एम्० ए०, पि० एच्०डि
साहित्याचार्य्यः

ओड़िशा-राज्य-पर्यटनक्रीडासंस्कृतिनिर्द्देशालयः
भुवनेश्वरम्

# Foreword

**Sri P. C. PANDA, I.A.S.**
DIRECTOR,
Tourism, Sports and Culture,
**Orissa, Bhubaneswar.**

The inception of a Kosa or Dictionary as the vital source of knowledge, first came to Indian mind long befote the christian era. Since then the compilation of dictionaries in various disciplines of learning is in progress. The compilation of a dictionary on the technical terms of Dharmasastra has not yet been made, the need of which was felt by the general scolars. Now the present volume of Dharmasastrasabdakosa Vol. I by Pandita Kulamani Mishra is being released under the Orissan Oriental Text Series No. 15 which I hope will meet the requirments of the scholars in the line.

P. C. Panda
19. 9. 81

# —सम्पादकीयः—

॥ सरस्वती श्रुतिमहती महीयते ॥

प्राचीनोत्कले वेदवेदाङ्गेतिहासपुराणस्मृतिपारंगताः कृतविद्याः शास्त्रकाराः काव्यनाटकव्याकरणकारा गान्धर्ववेदविद्यानिपुणाः बहवः प्रख्यातयशा पण्डिताः समजायन्तः। भारतीयसंस्कृतसाहित्यस्य विभिन्न-विभागोपविभागानामभिवृद्धये प्राङ्मध्याधुनिकयुगीयानाम् उत्कलीयपण्डितप्रवराणामवदानं समुल्लेखनीयं प्रतिभाति। संस्कृतसाहित्यस्य बहवो ग्रन्था उत्कलदेशेऽद्यापि अप्रकाशिताः सन्ति येषां प्रकाशनेन अविज्ञातानां भारतीयसंस्कृतसंस्कृतीनां ज्ञानं बहुधा सम्भाव्यते। संस्कृतसंस्कृतेः पुनरुद्धाराय भारतस्य विभिन्न प्रान्तेषु प्रतिष्ठितैः बहुभिः सर्वकारीयप्रतिष्ठानैः साधारणप्रतिष्ठानैश्च यथा संस्कृतग्रन्थाः संस्कृत-संस्कृतिसम्बन्धीयाः ग्रन्थाश्च प्रकाशिता जायन्ते तथैवोत्कलराज्येऽधुना उत्कलप्राच्यग्रन्थमालायां केचन ग्रन्थाः प्रकाशिताः जाताः। तद् ग्रन्थमालायां पण्डितप्रवरश्रीकुलमणिमिश्रविरचितोऽयं ग्रन्थः 'धर्मशास्त्रशब्दकोषः' राज्यसंस्कृतिविभागपक्षतः प्रकाश्यते।

धर्मशास्त्राध्यापनालोचनप्रचारणैः कालमतिवाहयद्भिः धर्मशास्त्राचार्य्यैः वेदविद्यानिःस्नातैः श्रीकुलमणिमिश्रशर्मभिः बह्वायाससाधितस्य ग्रन्थस्यास्य प्रकाशनोचितानुदानाय सर्वकारीयपरिषदि प्रस्तावः समुपस्थापितः। परन्तु ग्रन्थस्योपादेयतामनुभवतां पारिषदामनुमोदनक्रमेण ग्रन्थकाराय यथोक्तपारितोषिकप्रादानेन सर्वकारैः ग्रन्थप्रकाशनभारः स्वीकृतः। भागद्वयेन विभक्तस्य धर्मशास्त्रशब्दकोषस्याधुना प्रथमो भागः पूर्णतांगतः। प्रचलदार्थिकवर्षाभ्यन्तर एव ग्रन्थस्यास्य द्वितीयभागस्य प्रकाशनमाशास्यते।

प्रस्तुतेऽस्मिन् ग्रन्थे प्रायशः त्रिंशदधिकपञ्चशतषट्सहस्रामिता (६५३०) शब्दाः संकलिताः। तेषु प्रथमभागे अकारादारभ्य धकारान्ताः एकादशाधिकसहस्रत्रयसंख्यकाः (३०११) शब्दाः अन्तर्गताः। धर्मशास्त्रान्तर्गतशब्दानां साधारणशब्दानां च शास्त्रीयव्यवहारज्ञानावतरणं ग्रन्थस्यास्य महल्लक्ष्यं प्रतीयते। केषांचिद् धर्मशास्त्रीयशब्दानामुत्कलभाषाप्रतिरूपाण्यस्मिन्नपि सन्निवेशितानि जायन्ते। प्रस्तुतेऽस्मिन् धर्मशास्त्रशब्दकोषे शब्दानां व्यावहारिकज्ञानाय पण्डितप्रवरैः श्रीमिश्रमहोदयैः वेदवेदान्तसूत्रपुराणेतिहासधर्मशास्त्राणामुद्धृतयः यथा यथानुसंकलनेन वेदादिशास्त्रेषु स्वकीयपारदर्शितायाः गौरवं प्रतिपादितम्।

धर्मशास्त्रशब्दकोषस्य मूलपाण्डुलिपेः मुद्रणालयप्रतिलिपिनिर्माणे संशोधने च कियद् विलम्बो जातः। पुनश्च ग्रन्थस्य मुद्रणालयप्रेषणानन्तरं राज्ये एकाधिकानि निर्वाचनानि श्रमिकान्दोलनानि च संघटितानि। तस्मात् प्रथमभागस्य मुद्रणे बहुशः कालविलम्बोऽभवत्। मुद्रणावसरे संशोधनकार्य्येषु सर्वविधप्रयत्नेष्वपि केचन मुद्रणप्रमादाः संजाताः। तेषु कानिचिच्छुद्धरूपाण्यत्रोदाह्रियन्ते। शब्दोत्तरबन्धन्यां यथाक्रमेण पत्रस्तम्भयोः संख्या ग्रहणीया।

शुद्धत्याविक=शुद्धयत्याविक (१-१) स्त्रीया=स्त्रिया (१२-१) सहोद=सहोढ (१-७१) मजनादि=मजादि (१८-१) हिंस्रार्यघ्नी=हिंस्रार्थघ्नी (१८-२) अनवलोपनं=अनवलोभनं (२१-२) कुलधर्माम्नाये=कुलधर्मा आम्नाये (२२-१) अंशनं=अशनं (२३-१) मावित्या=सावित्र्या (२४-२) पश्चात्ताप=पश्चात्ताप (२८-२) कातिपदी=का त्रिपदी (३२-१) सिद्धान्तमिति=सिद्धान्तमिति (३४-१) प्रपलार्य्या=प्रपलायी (३५-१) साध्यभावे=साक्ष्यभावे (३७-१) भूभुःस्वः=भर्भुवः स्वः (३८-१) निवपः=निवापः (४१-१) अवलिङ्ग=अव् लिङ्ग (५१-२) अपचित=अयाचित (५३-१) उत्क्षिप=उत्क्षिप्य (६१-१) वर्णयेत=वर्जयेत् (६७-१) शच्यः=शुचयः (७३-१) अभोजनेन=आभोजनेन (७७-२) स्वाद्यम्=स्वाद्दम् (८०-२) गवं=गृहं (८६-१) श्वित्री=श्वित्रि (८८-२) वेदतीर्थ=देवतीर्थ (६४-१) भवान्=यावान् (११४-२) भ्रियते=धियते (१२६-२)

पूर्वकाल=पर्वकाल (१२७-२) उपस्तुतयः=उपस्मृतयः (१३२-१) सत्यवती=सस्यवती (१३६-२) कुलमाषा=कुल्माषा (१४०-२) प्रस्थाता=प्रस्तोता (१४७-१) कीटवचो=कीटवयो (१५२-२) यथोदरति=यथोद्धरति (१५६-१) कौष्ठागारं=कोष्ठागारं (१६५-२) दधति=दधनि (१६६-१) अभक्ष=अभक्ष्य (१७१-१) कर्मर=कर्मार (१७७-१) मौमानि=भौमानि (१८३-१) नाहन्ति=नार्हन्ति (१८६-२) ग्राह=ग्रासं (२१५-१) कृष्णोवलै=कृषीवलै (२२८-१) कीशो=क्रोशो (२२८-१) स्वकानि=खलानि (२४१-१) राणः=शाणः (२४२-१) श्रीयुक्त=श्रीसूक्त (२४६-२) आप्यास्व=आप्यायस्य (२८६-१) टकः=टङ्कः (३०६-१) कर्पर=कर्पूर (२३३-२) यत्ने कृतेऽपि एवंभूतानां मुद्रणप्रमादानां निराकरणं नैव सुकरं संजातम्।

अतः संस्कृतबुद्धयः तत्त्वज्ञाः कृतविद्याश्च पण्डिताः मुद्रणदोषान् स्वगुणैः यथायथं परिशोध्य ग्रन्थस्मादरे सुप्रवृत्ताः भवेयुरिति सम्यगाशास्यते। ग्रन्थस्य मुद्रणावसरे ग्रन्थकारस्य पण्डित श्रीकुलमणिमिश्रशर्म्मणः साहाय्यमविस्मरणीयम्। विभागीयनिर्द्देशकानां श्रीमतां प्रफुल्लचन्द्र पण्डा आई० ए० एस् महोदयानां यथोपयुक्तोपदेशेन प्रकाशनसहकारी-

निर्देशकानां श्रीमतां प्रभञ्जन परिडा एम्० ए० महाशयानां समयोचितपदक्षेपेन ग्रन्थस्य प्रकाशो जातः ।

धर्मशास्त्रशब्दकोषस्य कार्य्यसम्पादनावसरे श्रीमन्तः प्राक्तन-मुख्यसम्पादक-प्रफेसर-सर्वेश्वरदास पण्डित नीलमणि मिश्र (संग्रहालयक्युरेटर) प्रमिलामिश्र (सम्पादिका) सुरेश-चन्द्र जेना (सहसम्पादक) शकुन्तला पण्डा (सहसम्पादिका) प्रभृतयः समयोचितसाहय्य-दानेन कृतार्थीकृताः । परिशेषे लिलिप्रिण्टर्समुद्रणालयाधिकारिणां श्री कृष्णचन्द्र पण्डानां प्रयत्नः प्रशंसार्हः ।

इन्द्रपूर्णिमा
१४-६-१६८१

श्रीभगवान् पण्डाशर्मा
सम्पादकः

# मुखबन्ध

धर्मशास्त्रं नाम सकलशास्त्रपुरस्कृतं निखिललोकसुरक्षकं कृत्याकृत्यविवेकप्रतिपादकत्वेन नित्यनियतोपादेयं साक्षाद्वेदार्थानुमापकत्वेन वेदवत् प्रमाणभूतं तपस्स्वाध्यायपूतचरित्राणां यमनियमानुष्ठान निष्ठावतां नित्यनिरतिशयप्रयतात्मनां निखिलसंस्कारसंस्कृतानाम् आत्मगुणप्रभास्वरज्योतिस्स्तिविद्योदितान्तःकरणानां ब्रह्मादिस्तम्बपर्यन्तसकलभूतव्रातहिताकाङ्क्षिणां रागद्वेषस्पर्शरहितानां नितान्तवाचंयमानां मनुगौतमवसिष्ठादीनाम् अनवरतस्वाध्यायाध्ययनपूतकण्ठोद्गीर्णत्वेन परमपवित्रं गुणिगणसमादरणीयं सर्वजनग्रहणीयं शास्त्रं यस्य स्मृतिरित्यपरा संज्ञा "श्रुतिर्वै वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृति" (२-१०) इति मनुस्मरणात् ।

तत्र मनुगौतमात्रि-यम-वसिष्ठ-दक्ष-संवर्त्त-शातातपपराशरविष्णवापस्तम्बहारीत- शङ्खलिखिता-व्यासाङ्गिरो बृहस्पतिकात्यायनप्रचेतो नारदयाज्ञवल्क्यबौधायनपितामहसुमन्तु-कश्यप-बभ्रु पैठीनसी-व्याघ्रपाद-सत्यव्रत-भरद्वाज-गार्ग्य-कार्ष्णाजिनि-जाबालि-जमदग्नि-लौगाक्षि-वत्स-मरीचि-देवलपास्कराणां शास्त्राणि स्मृतिरिति नाचिकेत-स्कन्द-कश्यप-सनत्कुमार-शन्तनुजातुकर्णि-कपिञ्जल-कर्णाद-विश्वामित्र प्रभृतीनां च शास्त्राणि उपस्मृतिरिति अध्येतृपरम्पराप्रसिद्धानि ॥

यद्यपि वेदार्थानुमापकत्वेन गृह्यसूत्र-व्याकरण-पुराणादीनां शास्त्रान्तराणामपि स्मृतिसंज्ञा-यौगिकी तथापि धर्मशास्त्राणामेव स्मृसिंज्ञा सुप्रसिद्धा पूर्वोक्तमनुवचनात् ।

एतेषां मन्वादिप्रणीतानां परस्परं विभिन्नानामपि धर्मशास्त्राणां सर्वेषामेव प्रामाण्य-ाङ्गीक्रियते न कस्याप्यप्रामाण्यमिति महतीयं गौरवावहा भारतीयशास्त्रविचारपरम्परा । अपाततः विरुद्धानि च प्रतीयमानानि स्मृतिवचनानि देशकालकर्त्र्वस्थाविशेषभेदेन व्यवस्थाप्यन्ते तेन चैकवाक्यता तेषां प्रतिपाद्यते आचार्यैः । तत्र चैकवाक्यतायां साकाङ्क्षाणामाकाङ्क्षापरिपूरणमन्यतः क्रियते निराकाङ्क्षाणां विरुद्धानां विषमकल्पानां व्यवस्था देशकालादिदृष्ट्या उपदिश्यते, तुल्यबलानां च विकल्पः समादिश्यते प्रेक्षावद्भिः । एतने परस्परं विप्रतिपद्यमानान्यपि धर्मशास्त्रवचनानि न जातु प्रामाण्यं जहति ॥

अपि चैतद् धर्मशास्त्राणां सुमहद् गौरवं यत् परस्परं संप्रतिपन्नानि विप्रतिपन्नान्यपि शास्त्रान्तराणि धर्मशास्त्रप्रामाण्य-प्रशंसायामेकमुखानीव संवदन्ति दरीदृश्यन्ते ।

तत्रादावुत्तरमीमांसका ब्रह्मणो जगत्कर्तृत्वमीमांसायां सांख्यस्मृतेरप्रामाण्यप्रदर्शन मुखेनमन्वादि-स्मृतीनां प्रामाण्यमुद्घोषयन्ति ॥

यथा—

सांख्यस्मृत्यास्ति संकोचो न वा वेदसमन्वये ।
धर्मे वेदः सावकाशः संकोच्योऽनवकाशया ॥
प्रत्यक्षश्रुतिमूलाभिर्मन्वादिस्मृतिभिर्मतिः ।
अमूलाकापिली वाध्या न संकोचोनया ततः ॥ इति (अ० २-१ अधि)

सांख्याचार्यैरपि

"धर्मेण गमनमूर्ध्वं गमनमधस्ताद्भवत्यधर्मेण" इतिमतं प्रमाणत्वेनोपस्थापयद्भिः ऊर्ध्वगमन-साधनस्य धर्मस्य प्रतिपादकं शास्त्रं उपादेयत्वेनाङ्गीकृतमेव ।

न्यायवैशेषिकैश्च "विहितकर्मजन्यो धर्मः" "यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म" इति धर्मं लक्षयद्भिः विहितकर्मप्रवर्त्तकानां धर्मोपदेशकानां च धर्मशास्त्राणां प्रामाण्यं समादृतमेव ।

व्याकरणमपि रक्षोहादिना वेदोपकाराय कृतावतारं वेदानुमापकस्य धर्मशास्त्रस्याप्यनुकूलं भवेदित्यत्र नैव संशयलेशः । तत्रापि पतञ्जलिना "नैवेश्वर आज्ञापयति नापि धर्मसूत्रकाराः पठन्ति । अपवादैरुत्सर्गा बाध्यन्ताम् ।" (१-१-४६) इति उदाहरता धर्मशास्त्राणामलंघ्यत्वं प्रभुसम्मितत्वं च प्रतिपादितम्

पूर्वमीमांसा अपि "अथातो धर्मजिज्ञासा" इत्युपक्रम्य प्रवृत्ता इति तस्या अपि धर्मपुरस्कारकत्वेन धर्मशास्त्रप्रशंसित्वं सुतरामायातम् । पुनश्च सन्दिग्धेषु स्थलेषु धर्मनिर्णये साहार्यमाचरणति धर्मशास्त्रैः सह तस्या अविच्छेद्या मैत्री नियतैव । तथाहि अनन्तव्रते "पूर्वाह्णो वै देवानाम्" इति पूर्वाह्णश्रुत्या सोदयत्रिमुहूर्त्तवेधः प्राप्नोति । तथा—

"मध्याह्ने भोज्यवेलायां समुत्तीर्य सरित्तटे ।
ददर्श शीला सा स्त्रीणां समूहं रक्तवाससाम् ॥
चतुर्द्दश्यामर्चयन्तं भक्त्या देवं पृथक् पृथक् ॥ इति

अनन्तव्रतकथानकलिङ्गात् मध्याह्नः कर्मकालत्वेन लभ्यते । अत्र कर्मकालत्वेन प्राप्तयोः पूर्वाह्णमध्याह्नयो-र्विरोधे अनया मीमांसया समाधीयते । तद् यथा—

"दैवे ह्यौदयिकी ग्राह्या" "पूर्वाह्णो वै देवानाम्" इत्यादि प्रमाणं निरपेक्षत्वत्वेन श्रुतिः ।

"मध्याह्ने भोज्यवेलायाम्" इति प्रमाणं तु शब्दसामर्थ्यबलात् लिङ्गप्रमाणम्। अतः अत्र अनयोः श्रुति-लिङ्गप्रमाणयोर्विरोधे "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पारदौर्बल्यमर्थविप्रकर्षात्" इति मीमांसा-सिद्धान्तेन लिङ्गप्रमाणलब्धं मध्याह्नं बाधित्वा श्रुतिप्रमाणलभ्यः पूर्वाह्नः बलवान् भवति।
इतिहासमूर्द्धन्यं महाभारतमपि स्वोपसंहारे भारतसावित्र्या धर्ममेव प्रशंसति।

न जातु कामान्नभयान्नलोभाद्धर्मं त्यजेज्जीवितस्यापि हेतोः।
नित्यो धर्मः सुखदुःखे त्वनित्ये जीवोनित्यो हेतुरस्य त्वनित्यः॥ (स्वर्गारोहणपर्व—५-६३)
ऊर्ध्वबाहुर्विरौम्यष न च कश्चिच्छृणोति मे।
धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते॥ इति (स्वर्गा—५-६२)

शान्तिपर्वणि च—

ऋषयस्तु व्रतपराः समागम्य पुरा विभुम्।
धर्मं पप्रच्छुरासीनमादिकाले प्रजापतिम्॥ ३६-३॥
कथमन्नं कथं पात्रं दानध्ययनं तपः।
कार्याकार्यं च यत् सर्वं शंस वै त्वं प्रजापते॥ ३६-४॥
तैरेवमुक्तो भगवान् मनुः स्वायम्भुवोऽब्रवीत्।
शुश्रूषध्वं यथावृत्तं धर्मं व्याससमासतः॥ ३६-५॥
अनादेशे जपो होम उपवासस्तथैव च।
आत्मज्ञानं पुण्यनद्यो यत्र प्रायश्च तत्परा॥ ३६-६॥

इत्यादीनां भगवदादिशब्दैर्मनुं धर्मशास्त्रकर्त्तारं प्रशंसता महाभारतेन धर्मशास्त्रमपि प्रशंसितं प्रमाणत्वेन च परिगृहीतमेव।

सकलकाव्यललामभूतमादिकाव्यं रामायणमपि बालिप्रश्नस्योत्तरं प्रयच्छतो रामभद्रस्य मुखेन मनुस्मृतेः श्लोकद्वयमुपन्यस्य धर्मशास्त्रस्य प्रामाण्यमुदघोषयत्। तद् यथा—

राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः।
निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा॥ (रामा-किष्कि—१८-३३)
मनुः—८-३१८

शासनाद् वा विमोक्षाद् वा स्तेनः पापात् प्रमुच्यते।
राजा त्वशासन् पापस्य तदवाप्नोति किल्बिषम्॥ (रामा-किष्कि—१८-३४)
मनुः—८-३१६

उपलब्धमनुस्मृतौ तु द्वितीयश्लोके "अशासित्वा तु तं राजास्तेनस्याप्नोति" इति पाठभेदो दृश्यते।

आयुर्वेदज्योतिर्वेदावपि रोगग्रहपीड़योर्निदानत्वेन दुष्कृतमेव प्रदर्शयन्तौ तदुपशमनायदानहोमजपादिधर्ममुपदिशन्तौ धर्मशास्त्रानुसारेणाविति अनिच्छुरपि ब्रूयात्।

धर्मेण सह नित्यं विरोधमुपगतयोरपि अर्थकामयोः शास्त्रे स्वप्रतिपाद्यार्थकामयोः सुरक्षार्थं धर्ममेव शरणमुपगच्छतः। तथाहि अर्थशास्त्रकारो विष्णुगुप्तः

व्यवस्थितार्य्यमर्यादः कृतवर्णाश्रमस्थितिः।
त्रय्या च रक्षितो लोकः प्रसीदति न सीदति ॥ इति

वर्णाश्रमाचारं प्रशंसन् व्यवहारनिर्णयाय धर्मस्थीयं प्रकरणं च उपन्यस्यत् धर्मशास्त्रं संमन्यते।

कामशास्त्रमपि धार्मिकं शासनमन्तरा भोग्यवस्तूनामनियतविषयतया भोगविच्छेदभिया धर्मशास्त्रमेव शरणमुपगच्छेत्।

धर्मागममनपेक्ष्य प्रवर्त्तमानैश्चार्वकप्रायै हैतुकैरपि स्वपत्नीपातिव्रत्यरक्षार्थं धर्मः स्वद्रव्यरक्षार्थं धार्मिकं शासनं चाभिलष्यते, इत्यनेन अधार्मिकैरपि धर्मशास्त्रमाश्रियते इति नोपहासविषयः।
उक्तं च भारते—

प्रीयते हि हरन् पापः परवित्तमराजके।
यदास्य उद्धरन्त्यन्ये तदा राजानमिच्छति ॥ (शान्ति—६७-१३)

सर्वोपरि विराजमाना भगवती श्रुतिरपि साक्षात् धर्मं प्रशंसति—

"धर्मो विश्वस्य जगतः प्रतिष्ठा। लोके धर्मिष्ठं प्रजा उपसर्पन्ति। धर्मेण पापमपनुदति। धर्मे सर्वं प्रतिष्ठितम्। तस्माद्धर्मं परमं वदन्ति"। इति अनया धर्मप्रशंसया धर्मप्रतिपादकं धर्मशास्त्रमपि प्रशंसितम् ॥

अतएव आश्रयत्वेन वेदानां सहायकत्वेन व्याकरणादीनाम् आश्रितत्वेन चेतिहासपुराणादीनामिति सर्वेषां शास्त्राणां धर्मशास्त्रेण सह सम्बन्धः एकस्मिन् परिवारे निवसतां कुटुम्बिनामिव अविच्छेद्य इत्याकलनीयम्।

तदेतद्धर्मशास्त्रं श्लोकात्मकं सूत्रात्मकं चेति द्विधा निबद्धं परिलक्षते। तेसु मन्वादिस्मृतयः श्लोकात्मकाः गौतमापस्तम्बादिग्रन्थास्तु सूत्रात्मकाः ॥ तत्र श्लोकात्मकशास्त्रेभ्यः सूत्रात्मकानि गौतमादि प्रणीतानि शास्त्राणि प्रचीनानीति नव्यविदुषां मतं भ्रान्तम्। सूत्रं श्लोकात् पूर्वमिति प्रमाणाभावात् अनुष्टुबादिच्छन्दोबद्धानाम् ऋचां सर्वप्राचीनत्वेन सर्वैरप्यङ्गीकृतत्वात् योगीश्वरेण क्रमविवक्षायां—

"श्लोकाः सूत्राणि भाष्याणि यच्च किंचन वाङ्मयम्" (३-१८६) इति सूत्रात् पूर्वं श्लोकस्य कीर्त्तितत्वाच्च।

वस्तुतस्तु श्लोकात् परं सूत्रस्य, सूत्रात्परमपि श्लोकस्य रचना सम्भवतीति नैव श्लोक सूत्रादिस्वरूपेण ग्रन्थानां पौर्वापर्यमाकलनीयम् अपि तु विषयोपन्यासदृष्ट्या युक्तया विभावनीयमिति मामकीनः पक्षः।

तत्रादौ मनुस्मृतिरेव सर्वप्राचीना, प्रायेण सर्वेषु शास्त्रेषु धर्मशास्त्रकारत्वेन मनोरभिहितत्वात् सर्वत्र मनुवचनानामुद्धृतत्वात् धर्मशास्त्रकारगणनावसरे मनोः प्रथममुपस्थापितत्वाच्च।

तथा हि योगीश्वरो याज्ञवल्क्यः स्वीयग्रन्थमुखे धर्मशास्त्रकार-नाममालायां मनुमादौ जग्रन्थ। यथा—

मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः।
यमापस्तम्बसंम्वर्त्ताः कात्यायनबृहस्पती॥ १-४
पराशरव्यासशङ्खलिखिता दक्षगौतमौ।
शातातपो वसिष्ठश्च धर्मशास्त्रप्रयोजकाः॥ १-५

इति यमस्मृतावपि धर्मशास्त्रकारनिर्देशावसरे मनुरेव प्रथममभिहितः।

मनुर्यमो वसिष्ठोऽत्रिर्दक्षो विष्णुस्तथाङ्गिराः।
उशना वाक्पतिर्व्यास आपस्तम्बोऽथ गौतमः॥
कात्यायनो नारदश्च याज्ञवल्क्यः पराशरः।
संवर्त्तश्चैव शङ्खश्च हारीतो लिखितस्तथा॥
एतैर्यानि प्रणीतानि धर्मशास्त्राणि वै पुरा।
तान्येतानि प्रणीतानि न हन्तव्यानि हेतुभिः॥ इति कल्पतरौ ब्रह्मचारिकाण्डे—(पृ०-२३)

शङ्खलिखितावपि "स्मृति धर्मशास्त्राणि। तेषां प्रणेतारो मनुविष्णुयमदक्षाङ्गिरोऽत्रिबृहस्पत्युशन आपस्तम्ब-वसिष्ठ-कात्यायन-पराशर-व्यास-शङ्खलिखितसंम्वर्त्त-गौतम-शातातपहारीत-याज्ञवल्क्यप्राचेतसा-दयः" इति मनुमेव धर्मशास्त्रप्रणेतृमालामन्त्रे प्रणवं निर्दिदेश॥

पराशरोऽपि तथैव मनुमादौ पपाठः—

श्रुता मे मानवा धर्मा वासिष्ठाः काश्यपास्तथा।

गार्गेया गौतमश्चैव तथा चौशनसाः स्मृताः ॥ १-१३

अत्रेर्विष्णोश्च सांवर्त्ता दक्षा आङ्गिरसास्तथा ।

शातातपाश्च हारीता याज्ञवल्क्यकृताश्च ये ॥ १-१४

कात्यायनकृताश्चैव प्राचेतसकृताश्च ये ।

आपस्तम्बकृता धर्माः शङ्खस्य लिखितस्य च ॥ १-१५ इति

एतैः सर्वैः धर्मशास्त्रकारेषु मनुः प्रथमं स्मृत इति मनोः सर्वप्राचीनत्वे नैकस्यापि वैमत्यं सम्भाव्यते। तथा एतदपरैरपि यैः स्मृतिकारैर्मनुरभिहितस्तदपेक्षया मनोः प्राथम्यमाकलयितुं शक्यते ॥

उक्तं च गौतमधर्मसूत्रे—"त्रीणि प्रथमान्यानिर्देश्यानि मनुः २१-७

अत्रिस्मृतौ च—

अपि चाप्सु निमज्जित्वा त्रिः पठेदघमर्षणम् ।
यथाश्वमेधावभृथस्तथैव मनुरब्रवीत् ॥ २-६

वसिष्ठेऽपि—

तस्मादुदकपाणिभ्यां परिमृज्यात् कमण्डलुम् ।
पर्यग्निकरणं ह्येतन्मनुराह प्रजापतिः ॥ १२-१६

पुनश्च— मानवं चात्र श्लोकमुदाहरन्ति—

योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः (३-२) इति च

अङ्गिरःस्मृतावपि— श्वा भवेत् सप्तजन्मानि इत्येवं मनुरब्रवीत् ॥ ८६

आपस्तम्बधर्मसूत्रे च— अथैतन्मनुः श्राद्धशब्दं कर्म प्रोवाच" २-७-१६-१

बृहस्पतिस्मृतौ च—

वेदार्थोपनिबद्धत्वात् प्राधान्यं हि मनोः स्मृतम् ।
मन्वर्थविपरीता तु या स्मृतिः सा न शस्यते ॥
तावच्छास्त्राणि शोभन्ते तर्कव्याकरणानि च ।
धर्मार्थमोक्षोपदेष्टा मनुर्यावन्न दृश्यते ॥ इति (मन्वार्थमुक्तावल्याम्)

मनुनामनिर्द्देशपुरःसरं मनुः स्मृतिपथमानीत इति तस्य प्राग्वर्त्तित्वे निदानम्। नारदोपि ग्रन्थारम्भे महताड़म्बरेण मनुं प्रशंसति यथा— "इह हि भगवान् मनुः प्रथमं सर्वभूतानुग्रहार्थमाचार स्थिति हेतुभूतं शास्त्रं चकार। यत्र लोकसृष्टिर्भूतप्रविभावः, सन्देशप्रमाणं पर्षल्लक्षणं, वेदवेदाङ्ग-यज्ञविधान माचारो व्यवहारः, कण्ठकशोधनं राजवृत्तं वर्णाश्रमविभागो विवाहन्यायः स्त्रीपुंसविकल्पो दयानुक्रमः श्राद्धविधानं शौचाचारविकल्पो भक्ष्याभक्ष्यलक्षणं विक्रयाविक्रेय मीमांसा पातकभेदाः स्वर्गनरकानुवर्ण्णनं प्रायश्चित्तान्युपनिषदो रहस्यस्थानानि एवं चतुर्विंशतिः प्रकरणानि ॥ १ ॥ तदेतदत्र श्लोकशतसहस्रेण साशीतिनाध्यायसहस्रेण च भगवान् मनुरुपनिबद्ध्य देवर्षये नारदाय प्रायच्छत् ॥ स च तस्मादधीत्य महत्त्वान्नायं ग्रन्थः सुकरो मनुष्यैरेव धारयितुमिति द्वादशभिः सहस्रैः संचिक्षेप ॥ तं च महर्षये मार्कण्डेयाय प्रायच्छत् ॥ २ ॥ स च तस्मादधीत्य तथैवायुः शक्तिमपेक्ष्य मनुष्याणामष्टभिः सहस्रैः संचिक्षेप, तं च सुमतये भार्गवाय प्रायच्छत् ॥ ३ ॥ सुमतिरपि भार्गवस्तस्मादधीत्य तथैवायुर्ह्रासादल्पीयसी शक्तिर्मनुष्याणामिति चतुर्भिः सहस्रैः संचिक्षेप ॥ ४ ॥

तदेत्य पितृमनुष्या ह्यधीयते। विस्तरेण शतसहस्रं देवगन्धर्वादयः ॥ तत्रायमाद्यः श्लोकः—

आसीदिदं तमोभूतं न प्राज्ञायत किंचन।
ततः स्वयंभूर्भगवान् प्रादुरासीच्चतुर्मुखः ॥ इति

एतेन नारदः स्वमुखेन तदपेक्षया मनुं प्राचीनं तच्छास्त्रं च श्लोकात्मकमाह।

उपर्य्युक्तवचनैर्मनुं कीर्त्तयन्त्यः गौतमात्रि-वसिष्ठाङ्गिर-आपस्तम्ब-बृहस्पति-नारदानां स्मृतयः मनुस्मृत्यपेक्षया अर्वाचीनाः सिद्धा। पुनश्च परम्परया एतासामपि स्मरन्तो ग्रन्थकर्त्तारः अर्वाक्कालिका इति युक्तिसिद्धाः। तथाहि मनुस्मृतिं प्रशंसन्तं बृहस्पतिं—

परं निरस्य यल्लब्धं विद्यया पणपूर्वकम्।
विद्याधनं तु तद् विद्यान्न विभाज्यं बृहस्पतिः ॥

इति स्मरन्ती कात्यायनस्मृतिरर्वाचीनैव। तथा वसिष्ठं व्याहरन्ती औसनसी स्मृतिरपि। तथा च उशना—

वसिष्ठशापात्त्रेतायां केचित् पारशवा स्तथा ॥ ४५ इति। शातातपस्मृति श्चेत्थं "व्रतान्ते मेदिनीं दद्याच्छृणुयादथ भारतम्" इति महाभारतनाम निर्द्देशन्ती महाभारतात् प्राचीनायाः मनुस्मृतेः आत्मानमर्वाचीनां साधयत्येव।

मनुस्मृतेः महाभारतात् प्राचीनत्वे प्रमाणानि यथा—

शान्तिपर्वणि— "ऋषयस्तु व्रतपराः समागम्य पुरा विभुम्" इत्यारभ्य (३६-३) तैरेव मुक्तो भगवान् मनुः स्वायम्भुवोऽब्रवीत् (३६-६) इत्यनुपदमुक्तमेव ॥ पुनश्च—

मनुना चैव राजेन्द्र गीतौ श्लोकौ महात्मना।
धर्मेषु स्वेषु कौरव्य हृदि तौ कर्त्तुमर्हसि ॥ ५६-२३
अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम्।
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ॥ ५६-२४
अयोहन्ति यदाश्मानमग्निना वारि हन्यते।
ब्रह्म च क्षत्रियो द्वेष्टि तदा सीदन्ति ते त्रयः ॥ ५६-२५

अत्रत्यश्चतुर्विंशः श्लोकः मनोः ६-३२१ श्लोकेन सह संवदति ॥

तथा— अद्रोहेणैव भूतानां यो धर्मः स सतां मतः।
अद्रोहः सत्यवचनं संविभागो दया दमः ॥ २१-११
प्रजनं स्वेष्टदारेषु मार्दवं ह्रीरचापलम्।
एवं धर्मं प्रधानेष्टं मनुः स्वायम्भुवोऽब्रवीत् ॥ २१-१२

अपि च— न केनचिद् याचितव्यः कश्चित् किंचिदनापदि।
इति व्यवस्था भूतानां पुरस्तान्मनुना कृता ॥ ८८-१६

पुनश्च— राज्यं तिष्ठति दक्षस्य संगृहीतेन्द्रियस्य च।
आर्त्तस्य बुद्धिमूलं हि विजयं मनुरब्रवीत् ॥ ११२-१६

इत्यादिभिर्बहुभि रुदाहरणैः मनुं कीर्त्तयतः महाभारतस्य क्वचिदपि महाभारतं वा महाभारतीय पुरुषान् वा अव्याहरन्त्या मनुस्मृतेरपेक्षया अर्वाक्कालिकता सिद्धैव।

पूर्वोक्तप्रकारेण महाभारतप्रशंसिनं शातातपं व्याहरतो वृहद् यमस्यापि अर्वाचीनत्वं व्यक्तमेव ॥

विष्णुस्मृतिरपि महाभारतीये कृष्णवासुदेवनामनी पठन्ती महाभारतादपि प्राचीनाया मनुस्मृतेरपेक्षया परवर्त्तिनीति सुव्यक्तमेव।

व्यासस्य च महाभारतीयपुरुषत्वेन तत्कृतास्मृतिरपि मनुस्मृत्यपेक्षया अर्वाचीनेति न कस्यापि विप्रतपत्तिः स्यात्। व्यासशिष्यस्य सुमन्तोरपि स्मृतेः सैव गतिः सिद्धैव ॥

हारीतोऽपि—

निगयस्तु रसादीनां विक्रयो नैव दुष्यति।
यज्ञार्थे दक्षिणानां च प्रजापतिवचे यथा ॥ (कल्पतरु गार्ह पृ०—२१०

इति प्रजापतिपदेन मनुमेवाभिधत्ते। मनोश्च प्रजापतिसंज्ञा पूर्वोक्तमहाभारतवचने धर्मं पप्रच्छुरासीन मादिकालेप्रजापति मित्यत्र (शान्ति–३६-३) प्रदर्शिता। मनुस्मृतावपि मनोः प्रजापतिसंज्ञा उक्ता।

एनमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम्।
इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतम्॥ (१२-१२३) इति।

पुनश्च "त्रिसन्ध्यं वै नियमिनां पाप्मा शीर्यते" (कल्पतरु-गार्ह-पृ० २६३) इति वदन् हारीतः स्वस्य त्रिसन्ध्यवादित्वं प्रकाशयति। मनुस्तु सर्वत्र आत्मनो द्विसन्ध्यवादित्वं प्रकटीकरोति तद् यथा—

एतदक्षरमेतां च जपन् व्याहृतिपूर्विकाम्।
सन्ध्ययोर्वेदविद् विप्रो वेदपुण्येन युज्यते॥ २-७८
पूर्वां सन्ध्यां जपंस्तिष्ठन् नैशमेनो व्यपोहति।
पश्चिमां तु समासीनो मलं हन्ति दिवाकृतम्॥ २-१०२
न तिष्ठति तु यः पूर्वां नोपास्ते यश्च पश्चिमाम्।
स शूद्रवद् बहिष्कार्य्यः सर्वस्माद् द्विज कर्मणः॥ २-१०३
नीहार बाणशब्दे च सन्ध्ययोरेवचोभयोः।
अमावास्या चतुर्द्दश्योः पौर्ण्णमास्यष्ट कासु च॥ ४-११३

एतेषु वचनेषु सर्वत्र मनुना सन्ध्याद्वयमुक्तमेवेति तस्य द्विसन्ध्यवादित्वम्। द्विसन्ध्य-त्रिसन्ध्यवादिनोर्मध्ये द्विसन्ध्यवादिन एव प्राचीनाः सन्ध्याद्वयस्य प्राकृतिकत्वात्।

पुनश्च दशावरापरिषन्निर्णये "चातुर्विद्याविद् विकल्प्यङ्गविद्धर्मवित्त्रयाश्रमिण इति परिषदं दशावरामाहुरिति (कल्प ब्रह्म—३६) चातुर्विद्यशब्दं पठता हारीतेन आत्मनश्चतुर्वेदवादित्वं प्रकटितम्। तेन तस्य त्रिवेदवादिनो मनोरपेक्षया अर्वाचीनत्वं स्फुटमेव। मनोश्च त्रैविद्यवादित्वं यथावसरं व्याख्यास्यते।

वृद्धहारीतोऽपि "यदुक्तं मनुना धर्मं व्यवहारपदं प्रति" ७-२६२ इति मनुं निर्दिशन् आत्मनोरर्वाचीनत्वं व्याहरत्येव।

धर्मशास्त्रकारनाममालायां याज्ञवल्क्य-यमशङ्खलिखितेषु नैकेनापि पठिताः बौधायन-पितामह सुमन्तु-कश्यप-बभ्रु-पैठीनसी-व्याघ्रपाद-सत्यव्रत-भरद्वाज-गार्ग्य-कार्ष्णाजिनि-जाबालि-जमदग्नि-लौगाक्षि-वत्स-मरीचि-देवाल-पारस्कर-शौनक-च्छागलेयास्तत्कृतस्मृतयोऽपि मनुस्मृत्यपेक्षया अर्वाचीना इति दृढं प्रतीयते अनेनैव न्यायेन नाचिकेत-स्कन्द-कश्यप-सनत्कुमार-शन्तनु-जातुकर्ण्णि-कपिञ्जल-कणाद-विश्वामित्र-प्रणीतना

सुपस्मृतीनामर्वाचीनता सिद्धैव ॥ वाल्मीकीयं रामायणमपि पूर्वोदाहृतकिष्किन्दाकाण्डस्थ (१८-३०-१८-३१) श्लोकाभ्यां मनुस्मृतिमुद्धृत्य तामात्मनः प्राचीनां मन्यते ।

एतेन सर्वाभ्यः स्मृतिभ्यः सर्वाभ्य उपस्मृतिभ्यः रामायणमहाभारतादिभ्यश्च मनुस्मृतेः प्राचीनता निरूपिता ॥

स्वयं भगवती तैत्तिरीयश्रुतिरपि "यद् वै किंच मनुरवदत तद् भेषजम्" (२-२-१०-२) इति व्याहरन्ती मनुं प्रशंसतीति मनोः लोकातिशायी गौरवं सर्वस्मृतिमूर्द्धन्यत्वं चाभिव्यक्तमेव ।

यच्चाप्युपलब्धमनुस्मृतौ अत्रि-गौतम-यम-वसिष्ठानां नामान्युपलभ्यन्ते तानि मनुस्मृतेः प्राचीनतां नैव व्याहन्तुमीशते यतस्तादृशपद्यानि कथंचिन्मनुस्मृतिमनुप्रविष्टानि ॥ यथा—

शूद्रावेदी पतत्यत्रेरुतत्थतनयस्य च ।
शौनकस्य सुतोत्पत्त्या तदपत्यतया भृगोः ॥ (मनुः—३-१६)

अत्रि-गौतम-शौनक-भृगून् भणतः अस्य श्लोकस्य निःसारणेन पूर्वापरश्लोकयोः—

हीनजातिस्त्रियं मोहादुद्वहन्तो द्विजातयः ।
कुलान्येव नयन्त्याशु स सन्तानानि शूद्रताम् ॥ (३-१५)
शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिम् ।
जनयित्वा सुतं तस्यां ब्राह्मण्यादेव हीयते (३-१७)

एतयोर्नाल्पीयानपि पौर्वापर्यसंगतिच्छेदो भवति । तेनायं श्लोकः केनचित् कथंचित् प्रीत्या वा भ्रान्त्या वा एस्मिन् विषये मुन्यन्तराणां मतसंग्रहाय वा मनुस्मृतौ निवेशित इत्यवगन्तव्यम् ॥

प्रोक्तश्लोकस्य चतुर्थचरणे भृगुरभिहितः । भृगुस्तु स्वातन्त्र्येण ग्रन्थकृत् नास्ति ॥ किन्तु "एतद् वोऽयं भृगुः शास्त्रं श्रावयिष्यत्यशेषतः" (१-५९) इति मनूक्त्या मनुवचनानि प्रदर्शयतो भृगोः स्वमतख्यापनमपि अयुक्तम् । विशेषतः परवर्त्तिनि श्लोके तादृशस्य सिद्धान्तस्य वर्त्तमानत्वात् ॥

तथा— वसिष्ठविहितां वृद्धिं सृजेद् वित्तविवर्द्धिनीम् ।
अशीतिभागं गृह्णीयान्मासाद् वार्द्धुषिकः शते ॥ ८-१४०
द्विकं शतं वा गृह्णीयात् सतां धर्ममनुस्मरन् ।
द्विकं शतं हि गृह्णानो न भवत्यर्थकिल्विषी ॥ ८-१४१ इति एतत् श्लोकद्वयं तत्पूर्वपरश्लोकयोः पौर्वापर्यसंगतिबाधकमिव प्रतिभाति । अनयोर्निरासेन पाठक्रमस्य अर्थक्रमस्य नाणुरपि मर्य्यादाहानिः ग्रन्थगौरवहानिर्वा सम्भवति । तेन एतत् श्लोकद्वयमपि पूर्वोक्तन्यायेन अनुप्रविष्टम् । अतो वसिष्ठस्मृतेः प्राचीनत्वशङ्का दूरापास्ता ॥

यत्तु— यमो वैवस्वतो देवो यस्तवैष हृदि स्थितः ।
तेन चेदविवादस्ते मा गङ्गां मा कुरून् गमः ॥ ८-६२

इत्यत्र साक्षिप्रकरणोक्ते श्लोकेऽभिहितः यमशब्दः स नैव यमस्मृतिकारबोधकः अपि तु सकलनियन्तुरीश्वरस्य प्रकाशकः,

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया । (१८-६१) इति गीतोक्तेः ।

तद्वदपि "तस्माद् यम इव स्वामी" (८-१७३) इत्युक्तो यमशब्दः दिक्पालपरः ॥

तथा— अनेन तु विधानेन पुरा चक्रेऽथ पुत्रिकाः ।
विवृद्ध्यर्थं स्व वंशस्य स्वयं दक्षः प्रजापतिः ॥ (९-१२८) इति दर्शितो दक्षः नैव स्मृतिकारो दक्ष इति प्रतिपादितं मया श्रीदेवयानाख्ये पाठसंकलने (१९७७)

तथा— क्षुधार्त्तश्चात्तुमभ्यागाद् विश्वामित्रः श्वजाघनीम् ।
चण्डालहस्तादादाय धर्माधर्मविचक्षणः ॥ १०-१०८

तथा— वसिष्ठश्चापि शपथं शेपे मैजवने नृपे ॥ ८-११०

इत्यत्राभिहितौ विश्वामित्रवसिष्ठौ नैव स्मृतिकारविशामित्रवसिष्ठौ अपितु श्रुतिपरम्पराप्रसिद्धौ बोद्धव्यौ" एवमन्यत्रापि समाधेयम् । तेन अत्र्यादिनामोपादानेन मनुस्मृतेरर्वाचीनतेति आक्षेपः पराहत एव ॥

एतेन धर्मसूत्राणि मनुस्मृत्यपेक्षया प्राचीनानीति पाश्चात्यविदुषां तदनुवर्त्तमानानां भारतीय नव्यविदुषां च दर्शनं सुदूरापास्तमेव । तदनु गौतमधर्मसूत्रं सर्वपुरातनं धर्मशास्त्रमिति वदतां मतं व्याहतमपि पुनर्दृढ़तया उन्मूलयिष्यामः । तथाहि धर्मशास्त्रसंसारे मनुः पूर्णाङ्गग्रन्थमुपनिबबन्ध यश्च पूर्णाङ्गग्रन्थं लिखति स पूर्वतनैः लिखितमपि वस्तु स्वे ग्रन्थे निवेशयति अन्ततः संक्षेपणः आवश्यकं वस्तु न कदाचिद् विजहाति स्वग्रन्थगौरवहानिभिया । अनया दृशा विचारे क्रियमाणे गौतमस्य परवर्त्तित्वं प्रतीयते । यतः गौतमधर्मसूत्रे प्रदर्शिता अनेके उपादेया विषया मनुस्मृतौ न दृश्यन्ते । यथा—स्वत्वप्रतिपादकैः "स्वामीरिक्थक्रयसंविभाग-परिग्रहाधिगमेषु" (२-१-३९) इत्यादिभिः सूत्रैः स्वत्वप्रतिपादनम् " तथा चत्वारिंशत् संस्कारा (८-१३ तः ८-१९ पर्य्यन्तैः) सप्तभिः सूत्रैः प्रतिपादिताः । पुनश्च "अष्टावात्मगुणः "दया सर्वभूतेषु क्षान्तिरनसूया-शौचमनायासो मङ्गलमकार्पण्यमस्पृहेति" (१८-२४) सूत्रे प्रकाशिताः । देशाचारादीनां च प्रामाण्य-निर्णयाय "देशजातिकुलधर्मा आम्नायैरविरुद्धाः प्रमाणम्"—२-२-२० इति च यत् यत् गौतमेन प्रदर्शितं तत् तत् अतीव समुपादेयम् । यदि नाम मनुस्मृतिस्तदपेक्षया अर्वाचीना स्यात्तर्हि एतद् सर्वं स्वग्रन्थस्य न्यूनतापूरकत्वेन उपाहृतं स्यात् । वस्तुतस्तु तथा नाभूदिति मनुस्मृतिः प्राचीनैव ।

किं च गौतमधर्मसूत्रं परिषन्निर्णये "चत्वारश्चतुर्णां पारगा वेदानां प्रागुत्तमास्त्रय आश्रमिणः

पृथग् धर्मविदस्त्रयः एतान् दशावरान् परिषदित्याचक्षते" (३-१०-४७) इति वचनेनतस्य चतुर्वेदवादिता निरूपिता। ततोऽपि तत् त्रैविद्यवादिन्या मनुस्मृतेरर्वाचीनैव।

तथा हि मनुः सर्वत्र ऋग् यजुः सामानि एव त्रयीपदेन निर्दिशति क्वचिदपि अथर्ववेदं चतुर्थं वेदत्वेनानाभिधत्त ॥ यथा—

स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः (२-२८) इत्यत्र।

त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्मपाठकः।

त्रयश्चाश्रमिणः पूर्वे परिषत् स्याद्दशावरा ॥ (११-१११)

इत्यत्र च, त्रैविद्यपदेन तथा—

"षट्त्रिंशदाब्दिकं चर्य्यं गुरौ त्रैवेदिकं व्रतम्" (३-१) इत्यत्र त्रैवेदिकपदेन, पुनश्च—

अकारं चाप्युकारं च मकारं च प्रजापतिः।

वेदत्रयान्निरदुहद् भूर्भुवःस्वरितीति च ॥ (२-७६)

त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत्।

तदित्यृचोस्याः सावित्र्याः परमेष्ठी प्रजापतिः ॥ (२-७७) इति श्लोकयोः संख्यावाचक-त्रिशब्देन, अन्यत्र च

ऋक् संहितां त्रिरभ्यस्य यजुषां वा समाहितः।

साम्नां वा सरहस्यानां सर्वपापैः प्रमुच्यते ॥ (११-२६२)

ऋचो यजूंषि चान्यानि सामानि विविधानि च।

एषज्ञेयस्त्रिवृद् वेदो यो वेदैनं स वेदवित् ॥ (११-२६४)

ऋग्वेदविद् यजुर्विच्च सामवेदविदेव च।

त्र्यवरा परिसज् ज्ञेया धर्मसंशयनिर्णये ॥ (११-११२)

इत्येतेषु ऋगादिनामग्रहणेन, पुनः कर्मोपयोगेऽपि—

यत्नेन भोजयेच्छ्राद्धे बह्वृचं वेदपारगम्।

शाखान्तगमथाध्वर्युं छन्दोगं वा समाप्तिगम् ॥ (३-१४६) इति

बह्वृचादिपदेन सर्वत्र त्रय एव वेदा मनुना आम्नाता इति सर्वथा मनोः त्रिवेदवादित्वं निश्चप्रचम्।

यत्तु— श्रुतीरथर्वाङ्गिरसोः कुर्यादित्यविचारयन्।

वाक्शस्त्रं वै ब्राह्मणस्य तेन हन्यादरीन् द्विजः ॥ (११-३३)

इत्यत्र अथर्वश्रुतेरपि स्वीकारान्मनोरपि चतुर्वेदवादित्वमायातमिति तन्न चतुरस्रम्, पूर्वोक्तन्यायेन कदाचित्

केनचित् श्लोकस्यास्य उपक्षिप्तत्वस्य सम्भावितत्वात्। तत् सम्भावनायां हेतुश्चायमुच्यते यत्—

महाभारते मनुस्मृतेः एतच्छ्लोकस्य पूर्वापरश्लोकाः शब्दतः क्वचिदर्थतश्च समुद्धृताः किन्तु न्यायं श्लोकः शब्दतोऽर्थतो वा उद्धृत इति।

तत्रादौ मनुस्मृतिपाठो यथा—

प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तते।
न सांपरायिकं तस्य दुर्मते विद्यते फलम्॥ ११-३०
न ब्राह्मणो वेदयेत किंचिद्राजनि धर्मवित्।
स्ववीर्य्यणैव तच्छिष्यान् मानवानपकारिणः॥ ११-३१
स्ववीर्य्याद्राजवीर्य्याच्च स्ववीर्य्यं बलवत्तरम्।
तस्मात् स्वेनैव वीर्य्येण निगृह्णीयादरीन् द्विजः॥ ११-३२
श्रुतावथर्वाङ्गिरसीः कुर्य्यादित्यविचारयन्।
वाक् शस्त्रं वै ब्राह्मणस्य तेन हन्यादरीन् द्विजः॥ ११-३३
क्षत्रियो बाहुवीर्येण तरेदापदमात्मनः।
धनेन वैश्यशूद्रौ तु जपहोमैर्द्विजोत्तमः॥ ११-३४

महाभारतपाठो यथा— (शान्तिपर्वणि)

प्रभुः प्रथमकल्पस्य योनुकल्पेन वर्त्तते।
न सांपरायिकं तस्य दुर्मतेर्विद्यते फलम्॥ १३५-१७
न ब्राह्मणे निवेदेत किंचिद्राजनि धर्मवित्।
स्ववीर्य्याद्राजवीर्य्याच्च स्ववीर्य्यं बलवत्तरम्॥ १६५-१८
तस्माद्राज्ञः सदा तेजो दुःसहं ब्रह्मवादिनाम्।
कर्त्ता शास्ता विधाता च ब्राह्मणो वेद उच्यते॥ १६५-१९
तस्मिन्नाकुशलं ब्रूयान्न शुष्कामिरयेद् गिरम्।
क्षत्रियो बाहुवीर्य्येण तरेदापदमात्मनः॥ १६५-२०
धनैर्वैश्यश्च शूद्रश्च मन्त्रहोमैश्च वै द्विजः॥ इति।

अतएव महाभारते "श्रुतीरथर्वाङ्गिरसीः" इत्यादिश्लोकः शब्दतोऽर्थतो वा नैव मनाक् स्पृष्ट इति महाभारत-रचनाकाले मनुस्मृतौ तस्य अभावः ततपरतः कदाचित्तत्र तस्य अनुप्रवेशश्चानुमीयते।

यदिवा महाभारतकृता स्वेच्छया नोद्धृतस्तदापि मनुना अनेन श्लोकेन नाथर्ववेदस्य

चतुर्थवेदत्वेन स्वीकृतिर्दत्ता किन्तु अथर्वदृष्टमन्त्राणां श्रुत्यङ्गत्वेन। यतः मनुकाले अथर्वमन्त्रा नासन् इति न, किन्तु तेषां स्वातन्त्र्येण वेदत्वं नासीत् त्रय्यामेवान्तर्भाव आसीत्। परतः वेदव्यासेन वेदस्य विभाजने सम्पादिते अथर्ववेदस्य पार्थक्यं जातम् इत्यामनन्ति पौराणिकाः। तथाच कूर्मपुराणे–१-५२ अध्याये

एक आसीद् यजुर्वेदस्तं चतुर्द्धा व्यकल्पयत्।
चतुर्होत्रमभूत्तस्मिं स्तेन यज्ञमथाकरोत्॥
आध्वर्यवं यजुर्भिः स्यादग्निहोत्रं द्विजोत्तमाः।
औद्गात्रं सामभिश्चक्रे ब्रह्मत्वं चाप्यथर्वभिः॥
ततः सत्रे च उद्धृत्य ऋग्वेदं कृतवान् प्रभुः।
यजूंषि च यजुर्वेदं सामवेदं च सामभिः॥ इति

ब्रह्माण्डपुराणे च (पूर्वभागे द्वितीये अनुषङ्गपादे)

अस्मिन् युगे तदा व्यासः पाराशर्य्यः परंतपः।
द्वैपायन इति ख्यातो विष्णोरंशः सनातनः॥ ३४-११
ब्रह्मणा चोदितः सोऽस्मिन् वेदं वक्तुं प्रचक्रमे।
अथ शिष्यान् स जग्राह चतुरो वेदकारणात्॥ ३४-१२
जैमिनिं च सुमन्तुं च वैशंपायनमेव च।
चतुर्थं पैल मेतेषां पञ्चमं लोमहर्षणम्॥ ३४-१३
ऋग्वेदश्रावकं पैलमग्रहीद् वीधिवद् द्विजाः।
यजुर्वेदप्रवक्तारं वैशम्पायनमेव च॥ ३४-१४
जैमिनिं सामवेदार्थं श्रावकं सोऽन्वपद्यत।
तथैवाथर्ववेदस्य सुमन्तुमृषिसत्तमम॥ ३४-१५ इत्यादि

अतो मनुस्त्रिवेदवादीति मतं सुदृढ़ मेव। ततश्चतुर्वेदवादिनो गौतम-वसिष्ठहारीतादयस्तत परवर्त्तिन इत्यवश्यमवगन्तव्यम्॥

अन्यदपि सूत्रात्मकम् आपस्तम्बधर्मसूत्रम् "अथैतन् मनुः श्राद्धशब्दं कर्म प्रोवाच" २-७-१६-१) इति सूत्रे स्वयं मनुंव्याहृत्य स्वस्य अर्वाचीनतां साधयत्युक्तमेव प्राक्। किन्त्वत्र वृत्तिकारो हरदत्तः उज्वलावृत्तौ सूत्रस्थमनुशब्दार्थं वैवस्वतमनुरित्याह। तत् अतीव अयुक्तम्। धर्मशास्त्रप्रणेतरि सुप्रसिद्धे स्वायम्भुवे मनौ वर्त्तमाने सति तदुक्तिषु विषयवस्तुनि च दृश्यमाने शास्त्रप्रणेतृत्वप्रसिद्धिविरहितस्य सर्वथा अप्रासङ्गिकस्य वैवस्वतस्य मनोः कीर्त्तनमत्यन्तं हास्यकरम्। मनुस्मृतौ च श्राद्धप्रकरणे—

"प्रथिता प्रेतकृत्यैषा पित्र्यं नाम विधुक्षये।
तस्मिन् युक्तस्यैति नित्यं प्रेतकृत्यैव लौकिकी ॥ (३-१२७)

इत्यत्र कृत्यपदं कर्मपर्य्यायकम्। पुनश्च तेन श्राद्धं विप्रनिमन्त्रणादि विसर्जनान्तं कर्म, योगादिवात् प्रदर्शितम्। ततः श्राद्धं सर्वथा कर्मविशेष एवेति मनोरभिप्राय मनुस्मृतित उपलभ्यते॥

धर्मसूत्रकारो बौधायनस्तु धर्मशास्त्रकारगणनायां याज्ञवल्क्यादिभिरनाम्नातत्वेन "आपस्तम्बं सूत्रकारं तर्पयामि, वाजसनेयिनं याज्ञवल्क्यं तर्पयामि, व्यासं तर्पयामि, वसिष्ठं तर्पयामि, अथर्ववेदं तर्पयामि, इतिहास पुराणानि तर्पयामि" (२ ६-२४) इति व्यास-याज्ञवल्क्यादीनामर्वाचीनानां नामान्युदाहरन् "चातुर्वैद्यं विकल्पी च"(१-१-१-८) इति सूत्रे आत्मनश्चतुर्वेदवादित्वं च प्रकाशयन्।

तथा— "त्रिरात्रं वाप्युपवसन् त्रिरह्णोऽभ्युपेयादपः।
प्राणानात्मनि संयम्य त्रिः पठेदघमर्षणम् ॥ ४-२-२-१५
यथाश्वमेधावभृथ एवं तन्मनुरब्रवीत ॥ ४-२-२-६ इति स्वयं मनुं संस्मरन् आत्मनोऽर्वाचीनत्वं स्फुटं प्रकाशयतीति अनिच्छुरपि स्वीकुर्य्यात ॥

अपरा सूत्रश्लोकमिश्रा विष्णुस्मृतिरपि महाभारतीयपुरुषनामनी कृष्णवासुदेवपदे व्यवहरन्ती यदृचेधिते तेनास्याज्येन पितृणां तृप्तिर्भवति ३०-३४ यद्यजूं तेन मधुना ३०-३५, यत् समानि तेन पयसा ३०-३६ यदाथर्वणं तेन मांसेन ३०-३७ इतिसूत्रैः स्वस्याः चतुर्वेदवादित्वं प्रकटयन्ती मनुमतमेवानुपदमनुवदन्ती पद्यान्यपि मनोः अविकृतानि स्वल्पविकृतानि च भूरिशः समुद्धरन्ती मनुस्मृत्या अर्वाचीनैव। विष्णुस्मृतिः मनुश्लोकान् जग्राहेत्यत्र प्रमाणान्तरमिदमुच्यते। यथा—
यदि नाम विष्णुः प्राचीनः स्यात्तर्हि तस्य

यथाश्वमेधः क्रतुरोट् सर्वपापापनोदकः।
तथाघमर्षणं सूक्तं सर्वपापापनोदकम् ॥ (अ ५५-७) इति

मनोश्च— यथाश्वमेधः क्रतुराट् सर्वपापापनोदनः।
तथाघमर्षणं सूक्तं सर्वपापापनोदनम् ॥ (११-२६०) इतिपद्यं समं पश्यन्नपि अत्रिः कथं यथाश्वमेधावभृथस्तथैवमनुरब्रवीत ॥ (२-६) इति विष्णोः नाम परित्यज्य मनोर्नाम ब्रूयात् तथैव वसिष्ठश्च यथाश्वमेधावभृथस्तादृशं मनुरब्रवीदिति च (२६-८) ब्रूयात्

पुनश्च— विष्णोः मधुपर्के च यज्ञे च पितृदैवतकर्मणि।
अत्रैव पशवो हिंस्या नान्यत्रेति कथंचन ॥ (५१-६४) इति

मनोश्च— मधुपर्के च यज्ञे च पितृदैवतकर्मणि ।

अत्रैव पशवो हिंस्या नान्यत्रेत्यब्रवीन्मनुः ॥ इति पद्यं

समं ह्यत्रापि वसिष्ठः— पितृदेवतातिथिपूजायामप्येव पशुं हिंस्यादिति मानवम् (४-५)

मधुपर्के च यज्ञे च पितृदैवत कर्मणि ।

अत्रैव च पशुं हिंस्यान्नान्यथेत्यब्रवीन्मनु ॥ (४-६) इति कथं मनुमर्वाचीनमुद्धरेत न विष्णुम्। तेन विष्णुस्मृत्यपेक्षया मनुस्मृतिः प्राचीना । विष्णुस्तु मनुमनुपदमनुवदन्नपि भूरिशो मनुश्लोकानात्मीयान् कुर्वन्नपि सकृदपि मनुं न स्मरतीति विचित्रेयं स्थितिः । पुनश्चायं "त्रीण्याज्यदोहानीति" (वसिष्ठ २८-१५) य आवृणोत्यवितथेनेति (वसि—२-१०) च वासिष्ठं आत्मीयत्वेन (अ ५६-२७) (अ ३०-४७) अभिदधानः वसिष्ठात् तथा आपूर्य्यमाणमचलप्रतिष्ठमिति (अ २-७०) भगवद्गीतापद्यं च स्वीकुर्वन् (अ ७२-७) वासुदेवं च कीर्त्तयन् महाभारतादप्यर्वाचीनः । तथा विधवस्त्रीणां कृते मृते भर्त्तरि ब्रह्मचर्य्यं तदन्वारोहणं वा (२५-१४) इति मन्वादिसकलप्रसिद्धस्मृतिकारैरनुक्तमन्वारोहणमार्गमाविष्कुर्वन् अत्यर्वाचीनतामात्मनो व्यञ्जयतीति नात्र शङ्कावसरः ।

येपुनर्मानवधर्मसूत्रमेव प्राचीनं मन्यन्ते न पुनर्मनुस्मृतिं तेऽपि भ्रान्ताः सर्वत्र स्मृतिषु रामायणमहाभारतयोरपि मनुमतत्वेन उद्धृतानां मनुश्लोकानां दर्शनात् ।

एतेन धर्मशास्त्राकरे मनुस्मृतिः सर्वप्राचीना तदनुयायिन्यः अपराः स्मृतयः क्वचित् क्वचित् किमपि आवश्यकं संयोजयन्ति मनुं चोदाहरन्तीति श्रद्धेयमेतत् ।

निखिलैः धर्मशास्त्रैः प्रतिपादितस्य सुप्रतिष्ठितस्य महामहिम्नो धर्मस्य ब्रह्मैव प्रतिष्ठानम् । ब्रह्मणश्च भगवान् परमात्मेत्यादयः पर्य्यायाः । तदुक्तं भागवते—

वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम् ।

ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ॥ (१-२-११) इति

तस्यैव वाच्यस्य ब्रह्मणः वाचकोऽक्षरसमाम्नायो वेदः ब्रह्मश्रुत्याद्यभिधानैरभिधीयते ॥ ततः वेदपरमात्मानौ वाचकवाच्यसम्बन्धसम्बद्धौ नित्यमभिन्नौ ब्रह्मशब्दाभिधेयौ । वाचकत्वं च वेदस्य ।

वेदैश्च सर्वैरहमेव वेद्य इति (१५-१५) भगवद्गीतोक्त्यापि निर्दिश्यते ॥ ततः धर्मशास्त्रे । प्रायेण वेदस्य ब्रह्मशब्देन व्यवहारं दृश्यते । महाभारते च शब्दब्रह्म इत्युच्यते ।

द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं यत् ।

शब्द ब्रह्मणी निष्णातः परंब्रह्माधिगच्छति ॥ शान्ति २४-२३१

तच्च शब्दब्रह्म ऋग्-यजुःसामलक्षणाक्रान्तं त्रयीसंज्ञामावहति । अग्नेऋग्वेदः वायोर्यजुर्वेदः आदित्यात् सामवेद इति हि श्रुतिः । तत्र छन्दोनिबद्धा ऋक् अनियतच्छन्दस्कं यजुः । गीतिलक्षणं साम । एतल्लक्षणलक्ष्यत्वेन अथर्ववेदस्य पार्थक्यं नास्ति । अतो मन्वादिभिः त्रयीपदेन वेदस्य निर्देशः कृतः । कर्मकाण्डदृष्ट्या तस्य चतुर्द्धा विभागो जातः । वेदव्यासेन एक एव यजुर्वेदश्चतुर्द्धा कृत इत्युक्तं कौर्मे (१-५२ अध्याये), ब्रह्माण्डेऽपि (१-२-३४ अध्याये)" स च वेदः बहुशाखोपबृंहितः तदाह पाणिनीयमहाभाष्ये पतञ्जलिः—

एकशतमध्वर्युशाखाः सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यम् । नवधा आथर्वणो वेदः ।

अत्र एकशतमिति एकोत्तरं शतम् । तत्र याज्ञवल्क्यभिन्नैः वैशम्पायनशिष्यैः गृहीतस्य कृष्णयजुर्वेदस्य षड़शीतिः ८६ शाखाः ब्रह्माण्डादिषु द्रष्टव्याः । कौर्मे तु यजुषां शतशंख्या प्रोक्ता । याज्ञवल्क्येन गुर्वाज्ञया वान्तविद्येन पुनरश्वरूपमास्थाय सूर्यात् त्रयीमयात् शुक्लान् यजुर्वेदान् जग्राह । तदुक्तं ब्रह्माण्डे—

अश्वरूपाय मार्त्तण्डो याज्ञवल्क्याय धीमते ।
यजूंष्यधीयते तानि ब्राह्मणा येन केनचित् ॥ १-२-३५-२५
अश्वरूपाय दत्तानि ततस्ते वाजिनोऽभवन् ।
ब्रह्महत्या तु यैश्चीर्णा चरणाच्चरकाः स्मृताः ॥ २६
वैशम्पायनशिष्यास्ते चरकाः समुदाहृताः ।
इत्येते चरकाः प्रोक्ताः वाजिनस्तु निबोधत ॥ २७
याज्ञवल्क्यस्य शिष्यास्ते कण्वो बौधेय एव च ।
मध्यन्दिनस्तु सापत्यो वैधेय श्चाद्धबौद्धकौ ॥ २८
तापनीयाश्च वत्साश्च तथा जाबाल केवलौ ।
आटवी च तथा पुण्ड्रो वैणोयः सपराशरः ॥ २९
इत्येते वाजिनः प्रोक्ताः पञ्चदश च सत्तमाः ।
शतमेकाधिकं ज्ञेयं यजुषां ये विकल्पकाः ॥ ३०

एवं वेदान्तराणां विस्तरोऽप्यवगन्तव्यः पुराणेभ्यः ॥ एताः सर्वाः श्रुतयः प्रत्यक्षप्रमाणवद् गरिष्ठप्रमाणभूताः प्रत्यक्षशब्दे नाभिधीयन्ते । तदनुसारिणी तदनुमापिका मन्वादीनां स्मृतिश्च अनुमानसंज्ञा (ब्रह्मसूत्र ४-४-२०) धर्मशास्त्रसंज्ञां (मनु २-१०) च वहति । एताभ्यां हि श्रुतिस्मृतिभ्यां धर्मो निर्बभौ । ते तु भगवतः आज्ञा-

रूपे सततमलंघनीये—

श्रुतिस्मृती ममैवाज्ञे यस्ते उल्लंघ्य वर्त्तते।
आज्ञाच्छेदी मम द्वेषी न स भक्तो न वैष्णवः॥ इति स्मरणात्

एताभ्यां मुख्ययो प्रतिपादितो धर्मः कर्त्तुरभिमतफलवर्षणात् वृष इत्युच्यते "वृषो हि भगवान् धर्मः" इति मनु (८-१६) स्मरणात् महाभारत (शान्ति ३४२-६८) निर्द्देशाच्च। स्वयं भगवान् वेदोऽपि धर्मं वृषाकृतिमाचष्टे॥

चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य।
त्रिधा वद्धो वृषभो रोरवीति महो देवो मर्त्यां आविवेश॥
(ऋक् ४-५८-३, यजुः १७-९१)

अत्रास्य विलक्षण वृषभरूपस्य धर्मस्य चत्वारि शृङ्गा = शृङ्गाणि शृङ्गवत् मूर्द्धन्यानि प्रमाणानि। तानि च वेदस्मृतिसदाचारातुष्टिलक्षणानि। उक्तं च मनुना—

वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम्॥ २-१२

अत्र आत्मतुष्टेः श्रुत्यादीनां त्रयाणां स्वगतविरोधसमाधायकत्वेऽपि उदासीनेषु तेषु श्रुतिस्मृतिसदाचारेषु तत्तत् प्रातिकूल्यमन्तरेण क्वचित् प्रवृत्तिः सम्भवतीति तस्याश्चतुर्थं स्थानं युज्यते। व्याख्यातं तदभिप्रेत्य योगीश्वरेण "सम्यक् संकल्पजः काम" (१-१७) इति।

तस्यैव धर्मवृषभस्य त्रयः पादाः। ते च धर्मस्य तत् प्रतिपादकधर्मशास्त्रस्य च आचारव्यवहारप्रायश्चित्ताभिधकाण्डत्रयरूपाः। यच्च वहुत्र धर्मशास्त्रेषु "चतुष्पात् सकलो धर्मः" (मनुः १ ८१) इत्यादिषु धर्मस्य चत्वारः पादाः प्रोक्तास्ते प्रविभागवचना इति मन्तव्यम्।

पुनश्चास्य विलक्षणधर्मवृषस्य द्वे शीर्षे। ते च आभ्युदयिकनैःश्रेयसिकरूपे प्रवृत्तनिवृत्तसंज्ञके वेदितव्ये। तदाह मनुः

सुखाभ्युदयिकं चैव नैःश्रेयसिकमेव च।
प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम्॥ (१२-८८)

पुनश्चास्य धर्मवृषभस्य हस्तासः—हस्ता सप्त भवन्ति। ते च हस्ताः धर्मस्य सप्त स्वगतभेदाः वर्णधर्मः

आश्रमधर्मः, वर्णाश्रमधर्मः, गुणधर्मः निमित्तधर्मः, साधारणधर्मः, परमधर्मश्चेति । ततश्चादितः पञ्च भविष्ये

वर्णधर्मः स्मृतस्त्वेक आश्रमाणामतः परम् ।
वर्णाश्रमस्तृतीयस्तु गौणो नैमित्तिकस्तथा ॥
वर्णत्वमेकमाश्रित्य यो धर्मः सं प्रवर्त्तते ।
वर्णधर्मः स उक्तस्तु यथोपनयनं नृप ॥
यस्त्वाश्रमं समाश्रित्य अधिकारे प्रवर्त्तते ।
स खल्वाश्रम धर्मस्तु भिक्षादण्डादिको यथा ॥
वर्णत्वमाश्रमत्वं च योधिकृत्य प्रवर्त्तते ।
स वर्णाश्रमधर्मस्तु मौञ्जीया मेखला यथा ॥
यो गुणेन प्रवर्त्तेत गुणधर्मः स उच्यते ।
यथा मूर्द्धाभिषिक्तस्य प्रजानां परिपालनम् ॥
निमित्तमेकमाश्रित्य यो धर्मः संप्रवर्त्तते ।
नैमित्तिकः स विज्ञेयः प्रायश्चित्तविधिर्यथा ॥ इति

षष्ठः साधारणधर्मश्च अहिंसादिः वर्णाश्रमादिः नैरपेक्ष्येण विहितः ।
यथाह मनुः— चतुर्भिरपि चैवैतैर्नित्यमाश्रमिभिर्द्विजैः ।

दशलक्षणको धर्मः सेवितव्यः प्रयत्नतः ॥ ६-९१
धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥ ६-९२

अत्र बहुषु उत्कलीयतालपत्रपुस्तकेषु "धी" स्थाने "ह्री" इति पाठो दृश्यते ॥ सप्तमस्त्वात्मज्ञानरूप सर्वोत्तमः—

अयं तु परमो धर्मो यद् योगेनात्मदर्शनम् (१-८) इति याज्ञवल्क्यप्रदर्शितः । हस्तत्वं चैष फलसमर्पकत्वेन कल्पनीयम् ॥

अयं च वृषायमाणो धर्मः त्रिधा बद्धः = शारीरिक-वाचिक-मानसिकत्वेन त्रिधा आचरित सन् रोरवीति = अत्यर्थं शब्दायते शब्दाश्चास्य धर्मशास्त्रवचनानि । यथा—

धर्मं चरत माऽधर्मं सत्यं वदत माऽनृतम् ।
दीर्घं पश्यत मा ह्रस्वं परं पश्यत माऽपरम् ॥ (वसिष्ठ०-३०-१)
धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः ।

तस्माद्धर्मो न हन्तव्यो मानो धर्मो हतोऽवधीत् ॥ (मनुः- ८-१५)

एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः ।

शरीरेण समं नाशं सर्वमन्यद्धि गच्छति ॥ (मनुः- ८-१७) इत्यादीनि ।

अथवा साक्षात् वक्तुः धर्मस्य वचनम् । यथा महाभारते (वन ३१४-११)

वरं वृणीष्व राजेन्द्र दाता ह्यस्मि तवानघ ।

ये हि मे पुरुषा भक्ता न तेषामस्ति दुर्गति ॥ इत्यादि ।

अत्र वक्ता यक्षरूपी धर्मः । अन्यच्च

दीर्घबाहुर्विरौम्येष न हि कश्चिच्छृणोति मे ।

धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते ॥ (महाभा १८-५-६२)

अत्र वक्ता कविर्व्यासो वा कविनिबद्धो धर्मो वा । धर्मे वक्तरि स इत्यत्र आत्मनि परोक्षनिर्देशः ।

सोऽयं सुप्रसिद्धः धर्मवृषभः महोदेवः=महादेवः पूज्यदेवो वा । स देवः मर्त्यान् मर्त्यलोकवासिनः मनुष्यान् आविवेश = व्याप्य वर्त्तते । सतत सुहृत्तयानुवर्त्तते इति भावः । सुहृत्त्वं च तस्य ऐहिकामुष्मिकसुखदातृतया मोक्षसहायकतया च सिद्ध्यति ।

एतस्य नित्यसुहृदः धर्मस्य प्रतिपादकाः ग्रन्था पुरुषस्य परमश्रेयःसम्पादनसहायकयो गुरुवत् सम्माननीया भवन्ति । ततो धर्मशास्त्रं प्रभुसम्मितमिति कविभिरुच्यते । ततस्तादृशानां ग्रन्थानां परिशीलनं कल्याणाय भवति । तत्तद् ग्रन्थस्थशब्दानामर्थग्रहणमप्यावश्यकम् ।

कदाचित् वसिष्ठस्मृतिव्याख्यानचेष्टोऽहं गतेषु कियत्सु अध्यायेषु कस्यचित् कस्यचित् शब्दस्य अर्थे अपरितुस्यन् अमरकोषादिकमपि तत्र उदासीनमनुभवन् धर्मशास्त्रशब्दानामपि एकः कोषः अविश्यक इत्यचिन्तयम् ।

पुस्तकानामध्ययनावसरे प्रसङ्गाद्वा टीकाकृतां व्याख्यानाद्वा कश्चित् कश्चित् दुरूहः अर्थः लभ्यते । तेषां संग्रहः मया प्रारब्धः । अथ गतेषु कियत्सु कालेषु तत्रभवान् श्री गौरीकुमारब्रह्मा आकस्मिकतया सदाशिवसंस्कृतमहाविद्यालये मया उपलब्धः । तदानी तत् संग्रहपुस्तकं मम हस्ते आसीत् । तच्च मया प्रदर्शितम् । तद् दृष्ट्वा प्रीतास्ते उक्तवन्तः— कर्मेदं साधु, किन्त्वत्र उद्धरणानि देयानि, उद्धरणानां परिचयोपि सम्यक् देयः । तदनु उद्धरणदाने तत्परिचयार्थे पृष्ठाङ्कादिदाने मम उद्यम आगतः । ततः पूर्वं संगृहीतानां परिचयतार्थे यद्यपि मया पश्चात् प्रयत्न आचरितः तथापि सर्वत्राहं पूर्णकामो

नाभवम् ॥ यथा— आनालक शब्दस्य प्रयोगस्थानं मम दृष्टिपथं पुनर्नागतम् इति ॥

अथ कदाचित् फलमूलादिशब्दविमर्शावसरे स्वर्गता आनन्दमहापात्रशर्माणः आयुर्वेदाध्यापका उक्तवन्तः ये ये शब्दा महत्त्वपूर्णास्ते सर्वे भवता ग्रन्थे निवेशनीयाः पाठकानामुपकाराय। जनः एकं पुस्तकं गृहीत्वा तेनैव हि सर्वं ज्ञातुमिच्छति ॥ तदनु केन्द्रीयविद्यापीठप्राचार्य्याः श्रीव्रजमोहनचतुर्वेदि-महोदया उपदिदिशुर्यत् धर्मशास्त्रशब्दकोशे ते शब्दाः स्थातुमर्हन्ति येषां धर्मशास्त्रेण सह सम्बन्धो वर्त्तते एते एव त्रय मम कर्मणि प्रोत्साहका इति एतेषु कृतज्ञतां समर्पयामि।

शब्दार्थसंग्रहस्तु अध्ययनेनैव भवति। अध्ययनं च समयं स्वास्थ्यं पुस्तकसद्भावम् अर्थ-ग्रहणशक्तिं चापेक्षते। कदाचित् पुस्तकं सकृत् अधीत्य यः शब्दः परित्यक्तः वारान्तराध्ययने तस्य उप-योगितापि दृश्यते। ततः पुस्तकानां सकृदध्ययनेन कर्म न साङ्गतां गतम्। पुनश्च अकारादिक्रमेण संगृह्यमाणो ग्रन्थः यदा संकीर्णो भवति तदा पुस्तकान्तरे पुनरपि निवेशनं क्रियते। एवं वारचतुष्टयं क्रमवर्द्धिष्णुः पाण्डुलेखः सम्पादितः।

कर्मसम्पादनाभ्यन्तरे सदाशिवसंस्कृतमहाविद्यालयस्य छात्रावासपरिचालनाकर्म षण्णां वर्षाणां कृते आगतम्। तदानीं अस्य कर्मणः गतिः स्थिरप्राया जाता यद्यपि न त्यक्ता। कदाचित् पुस्तकानि लभ्यन्ते समयो न लभ्यते, कदाचित् अवकाशेषु समयो लभ्यते पुस्तकं नास्ति। कदाचित् द्वयोः सत्त्वेऽपि स्वास्थ्यं नास्ति। इत्थं बहुधा बाधा आगता। परन्तु भगवतः श्रीजगन्नाथस्य कृपया कथंचित् किंचित् संगृहीतम्।

कोषग्रन्थस्य नित्यपूर्णता नित्यमपूर्णता च विद्यते। ते च पूर्णतापूर्णते संयोजयितु-रभिप्रायमाश्रित्य वर्त्तेते। येन यावन्तः शब्दाः संगृहीताः तैरेव शब्दैः स ग्रन्थः पूर्णो भवति। अनेन न्यायेन मम कर्म पूर्त्तिमगात् वस्तुतस्तु अपूर्णमेव। भविष्यन्तः पण्डिता अवश्यं कदाचित् पूरयिष्यन्तीत्याशासे। यद्यपि धर्मशास्त्रशब्दकोष इति नाम कृतं तथापि सर्वे शब्दा अत्र न समावेशिताः किन्तु विशिष्टा एव शब्दाः। धर्मशास्त्रपुस्तकानि सत्संपृक्तानि अन्ये गृह्यसूत्रपुराणादिशास्त्राणामंशाश्चात्र उपयोजिताः। पुस्तकानां सपादत्रीणि शतानि अत्र उपयोगार्थं स्वीकृतानि ॥ तेषां सूची चाग्रे स्थापयिष्यते। मम छात्रया श्रीमत्या जयश्रिया अन्तिमपाण्डुलेख-सम्पादने बहुसाहाय्यं कृतमिति तस्यै आशीर्वादमर्पयामि।

पुस्तकस्य प्रकाशने मे महती चिन्ता आसीत्। सर्वकल्याणभाजः आयुष्मतः म्युजियम्-क्युरेटरोपाधिकस्य श्रीनीलमणिमिश्रस्य प्रेरणया मया पर्य्यटनविभागे मुद्रणसाहाय्यलाभाय निवेदन-पत्रमर्पितम्। तत्रत्यसभ्यैः पञ्चसहस्र रूप्यकैः पुस्तकस्य ग्रहणमभिलषितम्। मयापि तदङ्गी कृतम्। त्वया हृषीकेश हृदिस्थितेन यथानियुक्तोऽस्मि तथा करोमि॥ इति

पुरी

ता-५-३-८०

श्रीकुलमणिमिश्रशर्मा

लब्धावसर-धर्मशास्त्राध्यापकः

श्रीसदाशिवकेन्द्रीयसंस्कृतविद्यापीठस्य

# धर्मशास्त्रशब्दकोषः

## प्रथमो भागः

## (अ)

**अंशः**—भागः । "द्वावंशौ प्रतिपद्येत विभजन्नात्मनः पिता ।" इति दायभागे नारदः—१३-१२

**अंशभूः**—अंशग्रहणे अधिकारी । दायाद इति सायणभाष्ये ।

"वरुणं देवा अब्रुवन् त्वयाऽंशभुवा सोमं राजानं हनाम"

तै० सं०—६-४-८-२-३

**अंशुकम्**—(१) वस्त्रम् ।

पादक्लेशोऽंशुककरोल्लुञ्छनेषु पणान् दश ।

याज्ञ—२-२१७

वसानस्त्रीन् पणान् दाप्यो नेजकस्तु परांशुकम् ।

विक्रयावक्रयधिया न याचितेषु पणान् दश ॥

याज्ञ—२-२३८

(२) रज्ज्वादीनां वस्त्रादीनां चान्येषामश्लक्ष्णानां शूकरूपो यो दन्तुरितांशः सः ।

गोवालैः शणसंमिश्रैस्त्रिवृद् वृत्तमनंशुकम् ।

व्यामप्रमाणं नेत्रं स्यात् तेन मथ्यो हुताशनः ॥

इति हरिहरभाष्ये । पारस्करः—१-२

**अंशुपट्टः**—वल्कलतन्तुनिर्मितं वस्त्रम् ।

"सोषरोदकगोमूत्रैः शुद्धत्याविककौशिकम् ।

सश्रीफलैरंशुपट्टं सारिष्टैः कुतपं तथा ॥"

याज्ञ—१-१८६

अत्र "अंशुपट्टं वल्कलतन्तुकृतमिति" विज्ञानेश्वरः ।

**अंसः**—भुजशिरः, अस्त्रीत्यमरः—२-६-७८

"स्तेनः प्रकीर्णकेशोऽंसे मुसलमादायेत्यापस्तम्बः—१-२५-४

**अंहः**—पापम् । मुच्यते सोऽंहसः क्षणात् । बौधा—४-६-६-६

**अंहस्पतिः**—क्षयमासः । अंहसः पापस्य पतिरिति व्युत्पत्त्या तस्य कर्मानर्हता स्फुटा ।

यस्मिन् मासे न संक्रान्तिः संक्रान्तिद्वयमेव च ।

संसर्पाहंस्पतिमासावधिमासश्च निन्दितः ॥

इति कालमाधव—२

**अंहोमुचौ**—अंहोमुचौ तच्छब्दवन्तौ गणौ । तयोः "यावामिन्द्रावरुणा" इत्येकः चत्वारो मन्त्राः सानुषंगाः । अपरो "योवामिन्द्रावरुणा इत्यष्टौ । अत्र तादृश एव सामशब्दोऽंहोमुचवचन इति गोविन्द स्वामी ।

"क्षापवित्रं सहस्राक्षो मृगारोंहोमुचौ गणौ ।

पावमान्यश्च कूष्माण्ड्यो वैश्वानर्य ऋचश्च याः ॥

इति गणहोमे । बौधा—४-७-७-५

**अः**—(१) विष्णुः । (२) ऋग्वेदः । ऋकारस्तु भवेद्विष्णुस्तदृग्वेद उदाहृतः—बृःहाः ६-४ । (३) अकारस्तु सर्वा वाक् इति तत्रैव—६-६८

**अकल्कः**—दम्भशून्यः अकपट इति यावत् ।

पुस्तकस्य प्रकाशने मे महती चिन्ता आसीत् । सर्वकल्याणभाजः आयुष्मतः म्युजियम्-क्युरेटरोपाधिकस्य श्रीनीलमणिमिश्रस्य प्रेरणया मया पर्य्यटनविभागे मुद्रणसाहाय्यलाभाय निवेदन-पत्रमर्पितम् । तत्रत्यसभ्यैः पञ्चसहस्र रूप्यकैः पुस्तकस्य ग्रहणमभिलषितम् । मयापि तदङ्गी कृतम् । त्वया हृषीकेश हृदिस्थितेन यथानियुक्तोऽस्मि तथा करोमि ॥ इति

पुरी — श्रीकुलमणिमिश्रशर्मा

ता-५-३-८० — लब्धावसर-धर्मशास्त्राध्यापकः

श्रीसदाशिवकेन्द्रीयसंस्कृतविद्यापीठस्य

# धर्मशास्त्रशब्दकोषः

## प्रथमो भागः

## (अ)

**अंशः**—भागः । "द्वावंशौ प्रतिपद्येत विभजन्नात्मनः पिता ।" इति दायभागे नारदः—१३-१२

**अंशभूः**—अंशग्रहणे अधिकारी । दायाद इति सायणभाष्ये ।

"वरुणं देवा अब्रुवन् त्वयाऽंशभुवा सोमं राजानं हनाम"

तै० सं०—६-४-८-२-३

**अंशुकम्**—(१) वस्त्रम् ।

पादक्लेशोऽंशुककरोल्लुञ्छनेषु पणान् दश ।

याज्ञ—२-२१७

वसानस्त्रीन् पणान् दाप्यो नेजकस्तु परांशुकम् ।

विक्रयावक्रयधिया न याचितेषु पणान् दश ॥

याज्ञ—२-२३८

(२) रज्ज्वादीनां वस्त्रादीनां चान्येषामश्लक्ष्णानां शूकरूपो यो दन्तुरितांशः सः ।

गोवालैः शणसंमिश्रैस्त्रिवृद् वृत्तमनंशुकम् ।

व्यामप्रमाणं नेत्रं स्यात् तेन मथ्यो हुताशनः ॥

इति हरिहरभाष्ये । पारस्करः—१-२

**अंशुपट्टः**—वल्कलतन्तुनिर्मितं वस्त्रम् ।

"सोषरोदकगोमूत्रैः शुद्धत्याविककौशिकम् ।

सश्रीफलैरंशुपट्टं सारिष्टैः कुतपं तथा ॥"

याज्ञ—१-१८६

अत्र "अंशुपट्टं वल्कलतन्तुकृतमिति" विज्ञानेश्वरः ।

**अंसः**—भुजशिरः, अस्त्रीत्यमरः—२-६-७८

"स्तेनः प्रकीर्णकेशोऽंसे मुसलमादायेत्यापस्तम्बः–६-२५-४

**अंहः**—पापम् । मुच्यते सोऽंहसः क्षणात् । बौधा–४-६-६-६

**अंहस्पतिः**—क्षयमासः । अंहसः पापस्य पतिरिति व्युत्पत्त्या तस्य कर्मानर्हता स्फुटा ।

यस्मिन् मासे न संक्रान्तिः संक्रान्तिद्वयमेव च ।

संसर्पाहंस्पतिमासावधिमासश्च निन्दितः ॥

इति कालमाधव—२

**अंहोमुचौ**—अंहोमुचौ तच्छब्दवन्तौ गणौ । तयोः "यावामिन्द्रावरुणा" इत्येकः चत्वारो मन्त्राः सानुषंगाः । अपरो "योवामिन्द्रावरुणा इत्यष्टौ । अत्र तादृश एव स्तामशब्दोऽंहोमुचवचन इति गोविन्द स्वामी ।

"क्षापवित्रं सहस्राक्षो मृगारोंहोमुचौ गणौ ।

पावमान्यश्च कूष्माण्ड्यो वैश्वानर्य ऋचश्च याः ॥

इति गणहोमे । बौधा—४-७-७-५

**अः**—(१) विष्णुः । (२) ऋग्वेदः । ऋकारस्तु भवेद्विष्णुस्त्वृग्वेद उदाहृतः—वृःहाः ६-४ । (३) अकारस्तु सर्वा वाक् इति तत्रैव—६-६८

**अकल्कः**—दम्भशून्यः अकपट इति यावत् ।

**अकल्पः**—(१) असमर्थः, (२) रोगी "नाकल्पां नारीमभिरमयेत्" गौतमः—१-६-२६ ।

"अकल्पबालस्थविरविषमस्थ क्रियाकुलान्", इत्यादि आह्वानायोग्यगणनायाम् मिताक्षरायाम् । याज्ञः—२-५

**अकल्यः**—रोगी । अकल्यपरिचरणाच्च ।

विष्णुस्मृतिः—६१-१८

**अकार्पण्यम्**—"अदैन्यपूर्वकं सत्पात्रे भक्त्या शक्त्या च प्रत्यहं दानमकार्पण्यम्" इति संस्काररत्नमाला । आपद्यपि अदीनता सम्विभागरुचित्वं च अकार्पण्यमिति मस्करिः । गौतमः—१-८-२४

आपद्यपि च कष्टायां भवेद्दीनो न कस्यचित् ।
सम्विभागरुचिश्च स्यादकार्पण्यं तदुच्यते ॥ इति व्यासः
स्तोकादपि हि दातव्यमदीनेनान्तरात्मना ।
अहन्यहनि यत्किञ्चित्तदकार्पण्यमुच्यते ॥

इति संस्कारप्रकाशे बृहस्पतिः

**अकिञ्चनः**—दरिद्रः ।

श्रोत्रियं व्याधितार्त्तौ च बालवृद्धावकिञ्चनम् ।
महाकुलिनमार्यं च राजा संपूजयेत्सदा ॥ मनुः—८-३९५

**अकृतम्**—कृतमोदनसक्त्वादि-तण्डुलादि-कृताकृतम् ।
व्रीह्यादि चाकृतं प्रोक्तमिति हव्यं त्रिधा बुधैः ॥

कात्यायनः—२०-१-३

**अकृतसाक्षी**—अकृतसाक्षी षड्विधो नारदेन दर्शितः ।

एकादशविधः साक्षी शास्त्रे दृष्टो मनीषिभिः ।
कृतः पञ्चविधस्तेषां षड्विधोऽकृत उच्यते ॥ इति

ते च "षडेते पुनरुद्दिष्टाः साक्षिणस्त्वकृताः स्वयम् ।
ग्रामश्च प्राड्विवाकश्च राजा च व्यवहारिणाम् ॥
अन्ये पुनरनिर्दिष्टाः साक्षिणः समुदाहृता इति पाठान्तरम् ॥

नारदः—४-१५१

कार्येष्वभ्यन्तरो यः स्यादर्थिना प्रहितश्च यः ।
कुल्याः कुलविवादेषु भवेयुस्तेऽपि साक्षिणः ॥

नारदः—४-१५२

एते साक्षित्वेन अनिर्दिष्टा अपि साक्षिणो भवन्ति इति अकृतसाक्षिणः ।

**अक्रोधः**—साधारण धर्मविशेषः ।

धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।
धीर्विद्यासत्यमक्रोधो दशकं धर्मलक्षणम् ॥ मनुः—६-९२

अपकारिण्यपि क्रोधस्यानुत्पादनमक्रोध इति विज्ञानेश्वरः । हनन-भर्त्सन-शपनादि-क्रूरकर्मारम्भनिदानीभूतान्तविकारविशेषवर्जनमिति हेमाद्रिः ॥

**अक्लिष्टः**—सत्कृतः । अक्लिष्टं सत्कृतमिति कल्पतरुः । नियतकाल—१९७ ।

श्रान्तायादृष्टपूर्वाय प्रियायाध्वनि वर्त्तिने ।
ददाति योऽन्नमक्लिष्टं स यज्ञः सर्वदक्षिणः ॥ इति यमः ॥

**अक्षः**—(१) रथावयवविशेषः । 'अख' इति उत्कलभाषायां प्रसिद्धः ।

छिन्ननास्ये भग्नयुगे तिर्यक्प्रतिमुखागते ।
अक्षभङ्गे च यानस्य चक्रभङ्गे तथैव च ॥

मनुः—८-२९१

(२) क्रीडाविशेषः । "अक्षाः पाशका" इत्यपरार्कः

अक्षवध्रशलाकाद्यैर्देवनं जिह्मकारितम् ।
पणक्रीडावयोभिश्च पदं द्यूतसमाह्वयम् ॥

इति नारदः—१६-१

अक्षयोगात् क्रीड़नमप्यक्षः।
मृगयाक्षो दिवास्वप्नः परिवादः स्त्रियो मदः।
तौर्य्यत्रिकं वृथाट्या च कामजो दशको गणः॥
इति मनुः—७-४७

(३) क्रीड़ोपकरणविशेषः। अक्षवध्रशलाकाद्यैरिति नारदोक्तेः।

(४) परिमाणविशेषः। कर्षापरपर्य्यायः खारीशब्दे द्रष्टव्यः।

"अक्षादल्पपरीमाणं न लिङ्गं कुत्रचिन्नरः।
कुर्वीताङ्गुष्ठतो ह्रस्वं न कदाचित्समाचरेत्॥
इति निर्णयसिन्धौ

(५) पादस्तम्भयोरुपरिनिविष्टः तुलाधारपट्टः।
इति मिताक्षरायाम्। याज्ञ—२-१०३

तुलायन्त्रस्य पादस्तम्भयोरुपरिनिहिततुलाधारपट्टः।
दार्ढ्यप्रयोजककीलक इति हलायुधः॥
कक्ष-छेदे तुलाभङ्गे घटकर्कटयोस्तथा।
रज्जुच्छेदेऽक्षभङ्गे च तथैवाशुद्धिमादिशेत्॥
इति नारदः—२-२८४

(६) विभीतकवृक्षः (७) शरीरावयवविशेषः।
स च कर्णनेत्रयोर्मध्ये शंखादधोभागः॥
विज्ञानेश्वरः—३-८७

**अक्षतयोनिः**—अस्पृष्टमैथुना स्त्री।
"पाणिग्राहे मृते बाला केवलं मन्त्रसंस्कृता।
सा चेदक्षतयोनिः स्यात्पुनः संस्कारमर्हति॥
वसिष्ठः—१७-७४

**अक्षता**—अस्पृष्टमैथुना स्त्री। "अक्षता च क्षता चैव पुनर्भूः संस्कृता पुनः।" याज्ञ—१-६७॥

**अक्षताः**—"अक्षतास्तु यवाः प्रोक्ता भृष्टा धाना भवन्ति ते"
इति संस्कारप्रकाशे छन्दोगपरिशिष्टवचनम्॥
अक्षतैःसत्वक्कैर्यवैरिति हरिहरभाष्ये।
पारस्करगृ०—१-६-३

**अक्षमाला**—वसिष्ठभार्य्याविशेषः।
"अक्षमाला वसिष्ठेन संयुक्ताऽधमयोनिजा॥"
मनुः—६-२३

**अक्षयतृतीया**—वैशाखशुक्लतृतीया।
अस्यां सत्ययुगस्य उत्पत्तिः।
"वैशाखमासस्य सिता तृतीया नवम्यसौ कार्त्तिकशुक्लपक्षे।
नभस्य मासस्य तमिस्रपक्षे त्रयोदशी पञ्चदशी च माघे॥
एता युगाद्याः कथिताः पुराणे अनन्तपुण्यास्तिथयश्चतस्रः।
पानीयमप्यत्र तिलैर्विमिश्रं दद्यात् पितृभ्यः प्रयतो मनुष्यः॥
इति कालसारोद्धृते भविष्ये
विष्णुपुराणे प्रायेणैवं पाठः—३-१४-१२-१४

**अक्षयातिथिः**—अमा वै सोमवारेण रविवारेण सप्तमी।
चतुर्थी भौमवारेण अक्षयादपि चाक्षया॥
इति कालसारोद्धृते भविष्ये

**अक्षरम्**—वर्णलिपिः।
षाण्मासिके तु समये भ्रान्तिः संजायते यतः।
धात्राक्षराणि सृष्टानि पत्रारूढ़ान्यतः पुरा॥
इति व्यवहारकल्पतरौ बृहस्पतिः—१५२

**अक्षरः**—(१) सर्वभूतबीजस्वरूपः अक्षराख्यः पुरुषविशेषः।
"द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते॥"
भगवद्गीता—१५-१६

क्षराख्यस्य पुरुषस्य उत्पत्तिबीजम् अनेकसंसारिजन्तु कामकर्मादिसंस्काराश्रयः अक्षरः पुरुषः उच्यते ॥

इति श्रीशंकराचार्य्याः

(२) प्रणवः । अक्षरेण चात्मानं योजयेत् ।

बौधा—२-७-१२-१४

**अक्षवती**—अक्षक्रीड़ा ।

"यदाश्रौषं हृतराज्यं युधिष्ठिरं पराजितं सौवलेनाक्षवत्याम् ।"
अन्वागतं भ्रातृभिरप्रमेयैस्तदानाशंसे बिजयाय सञ्जय ॥

इति महाभारते—१-१-१५६

**अक्षारः**—गव्यमक्षिन्नमन्नं च तिलमुद्गौ च मागधी ।
आमतण्डुलमुद्गाश्च दधि सद्यो घृतं पयः ॥
अक्षाराः कथिता ह्येते त्वन्ये क्षाराः प्रकीर्त्तिताः ॥
दन्तकाष्ठं तथैवापस्त्रिकटु-त्रिफला तथा ।
भोज्यपात्रं तथैवैतदक्षारं परिचक्षते ॥

इति कालसारे

गोक्षीरं गोघृतं चैव धान्यं मुद्गास्तिला यवाः ।
अक्षारलवणा ह्येते क्षाराश्चान्ये प्रकीर्त्तिताः ॥

इति गोभिलीयचन्द्रकान्तभाष्ये—२-३-१५

**अक्षारलवणः**—अकृत्रिमलवणः सैन्धवादिः ।
"गोक्षीरं गोघृतं चैव धान्यं मुद्गास्तिला यवाः ।
सामुद्रं सैन्धवं चैव अक्षारलवणं स्मृतम् ॥
इति वैद्यकशब्दसिन्धूद्धृतहारलतायाम् ।
अक्षारलवणान्नाः स्युर्निमज्जेयुश्च ते त्र्यहम् ।
मांसाशनं च नाश्नीयुः शयीरंश्च पृथक् क्षितौ ॥

मनुः—५-७३

अत्र क्षारलवणं कृत्रिमलवणं ।
तद्रहितमन्नमश्नीयुरिति कुल्लूकः ॥

**अक्षिकूटम्**—प्राणायतनविशेषः ।
कनीनिके चाक्षिकूटे शष्कुली कर्णपत्रकौ ॥ याज्ञ—३-९५
अत्र "अक्षिकूटे अक्षिनासिकयोः सन्धी", इति मिताक्षरा ।
अक्षिकूटे पक्ष्मणी इति वैजयन्त्याम् ॥ विष्णुः—९६-९२

**अक्षोटः**—आखुरोट इति नाम्ना प्रसिद्धः वृक्षः । तत्फलं अक्षोटमिति । अक्षोटं गिरिसम्भवं पीलुफलमिति कल्पतरौ । श्राद्ध—४७
"भव्यं पालेवताक्षोडं खर्जूराम्रफलानि च" इत्यादिश्राद्धदेये दर्शितं श्राद्धदीपे ॥

**अक्षौहिणी**—२१८७० गजानां २१८७० रथानां ६५६१० घोटकानां १०९३५० पादातिकमनुष्याणां च समवायः अक्षौहिणी । यथा महाभारते—१-१-२ अध्याये
"एको रथो गजश्चैको नराः पञ्च पदातयः ।
त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते ॥ १९ ॥
पत्तिं तु त्रिगुणामेतामाहुः सेनामुखं बुधाः ।
त्रीणि सेनामुखान्येको गुल्म इत्यभिधीयते ॥ २० ॥
त्रयो गुल्मा गणो नाम वाहिनी तु गणास्त्रयः ।
स्मृतास्तिस्रस्तु वाहिन्यः पृतनेति विचक्षणैः ॥ २१ ॥
चमूस्तु पृतनास्तिस्रस्तिस्रश्चम्वस्त्वनीकिनी ।
अनीकिनीं दशगुणां प्राहुरक्षौहिणीं बुधाः ॥ २२ ॥
अक्षौहिण्याः प्रसंख्याता रथानां द्विजसत्तमाः ।
संख्या गणिततत्त्वज्ञैः सहस्राण्येकविंशतिः ॥ २३ ॥
शतान्युपरि चैवाष्टौ तथा भूयश्च सप्ततिः ।
गजानां च परिमाणमेतदेव विनिर्दिशेत् ॥ २४ ॥
ज्ञेयं शतसहस्रं तु सहस्राणि नवैव तु ।
नराणामपि पञ्चाशच्छतानि त्रीणि चानघाः ॥ २५ ॥
पञ्चषष्टिसहस्राणि तथाश्वानां शतानि च ।
दशोत्तराणि षट् प्राहुः यथावदिह संख्यया ॥
एतामक्षौहिणीं प्राहुः संख्यातत्त्वविदो जनाः ॥२६॥

**अखण्डाकपिलः**—कच्छुः । अखण्डाकपिलं पेषयित्वा ऋतुवेलायां × × × नस्तो दक्षिणतो निषिञ्चेत् । आश्वलायनगृह्यपरिशिष्टे । कल्पतरुब्रह्मचारिकाण्डे—८१

**अखर्वपात्रम्**—दग्धशरावादि इति तैत्तिरीयसायणभाष्ये—२-५-१-७ । रजस्वला "अखर्वपात्रेण पिबेत् । अञ्जलिना वा पिबेत् लोहितायसेन वा ॥"

इति वसिष्ठः—५-७

**अगस्त्यर्घः**—"अप्राप्ते भास्करे कन्यां सत्रिभागैस्त्रिभिर्दिनैः ।
अर्घं दद्युरगस्त्याय ये च सन्ति महोदये ॥
इति कालसारे । सिंहमासस्य अन्तिमेषु त्रयोदशसु दिवसेषु अगस्त्याय अर्घो देय इति । अर्घदानमन्त्रः—
"काशपुष्पप्रतीकाश अग्निमारुतसम्भव ।
मित्रावरुणयोः पुत्र कुम्भयोने नमोऽस्तु ते ॥

मत्स्यपुराणे—६१-८५

संपूर्णो विधिरत्रैव मृग्यः

**अगारम्**—गृहम् ।
"अगारादभिनिष्क्रान्तः पवित्रोपचितो मुनिः ।
समुपोढ़ेषु कामेषु निरपेक्षः परिव्रजेत् ॥

मनुः—६-४१

मध्येऽगारस्य दशमैकादशाभ्यां प्रागपवर्गम् ॥

आप—२-२-३-२२

**अगारदाही**—गृहदाहकः । वर्ज्याः स्युर्हव्यकव्ययोरित्यनुवृत्तौ "अगारदाही गरदः कुण्डाशी सोमविक्रयी ॥"

इति मनुः—३-१५८

**अग्नितीर्थम्**—अङ्गुष्ठमूलस्योत्तरतो रेखासु ब्राह्मं तीर्थम् । मध्ये अग्नितीर्थम् ।" इति अग्निवेश्यगृ— २-६-१ ।

**अग्निदिव्यम्**—महाभियोगेषु त्रिविधमानुषप्रमाणाभावे निर्णयपादे कुष्ठिव्यतिरिक्तस्य वादिनः प्रतिवादिनो वा धर्मावाहनादिमकलेति कर्त्तव्यतानंतरं कृतधान्यमर्दनौ करौ तिलकालकव्रणकिणादिस्थानेषु अलक्तकरसादिना अङ्कयित्वा तदुपरि सप्ताश्वत्थपत्राणि संस्थाप्य तानि च हस्तसहितानि सप्तभिः शुक्लसूत्रैः बद्ध्वा तदुपरि सप्तशमीपत्राणि सप्तदूर्वापत्राणि दध्यक्षतांश्च विन्यस्य तदुपरि त्रिवारं तप्तं पञ्चाशत्पलिकमयःपिण्डं समन्त्रं संस्थापयेत् । ततो दिव्यकर्त्ता षोडशाङ्गुलान्तरितषोड़शाङ्गुलपरिमितमण्ड़लाष्टकस्य पश्चिममण्डलात् सप्तमण्डलानि शनैर्गत्वा तादृग्विधे नवमे मण्डले तप्तलोहपिण्डं स्थापयन् अदग्धः शुद्धो विभाव्यते । विशेषविधिर्मिताक्षरादौ द्रष्टव्यः ।

**अग्निष्टुत्**—ब्रह्महत्याया प्रायश्चित्तत्वेनोपदिष्टो यागविशेषः ।
"यजेत वाश्वमेधेन त्रिवृताग्निष्टुतापि वा ।

मनुः—११-७४

अत्र त्रिवृदिति अग्निष्टुदित्यस्य विशेषणमिति शूलपाणिः अग्निष्टुन्नामैकाह इति हरदत्तः । गौतमः—३-१-१०

**अग्निष्टोमः**—चत्वारिंशत्संस्कारान्तर्गतसंस्कारकर्मविशेषः

गौतप्रः—८-१६

**अग्निष्ठम्**—"चुल्ली इति श्रीमूला ।" एकपदीप्रतिक्रान्तमर्वि वा चक्रिचतुष्पदस्थानमग्निष्ठम् उदञ्जरस्थानं रोचनीं कुट्टनीं वा कारयेत् । कौटल्यः—३-८-११
"अग्निष्ठेष्वग्निशालासु तथा ब्रह्मस्थलीषु च ।
सरीसृपाणि दृश्यन्ते हव्येषु च पिपीलिकाः ॥

इति रामायणे विभीषणोक्तिः—६-१०-१६

"रज्जुदालमग्निष्ठं मिनोति" ॥ तै॰ ब्रा—३-८-२०-१
अत्र अग्निष्ठम् अग्निसमीपस्थितियोग्यमिति सायणः ।

**अग्निष्ठः**—लोहमयं भर्जनपात्रमिति त्रिकाण्डशेषः ।

**अग्निष्वात्ताः**—पितृगणविशेषः । ते च देवानां पितरः ।
विराट्सुताः सोमसदः साध्यानां पितरः स्मृताः ।
अग्निष्वात्ताश्च देवानां मारीचा लोकविश्रुताः ।।
मनुः—३-१९५

**अग्निहोत्रम्**—गृह्येऽग्नौ सायंप्रातर्विहितो नित्यो होमः ।
अग्निहोत्रं च जुहुयादाद्यन्ते द्युनिशोः सदा ।
दर्शेन चार्द्धमासान्ते पौर्णमासेन चैव हि ।। मनुः—४-२५
सायं अग्नये स्वाहा प्रजापतये स्वाहा इति ।
प्रातः सूर्य्याय स्वाहा प्रजापतये स्वाहा इति ।

**अग्निहोत्रहवणी**—अग्निहोत्रहोमसाधनम् । अग्निहोत्रं हूयते अनयेति विग्रहः । "अथैतानि पात्राणि योजयेत् (१) दक्षिणे हस्ते जुहूम् (२) सव्य उपभृतम् (३) दक्षिणे पार्श्वे स्फ्यं, सव्येऽग्निहोत्रहवणीम् ।" आश्व०गृ०-४-३-४

**अग्नीत्**—ऋत्विग्विशेषः । यः ऊर्द्ध्वाग्रमसिवत्स्फ्यं दक्षिणहस्ते धारयन् उत्करदेशे च दक्षिणामुखस्तिष्ठति, अध्वर्युणा आश्रवणे कृते अस्तुशब्दपूर्वकश्रौषट्शब्दोच्चारणरूपप्रत्याश्रवणं करोति स अग्नीध् इति अग्नित् इति चोच्यते इति श्रौतपदार्थनिर्वचने ।।

**अग्नीन्धनम्**—होम इति बालम्भट्टी । करणे ल्युट् ।
याज्ञ—१-१
अग्नीन्धनं भैक्षचर्य्यामधःशय्यां गुरोर्हितम् ।
आसमावर्त्तनात् कुर्य्यात् कृतोपनयनो द्विजः ।।
मनुः—२-२०८

**अग्नीध्रः**—ऋत्विग्विशेषः । अग्नित् इत्यस्य नामान्तरम् ।

**अग्नेर्व्रतम्**—"अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपां रेतांसि जिन्वति ।" इत्यस्यामृचि उत्पन्नं साम ।
त्रीण्याज्यदोहानि रथन्तरं च अग्नेर्व्रतं वामदेव्यं बृहच्च । एतानि जप्तानि पुनन्ति जन्तून् जातिस्मरत्वं लभते यदीच्छेत् ।। वसिष्ठः—२८-१५

**अग्नौकरणम्**—"अग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहा, इति श्राद्धे विहितमाहुतिद्वयम् ।" "अग्नौ करिष्यन्नादाय पृच्छत्यन्नं घृतप्लुतम् ।"
इत्यादि याज्ञ—१-२३६
तेषामुदकमानीय सपवित्रांस्तिलानपि ।
अग्नौ कुर्य्यादनुज्ञातो ब्राह्मणो ब्राह्मणैः सह ।।
मनुः—३-२१०

**अग्न्याधेयम्**—हविर्यज्ञसंस्थसंस्कारकर्मविशेषः ।
"प्राजापत्यमदत्त्वाश्वमग्न्याध्येयस्य दक्षिणाम् ।।"
इति मनुः—११-३८
"अग्न्याधेयादयः श्रुतिसिद्धाः संस्कारेषु गण्यन्ते ।"
इति गौतमसूत्रव्याख्याने हरदत्तः—१-८-२०

**अग्न्युत्सादी**—त्यक्ताग्निः । अग्न्युत्सादिनिराकृत्युपपातकेषु चैवम् ।। गौतमः—३-४-३४

**अग्रम्**—(१) ग्रासचतुष्टयपरिमिता भिक्षा । अग्रं च देयमिति आप०—२-४-१०
ग्रासप्रमाणा भिक्षा स्यादग्रं ग्रासचतुष्टयम् ।
अग्रं चतुर्गुणं प्राहुर्हन्तकारं द्विजोत्तमाः ।।
इत्याचारसारे मार्क० पु०— २९-३५

"अग्रं षोड़शग्रासपरिमितं ग्रासचतुष्टयपर्य्याप्तं वा अन्नमिति हरिहरभाष्ये ॥ पारस्करगृ०—२-६-११

"ग्रासमात्रा भवेद्भिक्षा पुष्कलं तच्चतुर्गुणम् ।
हन्तस्तु तैश्चतुर्भिः स्यादग्रं तत्त्रिगुणं भवेत् ॥

इति मिताक्षरायाम् । शातातपः—१-१०८

(२) परिमाणम् ।

तस्मात्साक्षिमदच्छन्नं कुर्य्यात् सम्यग्विभाषितम् ।
स्वे परे वा जने कार्य्यं देशकालाग्रवर्णतः ॥

कौटल्यः—३-१२

(३) अधिकम् ।

अश्वत्थामा बलिर्व्यासो हनुमांश्च विभीषणः ।
कृपः परशुरामश्च सप्तैते चिरजीविनः ॥
सप्तैतांश्च स्मरेन्नित्यं मार्कण्डेयमथाष्टमम् ।
जीवेद्वर्षशतं साग्रमपमृत्युविवर्जितः ॥ इति ॥

(४) सम्पूर्णम् ।

यद्यकार्यशतं साग्रं कृतं वेदश्च धार्य्यते ।
सर्वं तत्तस्य वेदाग्निर्दहत्यग्निरिवेन्धनम् ॥

वसिष्ठः—२-७-१

अग्रं पुरस्तादुपरि परिमाणे पलस्य च ।
आलम्बने समूहे च प्रान्ते च स्यान्नपुंसकम् ॥
अधिके च प्रधाने च प्रथमे चाभिधेयवत् ॥

इति मेदिनी—२७-३

**अग्रजन्मा**—ब्राह्मणः । तस्य ज्येष्ठत्वमाह मनुः—

उत्तमाङ्गोद्भवाद् ज्येष्ठ्याद् ब्रह्मणश्चैव धारणात् ।
सर्वस्यैवास्य सर्गस्य धर्मतो ब्राह्मणः प्रभुः ॥ १-९३ ॥
वैश्या प्रतोदमादद्याद्वेदने त्वग्रजन्मनः ॥

इति याज्ञ०—१-६२

**अग्रहारः**—विप्राधिष्ठितो ग्रामः ।

खेटग्रामाग्रहाराश्च कुब्जं दुर्गं च पत्तनम् ।
पुरं च राजधानीति कीर्त्तिता अष्टधा बुधैः ॥
शूद्रैरधिष्ठितं खेटं ग्रामः शूद्रैर्द्विजोत्तमैः ।
विप्रैरेवाग्रहारःस्यात् कुब्जं सीमान्तवामतः ॥
इति लक्षणप्रकाशोद्धृतसिद्धान्तशेखरे ।

महाभारते—

ब्राह्मणानग्रहारैर्वा यथावदनुपश्यसि ।
कच्चित्ते परितुष्यन्ति शीलेन भरतर्षभ ॥

आश्रमवासि—२६-५

**अग्रावलेहितम्**—पूर्वमेवान्येनास्वादितम् इति माधवाचार्य्याः ।

"द्विःखिन्नं परिदग्धं च तथैवाग्रावलेहितम् ।"

इति श्राद्धवर्ज्ये ब्रह्माण्डपुराणम् ॥

**अग्रेदिधिषूः**—अनूढायां ज्येष्ठायामूढा अनुजा ।

ज्येष्ठायां यद्यनूढायां कन्यायामूह्यतेऽनुजा ।
सा चाग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषूर्मता ॥

इति देवलः ॥

**अग्रेदिधिषूपतिः**—प्रथमविवाहिताया अनुजायाः पतिः ।

ज्येष्ठायां विद्यमानायां कन्यायामूह्यतेऽनुजा ।
सा चाग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषूः स्मृता ॥

इति प्रायश्चित्तविवेके देवलः ॥

**अग्लास्नुः**—उत्साहसम्पन्नः । आप—१-१-३-२२

**अघम्**—(१) अशौचम् ।

न वर्द्धयेदघाहानि प्रत्यूहेन्नाग्निषु क्रियाः ।
न च तत्कर्म कुर्वाणः सनाभ्योऽप्यशुचिर्भवेत् ॥

इति मनुः—५-८४

(२) पापम् । दुःखम् ।

अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात् ।

मनुः—३-११८

**अघप्रस्तरः**—आशौचिनां शयनासनार्थस्तृणमयः प्रस्तर इति विज्ञानेश्वरः—१-१६

तत्र "गृहान् व्रजित्वा अघप्रस्तरे त्र्यहमनश्नन्त आसीरन् ।"

वसिष्ठः—४-१४

उपलब्धवसिष्ठस्मृतौ तु प्रस्तरे इति पाठः लभ्यते ।।

**अघमर्षणम्**—ऋतं च सत्यं चेत्यादिसूक्तम् अघमर्षणेन दृष्टम् । अत्र माधुच्छन्दसोऽघमर्षणऋषिः, भाववृत्तम्, अनुष्टुप् ।

ऋतं च सत्यं चाभीद्धात् तपसोऽध्यजायत ।
ततो रात्र्यजायत ततः समुद्रो अर्णवः ।। १ ।।
समुद्रादर्णवादधिसम्वत्सरो अजायत ।
अहोरात्राणि विदधद् विश्वस्य मिषतो वशी ।। २ ।।
सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् ।
दिवं च पृथिवीं चान्तरिक्षमथो स्वः ।। ३ ।।

ऋक्—३-८-४८

अघमर्षणं देवकृतं शुद्धवत्यस्तरत्समाः ।
कुष्माण्ड्यः पावमान्यश्च सावित्र्यश्च तथैव च ।।

शङ्खस्मृतिः—११-१

यथाश्वमेधः क्रतुराट् सर्वपापापनोदनः ।
तथाघमर्षणं सूक्तं सर्वपापापनोदनम् ।।

मनुः—११-२६०

**अघशंसी**—अघशंसी पापस्तेनो हिंस्रो वेति असहायः भाष्ये अभिशापकदित्यपरार्कः—२-७१

परदोषप्रकाशक इति स्मृतिचन्द्रिका ।

परकीयपापप्रकाशक इति व्यवहारप्रकाशे—११६

**अघ्न्या**—गौः । कल्पतरौ-दान—१६४

काम्या प्रिया च हव्या च इडा रन्ता सरस्वती ।
मही विश्रुता चाघ्न्या च गोनामानि विदुर्बुधाः ।।

इति चन्द्रकान्तभाष्योद्धृतगृह्यसंग्रहे ।

गोभिलः—३-८-३

**अङ्कः**—(१) चिह्नम् ।

कर्णौ चर्म च वालांश्च वस्तिस्नायुं च रोचनाम् ।
पशुषु स्वामिनां दद्यान्मृतेष्वङ्कानि दर्शयेत् ।।

मनुः—८-२३४

(२) क्रोडः ।

"माताकुमारमादायाप्लाव्याहते वाससी परिधाप्याङ्क आधाय पश्चादग्नेरुपविशति ।। पारस्करगृ०—२-१-५

**अङ्कोलिः**—काङ्को इति प्रसिद्धमिति नरसिंहवाजपेयी ।

नित्याचारप्रदीपः—१-५४७

तत्पत्रं शिवे न देयमिति ।
अङ्कोलिपत्रं कुसुमं करञ्जोद्भूतसम्भवम् ।
वैभीतकानि पत्राणि कुसुमानि विवर्जयेत् ।।

इति तत्र भविष्ये ।।

**अङ्गः**—देशविशेषः । स च चम्पाप्रदेश इति लक्ष्मीधरः ।

ब्रह्मचारीकाण्डे—४६

"वैद्यनाथं समारभ्य भुवनेशान्तगं शिवे ।
तावदङ्गाभिधो देशो यात्रायां न हि दुष्यते ।।

इति शक्तिसंगमतन्त्रे, सप्तमपटले ।।

**अङ्गानि**—शिक्षाकल्पव्याकरणनिरुक्तच्छन्दज्योतींषि षट् वेदस्य अङ्गानि भवन्ति ।

छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते ।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ।
शिक्षाघ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् ।।

इति राघवानन्दव्याख्यायाम् ।। मनुः—४-९८

**अङ्गारकः**—मङ्गलग्रहः ।

अङ्गारकदिने प्राप्ते कृष्णपक्षे चतुर्दशी ।
यमुनायां विशेषेण नियतो नियताशनः ॥

दक्षः—३-५२

**अङ्गारकव्रतम्**—मङ्गलचतुर्थ्यां विहितं व्रतम् ।

**अङ्गारचतुर्थी**—"चतुर्थ्यङ्गारकदिने यदा भवति दानव । मृदा स्नानं तदा कुर्य्यात्" इत्यादि मात्स्ये—७१-२७

**अङ्गारपोलिका**—रोटि इति प्रसिद्धा इत्याचारेन्दौ—३०१

"अङ्गारपोलिकाः शस्ता निर्धूमाङ्गारपाचिताः
इति वैद्यशास्त्रे ।

लघ्वी बलकरा वृष्या दोषघ्ना वह्निदीपना-इति तत्रैव

**अङ्गुलः**—"चतुस्त्रिंशत्संख्याकानां तिलानां यत्परिमाणं तत् अङ्गुलपदवाच्यम् ।" इति बौधायनशुल्वसूत्रे ।

"तिर्य्यग् यवोदराण्यष्टावूर्ध्वा वा व्रीहयस्त्रयः ।
प्रमाणमङ्गुलस्योक्तम्" इति मिताक्षरायाम्—२-१०६

**अङ्गुलिः**—करशाखा । "कायमङ्गुलिमूले" मनुः—२-५६

**अङ्गुष्ठम्**—वृद्धाङ्गुलिः ।

"अङ्गुष्ठमूलस्य तले ब्राह्मं तीर्थं प्रचक्षते ।"

मनुः—२-५६

**अच्छम्बट्कारः**—अव्यर्थत्वमिति हरदत्तः ।

"वषट्काराणामच्छम्बट्कारायेति"

आप—१-४-१२-३

**अच्छावाकः**—ऋत्विग्विशेषः

**अजवीथी**—"मूलाषाढ़ोत्तराषाढ़ा अजवीथ्यभिशब्दिता ।"

इति देवीभागवते—८-१५

अजवीथी अमरमार्ग इति विज्ञानेश्वरः । याज्ञ—३-१८४

**अजशृङ्गी**—अंलेइ इति प्रसिद्धं पुष्पमिति केचित् ।

**अजाकर्णहस्तः**—"अजाकर्णेन विदुषो मूर्खाणामेकपाणिना ।" अजाकर्णेन श्रोत्रसमौ करौ कृत्वा पुनः सम्पुटितेन करद्वयेन इत्यर्थः । अजाकर्णौ संपुटितो यथा तथैव संपुटितं करद्वयमपि इत्यजाकर्णः ।

इति गदाधरभाष्ये पारस्करः—२-४-८

**अजाजी**—जीरकः । आचारेन्दुः—१६८ (हरिद्रान्नशब्दो द्रष्टव्यः)

संस्कृतं मथितं गव्यं तण्डुलानां चतुर्गुणम् ।
इषद्धरिद्रया युक्तं मरीचाजाजिसंयुतम् ।
एतदुक्तं हरिद्रान्नं सुपक्वं पाशुतं यथा ॥

आचारेन्दुः—१६७

**अजापालः**—बन्ध्यापतिः ।

"रेतःक्षयकरी बन्ध्या अजास्ताः परिकीर्त्तिताः ।
तासां यः पालयेद्विप्रो ह्यजापालः स उच्यते ॥

अङ्गिरःस्मृतिः—१२४

**अजाविकः**—(१) अजाविभ्यां यो जीवति स अजाविक इति प्रायश्चित्तविवेके शूलपाणिः ।

"अजाविके माहिषिके कूटे च वृषलीरतौ ।
एतेषां भोजनं कृत्वा द्वादशाहं पयः पिबेत् ॥ इति

(२) बन्ध्यापतिः ।

शुक्रक्षयकरी बन्ध्या त्याज्येति परिकीर्त्तिता ।
तस्यास्तु यो भवेद्भर्त्ता तं तु विद्यादजाविकम् ॥

वृ० यमः—३-२४

**अजूर्यः**—यः कदाचिदपि क्षयं न गच्छति ।

"द्वौ समुद्रौ विततावजूर्यौ" तै० सं०—३-२-२-१

**अञ्जनम्**—(१) चक्षुषोः कज्जलधारणम्। (२) अञ्जनसाधनं कज्जलं च। तच्च षड्विधम्।

सौवीरं जाम्बलं तुत्थं मयूरशीकरं तथा।
दर्विका नीलमेघश्च अञ्जनानि भवन्ति षट्॥

तेषां स्वरूपं कालिकापुराणे ६८ अध्याये द्रष्टव्यम्।

**अञ्जलिः**—[पुं] (१) करसम्पुटः।

रजस्वला × × × अखर्वेण पात्रेण पिबेदञ्जलिना वा। वसिष्ठः—५-७

(२) परिमाणविशेषः "प्रसृतिद्वयम्"।

"रसस्य नव विज्ञेया जलस्याञ्जलयो दश"

याज्ञ—३-१०५

**अञ्जसा**—(१) सत्यं त्वरितं वा।

आसमाप्तेः शरीरस्य यस्तु शुश्रूषते गुरुम्।
स गच्छत्यञ्जसा विप्रो ब्रह्मणः सद्म शाश्वतम्॥

मनुः—२-२४४

(२) तत्त्वतः।

एतान् दोषानवेक्ष्य त्वं सर्वाननृतभाषणे।
यथाश्रुतं यथादृष्टं सर्वमेवाञ्जसा वद॥

मनुः—८-१०१

(३) सपदि।

रक्षकं सर्वलोकानां नृपं किं शप्तवानसि।
अराजके वयं लोके स्थास्यामः कथमञ्जसा॥

इति स्कन्दपु० ब्रह्म० सेतुमाहा—४१-१७

**अटरूषक**—अडोलसा इत्याचारेन्दौ—१५८। वासकवृक्ष इति वैद्यकशब्दसिन्धौ शब्दकल्पद्रुमे च।

अशोकस्तिलकश्चम्पस्तथा चैवाटरूषकः।
अमी पुष्पाकराः सर्वे शस्ताः केशवपूजने॥

इति पूजाप्रकाशोद्धृतारनेये

**अट्टम्**—अन्नम्।

"अट्टमन्नं शिवो वेदः केशो भग उदीरितः।

इति स्कन्दपुराणे

**अट्टशूलाः**—अन्नविक्रेतारः।

अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः।
प्रमदाः केशशूलिन्यो भविष्यन्ति कलौ युगे॥

स्कन्दपु० माहे० कौमा—४०-२३५

अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः।
केशशूलाः स्त्रियश्चापि भविष्यन्ति युगक्षये॥

महा० वन०—१९०-५२

**अट्या**—भ्रमणम्।

मृगयाक्षो दिवास्वप्नः परिवादः स्त्रियोमदः।
तौर्यत्रिकं वृथाट्या च कामजो दशको गणः।

मनुः—७-४७

**अणिकः**—पुत्रात् श्रुतग्राही पुत्राचार्य इति शास्त्रेषु निन्दितः इति हरदत्तः। ऋणदातेत्यपरः मत्त उन्मत्तो वद्धोऽणिकः। "प्रत्युपविष्टो यश्च प्रत्युपवेशयते तावन्तं कालम्" आप—१-६-१९-१।

**अणी**—अनिकिलिका। या अनिकिली इत्युच्यते जनैः। "यदि रथाक्षः शम्याणी वा रिष्येतान्यद् वा रथाङ्गं तत्रैवाग्निमुपसमाधाय" इति मैत्रायणीयमानवगृ० पुरुष—१-१३-१७

"यदि रथः शम्या वा दुष्येत भज्येत अणीचक्रधारणाय अक्षो यत् अनिकिलिका निहन्यते सा, यदि दुष्येत भज्येतेत्यर्थ" इति अष्टावक्रभाष्ये।

**अणुः**—(१) धान्यविशेषः चीना इति ख्यातः ।
"अणवश्चीनका" इति महीधरः ॥ शुक्लयजुः—१८-१२
चीनधान्यमितिवैद्यक-शब्दकोषे ॥
"व्रीहिभेदस्त्वणुः पुमान्" इत्यमरः—२-६-२०
"अणवो वरयिका" इति श्राद्धकल्पे हेमाद्रिः ।
अणवो मर्कटका" इति वीरमित्रोदये ॥
"वर्ज्या मर्कटकाः श्राद्धे राजमाषास्तथाणवः" इति मार्कण्डेयपुराण(अ ३२-११)पाठात् मर्कटकः अणुभिन्नः इति ज्ञायते ।

(२) मन्त्रः । "पुष्पैरनामया वापि मनसा वा न्यसेदणून् ।" इति आचारेन्दौ दक्षिणामूर्त्ति-संहितावाक्यम् ।

(३) अणुः—क्षुद्र इति गोविन्दस्वामी ॥
बौधा०—१-५-१०-३२

**अणूकम्**—अन्वितम् ।
"ऋष्यणूकं देवताणूकं वा"
बोधा गृ०—२-१-२८
अणूकमिति अनूकमिति च एकः शब्दः पाठभेदेन भिन्न इति मन्ये । विशेषश्च अनूकशब्दे मृग्यः ।

**अण्डजः**—पक्षिसर्पादिः ।
अण्डजाः पक्षिणः सर्पाः नक्राः मत्स्याश्च कच्छपाः ।
यानि चैवं प्रकाराणि स्थलजान्यौदकानि च ॥
मनुः—१-४४

**अण्डिका**—परिमाणविशेषः ।
यवचतुष्टयमिति वैद्यकशब्दसिन्धौ ।
"अण्डिकापणशब्दौ तु पर्यायेण प्रकीर्त्तितौ ॥"
इति सरस्वतीविलासोद्धृत-चरकसंहितायाम् ।
क्वचिद्दण्डविवेकादौ अण्डिकाशब्दस्य अण्विका इति पाठः दृश्यते ॥

**अण्विका**—परिमाणविशेषः ।
"स्यादण्विका चतुष्केण त्रिनिष्कः कर्षकः पणः"
इति सरस्वतीविलासे ।

**अतसी**—क्षुमासंज्ञिता तैलप्रकृतिभूतानामतिमसृणानां चिपीटाकृतीनां तैलबीजानामुत्पादिका । उमासंज्ञितेति क्वचित् दृश्यते पाठः । स च अनाकरः क्षौमादिशब्द-दर्शनात् । इयं पेशु इति सम्भाव्यते । शब्दकल्पद्रुमे तु कृष्णपुष्पक्षुद्रवृक्षभेद इति ।

**अतिकीटकः**—अतिकृपणः इति कल्पतरौ गार्हस्थ्ये—२६६
"दिधिषूपतितोन्मत्त-बहुवैरातिकीटकैः । बन्धकी बन्धकीभर्त्तृक्षुद्रानृतकनर्त्तकैः" इति मुद्रितविष्णुपुराणे तु "बहुवैरादिकीटकैरिति पाठः ॥ विष्णु पु०—३-१२-६

**अतिकृच्छ्रः**—व्रतविशेषः ।
द्वादशाहसाध्यप्राजापत्यव्रतमुक्त्वाह "अयमेवातिकृच्छ्रः स्यात्पाणिपूरान्नभोजनः" याज्ञ—३-३१९
"एतेष्वेव कालेष्वेकैकं पिण्डं प्राश्नीयात् ॥"
इति काठकगृह्ये—१-५-१३
पिण्डप्रमाणं तु आस्याऽविकारेण यावद्ग्रासो मुखे वर्त्तते इति तत्रैव देवपालभाष्ये ।

**अतिक्रमः**—मान्यावमाननम् ।
ब्राह्मणातिक्रमो नास्ति विप्रे वेदविवर्जिते ।
ज्वलन्तमग्निमुत्सृज्य न हि भस्मनि हूयते ॥
कात्यायनः—१५-६
कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ।
मनुः—३-६३

**अतिगुरुः**—पित्रादिः ।

"त्रयः पुरुषस्य अतिगुरवो भवन्ति ।
माता पिता आचार्यश्च ।।" विष्णुः— ३१-२

**अतिग्राह्याः**—अतिग्राह्या ग्रहविशेषा इति कालमाधवे ।

"मासि मासि अतिग्राह्या गृह्यन्ते" इति तैत्तिरीये ।।

पात्रविशेषणत्वेन क्लीवत्वमप्येषाम् । न्यग्रोधकाष्ठ-निर्मितानि तानि अतिग्राह्याणि पात्राणि भवन्ति इति याज्ञिकाः ।

**अतिचारः**—(१) अतिक्रमः,व्यभिचार इति यावत् ।

मनसा भर्तुरतिचारे त्रिरात्रं यावकं क्षारौदनं वेत्यादि
वसिष्ठः—२१-६

(२) भौमादि-ग्रहाणामाकालिकपरराशिगमनमतिचारः ।

अतिचारगते जीवे वर्जयेत् तदनन्तरम् ।
व्रतोद्वाहादिकार्येषु अष्टाविंशतिवासरान् ।।
इति निर्णयसिन्धौ वसिष्ठः ।।

तथाच—

अतीचारगते जीवे शुक्रे चास्तमुपागते ।
"क्षीयाम्यायने हरौ सुप्ते सर्वकर्माणि वर्जयेत्"

**अतिचारिणी**—(१) व्यभिचारिणी स्त्री ।

"क्षीयातिचारिणी गुप्ता पिण्डं तु लभेत"
गौतमः—३-४-३५

(२) अत्यन्तमारणशीला इति विवादरत्नाकरे—२४१

अदण्ड्या गन्तुका या गौः सूतिका यातिचारिणी ।
अदण्ड्याश्चोत्सवे गावः श्राद्धकाले तथैव च ।।
इति तत्र उशनाः ।।

**अतिथिः**—आकस्मिकतया गृहमागतः सदाचारनिष्ठः कुशीलवादिभिन्नो ब्राह्मणः ।

एकरात्रिं तु निवसन्नतिथिर्ब्राह्मणः स्मृतः ।
अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते ।।
मनुः—३-१०२

हेमाद्रौ तु—

"तिथिपर्वोत्सवाः सर्वे त्यक्ता येन महात्मना ।
सोऽतिथिः सर्वभूतानां शेषानभ्यागतान् विदुः"
इति यमः ।

अत्र तिथिः दीपालिकाप्रतिपदादिः । पर्वाणि अमावास्यादीनि । उत्सवा विवाहाद्याः । एतानि अन्नविशेषप्राप्तिहेतुभूतानि । येन यतिधर्मप्रवणेन सता त्यक्तानि सोऽतिथिरित्यर्थः । वायुपुराणेऽपि—

"वालखिल्यो यतिश्चैव विज्ञेयो ह्यतिथिः सदा ।
अभ्यागतः पचानः स्यादतिथिः स्यादपाचकः ।।"

याज्ञवल्क्यस्तु अब्राह्मणमपि अतिथिं मन्यते ।

"अतिथित्वेन वर्णानां देयं शक्त्यानुपूर्वशः ।"
इति याज्ञ—१-१०७

**अतिदानानि**—त्रीण्याहुरतिदानानि गावः पृथ्वी सरस्वती ।
नरकादुद्धरन्त्येते जपवापनदोहनात् ।।
सं० ब्रा०—४

त्रीण्याहुरतिदानानि गावः पृथ्वी सरस्वती ।
अतिदानं हि दानानां विद्यादानं ततोऽधिकम् ।।
इति वसिष्ठः—२६-१६

त्रीण्याहुरतिदानानि गावः पृथ्वी सरस्वती ।
तारयन्तीह दातारं जपवापनदोहनैः ।।
इति बृहस्पतिः—१५

**अतिदेशः**—अन्यत्रैव प्रणीतायाः कृत्स्नाया धर्मसन्ततेः ।
अन्यत्र कार्यतः प्राप्तिरतिदेशोऽभिधीयते ॥
मीमांसानुक्रमणिकायां मण्डनमिश्राः—७-१-१

**अतिपक्वम्**—पचा इति उत्कल-भाषायाम् ।
अतिपक्वमपक्वं च फलं सम्परिवर्जयेत् ।
अपक्वमपि च ग्राह्यं कदलीफलमुत्तमम् ॥
इति पूजाप्रकाशोद्धृतरत्नावल्याम्—६८

**अतिपत्तिः**—(१) अतिक्रमः ।
नष्टापहृतमासाद्य हर्त्तारं ग्राहयेन्नरम् ।
देशकालातिपत्तौ च गृहीत्वा स्वयमर्पयेत् ॥
याज्ञ—२-१६६
देशकालातिपत्तौ—देशकालातिक्रमे इति मिताक्षरा ।
(२) अननुष्ठानमिति निर्णयसिन्धुव्याख्याने ।
आदित्येऽस्तमिते चन्द्रप्रक्षीण उदियाद् यदि ।
प्रतियद्यतिपत्तिः स्यात् पञ्चदश्यां यजेत्तदा ॥
इति इष्टिनिरूपणे ॥

**अतिपातकम्**—पातकभेदः ।
"मातृगमनं दुहितृगमनं स्नुषागमनमित्यतिपापकानि ।"
इति विष्णुः ॥
यत्र ज्ञानतोऽज्ञानतो मरणमुपदिष्टं तदतिपातकमिति
शूलपाणिः ॥

**अतिप्रमाणम्**—अतिप्रमाणं वेद इति नित्याचारप्रदीपे
नरसिंहवाजपेयी ।
सांख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा ।
अतिप्रमाणान्येतानि हेतुभिर्न विरोधयेत् ॥
याज्ञ०—१-२०
गुणनिष्ठोऽतिप्रमाणं वाधयन् यात्यधोगतिम् ।
गुणनिष्ठः सत्याचारनिष्ठः ॥

**अतिमुक्तः**—चमेली । इति आचारेन्दुः—१५६

**अतिमुक्तकः**—माधवी ।
"मालती मल्लिका चैव तथाकाशोऽतिमुक्तकः ।"
इति सूर्यदेये नित्याचारप्रदीपे ॥
अतिमुक्तकोऽत्र माधवी इति वाजपेयिनः ।
विष्णुप्रियपुष्पमिदमिति शेफालीशब्दे द्रष्टव्यम् ॥
अतिमुक्तं शिवाय न देयमिति नित्याचारप्रदीपे-१-५४७
तत्र भविष्ये—
केतकी अतिमुक्तं च कुन्दो यूथी मदन्तिका ।
शिरीषसर्जवन्धूककुसुमानि विवर्जयेत् ॥ इति

**अतियवः**—शालिभेद इति हेमाद्रिः ।
"वर्ज्याश्चातियवा नित्यं तथा दुरालभा यवा ।"
इति ब्रह्मवैवर्त्ते ॥

**अतिरुद्रः**—एकादशमहारुद्राः ।
(१) षडङ्गैकादशा रुद्राश्चमकानुवाकयोगतः ।
रुद्रस्यैकादशावृत्त्या रुद्रैकादशिनी मता ॥
एकादशभिरेताभिर्महारुद्रश्च कथ्यते ।
एकादशमहारुद्रै रतिरुद्र उदाहृतः ॥
इति नित्याचारप्रदीपे बौधायनः । नित्याः०—२-१२२
(२) षडङ्गैकादशै रुद्रै" रुद्रः समभिधीयते ।
रुद्रैस्तथैकादशभिर्महारुद्रः प्रकीर्त्तितः ।
एकादशभिरेतैस्तु अतिरुद्रश्च कथ्यते ॥
शातातपस्मृतिः—२-३८

**अतिवर्णः**—अतिकृष्णः अतिगौरो वेति अपरार्कः । तथैव कल्पतरुः गार्हस्थ्य०—२७
"अत्युच्चमतिह्रस्वं च अतिवर्णं च वर्जयेत् ।"
इति यमः । संस्कारप्रकाशः—५८१

**अतिवर्त्तनम्**—(१) सत्यपि दोषे अदण्ड्यत्वम् । हिंसादण्डमतिक्रम्य वर्तते इति अतिवर्त्तनानि इति मेधातिथिः ॥ तदाह मनुः—८-२९०
(२) लङ्घनम् ।
"स मान्यते यः क्षमते दण्डभागयोऽतिवर्त्तते ।"
इति विवादरत्नाकरे नारदः—२७५
यानस्य चैव यातुश्च यानस्वामिन एव च ।
दशातिवर्त्तनान्याहुः शेषे दण्डो विधीयते ॥
छिन्ननास्ये भग्नयुगे तिर्यक्प्रतिमुखागते ।
अक्षभङ्गे च यानस्य चक्रभङ्गे तथैव च ॥
छेदने चैव यन्त्राणां योक्त्ररश्म्योस्तथैव च ।
आक्रन्दे चाप्यैहीति न दण्डं मनुरब्रवीत् ॥ इति

**अतिवादः**—(१) अतिस्तुतिः । "एकस्यातिवादं च वर्जयेयुः ।" इति कौटल्यः—४-१
"प्राणो ह्येवैतानि सर्वाणि भवति स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नातिवादी भवति ॥
छान्दो० उप०—७-१५-४
(२) निन्दातिरस्कारादिः । तत्र अतिक्रम्य वादः विग्रहः ।
अतिवादांस्तितिक्षेत नावमन्येत कंचन ॥
न चेमं देहमाश्रित्य वैरं कुर्वीत केनचित् ।"
मनुः—६-४७

**अतिष्कद्वरी**—अतिस्कन्दति स्रवतीति अतिष्कद्वरी, मर्यादालङ्घनकारिणी स्त्री । शुक्लयजुः—३०-१५

**अतिसर्गः**—(१) समर्पणम्, त्यागः, दानम् । "स चेदाचारक्रमं दर्शयेत् न विक्रेतारं तस्य द्रव्यस्यातिसर्गेण मुच्येत ।
कौटल्यः—३-१६-१३
(२) पदच्युतिः, परित्यागो वा इति धर्मकोशे ।
"स्त्रीणां दानविक्रयातिसर्गा विद्यन्ते न पुंसः ।
पुंसोऽपीत्येके शुनःशेपे दर्शनात् ॥" निघण्टुः—३-३

**अतिसान्तपनम्**—"यदा तु षण्णां सान्तपनद्रव्याणाम् (पञ्चगव्यद्रव्याणां) एकैकस्य द्व्यहमुपयोगः तदा अतिसान्तपनम्," इति यमाभिप्रायः ।
एतान्येव तथा पेयान्येकैकं तु द्व्यहं द्व्यहम् ।
अतिसान्तपनं नाम श्वपाकमपि शोधयेत् ॥
इति मिताक्षरायाम् । याज्ञ—३-३१५

**अतिसाम्वत्सरी**—(वृद्धिः) "नातिसाम्वत्सरीं वृद्धिं न चादृष्टां पुनर्हरेत् ।" मनुः—८-१५
अत्र यदि उत्तमर्णः स्वल्पैरेव दिवसैरधमर्णकर्तृकं धनदानमाशंक्य वृद्धिं नियमयेत् तदा सम्वत्सरपर्यन्तमेव न तु तदधिकदिनवृद्धिर्मिति विवादरत्नाकरे चण्डेश्वरः । यदा शान्तलोने ऋणे लाभग्रहणवासनावानुत्तमर्णः स्यात्तदा सम्वत्सरादर्वागेवलाभं गृह्णीयात् न तु सम्वत्सरादूर्द्ध्वमिति हलायुधः ।

**अतिसृष्टः**—अनुज्ञातः ।
अनतिसृष्टश्चेज्जुहुयाद्दोषं ब्राह्मणमाह ।"
आपः—२-३-७-१५
"अतिसृष्ट आदिष्ट" इति कृत्यकल्पतरुः ।
नियतकाल—१८५

**अतीन्द्रियम्** – मनः ।

"इन्द्रियमतीत्य वर्त्तत इति कुल्लूकः—१-७

"इन्द्रियेभ्यः परं मनः ।"

इति भगवद्गीतायाम्—३-४२

**अतीन्द्रियग्राह्यः**—मनोग्राह्यः । "इन्द्रियमतीत्य वर्त्तत इति अतीन्द्रियं मनः तद्ग्राह्यः (अतीन्द्रियग्राह्य इति कुल्लूकः) ।

योऽसावतीन्द्रियग्राह्य सूक्ष्मोऽव्यक्तः सनातनः ।
सर्वभूतमयोऽचिन्त्यः स एव स्वयमुद्बभौ ॥

इति मनुः—१-७

**अतीषङ्गाः**—अतीषङ्गो नाम परस्परमिश्रणम् । (उभयोर्ऋचोर्व्यतिषङ्ग्य गेयत्वादतीषङ्गत्वं बोद्धव्यम् । गीतानि चैतान्यरण्यगान एव ।

"इन्द्रस्य त्रयोऽतीषङ्गाः इत्यार्षेय-ब्राह्मणे, तत्रैव खण्डान्तरे सौर्यमतीषङ्गत्रयमुक्तम् । तेषु—

अनधीत्य पदस्तोमानतीषङ्गाश्च पुत्रक ।
ऋषभांश्चाज्यदोहांश्च कथं श्राद्धेषु भोक्ष्यसे ॥
इत्यत्र इन्द्रस्य त्रयोऽतीषङ्गा गृह्यन्ते ॥

तत्र "पुरोजितीवो अन्धस इति" उच्यते जातमन्धस इत्यनयोश्छन्दस्यार्चिके समाम्नातयोः परस्परमिलितयोरेकं साम । ए पुरोजिती इत्यादि इद् इडा २३४५ इत्यन्तम् ।"

"असर्जि रथ्यो पथा इति" "असाव्यंशुर्मदाय" इति चैतयोस्तत्रैव समाम्नातयोर्मिथो मिलितयोरेकं साम । ए० आ० सा इत्यादि । अन्तः पूर्ववत् ।

"अभीनवं ते अदुहः इति", "तरत्समन्दी-धावति" इति चानयोस्तत्रैव समाम्नातयोः ऋचोरन्योन्यमिलितयोरेकं साम ए०आ० भी, इत्यादि । अन्तः पूर्ववदेव । एतानि त्रीणि सामानि इन्द्रस्य त्रयोऽतीषङ्ग उच्यन्ते इति गोभिलीयपरिशिष्टभाष्ये चन्द्रकान्तः । अभिषङ्गा इति पाठान्तरं प्रामादिकपाठो वा ।

"अतीषङ्गा पुरोजिती वो अन्धस" इति सामत्रयमिति नन्दपण्डितः ॥ विष्णुः—५६-१०

**अतुलः**—षष्ट्यधिकशतत्रयम् ३६० । गणकप्रसिद्धा अक्षरसंख्या अतुलशब्दः षष्ट्यधिकशतत्रयमाचष्टे इति कालमाधवे ।

सौरबृहस्पतिसावनचान्द्रिकनाक्षत्रिकाः क्रमेण स्युः ।
मातुलपातालातुलविमलवराङ्गाश्च वत्सराः पञ्च ॥

इति तत्र आयुर्वेदे ॥

**अत्यन्तवासी**—नैष्ठिकब्रह्मचारी । "अत्यन्तवासिनो नैष्ठिकब्रह्मचारिण" इति मिताक्षरा—२-५७

स हि गुरुकुले अत्यन्तं निवसति ।

नैव रिक्थी न मित्रं च न चैवात्यन्तवासिनः ।
राजकार्य्यनियुक्ताश्च ये च प्रव्रजिता नराः ॥

इत्यादि तत्र कात्यायनः

**अत्यन्तोपहतम्**—सुरामद्यपुरीषादिमलैः संस्पृष्टम् ।

"शारीरैर्मलैः सुराभिर्मद्यै वा यदुपहतं तदत्यन्तोपहतम् ॥ विष्णुः—२३-१

**अत्ययः**—(१) विनाशः ।

अनुभावी तु यः कश्चित् कुर्यात साक्ष्यं विवादिनाम् ।
अन्तर्वेश्मन्यरण्ये वा शरीरस्यापि चात्यये ।

मनुः—८-६६

(२) दण्डः

शुल्कस्थानं परिहरन्नकाले क्रयविक्रयी ।

मिथ्यावादी च संख्याने दाप्योऽष्टगुणमत्ययम् ॥

मनुः—८-४००

(३) कृच्छ्रम् ।

जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः ।

आकाशमिव पङ्केन न स पापेन लिप्यते ॥

मनुः—१०-१०४

(४) अपराधः ।

क्षत्रियस्यात्यये दण्डो भागाद्दशगुणो भवेत् ।

मनुः—८-२४३

अन्येऽप्यर्थाः सन्त्यस्य । तदाह अमरः—३-३-१५०

"अत्ययोऽतिक्रमे कृच्छ्रे दोषे दण्डेऽपि" इति ।

धरणिस्तु "अत्ययोऽतिक्रमे कृच्छ्रेऽत्युत्पाते नाशदण्डयोः" इति ।

(५) अतिक्रमः ।

अत्ययो अतिक्रम इति उज्ज्वलावृत्तिकारः ।

आषोडशाद् ब्राह्मणस्यानात्ययः ॥ आप—१-१-२७

**अत्रिणः**—अदनशीलाः राक्षसा इत्यर्थः ।

"अप्रजाः सन्त्वत्रिणः" इति वसिष्ठः—१७-३

**अथर्वशिरः**—"ब्रह्मा देवानां प्रथम इत्यादि अथर्वशिर इति कल्पतरौ लक्ष्मीधरः । नियतकालकाण्डे—६३ । अथर्वशिर इति अथर्ववेदैकदेश इति हेमाद्रिः । अथर्ववेदे प्रसिद्धं "देवा ह वै स्वर्ग लोकमगमन्" इत्यादि, इति गौतमीयवृत्तौ हरदत्तः—३-१-१२

"इन्द्रो दधीचो अस्थभिः (ऋ—१-८४-१३) इति अनुवाकः इति बौधा० गृ० शे०—१-१४

"शतरुद्रियमथर्वशिरस्त्रिसुपर्णं महाव्रतम् ।

इति शंखः—११-४

**अदत्तम्**—यद्वस्तु दत्तमपि प्रत्यावर्त्तनीयम् । इति विज्ञानेश्वरः—२-१७६ । नारदः—५-८

अदत्तं तु भयक्रोधशोकवेगरुगन्वितैः ।

तथोत्कोचपरीहासव्यत्यासच्छलयोगतः ॥

बालमूढाखतन्त्रार्त्तमत्तोन्मत्तापवर्जितम् ।

कर्त्ता ममायं कर्मेति प्रतिलोभेच्छया च यत् ॥

अपात्रे पात्रमित्युक्ते कार्ये वा धर्मसंज्ञिते ।

यद्दत्तं स्यादविज्ञानाददत्तमिति तत् स्मृतम् ॥

**अदत्तादानम्**—चौर्य्यम् ।

अदत्तानामुपादानं हिंसा चैवाविधानतः ।

परदारोपसेवा च शारीरं त्रिविधं स्मृतम् ॥

मनुः—१२-७

हीनसेवामदत्तादानं हिंसाम् ॥ गौतमः—१-२-२३

**अदत्तादायी**—तस्करः ।

योऽदत्तादायिनो हस्ताल्लिप्सेत ब्राह्मणो धनम् ।

याजनाध्यापनेनापि यथा स्तेनस्तथैव सः ॥

मनुः—८-३४०

**अदर्शः-अदर्शनम्**—सरस्वतीनदान्तर्धानप्रदेशः ।

"प्रागादर्शात् प्रत्यक्कालकवनादुदक्पारियात्राद् दक्षिणेन हिमवत" इति वसिष्ठः—१-८

प्रागदर्शनादिति बौधायनः—१-१-२-१०

**अदाभ्यम्**—औदुम्बरं श्लक्ष्णं पात्रम् अदाभ्यसंज्ञकं याज्ञिकप्रसिद्धम् ।

**अदायादबान्धवाः**—ये पुत्रा दायादानां पितृव्यादीनामपुत्रत्वे तेषां धनं सन्निहितदायादत्वेन ग्रहीतुं नार्हन्ति अपि तु तेषामशौचादिभाजो भवन्ति ॥

कानीनश्च सहोदश्च क्रीतः पौनर्भवस्तथा ।
स्वयं दत्तश्च शौद्रश्च षड्दायादबान्धवाः ॥
मनुः—९-१६०

अदायादबन्धूनां सहोद एव प्रथमः २६, दत्तको द्वितीयः २८, क्रीतस्तृतीयः ३०, स्वयमुपागतश्चतुर्थः ३३, अपविद्धः पञ्चमः ३६, शौद्र पुत्र एव षष्ठः ॥
वसिष्ठः—१७

**अदेयम्**—अदेयमष्टविधम् । तदुक्तं नारदेन—
अन्वाहितं याचितकमाधिः साधारणं च यत् ।
निक्षेपः पुत्रदारं च सर्वस्वं चान्वये सति ॥
आपत्स्वपि हि कष्टासु वर्त्तमानेन देहिना ।
अदेयान्याहुराचार्या यच्चान्यस्मै प्रतिश्रुतम् ॥
नारद सं०—५-४

सामान्यं याचितं न्यास आधिर्दाराश्च तद्धनम् ।
क्रमायातं च निक्षेपः सर्वस्वं चान्वये सति ॥
आपत्स्वपि न देयानि नववस्तूनि सर्वदा ।
यो ददाति स मूढात्मा प्रायश्चित्तीयते नरः ॥
दक्षः—३-१८

**अधन्या**—धनरहिता । "ईरिणादधन्या श्मशानात् पतिघ्नी । आश्वलायनगृ०—१-५-६

**अधमर्णः**—ऋणकर्त्ता ।
अधमर्णार्थसिध्यर्थमुत्तमर्णेन चोदितः ।
दापयेद्धनिकस्यार्थमधमर्णाद्विभावितम् ॥
मनुः—८-४७

**अधमर्णिकः**—अधमर्णः ।
तैस्तैरुपायैः संगृह्य दापयेदधमर्णिकम् । मनुः—८-४८

**अधिकर्मकृत्**—कर्म कुर्वतामधिष्ठाता इति मिताक्षरायां विज्ञानेश्वरः । याज्ञ०—२-१८२
लोके स सर्दार इत्युच्यते ।

**अधिकर्मकृतः**—
सर्वेष्वधिकृतो यः स्यात्कुटुम्बस्य तथोपरि ।
सोऽधिकर्मकृतो ज्ञेयः स च कौटुम्बिकः स्मृतः ॥
इति व्यवहारपराशरे नारदः—५-२४

**अधिकृतः**—अधिकारी ।
तत्कर्मसम्पादनार्थं नियुक्तः पुरुष इति यावत् ।
नृपेणाधिकृताः पूगाः श्रेणयोऽथ कुलानि च ॥
पूर्वं पूर्वं गुरु ज्ञेयं व्यवहारविधौ नृणाम् ॥ याज्ञ—२-३०
मनुरपि—
राज्ञो हि रक्षाधिकृताः परस्वादायिनः शठाः ।
भृत्या भवन्ति प्रायेण तेभ्यो रक्षेदिमाः प्रजाः ॥ ७-१२३

**अधिगमः**—(१) प्रणष्टस्य अज्ञातस्वामिकस्य निध्यादेः स्वीकारः । स्वामी रिक्थक्रयसम्विभागपरिग्रहाधिगमेषु ॥
गौतमः—२-१-३९

(२) प्राप्तिः ।
"समुद्रयानकुशला देशकालार्थदर्शिनः ।
स्थापयन्ति तु यां वृद्धिं सा तत्राधिगमं प्रति ॥
मनुः—८-१५७

**अधिपूरुषः**—स्वायम्भुवो मनुः ।
स्वायम्भुव इति ख्यातः स विराडिति नः श्रुतम् ।
तद्रूपगुणसामान्यादधिपूरुष उच्यते ॥ मात्स्ये—३-४५
ततो विराड़जायत विराजो अधिपूरुषः ॥
शुक्ल य०—३१-५

**अधिमासः**—अधिको मासः मलमाससंज्ञकः स च सूर्य्यसंक्रान्तिरहितः।

असंक्रान्तिमासोऽधिमासः स्फुटः स्याद्
द्विसंक्रान्तिमासः क्षयाख्यः कदाचित्।
क्षयः कार्त्तिकादित्रये नान्यदा स्या-
त्तदा वर्षमध्येऽधिमासद्वयं स्यात्॥

इति सिद्धान्तशिरोमणौ मध्यमाधिकारे अधिमासनिर्णयः।

द्वात्रिंशद्भिर्गतैर्मासैर्दिनैः षोड़शभिस्तथा।
घटिकानां चतुष्केण पतति ह्यधिमासकः॥

इति कालमाधवे—२

**अधिरूढ़कम्**—अधिरूढ़का अङ्कुरा इति निर्णयसिन्धौ। यथा तालवीजाङ्कुरास्थिमज्जनादि।

मूलपत्रकरीराग्रफलकाण्डाधिरूढ़काः।
त्वक्पुष्पं कवचं चेति शाकं दशविधं स्मृतम्॥

इति तत्रैव

**अधिरोहणी**—निश्रेणिः। निशुणी, सिड़ी इत्यादिनाम्ना प्रसिद्धा ऊर्ध्वरोहणोपकरणम्।

**अधिवत्सरः**—मध्यमगणनया गुरोः संक्रान्तिर्यस्मिन् चान्द्रवत्सरे न विद्यते सोऽयमधिवत्सरः इति माधवाचार्य्याः। कालमाधवः—२

**अधिवासः**—(१) उत्पत्तिभूमिः इति नारदीयमनुसंहिता-भाष्ये—२-१११

(२) द्रव्यविशेषेण संस्कारः। यथा विवाहादौ गन्धाधिवासः हरिद्राधिवासः इत्यादि। "संस्कारो गन्धमाल्याद्यैर्यः स्यात्तदधिवासनम्" इत्यमरः—२-६-१३४

(३) स्थापनम्-कल्पतरुः-राजधर्मः—४८

**अधिवासी**—समीपदेशनिवासी जनः। मिताक्षरा—२-६

**अधिविन्ना**—प्रथमविवाहिता जीवन्ती स्त्री।

अधिविन्ना तु या नारी निर्गच्छेद्रुषिता गृहात्।
सा सद्यःसन्निरोद्धव्या त्याज्या वा कुलसन्निधौ॥

मनुः—९-८३

**अधिवेदनम्**—भार्य्यायां वर्त्तमानायां भार्य्यान्तरस्वीकारः।

मद्यपाऽसाधुवृत्ता च प्रतिकूला च या भवेत्।
व्याधिता वाधिवेत्तव्या हिंस्रार्थघ्नी च सर्वदा॥

मनुः—९-८०

**अधिश्रयणम्**—वह्नौ स्थापयित्वा सन्तापनमिति मीमांसकाः। "आज्यमधिश्रित्य पर्यग्नि कुर्यात्"

पारस्करः—१-१-२

**अधिश्रयणी**—चुल्ली।

"चुल्ल्यश्मन्तकमुद्धमानं स्मृताधिश्रयणी बुधैः"

इति हलायुधः का०—२

**अधिष्ठानम्**—(१) पत्तनं पुरं वा।

अधिष्ठानात् पत्तनादेरिति विवादरत्नाकरे।
अथ वैनां स्यन्दनमारोप्य स्वमधिष्ठानं नयामि॥

विष्णुपु०—४-१२-२१

(२) अधिकारविशिष्टं स्थानम्।

अधिष्ठानान्निर्हारः सार्थानामिति वसिष्ठः—१९-१४

मन्मते अत्र अधिष्ठान-शब्दस्यार्थः सरकार इति समीचीनः यस्मात् अधिकारविशिष्टं स्थानम् अधिष्ठानमिति।

"अधिष्ठानं चक्रपुरप्रभावाध्यासनेष्वपि"

इत्यमरः—३-३-१२६

(३) आश्रयः ।

निरुक्तं यत्तु मन्त्रस्य समुत्पत्तिप्रयोजनम् ।
अधिष्ठानं स्तुतिश्चैव ब्राह्मणं चाभिधीयते ॥

अत्र अधिष्ठानम् आश्रय इति नरसिंहवाजपेयी ।

नित्याचारप्रदीपः—१-१२

**अधोच्छिष्टः**—मूत्रपुरीषशुक्राद्युत्सर्गेणाऽशुद्धः इत्याचारसारे गदाधरराजगुरुः । तत्र लघुहारीतः—

"अधोच्छिष्टस्तु संस्पृश्य सचेलो जलमाविशेत्"

आह्निके हारीतः—

श्वविष्ठां काकविष्ठां वा कंकगृध्रनरस्य च ।
अधोच्छिष्टश्च संस्पृश्य सचैलो जलमाविशेत् ॥ इति
ऊर्ध्वोच्छिष्टमधोच्छिष्टमन्तरीक्षमृतौ तथा ।
कृच्छ्रत्रयं प्रकुर्वीत आशौचमरणे तथा ॥

पराशरः—१२-६१

**अधिवीतम्**—

अधोवसक्तमधोवीतमिति बौधायनधर्मसूत्रव्याख्याने ।
नाभेरधोवसक्तमधःक्षिप्तमधोवीतमिति

गोविन्दस्वामी॥—१-८-८

**अध्यग्नि**—स्त्रीधनविशेषः ।

विवाहकाले अग्निसन्निधौ यत् पित्रादिदत्तं धनम् ।
अध्यग्न्यध्यावाहनिकमित्यादि ॥ मनुः—९-१९४

**अध्यधीनः**—दासः अन्यन्तमधीन इत्यर्थः ।

कुटुम्बार्थेऽध्यधीनोऽपि व्यवहारं यमाचरेत् ।
स्वदेशे वा विदेशे वा तं ज्यायान्न विचालयेत् ॥

मनुः—८-१६७

"अध्यधीनः बन्धकीकृत" इति व्यवहारप्रकाशे

मित्रमिश्रः—११७

**अध्यशनम्**—भोजनोपरिभोजनम् । अजीर्णावस्थायां भोजनमित्यर्थः ।

**अध्याचारः**—आधिपत्यम् ।

"न वै श्वेतस्याध्याचारेऽहिर्ददर्श"

पारस्करः—२-१४-४

**अध्यायः**—(१) वेदः ।

"अधीयन्त इति अध्याया वेदा" इति विज्ञानेश्वरः ।

अध्यायानामुपाकर्म श्रावण्यां श्रवणेन वा ।
हस्तेनौषधिभावे वा पञ्चम्यां श्रावणस्य तु ॥

याज्ञ०—१-१४२

(२) अध्यायो ग्रन्थ इति चन्द्रकान्तभाष्ये ।

पृथगेवैतस्य ज्ञानस्याध्यायो भवति ॥

गोभिलः—१-५-१२

(३) अध्ययनम् । इति वासिष्ठधर्मशास्त्रे प्रथमोऽध्यायः इत्यादि ।

**अध्यावहनिकम्**—स्त्रीधनविशेषः । पितृगृहात् भर्तृगृहं नीयमानया लब्धं धनम् ।

यत्पुनर्लभते नारी नीयमाना तु पैतृकात् ।
अध्यावाहनिकं नाम तत्स्त्रीधनमुदाहृतम् ॥

इति मिताक्षरायाम् । कात्यायनः—२-१४३

**अध्यासनम्**—क्रयणादिरागम इति व्यवहारमातृका ।

परिग्रह इति अपरार्कः—१२-२७

परिग्रह इति स्मृतिचन्द्रिकाव्यवहारः—१६१

अध्यासनात् समारभ्य भुक्तिर्यस्याविघातिनी ।
त्रिंशद्वर्षाण्यविच्छिन्ना तस्य तां न विचालयेत् ॥

इति बृहस्पतिः

**अधिमासः**—अधिको मासः मलमाससंज्ञकः स च सूर्य्यसंक्रान्तिरहितः।

असंक्रान्तिमासोऽधिमासः स्फुटः स्याद्
द्विसंक्रान्तिमासः क्षयाख्यः कदाचित्।
क्षयः कार्त्तिकादित्रये नान्यदा स्या-
त्तदा वर्षमध्येऽधिमासद्वयं स्यात्॥

इति सिद्धान्त शिरोमणौ मध्यमाधिकारे अधिमासनिर्णयः।

द्वात्रिंशद्भिर्गतैर्मासैर्दिनैः षोड़शभिस्तथा।
घटिकानां चतुष्केण पतति ह्यधिमासकः॥

इति कालमाधवे—२

**अधिरूढ़कम्**—अधिरूढ़का अङ्कुरा इति निर्णयसिन्धौ।
यथा तालबीजाङ्कुरास्थिमज्जनादि।

मूलपत्रकरीराग्रफलकाण्डाधिरूढ़काः।
त्वक्पुष्पं कवचं चेति शाकं दशविधं स्मृतम्॥

इति तत्रैव

**अधिरोहणी**—निश्रेणिः। निशुणी, सिड़ी इत्यादिनाम्ना प्रसिद्धा ऊर्द्ध्वरोहणोपकरणम्।

**अधिवत्सरः**—मध्यमगणनया गुरोः संक्रान्तिर्यस्मिन्-चान्द्रवत्सरे न विद्यते सोऽयमधिवत्सरः इति माधवाचार्य्याः। कालमाधवः—२

**अधिवासः**—(१) उत्पत्तिभूमिः इति नारदीयमनुसंहिता-भाष्ये—२-१११

(२) द्रव्यविशेषेण संस्कारः। यथा विवाहादौ गन्धाधिवासः हरिद्राधिवासः इत्यादि। "संस्कारो गन्धमाल्याद्यैर्यः स्यात्तदधिवासनम्" इत्यमरः—२-६-१३४

(३) स्थापनम्-कल्पतरुः-राजधर्मः—४८

**अधिवासी**—समीपदेशनिवासी जनः। मिताक्षरा—२-६

**अधिविन्ना**—प्रथमविवाहिता जीवन्ती स्त्री।

अधिविन्ना तु या नारी निर्गच्छेद्रुषिता गृहात्।
सा सद्यःसन्निरोद्धव्या त्याज्या वा कुलसन्निधौ॥

मनुः—९-८३

**अधिवेदनम्**—भार्य्यायां वर्त्तमानायां भार्य्यान्तरस्वीकारः।

मद्यपाऽसाधुवृत्ता च प्रतिकूला च या भवेत्।
व्याधिता वाधिवेत्तव्या हिंसार्थघ्नी च सर्वदा॥

मनुः—९-८०

**अधिश्रयणम्**—वह्नौ स्थापयित्वा सन्तापनमिति मीमांसकाः। "आज्यमधिश्रित्य पर्य्यग्निं कुर्यात्"

पारस्करः—१-१-२

**अधिश्रयणी**—चुल्ली।

"चुल्ल्यश्मन्तकमुद्धमानं स्मृताधिश्रयणी बुधैः"

इति हलायुधः का०—२

**अधिष्ठानम्**—(१) पत्तनं पुरं वा।

अधिष्ठानात् पत्तनादेरिति विवादरत्नाकरे।

अथ वैनां स्यन्दनमारोप्य स्वमधिष्ठानं नयामि॥

विष्णुपु०—४-१२-२१

(२) अधिकारविशिष्टं स्थानम्।

अधिष्ठानान्निर्हारः सार्थानामिति वसिष्ठः—१९-१४
मन्मते अत्र अधिष्ठान-शब्दस्यार्थः सरकार इति समीचीनः यस्मात् अधिकारविशिष्टं स्थानम् अधिष्ठानमिति।

"अधिष्ठानं चक्रपुरप्रभावाध्यासनेष्वपि"

इत्यमरः—३-३-१२६

(३) आश्रयः ।

निरुक्तं यत्तु मन्त्रस्य समुत्पत्तिप्रयोजनम् ।
अधिष्ठानं स्तुतिश्चैव ब्राह्मणं चाभिधीयते ॥

अत्र अधिष्ठानम् आश्रय इति नरसिंहवाजपेयी ।

नित्याचारप्रदीपः—१-१२

**अधोच्छिष्टः**—मूत्रपुरीषशुक्राद्युत्सर्गेणाऽशुद्धः इत्याचारसारे गदाधरराजगुरुः । तत्र लघुहारीतः—

"अधोच्छिष्टस्तु संस्पृश्य सचेली जलमाविशेत्"

आह्निके हारीतः—

श्वविष्ठां काकविष्ठां वा कंकगृध्रनरस्य च ।
अधोच्छिष्टश्च संस्पृश्य सचैलो जलमाविशेत् ॥ इति

ऊर्द्ध्वोच्छिष्टमधोच्छिष्टमन्तरीक्षमृतौ तथा ।
कृच्छ्रत्रयं प्रकुर्वीत आशौचमरणे तथा ॥

पराशरः—१२-६१

**अधिवीतम्**—

अधोवसक्तमधोवीतमिति बौधायनधर्मसूत्रव्याख्याने ।
नाभेरधोवसक्तमधःक्षिप्तमधोवीतमिति

गोविन्दस्वामी॥—१-८-८

**अध्यग्नि**—स्त्रीधनविशेषः ।

विवाहकाले अग्निसन्निधौ यत् पित्रादिदत्तं धनम् ।
अध्यग्न्यध्यावाहनिकमित्यादि ॥ मनुः—९-१९४

**अध्यधीनः**—दासः अन्यन्तमधीन इत्यर्थः ।

कुटुम्बार्थेऽध्यधीनोऽपि व्यवहारं समाचरेत् ।
स्वदेशे वा विदेशे वा तं ज्यायान्न विचालयेत् ॥

मनुः—८-१६७

"अध्यधीनः बन्धकीकृत" इति व्यवहारप्रकाशे

मित्रमिश्रः—११७

**अध्यशनम्**—भोजनोपरिभोजनम् । अजीर्णावस्थायां भोजनमित्यर्थः ।

**अध्याचारः**—आधिपत्यम् ।

"न वै श्वेतस्याध्याचारेऽहिर्ददर्श"

पारस्करः—२-१४-४

**अध्यायः**—(१) वेदः ।

"अधीयन्त इति अध्याया वेदा" इति विज्ञानेश्वरः ।

अध्यायानामुपाकर्म श्रावण्यां श्रवणेन वा ।
हस्तेनौषधिभावे वा पञ्चम्यां श्रावणस्य तु ॥

याज्ञ०—१-१४२

(२) अध्यायो ग्रन्थ इति चन्द्रकान्तभाष्ये ।

पृथगेवैतस्य ज्ञानस्याध्यायो भवति ॥

गोभिलः—१-५-१२

(३) अध्ययनम् । इति वासिष्ठधर्मशास्त्रे प्रथमोऽध्यायः इत्यादि ।

**अध्यावहनिकम्**—स्त्रीधनविशेषः । पितृगृहात् भर्तृगृहं नीयमानया लब्धं धनम् ।

यत्पुनर्लभते नारी नीयमाना तु पैतृकात् ।
अध्यावाहनिकं नाम तत्स्त्रीधनमुदाहृतम् ॥

इति मिताक्षरायाम् । कात्यायनः—२-१४३

**अध्यासनम्**—क्रयणादिरागम इति व्यवहारमातृका ।

परिग्रह इति अपरार्कः—१२-२७

परिग्रह इति स्मृतिचन्द्रिकाव्यवहारः—१६१

अध्यासनात् समारभ्य भुक्तिर्यस्याविघातिनी ।
त्रिंशद्वर्षाण्यविच्छिन्ना तस्य तां न विचालयेत् ॥

इति बृहस्पतिः

**अध्येषणम्**—प्रार्थना ।
तस्माद्ब्रूहि इत्यध्येषणमध्याहार्यम् इति कुल्लूकः—१-२

**अध्वनीनः**—सततमध्वगामी इति कल्पतरौ—२०१

**अध्वरः**—यज्ञः । ध्वरः हिंसाकर्म, तत्र प्रतिषेधो अध्वरः इति गोविन्दस्वामी ।
"शुचिमध्वरं देवा जुषन्ते" बोधा०—६-१

**अध्वर्युः**—(१) ऋत्विङ्मध्ये यजमानः यं पूर्वं वृणीते यश्च कर्मण आरम्भ-समाप्ती करोति सोऽध्वर्युः । अध्वरं युनक्ति इति विग्रहः ।
"रथं हरेत चाध्वर्युर्ब्रह्माधाने च वाजिनम् ।"
मनुः—८-२०६

(२) यजुर्वेदी—"कुहूरध्वर्युभिः कार्य्या" इति निर्णयसिन्धौ हारीतः । अत्र अध्वर्युः यजुर्वेदी ।

**अध्वापन्नः**—अध्वानः प्राप्त इत्युज्वलाकारः ।
"अध्वापन्नस्तु कर्मयुक्तो वा सीदेत् ॥"
आप०—१-२-६

**अनः**—शकटः ।
अस्थिमत्तां तु सत्त्वानां सहस्रस्य प्रमापणे ।
पूर्णे चानस्यनस्थ्नां तु शूद्रहत्याव्रतं चरेत् ॥
मनुः—११-१४०

**अनकाममारः**—इच्छामृत्युकारको मन्त्रः ।
"भूर्भुवःस्वरों सूर्य इव दृशे" इत्यादिको मन्त्रः ॥
गोभिलभाष्ये—४-६-१

**अनङ्गत्रयोदशी**-चैत्र-शुक्लत्रयोदशी मार्गशिर-शुक्लत्रयोदशी च ।
चैत्रशुक्लत्रयोदश्यां मदनं दमनामकम् ।
कृत्वा संपूज्य विधिवद् वीजयेद् व्यजनेन च ॥ इत्यारभ्य
एवं यः कुरुते पूजामनङ्गस्य महात्मनः ।
भवन्ति नापदस्तस्य तस्मिन्नब्द कदाचन ॥
इति श्राद्धदीपे ॥

"मार्गशीर्षेऽमले पक्षे इत्युपक्रम्य
अनङ्गेन कृता ह्येषा तेनानङ्गत्रयोदशी ।"
इति कालमाधवे ।

**अनडुद्यज्ञः**—गृहागते धान्ये तत्र अनडुद्यत इत्यष्टावक्रभाष्ये ।
मानवगृ० पु०—२-१०-
तत्रानडुच्छृंगयोर्मुकुटवन्धनादि कर्म भवति ॥

**अनत्ययः**—अदण्ड इति विवादरत्नाकरे—३०३-४
कैवर्त्तकाष्ठतृणभरपुष्पफलवाटषण्डगोपालकानामनत्ययः
कौटल्यः—२-२८-१
"महामहयोस्त्वनत्ययः स्यादभयं च" वसिष्ठः—१६-१

**अनध्ययनद्वितीया**—
"कोप्रेचैचाद्वितीयास्ताः प्रेतपक्षे गते तु या ।
यातु कोजागरे याते चैत्रवल्याः परेऽपि या ॥
चातुर्मास्ये समाप्ते च या द्वितीया भवेत्तिथिः ।
परास्वेतास्वनध्यायः पुराणैः परिकीर्त्तितः ॥"
"शुचावूर्जे तपस्ये वा या द्वितीया विधुक्षये ।
चातुर्मास्यद्वितीयास्ताः प्रवदन्ति मनीषिणः ॥"
इति कालसारे

**अनन्तचतुर्दशी**—भाद्रशुक्लचतुर्दशी ।

आराधिते महेन्द्रे तु ध्वजाकारासु यष्टिषु ।
ततः शुक्लचतुर्द श्यामनन्तं पूजयेद्धरिम् ॥
इति कालदीपे ॥

**अनन्तरः**—(१) अव्यवहित-सन्निकृष्टः ।

अनन्तरमरिं विद्यादरिसेविनमेव च ।
अरेरनन्तरं मित्रमुदासीनं तयोः परम् ॥ मनुः—७-१५८

(२) अव्यवहितपरवर्त्ती ।

स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितान् सुतान् ।
सदृशानेव तानाहुर्मातृदोषविगर्हितान् ॥ मनुः—१०-६

**अनपदेश्यः**—एवंभूतोऽयमिति व्यपदेशानर्हः ।

स्त्रीत्वपुंस्त्वाभ्यामनिर्देश्यः तृतीया प्रकृतिरित्यन्ये ।
इति गौतमीयवृत्तौ हरदत्तः—२-८-१७

**अनपसरः**—प्रतिग्रहाद्यागमरहितः ।

"निरन्वयोऽनपसरः प्राप्तः स्याच्चौरकिल्विषम् ॥
मनुः—८-१९८

अपसरः धनागमोपायः न विद्यते यस्य स ।
इति कल्पतरुः ।

एतच्च भागुरिमेधातिथिवृत्तिकाराणां मतम् ॥
कल्पतरुः पृ०—३५२

**अनपकर्म**—ग्रहणमिति कुल्लूकः । मनुः—८-४

**अनपक्रिया**—अप्रतिपादनमिति कुल्लूकः ।
मनुः—८-२१४

**अनपाकर्म**—अव्यतिक्रम इति विज्ञानेश्वरः—२-१८५

अनपकरणमननुरूपकरणं वेति स्मृतिचन्द्रिका ।

पाषण्डिनैगमादीनां स्थितिः समय उच्यते ।
समयस्यानपाकर्म तद्विवादपदं स्मृतम् ॥
नारदस्मृतिः—१०-१

**अनभ्यासः**—अनतिक्रमः "पूजानभ्यासश्च"
इति गौतमः—१-५-३३

अनल्यास इति पाठान्तरम् ॥

**अनयः**—आपत् ।

सर्वतः प्रतिगृह्णीयाद् ब्राह्मणस्त्वनयंगतः ।
पवित्रं दुष्यतीत्येतद्धर्मतो नोपपद्यते ॥
मनुः—१०-१०२

**अनवलोभनम्**—कर्मविशेषः । गर्भस्य चतुर्थो मासः

अनवलोभनकालः गर्भस्पन्दनात् पूर्वम् ।
"अथ पुंसवनानवलोभने करोति" इति बैजवापगृह्ये ।
अत्र च दूर्वारसावसेचनं हृदयस्पर्शनं चेति
द्वयमनवलोभनम् इति परिभाषाप्रकाशे—१७१
अनवलोपनं रक्षणमिति यावदिति कल्पतरुः ।
ब्रह्मचारीकाण्डे—८२
निर्णयसिन्धावपि "चतुर्थेऽनवलोभनमित्युक्तम्"
पृ—१७७
"कुर्य्यात्पुंसवनं गर्भतृतीयेऽनवलोभनम्"
इति लघ्वाश्वलायनस्मृतिः—५-१

**अनवस्था**—अप्रामाणिकानन्तप्रवाहमूलकप्रसङ्गत्वमिति-
तार्किकाः ।

अन्यैस्तु साक्षिभिः साध्ये दूषणे पूर्वसाक्षिणाम् ।
अनवस्थाभवेद्दोषस्तेषामप्यन्यसम्भवात् ॥
इति व्यवहारमाधवे व्यासः ॥

**अनसूयकः**—दोषानाविष्करणेन गुणाविष्करणशीलः ।
मिताक्षरा—१-२८

**अनसूया**—गौतमोक्त आत्मगुणविशेषः। गौतमः—१-८-२४
यो धर्ममर्थं कामं च लभते मोक्षमेव च ।
न द्विष्यात्त' सदा प्राज्ञः सानसूया स्मृता बुधैः ॥
इति हरदत्तटीकायाम्—१-८-२४
न गुणान् गुणिनो हन्ति स्तौति चान्यान् गुणानपि ।
न हसेच्चान्यदोषांश्च सानसूया प्रकीर्त्तिता ॥
अत्रिसंहिता—३४
परदोषानाविष्करणमित्यर्थः ।

**अनाकालभृतः**—दासविशेषः । दुर्भिक्षे यो दासत्वाय मरणाद्रक्षितः इति विज्ञानेश्वरः—२-१८२
"अनाकालभृतस्तद्वदाहितः स्वामिना तु यः"
इति नारदसंहिता—६-३४
विवादरत्नाकरे तु अन्नाकालभृत इति पाठः ।

**अनाचारः**—सदाचारविरुद्धः ।
देशजातिकुलधर्माम्नायैरविरुद्धाः प्रमाणमिति गौतमः ।
आम्नायविरुद्धा देशादिधर्मा अनाचाराः ।
उदुह्यते दाक्षिणात्यैर्मातुलस्य सुता द्विजैः ।
मध्यदेशे कर्मकराः शिल्पिनश्च गवाशिनः ॥
मत्स्यादाश्च नराः पूर्वे व्यभिचाररताः स्त्रियः ।
उत्तरे मद्यपा नार्य्यः स्पृश्या नृणां रजस्वलाः ॥
अनेककर्मणा नैते प्रायश्चित्तादमार्हकाः ॥
व्यवहारमयूखे बृहस्पतिः पृ०—७
पञ्चधा विप्रतिपत्तिर्दक्षिणतस्तथोत्तारतः । यानि दक्षिणतस्तानि व्याख्यास्यामः । यथैतदनुपेतेन सहभोजनं, स्त्रिया सह भोजनं, पर्युषितभोजनं, मातुलपितृष्वसृदुहितृगमनमिति । अथोत्तारतः ऊर्णाविक्रयः शीधुपानमुभयतोदद्भिर्व्यवहारः आयुधीयकं समुद्रसंयानमिति । इतरदितरस्मिन् कुर्वन् दुष्यतीतरदितरस्मिन् ॥ बौधा०—१-१-२-१-४

**अनादेयम्**—असंस्कृतक्षेत्रम् इति श्रीमूला ।
अनादेयमकृषतोऽन्यः पञ्चवर्षाणि उपभुज्य प्रयासनिष्क्रयेण दद्यात् । कौटल्यः—२-१०

**अनादेशः**—यत्र साक्षात् वचनेन प्रायश्चित्तादेशो नास्ति । "एतान्येवाम्त्रादेशे विकल्पेन क्रियेरन्" इति गौतमः ।

**अनामयम्**—आरोग्यम् । ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयम् । मनुः—२-१२७
क्षत्रियं प्रतिकुशलपृच्छार्थं प्रयोज्यः शब्दोऽयम् ॥
अनादेशे जपो होम उपवासस्तथैव च ।
आत्मज्ञानं पुण्यनद्यो यत्र प्रायश्च तत्पराः ॥
महाभा० शान्ति०—३६-६

**अनामिका**—मध्यमाकनिष्ठाङ्गुल्योर्मध्यमा ।
अङ्गुष्ठानामिकाभ्यां तु श्रवणौ समुपस्पृशेत् ।
कनिष्ठाङ्गुष्ठयोगेन स्पृशेत् स्कन्धद्वयं ततः ॥
शङ्खः—१०-८

**अनायासः**—गौतमोक्त आत्मगुणविशेषः ।
यदारम्भे भवेत्पीड़ा नित्यमत्यन्तमात्मनः ।
तद्वर्जयेद्धर्म्यमपि सोऽनायासः प्रकीर्त्तितः ॥
इति गौतमविवृतौ—१-८-२४
शरीरं पीड्यते येन शुभेन त्वशुभेन वा ।
अत्यन्तं तन्न कुर्वीत अनायासः स उच्यते ॥
अत्रिसंहिता—३७

**अनालम्भुका**—अस्पृश्या, रजस्वला ।
"व्रत्येऽहनि यस्य पत्नी अनालम्भुका तामपरुध्य यजेत ।"
मिताक्षरा—३-४४

**अनाशकः**—अनशनम् ।

अनाशकमनशनमिति विज्ञानेश्वर—३-६

"विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन"

इति बृहदारण्यकोपनिषत् ।

"प्रायोनाशकशस्त्राग्निविषेत्यादि गौतमः—२-५-११

अशनम् आशः । स एव अशकः । तद्विपर्ययोऽनाशक इति मिताक्षरावृत्तौ हरदत्तः ॥

**अनाश्रितः**—अधिकारे सत्यपि अकृताश्रमविशेषपरिग्रहः इति विज्ञानेश्वरः ।

पाखण्ड्यनाश्रिताः स्तेना भर्तृघ्न्यः कामगादिकाः ।

सुराप्य आत्मत्यागिन्यो नाशौ चोदकभाजनाः ॥

याज्ञ०—३-६

**अनिकिलिका**—अनिकिली इति उत्कलेषु प्रसिद्धा । शकटस्य क्षुद्रांशविशेषः । अणी शब्दो द्रष्टव्यः ।

**अनीकिनी**—सेना, तद्गणना अक्षौहिणीशब्दे द्रष्टव्या ।

"अनीकिनीं दशगुणां प्राहुरक्षौहिणीं बुधाः ।

महाभा०—१-१-२-२२

२१८७ गजाः, २१८७ रथाः, ६५६१ अश्वाः १०६३५ पादातिकसैन्याश्चेति मिलिताः अनीकिनी ।

**अनुकर्षः**—युद्धविमर्दे यस्य कस्यचित् रथावयवस्य नष्टस्य प्रतिसमाधानार्थं यद्रथस्याधो दारु बद्ध्यते । "अनुकर्षो रथाधःस्थदारुणि" इति मेदिनी—३१-४८

सर्वेष्वेतेष्वनीकेषु सन्दिदेश नराधिपः ।

सानुकर्षाः सतूणीराः सवरूथाः सतोमराः ॥

महाभा० उद्०—१५५-३

**अनुकल्पः**—गौणकल्पः । अनु पश्चात्कल्पनमिति अनुकल्पः इति हेमाद्रिः परिशिष्टकाण्डे—४४१

प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तते

न साम्परायिकं तस्य दुर्मतेर्विद्यते फलम् ॥

मनुः—११-३०

**अनुक्रमः**—अश्वादीनां चालनम् । मानेन रक्ष्यते धान्यमनश्वान् रक्षत्यनुक्रमः । राजनीतिप्रकाशः—४८०

क्रमःगृहीतानुक्रमाद्याप्यो धनिनामधमर्णिकः ॥

याज्ञ०—२-४१

**अनुक्षिप्तः**—"समो न्यूनोऽधिको ह्यंशो योऽनुक्षिप्तस्तथैव सः ।" इति शुक्रनीतौ—४-८०८ ।

समाहित इत्यर्थः निरूपित इति यावत् ।

**अनुगमः**—(१) ज्ञानम् ।

स्मार्त्तकाले क्रियाभूमेः सागमा भुक्तिरिष्यते ।

अस्मार्त्तेऽनुगमाभावात् क्रमात् त्रिपुरुषागता ॥

इतिमिताक्षरायाम् । कात्यायनः—२-२७

आगमानुसन्धानमिति व्यवहारकल्पतरुः—१७६

आगमाभावनिश्चय इति व्यवहारप्रकाशे ।

(२) सेवा "अनुगमः सेवा" इति दायभागटीकायां महेश्वराच्युतानन्दौ ।

कृते तु दीयते गत्वा त्रेतायामाहृताय वै ।

द्वापरे याचमानाय कलौ त्वनुगमान्वितः ॥

इति अग्निपुराणे—२०६-५५

अत्र श्लोके अनुगम उपसर्पणमिति श्रीकृष्णरामभद्रौ दायभागव्याख्यातारौ ।

मन्त्रदः क्षत्रियो विप्रैः शुश्रूषानुगमादिना ।

प्राप्तविद्यो ब्राह्मणस्तु पुनस्तस्य गुरुः स्मृतः ॥

मन्वर्थमुक्तावल्यां व्यासः—२-२४१

**अनुगमनम्**—मृतस्य स्वामिनः मुद्रिकादिचिह्नं गृहीत्वा कालान्तरे वह्निप्रवेशः। सहगमने तु मृतस्य स्वामिनः चितायां प्रवेश इति अनुगमनसहगमनयोः प्रभेदः सुस्पष्टः।
"मृतानुगमनं नास्ति ब्राह्मण्या ब्रह्मशासनात्।"
इति मिताक्षरा—१-३६

**अनुग्राहकः**—सहायकः। यः पलायमानममित्रमुपरुन्धन् परेभ्यश्च हन्तारं परिरक्षन् हन्तुर्वृद्धिमानमुपजनयन्नुपकरोति स अनुग्राहकः इति विज्ञानेश्वरः—३-२२७

**अनुतापः**—पश्चात्तापः।
ख्यापनेनानुतापेन तपसाध्ययनेन च।
पापकृन्मुच्यते पापात्तथा दानेन चापदि॥
मनुः—११-२२७

**अनुदितकालः**—रात्रेः षोडशमे भागे ग्रहनक्षत्रभूषिते। कालं त्वनुदितं जानन् होमं कुर्याद्विचक्षणः। इति नित्यचारपद्धतौ छान्दोगपरिशिष्टवचनम्। हेमाद्रौ कात्यायनश्च॥

**अनुद्रुतिः**—अध्ययनम् उच्चारणम् च।
"सावित्रीं चतुरनुद्रुत्य" पारस्करः—२-१२-३
अत्र अनुद्रुत्य पठित्वा इति हरिहरः।
गोभिलस्मृतौ—
मनसा नैत्यकं कर्म प्रवसन्नप्यतन्द्रितः।
उपविश्य शुचिः सर्वं यथाकालमनुद्रवेत्॥ २-१५७

**अनुपस्कृतः**—(१) प्रशस्तः "एषोऽनुपस्कृतः प्रोक्तो योधधर्मः सनातनः" मनुः—७-९८
(२) निःस्वार्थः "गवार्थे ब्राह्मणार्थे वा देहत्यागेऽनुपस्कृतः" मनुः—१०-६२
(३) अपुरस्कृतः अकृतपारितोषिक इत्यर्थः इति कश्चित्। अनुपस्कृतमख्यातपूरितमिति विज्ञानेश्वरः॥ १-१८२
रेखादिगुणान्तराधानरहितंरत्नमिति कुल्लूकः।—५-११२
अब्जमश्ममयं चैव राजतं चानुपस्कृतम्॥
मनुः—५-११२
(४) अविकृतः—
मुन्यन्नानिपयःसोमो मांसं यच्चानुपस्कृतम्।
अत्र अनुपस्कृतमविकृतमिति लक्ष्मीधरः॥
मनुः—३-२५७
"प्रादेशमात्रं भूमेस्तु यो यद्यादनुपस्कृताम्॥"
इति महाभा० दान—६६-२६

**अनुपाकृतम्**—मांसम्। यज्ञे अहुतस्य पशोः मांसम्। मिताक्षरा—१-१७१
अनुपाकृतं अप्रोक्षितं (मांसम्) इति हेमाद्रौ परिशेषः।
—६११

**अनुपातकम्**—महापातकतुल्यपापम्।
अनुपातकिनस्त्वेते महापातकिनो यथा।
अश्वमेधेन शुद्ध्येयुस्तीर्थानुसरणेन वा॥
इति प्रायश्चित्तविवेके—४१

**अनुप्रदानम्**—अन्तर्वेदिबहिर्वेदि च दानमिति हरदत्तः आप०—२-९-२३-८

**अनुप्रवचनीयः**—अनुप्रवचनं प्रयोजनं येषां ते अनुप्रवचनीयाः होमा इति अन्वर्थसंज्ञा। अनु उत्तरकालं हि सावित्र्या प्रवचनं ब्रह्मचारी कारयिष्यते गुरुणा। अनुप्रवचनमर्हन्ति इति अनुप्रवचनीयाः इति देवपालः। काठक.गृ०— ४-१-१६

**अनुप्रवेशः**—(१) अनुसरणम् । स्तेनोऽनुप्रवेशान्न दुष्यति ।
वसिष्ठः—१६-३८

अत्र अनुप्रवेशः चौरानुगमनमिति विवादरत्नाकरे । तदनुगमनं यादृच्छिकं न तु चौर्यर्थम् इति मन्मतम् ॥

(२) अनुसन्धानम् । यश्चास्य परविषये संचारं कुर्यात् तमनुप्रविश्य मन्त्रं विद्यात् । कौट०— २-६-२६

**अनुबद्धः**—अनुगतः "गुरुसमवाये भिक्षायामुत्पन्नायां यमनुबद्धस्तदधीना भिक्षा" आप०—१-२-७-१४

**अनुबन्धः**—आग्रहः । वारम्बारमाचरणम् ॥ "पौनःपुन्येन प्रवृत्तिः प्रवृत्तिकारणं वा । अनुबध्यते प्रयुज्यते येन तस्मिन् कर्मणि इति मेधातिथिः ।

"अनुबन्धं परिज्ञाय देशकालौ च तत्त्वतः ।
सारापराधौ चालोक्य दण्डं दण्ड्येषु पातयेत् ॥"
मनुः—८-१२०

अनुबन्धः अभ्यास इति उज्ज्वलावृत्तौ ।
गौतमः—२-३-४८

दोषोत्पादेऽनुबन्धः स्यात् प्रकृत्यादिविनश्वरे ।
मुख्यानुयायिनि शिशौ प्रकृतस्यानुवर्त्तने ॥
अमरः—३-३-६८

अनुबन्धस्तु बन्धे स्याद् दोषोत्पादे विनश्वरे ।
मुख्यानुयायिनि शिशौ प्रकृतस्यानुवर्त्तने ॥
इति मेदिनी—१६-४१

(१) दोषोत्पादः—पूर्वोक्तमुदाहरणम् "अनुबन्धं परिज्ञायेत्यादिः ।" मनुः—८-१२०

(२) प्रकृतस्यानुवर्त्तने—"भोक्तुमनुबन्धः कृतः" इत्यादि ।

(३) शिशौ—"बालकानुबन्धेन यात्राभङ्गो माऽभूत् ।"

"गुरुसमवाये भिक्षायामुत्पन्नायां यमनुबद्धस्तदधीना-भिक्षा" आप०—१-२-७-१४

(४) आरम्भ इति शब्दरत्नावली ।

(५) लेश इति त्रिकाण्डशेषः ।

(६) विषयसम्बन्धप्रयोजनाधिकारिभेदेन अनुबन्ध चतुष्टयमिति ।

(७) सम्बन्धः ।

दुर्योधन निबोधेदं मद्वाक्यं कुरुसत्तम ।
शर्मार्थं ते विशेषेण सानुबन्धस्य भारत ॥
महाभा० उद्—१२४-६

(८) परिणामः—पश्चाद्भावि यद्वस्तु सः अनुबन्ध इति श्रीशङ्कराचार्य्याः ।

अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम् ।
मोहादारभ्यते कर्म यत्तत् तामसमुच्यते ॥
भ० गीता—१८-२५

भक्ष्योत्तमप्रतिच्छन्नं मत्स्यो वडिशमायसम् ।
लोभातिपाती ग्रसते नानुबन्धमपेक्षते ॥
इत्यत्रापि राजनीतिप्रकाशोद्धृतमहाभारतवाक्ये–४७७

(९) प्रयोजनम् ।

अनुबन्धं च संप्रेक्ष्य विपाकं चैव कर्मणाम् ।
उत्थानमात्मनश्चैव धीरः कुर्वीत वा न वा ॥
इति राजनीतिप्रकाशोद्धृतमहाभारते पृ०–४७६

(१०) बाधा ।

प्रागेव नागतं कस्मात्सभार्य्येण त्वया विभो ।
विरात्रे चागतं कस्मात् कोऽनुबन्धस्तवाभवत् ॥
महा० वन—२६८-२८

**अनुबन्धी**—अनुबन्धयुक्तः ।

"अनुबन्धी तु हिक्कायां तृष्णायामपि ।"

इति मेदिनी—१६-४२

**अनुबन्ध्या**—इष्टिविशेषः ।

यथा नियोगधर्मो नो नानुबन्ध्यावधोऽपि वा ।
तथोद्धारविभागोऽपि नैव सम्प्रति वर्त्तते ॥

इति व्यवहारप्रकाशोद्धृतस्मृतिसंग्रहे ।

"मैत्रावरुणीं गामनुबन्ध्यां वशामालभेत इति । इयमनुबन्ध्येष्टिः सोमयागे उदवसानीयेष्ट्यनन्तरमाम्नाता आपस्तम्बेन" इति व्यवहारप्रकाशेः ॥

**अनुभावः**—प्रभावः दृढ़ा मतिश्च ।

देवतानां च संकल्पमनुभावं च धीमताम् ।
विनयं कृतविद्यानां विनाशं पापकर्मणाम् ॥

महाभा० उद्—३३-७२

**अनुभावी**—अनुभवयुक्तः ।

अनुभावी तु यः कश्चित् कुर्यात्साक्ष्यं विवादिनाम् ।
अन्तर्वेश्मन्यरण्ये वा शरीरस्यापि चात्यये ॥

मनुः—८-६६

**अनुभुक्तम्**—क्रमागतभोगः ।

"भुक्तानुभुक्तं दशवर्षम्" वसिष्ठः—१६-१७

**अनुमतिः**—चतुर्दशीयुक्ता पूर्णिमा ।

"कलोनानुमतिः स्मृता" इति कौशिकगृह्यसूत्रे च "या पूर्वा पौर्णमासी सानुमतिर्योत्तरा सा राका अन्यत्र पूर्वोदिते कलाहीने पौर्णमास्यां निशाकरे ।
पूर्णिमानुमतिर्ज्ञेया पश्चादस्तमितार्कका ॥

इति—१-१-२६ ।

**अनुमन्ता**—हत्यादौ प्रवृत्तस्य प्रवर्त्तकः । मिता—३-२२७

**अनुमन्त्रणम्**-(१) स्वयमन्येन वा कर्मणि कृते पश्चात् तत्कर्मकरणमन्त्रोच्चारणम् अनुमन्त्रणम् इति श्रौतपदार्थनिर्वचने । (२) मन्त्रोच्चारणपूर्वकं पदार्थस्पर्शनमनुमन्त्रणम् । "एतै ग्रामानुमन्त्रणं प्रतिमन्त्रं मनसा ॥" गौतमः—३-६-८

**अनुमात्रा**—निश्चय इति नीलकण्ठः ।

तत्रेयमनुमात्रा मे भीमसेनविवक्षिता ।
नैकान्तसिद्धिर्वक्तव्या शत्रुभिः सह संयुगे ॥

महाभा० उद्—७७-१३

**अनुमानम्**—(१) स्मृतिः धर्मशास्त्रापरनामा ।

"प्रत्यक्षानुमानाभ्यामिति" शारीरकसूत्रे—११-३-२८
मनुरपि "प्रत्यक्षं चानुमानं च शास्त्रं च विविधागमम् ।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ॥"—१२-१०५
अत्र प्रत्यक्षपदेन वेदस्य अनुमानपदेन स्मृतेः ।
शास्त्रपदेन तद्भिन्नानां ग्रहणमिति मन्मतम् ॥

(२) सदाचारः ।

"स्मृतिः प्रत्यक्षमैतिह्यमनुमानचतुष्टयम् ।
एतैरादित्यमण्डलं सर्वैरेव विधास्यते ॥" इति श्रुतिः ।
अत्र अनुमानं शिष्टाचार इति कालमाधवे माधवाचार्य्याः ।

**अनुयाजाः**—अनु पश्चात् प्रधानयागानन्तरम् इज्यते यैरिति व्युत्पत्त्या होत्रा पठ्यमाना याज्या मन्त्रा अनुयाजाः ।

**अनुयोगः**—प्रश्नः ।

अनुयोगेन यो दद्याद् ब्राह्मणाय प्रतिग्रहम् ।
स पूर्वं नरकं याति ब्राह्मणस्तदनन्तरम् ॥
इति नित्याचारप्रदीपोद्धृत भविष्ये । नित्या—२-३१६

साक्षिबालिश्येष्वेव पृथगनुयोगे देशकालकार्य्याणां पूर्वमध्यमोत्तमा दण्डाः । कौट—३-११

**अनुयोगप्रदानम्**—उत्कर्षहेतोरधीयानस्य किं पठसि नाशितं त्वया इत्ययं पर्यनुयोगः अनुयोगप्रदानम् ।

मिताक्षरा—३-२६५

भृतकाध्यापनं कृत्वा भृतकाध्यापितस्तथा ।
अनुयोगप्रदानेन त्रीन् पक्षान् नियतः पिबेत् ॥
केशववैजवन्त्यांवचनमिदं हारीतनाम्ना पठितम् ॥

विष्णुः—३७-२१

**अनुरोधः**—इष्टसम्पादनम् । आग्रहो वा ।

अनुरोधोऽनुवर्त्तनमित्यमरः—२-८-१२

वेदोपकरणे चैव स्वाध्याये चैव नैत्यके ।
नानुरोधस्त्वनध्याये होममन्त्रेषु चैव हि ॥

मनुः—२-१०५

**अनुलेपनम्**—कुङ्कुमचन्दनादि मिताक्षरा—१-२११

**अनुलोमजः**—उच्चवर्णपुरुषेण हीनवर्णस्त्रीयां विवाहितायां जातः ।

सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु ।
आनुलोम्येन सम्भूता जात्या ज्ञेयास्त एव ते ॥

मनुः—१०-५

**अनुवंशम्**—वंशः गृहमूर्द्धन्यदीर्घकाष्ठम् ।

वंशदैर्ध्यानुगतः यथा स्यात्तथा अनुवंशम् ॥

इति कल्पतरौ-तियतकाल—३३७

सुप्यादित्यनुवृत्तौ भानवंशमितिविष्णुः—७०-४

**अनुवचनम्**—(१) अध्यापनम् ।

तद् यस्मात् स आचार्य्यः—१-१-१०
वेदानुवचनाच्च इति गौतमः—१-१-११

(२) अध्ययनम् ।

वेदानुवचनं यज्ञो ब्रह्मचर्यं तपो दमः ।
श्रद्धोपवासः स्वातन्त्र्यमात्मनो ज्ञानहेतवः ॥

याज्ञ०—२-१६०

(३) कार्य्यसन्देहे राजाज्ञा ।

इति राजनीति प्रकाशे मित्रमिश्रः पृ०— १६०

**अनुवत्सरः**—सम्वत्सरादिपञ्चके चतुर्थः । तत्र धान्यदानं प्रशस्तम् ।

सम्वत्सरे तु दातॄणां तिलदानं महाफलम् ।
परिपूर्वे तथा दानं यवानां द्विजसत्तम ॥
इदापूर्वे तु वस्त्राणां धान्यानां चानुपूर्वके ।
इतपूर्वे रजतस्यापि दानं दत्तं महाफलम् ॥
इति कालसारोद्धृतविष्णुधर्मोत्तरे ।

**अनुवर्णितम्**—पश्चात्स्वीकृतम् ।

ऋणं पुत्रकृतं पित्रा न देयमिति धर्मतः ।
देयं प्रतिश्रुतं यत्स्याद् यच्च स्यादनुवर्णितम् ॥

इति विवादरत्नाकरे कात्यायनः— ५७

**अनुवसितम्**—अविच्छिन्नाध्युषितमिति श्रीमूला ।

विंशतिवर्षेऽपेक्षितमनुवसितं वास्तु नानुयुञ्जीत ।

कौट०—३-१६

**अनुवाक**—(१) मन्त्रार्थविवरणभूतं ब्राह्मणवाक्यमिति नीलकण्ठः ।

यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च ।
गृणन्ति सत्यकर्माणं सत्यं सत्येषु सामसु ॥
महाभा० शान्ति—४७-२६

(२) एकर्षिदृष्टा मन्त्रविशेषाः ।
वैष्णवैरनुवाकैश्च जुहुयात् सर्पिषा तथा ।
बृद्धहारीतः—३६

**अनुवाक्यम्**—अध्ययनारम्भः ।
यत्काण्डमुपाकुर्वीत यस्य चानुवाक्यं कुर्वीत न तत्तदहरधीयीत ।—१-११-६

**अनुवादः**—उक्तस्योक्तिरनुवादः । अथापि नित्यानुवादमविधिमाहुर्न्यायविदो यथा तस्मादजावयः पशूनां सहचरन्तीति । आप०—२-६-१४-१३

**अनुवृत्तिः**—(१) सेवा ।
कुसीदकृषिवाणिज्यशुल्कशिल्पानुवृत्तिभिः ।
कृतोपकारादाप्तं च शवलं समुदाहृतम् ॥
नारदः—४-४६

(२) धारावाहिकता अविच्छिन्नता ।
स्वस्वामिसम्बन्धस्तु भोगानुवृत्तिरुच्छिन्नदेशानां यथा स्वं द्रव्याणाम् । कौट०—३-१६-२६

**अनुवेश्यः**—पृष्ठतो वसन् जनः । इति मेधातिथिः ।
कुल्लूकमतेन निरन्तरगृहवासीप्रातिवेश्यः । तदन्तरगृहवासी अनुवेश्यः । प्रातिवेश्यशब्दो द्रष्टव्यः ।
प्रातिवेश्यानुवेश्यौ च कल्याणे विंशतिद्विजे ।
अर्हावभोजयन् विप्रो दण्डमर्हति माषकम् ॥
मनुः—८-३९२

**अनुव्याहारः**—शाप इति हरदत्तः ।
अभीचारानुव्याहारावशुचिकरावपातनीयौ ।
आप०—१-२९-१५

**अनुव्रज्या**—अनुगमनम् ।
अब्राह्मणादध्ययनमापत्काले विधीयते ।
अनुव्रज्या च शुश्रूषा यावदध्ययनं गुरोः ॥
मनुः—२-२४१

**अनुव्रतम्**—व्रताङ्गम् ।
विसशृङ्गारशालूकहविष्यान्नानि यानि तु ।
एतान्यनुव्रतान्याहुः शस्तानि जपकर्मणि ॥
इति आह्निकप्रकाशे योगियाज्ञवल्क्यः ।
अत्र अनुव्रतानि जपयज्ञव्रतस्याङ्गभूतव्रतानि ॥
इति मित्रमिश्रः पृ०—३१६

**अनुशयः**—पश्चात्तापः ।
क्रीत्वा मूल्येन यः पण्यं क्रेता न बहुमन्यते ।
क्रीतानुशय इत्येतद् विवादपदमुच्यते ॥
इति नारदः—९-१
अनुशयो दीर्घद्वेषानुतापयोरित्यमरः—३-३-१४३

**अनुशासनम्**—उपदेश इति मेधातिथिः ।
येन केनचिदङ्गेन हिंस्या चेच्छ्रेष्ठमन्त्यजः ।
च्छेत्तव्यं तत्तदेवास्यतन्मनोरनुशासनम् ॥
मनुः—८-२७९
नानुशासनवादाभ्यां भिक्षां लिप्सेत कर्हिचित्" (यतिः)।
मनुः—६-५०

**अनुशिष्टम्**—ऋणादानादिव्यवहारे दण्डपर्यन्ततां नीतं कार्यमिति कुल्लूकः ।
"तीरितं चानुशिष्टं च यत्र क्वचन यद्भवेत् ॥"
मनुः—९-२३३

**अनुशिष्टः**—(१) साक्षिवाक्यादवधारितः ।

सोऽनुशिष्टस्तु साक्षिवाक्यात् प्रकीर्त्तितः ।

इति कात्यायनः ।

(२) उपदिष्टः—

एष धर्मोऽनुशिष्टो वो यतीनां नियतात्मनाम् ।

वेद संन्यासिकानां तु कर्मयोगं निबोधत ॥

मनुः—६-८६

**अनुषङ्गः**—(१) प्रसङ्गः ।

क्षयं केचिदुपात्तस्य दुरितस्य प्रचक्षते ।

नित्यक्रियां तथा चान्ये ह्यनुषङ्गफलां श्रुतिम् ॥

इति प्रायश्चित्तविवेके जावालः

"प्रसङ्गेनानुषङ्गेण श्रद्धयापि यदृच्छया ।

शिवभक्तिं प्रकुर्वन्ति ये वै" इति ।

(२) लघीयान् ।

अनुषङ्गो लघीयान् इति रत्नाकरे विवेचितमस्माभिः इति दायभागव्याख्याने स्त्रीधनविभागप्रकरणे-रघुनन्दनः ।

**अनुसारः**—क्रमः ।

"उद्धृत्य कूपवाप्यम्भस्त्वनुसारेण गृह्यते" इति दायभागे बृहस्पति ।

**अनूकम्**—(१) अन्वितम् । त्रिपुरुषानूकमनरिप्रतिष्ठित-मिति पातञ्जलमहाभाष्योद्धृतस्मृतौ । अणूकशब्दस्यायं पाठभेदः । अन्वितमित्यर्थः ।

(२) अतीतजन्मसूचिका आकृतिः इति लक्षणप्रकाशे मित्रमिश्रः ।

"उन्मानमानगतिसंहतिसारवर्ण

स्नेहस्वरप्रकृतिसत्त्वमनूकमादौ ।

क्षेत्रं मृजां च विधिवत्कुशलोऽवलोक्य

सामुद्रविद्वदति यातमनागतं च ॥

इति तत्र वराहसंहितायाम् । तथाश्चायुर्वेदे—

अत ऊर्द्ध्वं प्रवक्ष्यामि अनूकं तु चतुर्विधम् ।

गत्या स्वरेण रूपेण सत्त्वेन च शुभाशुभम् ॥

इति लक्षणप्रकाशे ॥

(३) अनूकं तु कुले शीले पुंसि स्याद् गतजन्मनि

इति मेदिनी—१-४३

(४) शीलान्वयावनूके इत्यमरः – ३-३-१३

**अनूचानः**—वृत्ताभिजनसम्पन्नः साङ्गवेदाध्येता वा ।

साङ्गवेदाधायीति कुल्लूकः । मनुः—५-८२

अनूचानः प्रवचने साङ्गेऽधीती इत्यमरः—२-७-१०

अनूचानः साङ्गप्रवचनाध्यायी अर्थज्ञानवानिति

नरसिंहवाजपेयी ।

साङ्गस्य वेदस्य अध्येता प्रवक्ता चानूचान

इति हरदत्तः आपः०—२-५-१०-६

अन्ववोचत् इति अनूचानः ॥

"मात्रश्च ब्राह्मणश्चैव श्रोत्रियश्च तपः परः ।

अनूचानस्तथा भ्रूण ऋषिकल्प ऋषिर्मुनिः ॥

× × ×

वेदवेदाङ्गतत्त्वज्ञः शुद्धात्मा पापवर्जितः ।

शिष्टः श्रोत्रियतां प्राप्तः सोऽनूचान इति स्मृतः ॥

इति देवल । स्कान्दे तु—

श्रेष्ठः श्रोत्रियवान् प्राज्ञः सोऽनूचान इति स्मृत इति पाठः ॥

**अनूढः**—वेश्यादिषु प्रसक्तः कामुकः। स हि विवाहमन्तरा स्त्रियमुपभुङ्क्ते।

गृहीत्वा वेतनं वेश्या लोभादन्यत्र गच्छति।
भाटं न दद्याद्वाप्या स्यादनूढस्यापि भाटकम्॥
इति विवादरत्नाकरोद्धृतमात्स्ये॥

**अनूत्थानम्**—उत्थानमनुसृत्य उत्थानम्।
आप०—१-२-६-७

"अनूत्थाय तिष्ठन्तम्" प्रतिब्रूयादित्यनेन सम्बन्धः॥

**अनूपः**—बहूदको देशः। "जलप्रायमनूपं स्यादित्यमरः।"
२-१-१०

"अनूपो महिषे नाऽम्बुप्रायदेशे तु वाच्यवत्।
इति मेदिनी—२१-१३

अनूपो बहुवृक्षजलदेश इति स्मृतिचन्द्रिका—४७५

"बह्वम्बुर्बहुवृक्षश्च वातश्लेष्माभयान्वितः।
देशोऽनूप इति ख्यातः" इत्यायुर्वेदे।
शकटं शाकटी गावो जालमस्यन्दनं वनम्।
अनूपं पर्वतो राजा विपत्तौ नववृत्तयः॥
इति नित्याचारप्रदीपे छागलेयः

**अनेडमूकः**—जड़ः। "अनेडमूकाः वक्तुं श्रोतुमसमर्थाः।"
इति सरस्वतीविलासे पृ—३६४

अनेडमूका जात्यन्धा विकलाङ्गाश्च कन्यकाः॥
संस्कार्य्याः पैतृकाद्रिक्याद् भ्रातृभिर्मनुरब्रवीत्"
इति हारीतः।

**अनृक्**—(१) मन्त्रहीनः। [illegible]

(२) ऋक्-ईश्वरः पृथक्त्वेन नास्ति येषां ते अनृचः ब्रह्माद्वैतवादिन इति नीलकण्ठः॥
महाभा० उद्०—४३-४२

**अनृतम्**—मिथ्या। अनृतं चतुर्विधं भवति। पणितानृतं प्रत्ययानृतं सुकृतानृतं साधारणमिति च।

(१) विक्रेतुरसद्गुणकीर्त्तनं क्रेतुर्गुणापह्नवः दोषकीर्त्तनं च पणितानृतम्। एतच्च कितववृत्तिरूपम्।

(२) प्रत्ययानृतं त्रिविधम्। उपादाने परस्मै दापने यन्मिथ्यावचनं तद् विप्रलम्भानृतम्।
"ऋतमिति सत् भूताभिधानं भवति।
नात्रऋतमस्तीत्यनृतम्। कल्पतरौ गार्ह—३०६
साक्षिणः कूटसाक्षिके त्वभ्रान्त्या मिथ्यावादित्वे साक्षित्वापलापे यदनृतम्। यो द्वयोरर्थिप्रत्यर्थिनोर्जय-न्याजयनिर्णयकपरार्त्ता मैत्र्याद् द्वेषाल्लोभाद्वा पक्षपातेन मिथ्या वदति तद्व्यव्यवहारानृतम्। एवं त्रिविधं प्रत्ययानृतम्।

(३) दानानृतमिज्यानृतं तपोऽनृतमिति त्रिविधं सुकृतानृतम्। दत्वा द्रव्यमदत्तमिति मिथ्यावचनं दानानृतम्। यो यक्ष्यामि इत्युक्त्वा न यजते महान्तं क्रतुं कर्त्तुमुद्यतः स्वल्पं करोति तदिज्यानृतम्। यस्तु उपक्रम्यायथार्थं तपति तत्तपोऽनृतम्।

(४) साधारणं नाम गोब्राह्मणहितं आपत्कल्पः वैरा-भिधानमिति त्रिविधम्॥ नित्या०—२-४६८

**अनृतः**—असत्यवदनशील इति हेमाद्रिः श्राद्धकल्पे—४८०
"कितवानृतदाम्भिकपरपरिभाविताया:" इति उशना

**अनृतसङ्करः**—इदं पापं त्वयाकृतमिति अनृतेन निष्पापं यः अभिशंसति स अनृतसंकर इति हरदत्तः।
अन्नादे भ्रूणहा मार्ष्टि अनेना अभिशंसति।
स्तेनः प्रमुक्तो राजनि याचन्ननृतसंकरे ॥
आप०—१-६-१६-१५

**अनृतसङ्करः**—यः प्रतिश्रुत्य न ददाति सोऽनृतसङ्कर इति हरदत्तः ॥ आप०—१-६-१६-१५।

**अनोदनम्**—यत् दन्तखाद्यं न भवति।
"दन्तखाद्यं भवेद्यद्धि तदोदनमिति स्मृतम्।"
इति कालदीपे ॥
नक्तं हविष्यान्नमनोदनं वा फलं तिलाःक्षीरमथाम्बुवाज्यम्।
यत्पञ्चगव्यं यदि वाथ वायुः प्रशस्तमत्रोत्तरमुत्तरं च ॥
इति तत्र वायुपुराणवचनम्

**अन्तः**—(१) समीपम्।
"नाधीयीत श्मशानान्ते ग्रामान्ते गोव्रजेऽपि वा।
मनुः—४-११७

(२) अभ्यन्तरम् (अयं विसर्गान्तः शब्दः)।
"अन्तर्मुखानि यदि खानि तपस्ततः किं
नान्तर्मुखानि यदि खानि तपस्ततः किम्।
अन्तर्बहिर्यदि हरिश्च तपस्ततः किं
नान्तर्बहिर्यदि हरिश्च तपस्ततः किम् ॥
इति मिताक्षरान्ते विज्ञानेश्वरः ॥

(३) समाप्तिः।
"अमावास्यां प्रतीक्षेत तदन्ते वापि निर्वपेत्" तदन्ते चतुर्दश्यन्ते। इति कालसारे।

(४) स्वरूपम्—
अपेक्षिताऽप्राप्तितो हि देहिनां मरणं वरम्।
अनुरक्तजनत्यागे पातकान्तो न विद्यते ॥
ब्रह्म० पु०—१०७-३४

(५) मृत्युः।
अन्ताश्चाकाल एव स्युः लोकोऽयं दस्युसाद्भवेत्।
पतेयुर्नरकं घोरं यदि राजा न पालयेत् ॥
महाभा० शान्ति—६८-२०
अत्र अन्ता मृत्यव इति नीलकण्ठः ॥

**अन्तःपुरभाजनीयम्**—द्विषष्टिपलशतमर्द्धपलं च। (१६२½ पलानि) इति श्रीमूला, कौट०—२-१६

**अन्तःशौचम्**—मनःशुद्धिः। अहिंसा। मनःशुद्धिरन्तः शौचम्।
बौधा०—१-५-८-३
अन्तःशौचमहिंसनम्। बौधा०—३-१-१-२३

**अन्ततः**—ओष्ठप्रान्त इति नरसिंहवाजपेयी।
नित्या—१-२६४
हृद्गाभिः पूयते विप्रः कण्ठगाभिस्तु भूमिपः।
वैश्योद्भिः प्राशिताभिस्तु शूद्रः स्पृष्टाभिरन्ततः ॥
इति मनुः—२-६२

**अन्तपालः**—राज्यसीमारक्षी इति श्रीमूला—१-१२-६
सुद्युम्नस्त्वन्तपालेभ्यः श्रुत्वा लिखितमागतम्।
अध्यगच्छत् सदमात्यः पद्भ्यामेव जनेश्वरः ॥
महाभा०—२३-२६

**अन्तरचक्रम्**—पक्षिशास्त्रम्। पक्षिभिःशुभाशुभपरिक्षानम्।
कौट०—१-१२

**अन्तरिका**—अन्तरालम् ।

सर्ववास्तुकयोः प्राक्षिप्तकयोर्वा शालयोः किष्कुरन्तरिकातिपदी वा । कौट०—३-८-१३

**अन्तरीयम्**—कटि धृतं कटि धार्य्यं वा वस्त्रम् ।

अन्तरीयं-परिधानीयम्, उत्तरीयं प्रावरणवस्त्रम् ।

इति नीलकण्ठः

वाससी-अन्तरीयोत्तरीये इति हरिहरः। पारस्करः १-१४

उष्णीषाणि नियच्छन्तः पुण्डरीकनीभैः करैः ।

अन्तरीयोत्तरीयाणि भूषणानि च सर्वशः ॥

महाभा० उद्—१५३-२६१

द्वे वस्त्रे परिधाप्य परिहिते कारयित्वा अन्तरीयोत्तरीयत्त्वेन इति हरिहरभाष्ये ॥ पारस्करः—२-१-५

नान्तरीयैकदेशस्य कल्पयित्वोत्तरीयताम् ।

इति गोभिलगृह्ये—१-२-२१

**अन्तर्जानुः**—जानुनोरन्तःकृतहस्तः इति कल्पतरुः ।

नियतकाल—१३१

अन्तर्जानुःशुचौ देशे प्राङ्मुखः सुसमाहितः ।

उदङ्मुखो वा प्रयतो दिशश्चानवलोकयन् ॥

शङ्खः—१०-५

**अन्तर्धी**—(१) दासः ।

अन्तर्धानमन्तर्धिः सोऽस्यास्तीति "व्रीह्यादिभ्यादिनिः" अन्तर्धी दासः । अन्तर्हितं हि तस्य शूद्रस्य अशौचेषु स्वामितुल्यत्वात् इति हरदत्तः ।

(२) अन्तर्धी आचार्यस्य दासः ।

अन्तर्धिने वा शूद्राय । आप०—१-१-३-४१

अन्तर्दिने आचार्यदासाय इति वीरमित्रोदये ।

**अन्तर्द्धनम्**—भूनिक्षेपादिना गोपितुं शक्यं सुवर्णरूप्यादि इति नीलकण्ठः ।

अन्तर्धनं तु यत्किंचित् संसृष्टानां तु तद् भवेत् ।

इति व्यवहारमयूखे प्रजापतिः ।

**अन्तर्धानम्**—अणिमप्राप्त्या परैरदृश्यत्वमन्तर्धानमिति ।

मिता—३-२०२

**अन्तर्वंशिकः**—अन्तःपुराधिकृतः इति श्रीमूला ।

कौट०—१-१२

**अन्तर्वत्नी**—गर्भिणी ।

अन्तर्वत्नी तु युवतिः कामिता याऽन्ययोनिना ।

प्रायश्चित्तं नैव कुर्य्यात् यावद्गर्भो न निःसृतः ॥

इति प्रायश्चित्तविवेके ऋष्यशृंगः ।

अग्रे भोजयेदतिथीनन्तर्वत्नीरनन्तरम् ।

बालवृद्धांस्तथा दीनान् व्याधितांश्च विशेषतः ॥

बौधा०—२-७-१३-५

**अन्तर्वासः**—अधोवस्त्रम् ।

स्नातकानां तु नित्यं स्यादन्तर्वासस्तथोत्तरम् ।

इति वसिष्ठः—१२-१४

परिधानवस्त्रमितिकल्पतरुः ब्रह्मचारिकाण्ड—२७८

**अन्तर्वेदिदानम्**—यज्ञादौ दत्तम् ।

**अन्तेवासी**—(१) गुरुकुलवासी शिष्यः ।

ता एताः संहिता नानन्तेवासिने प्रब्रूयान्नासम्वत्सरवासिने।

इति बाह्वृचाः कालमाधवः—२

(२) शिल्पशिक्षार्थी इति विज्ञानेश्वरः । याज्ञ०—२-१८२

(३) शिष्यः ।

अन्तेवास्यनन्तवासी भवति विनिहितात्मा गुरावनैपुणमापद्यमानः । आप०—१-२-८-२७

**अन्त्यकर्म**—दहनोदकपिण्डदानास्थिसञ्चयनादिः ।
व्रात्यानां याजनं कृत्वा परेषामन्त्यकर्म च ।
अभिचारमहीनं च त्रिभिः कृच्छ्रैर्व्यपोहति ॥
मनुः—११-१२७

**अन्त्यजः**—जातिविशेषः ।
रजकश्चर्मकारश्च नटो वुरुड़ एव च ।
कैवर्त्तभेदभिल्लाश्च सप्तैते ह्यन्त्यजाः स्मृताः ॥
इति अत्रिस्मृतिः—२१७ अङ्गिरसस्मृतिः—२
मिताक्षरायामापस्तम्बश्च—३-२६५
चर्मकारो भटो भिल्लो रजकः पुष्करो नटः ।
वरटोभेदचण्डालदासश्वपचकोलकाः ॥
एतेऽन्त्यजाः समाख्याता ये चान्ये च गवाशनाः ।
इति वेदव्यासस्मृतिः—१-१२

**अन्त्यावसायी**—चाण्डालादिः ।
चण्डालः श्वपचः क्षत्ता सूतो वैदेहिकस्तथा ।
मागधायोगवौ चैव सप्तैतेऽन्त्यावसायिनः ॥
इतिमिताक्षरायां मध्यमाङ्गिराः—३-२६०

**अन्त्रम्**—(१) पटोलम् ।
शिरः कपालमन्त्राणि नखचर्मतिलास्तथा ।
एतानि क्रमशो नित्यमष्टम्यादिषु वर्जयेत् ॥
इति समयमयूखोद्धृतस्कान्दे
(२) शरीरगतः नाडीविशेषः ।
क्षुद्रान्त्रं वृहदन्त्रमितिसंज्ञितः ॥ याज्ञ०—३-९४

**अन्ध्रः**—वैदेहिकात् कारावरस्त्रियां जातः जातिविशेषः ।
कारावरो निषादात्तु चर्मकारः प्रसूयते ।
वैदेहिकादन्ध्रमेदौ वहिर्ग्रामप्रतिश्रयौ ॥
मनुः—१०-३६

**अन्नम्**—पक्वतण्डुलः ।
शस्यं क्षेत्रगतं प्राहुः सतुषं धान्यमुच्यते ।
वितुषमाममित्याहुः स्विन्नमन्नं प्रकीर्त्तितम् ॥ इति
कालसारे श्राद्धप्रकरणे वशिष्ठः । तच्च षड्विधम् ।
आचारेन्दूद्धृतपारिजाते—
परमान्नं हरिद्रान्नं दध्यन्नं कृसरौदनम् ।
गुडौदनं च मुद्गान्नमित्यन्नं षड्विधं स्मृतम् ॥
तण्डुलोऽग्न्यम्बुसंयोगात्पिष्टं लवणयोगतः ।
शाकं त्रितयसंयोगादन्नत्वं प्रतिपद्यते ॥ इति पुराणे ॥

**अन्नकी**—वृश्चिकः इति निर्णयसिन्धुव्याख्यायां कृष्णभट्टः ।
अन्नकीचलिते भानौ दीपदानं महाफलम् ॥
इति तत्र विश्वामित्रः

**अन्नपतीयाऋक्**—यजुः—११-८३
अन्नपतेऽन्नस्येति । यद्वान्नपतिशब्दो यस्यामृचि अस्ति,
इति हरिहरः ।
अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः ।
प्र प्र दातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे ॥
अन्नपतीययावेति पारस्करः—३-१-५

**अन्नप्रकरः**—साङ्गुष्ठोऽन्नविधिरन्नप्रकर इति कल्पतरुः ।
अन्नप्रकरः श्राद्धे विकीर्णपिण्ड इनि कल्पतरुः ॥
अन्नप्रकरवत्तस्य चापसव्ये पीडनमिति योगियाज्ञवल्क्यः ।
पीड़यित्वा ततः पश्चाज्जपं कुर्यात्सुविस्तरम् ॥
नियतकाल—१३५

**अन्नप्रकिरणम्**—विकीर्णपिण्डः ।
अन्नप्रकिरणं यत्तु मनुष्यैः क्रियते भुवि ।
मार्कण्डेय-पु०—३१-८

**अन्नप्राशनम्**—संस्कारकर्मविशेषः ।

षष्ठेऽन्नप्राशनं मासि यद्वेष्टं मङ्गलं कुले ॥

मनुः—२-३४

**अन्नवत्यः**—पितुं तुस्तोष (२-५-६) इत्याद्या ऋच इति हेमाद्रिः । श्राद्धकल्पे—१०७४

**अन्नविधिः**—अन्नप्रकारः पायसादिरिति कल्पतरुः । श्राद्धकाण्डे—१८६

तत्र हविरित्येवं साङ्गुष्ठमन्नविधिं ब्राह्मणेभ्यो दद्यात् ।

इति शङ्खलिखितौ

**अन्नषष्ठी**—पौषषष्ठी ।

**अन्नसंकल्पः**—ब्राह्मणाङ्गुष्ठनिवेशनपूर्वकम् इदं हविरित्यभिधाय अन्नप्रदानं पात्रजपान्तम् ।

**अन्नाकालभृतः**—दासविशेषः । "अनाकालभृत" इत्यस्य पाठान्तरम् । नारदः—५-३१

अन्नाकालभृत इति विवादरत्नाकरे पाठः—१४४

**अन्नाद्यम्**—समुचितखाद्यमिति धर्मकोशे ।

सव्यञ्जनसिद्धान्तमिति मम मतम् ।

कपिञ्जलमांसेनान्नाद्यकामस्य ॥

इति पारस्करः—१-१९-९

अन्नादाम् अन्नादनम् । अन्नाद्यायव्यूहध्वमित्यस्य व्याख्यायाम् । अन्नाद्याय अन्नादनाय इति गदाधरोद्धृतः पारस्करः—२-६-१२

अत्तुं योग्यम् अद्यम्, अन्नं च तदद्यं च अन्नाद्यं पक्वमन्नं न त्वाममित्यर्थं इति सायणमाधवः—६-६४ भात इति वैद्यकशब्दसिन्धौ । अन्नाद्येन वीर्यकाम इत्यत्र भिन्नवदन्नाद्यनिर्देशः । अन्नाद्येन तण्डुलेन वीर्यकाम इति काठकगृह्यभाष्ये—४-३-६ प्रायेणोत्तरभारतीयाः सम्प्रति तण्डुलशब्देन अन्नं निर्दिशन्तीति अत्र तण्डुलशब्दात् भात इति प्राकृत शब्दवाच्यमेव अन्नं गृह्यते ।

कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा ।

मनुः—३-८२ शङ्खः—१३-१६

नाधीयीतामिषं जग्ध्वा सूतकान्नाद्यमेव वा ।

मनुः—४-११२

अन्नाद्यं अदनार्हमन्नमिति हेमाद्रिः । परिशेषखण्डे—६०६

**अन्नाभिमन्त्रणम्**—अग्निरस्मि इति मन्त्रस्य गाथिनो विश्वामित्रऋषिः आत्मा अग्निर्वा देवता, त्रिष्टुब् छन्दः ।

ऋग्वेदः—३-२६-७

अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतं म आसन् ।

अर्कस्त्रिधातू रजसो विमानोऽजस्रो घर्मो हविरस्मि नाम ॥

अहमस्मि प्रथमजा ऋतस्य पूर्वं देवेभ्यो अमृतस्य नाभिः ।

यो मा ददाति स इ देवभावाः अहमन्नमन्नमदन्तमद्मि ॥

द्वितीयो मन्त्रो न लभ्यते ऋग्वेदे ॥

**अन्यथास्तोत्रम्**—निन्दार्था स्तुतिः । यथा मूर्खं हे चतुर्वेदिन् इति सम्बोधनम् ।

सत्यासत्यान्यथास्तोत्रैः न्यूनाङ्गेन्द्रियरोगिणाम् ।

क्षेपं करोति चेद्दण्ड्य पणानर्द्धत्रयोदशान् ॥

याज्ञ०—२-२०४

**अन्यवादी**—पूर्वस्वीकृतवाक्यात् यः भिन्नं वदति ।
अन्यवादी क्रियाद्वेषी नोपस्थाता निरुत्तरः ।
आहुतः प्रपलायी च हीनः पञ्चविधः स्मृतः ॥
इति नारदस्मृतिः—२-३३
अन्यथावादीति सरस्वतीविलासे ।

**अन्यापतिः**—नपुंसकविशेषः । यस्य स्वभार्यापरिहारेण अन्यासु पुरुषभाव इति मित्रमिश्राः ।
अन्यस्यां यो मनुष्यः स्यादमनुष्यः स्वयोषिति ।
लभेत सान्यं भर्त्तारमेतत्कार्य्यं प्रजापतेः ॥
नारदः—१२-१८

**अन्यापदेशवादी**—यः अन्यमपदिश्य अन्यदोषान् वदति इति विवादरत्नाकरे—२४५ स्मृतिचन्द्रिकायां च । व्यवहार—७६०
अदुष्टस्यैव तु दोषान् कीर्त्तयेत् क्रोधकारणात् ।
अन्यापदेशवादी च वाग्दुष्टं तं नरं विदुः ॥
इति नारदः

**अन्वयः**—वंशः ।
योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥
मनुः—२-१६८

**अन्वयागतम्**—दायप्राप्तं धनमित्यर्थः ।
श्रुतशौर्यतपः कन्या शिष्ययाज्यान्वयागतम् ।
धनं सप्तविधं शुक्लमुद्योगस्तस्य तद्विधः ॥
नारदः—४-४५

**अन्वष्टका**—अष्टकापरदिनविहितं श्राद्धम् । तच्च नवपिण्डात्मकम् । तत्र प्रथमं मातृणां मध्ये पितृणां अन्ते मातामहानामिति विशेषः ।
अन्वष्टकासु वृद्धौ च गयायां च क्षयेऽहनि ।
अत्र मातुः पृथक् श्राद्धमन्यत्र पतिना सह ॥
मिताक्षरा—१-२५४

**अन्वाधानम्**—अध्वर्युर्यजमानो वा गार्हपत्यस्य पश्चात् पद्मासनेन उपविश्य त्रिभिः स्वाहाकारान्तैः ऋङ्मन्त्रैः तिस्रः स्थूलाः समिधोऽभ्यादधाति । ततो दक्षिणाग्रावूर्ध्वजानुरुपविश्य तथैवाऽभ्याधाय गार्हपत्यस्य पश्चान्मार्गेणागत्य आहवनीयाद् वायव्यदेशे प्रह्वोऽवस्थाय तथैव तिस्रः समिधः अभ्यादधाति । ततस्तत्रैव तिष्ठन् दशमेन ऋङ्मन्त्रेणोपस्थानं करोति । तदेतत् सकलं कर्म अनुकूलं करिष्यमाणस्य कर्मणः समिधामाधानमिति व्युत्पत्त्या अन्वाधानमुच्यते इति श्रौतपदार्थनिर्वचने ।

**अन्वाधिः**—उपनिधिरिति गौतमीयमिताक्षरा । निध्यन्वाधियाचितावक्रीताधयो नष्टाः सर्वानिनिन्दितान् पुरुषापराधेन । गौतमः—२-१२-३६
अनुमार्गेण कार्येषु अन्यस्मिन् वचनान्मम ।
दद्यात्त्वमिति यो दत्तः स इहान्वाधिरुच्यते ॥
इति कात्यायनः

एकस्मिन्नर्पितं वस्तु तेन पुरुषान्तरे अमुष्मिन् स्वामिति ।
त्वं दास्यसि इति निक्षिप्तं तदन्वाधिरिति विवादरत्नाकरे ॥

**अन्वाधिपत्रम्**—अन्वाधिनिमित्तकं पत्रम् ।
धनी धनेन तेनैव परमाधिं नयेद् यदि ।
कृत्वा तदाधिलिखितं पूर्वं चास्य समर्पयेत् ॥
इति व्यवहारमयूखे प्रजापतिः

**अन्वाधेयम्**—स्त्रीधनविशेषः । विवाहात्परं भर्त्तृकुले स्त्रिया लब्धं धनम् । तदाह कात्यायनः—

विवाहात् परतो यत्तु लब्धं भर्त्तृकुले स्त्रिया ।
अन्वाधेयं तदुक्तं तु सर्वबन्धुकुले तथा ॥

**अन्वारब्धः**—स्पृष्टः । उपस्पृष्ट इति हरिहरः ।

पारस्करः—२-१-६

दारुमयानां पात्राणामुच्छिष्टसमन्वारब्धानामवलेखनमिति बौधायनः—१६-१३-२६

**अन्वारम्भः**-स्पर्शः । "अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु" इत्यत्र पाण्यन्वारम्भेन साक्षात् पाणिस्पर्शनम् । यथा पलाशशाखया पशुमन्वारभत इति विद्याकर-वाजपेयिना । नित्याचारपद्धतिः—२०६

**अन्वारोहणम्**—सहगमनम् । मृते भर्त्तरि ब्रह्मचर्य्यं तदन्वारोहणं वा । विष्णुः—२५-१४

**अन्वाहार्यम्**—पितॄणां मासिकतृप्तिजनकम् अमावास्या-श्राद्धमिति यावत् ।

पितॄणां मासिकं श्राद्धमन्वाहार्यं विदुर्बुधाः ।

मनुः—३-१२३

**अन्वाहार्यपचनः**—दक्षिणाग्निः । अन्वाहार्यं नाम दर्शपूर्णमासयोर्दक्षिणत्वेन देय ओदनः स पच्यते यत्राग्नौ स दक्षिणाग्निः अन्वाहार्यपचनः इति बौधायनटिप्पण्यां चित्रस्वामी ।

**अन्वाहितम्**—एकस्य हस्ते निहितं द्रव्यं तेनापि पश्चादन्यहस्ते स्वामिने देहि इति निहितं तदन्वाहितमिति विज्ञानेश्वरः । याज्ञ०—२-६७

स्वामिन् स्थितं परधनमन्यहस्ते कृतमन्वाहितमिति व्यवहारप्रकाशे । अन्वाहितम् अतदर्थे गमने आनुषङ्गिकं यत् समर्पितम् । तद्यथा मथुरायाः कश्चित् स्वार्थं कान्यकुब्जं प्रस्थितः, तस्य हस्ते कान्यकुब्जस्थस्वं द्रव्यमिदमस्मद्गृहे देहि इति समर्पितमिति नारदभाष्ये—१-३-७

अनुमार्गेण कार्य्येषु अन्यस्मिन्वचनान्मम ।
दद्यास्त्वमिति यो दत्तः स इहान्वाधिरुच्यते ॥

कात्यायनः—८४

**अन्विच्छा**—निरूपणम् "सर्वैरुपायैरन्विच्छेत्" ।

मनुः—८-१६०

अत्र अन्विच्छेत् निरूपयेदिति कुल्लूकः

**अपचः**—गृहस्थधर्मा यो विप्रो ददाति परिवर्जितः ।
ऋषिभिर्धर्मतत्त्वज्ञैरपचः परिकीर्त्तितः ॥

पराशरः—११-४६

**अपचमानकः**—वानप्रस्थविशेषः । इति बौधा०—३-३-६

**अपचारः**—(१) उच्छेदः अभाव इति यावत् । "यथा प्रारब्धस्य कर्मणोऽङ्गापचारे प्रतिनिधिरिति मेधातिथिः।

मनुः—६-१६६

(२) व्यतिक्रमः—स्वधर्मत्यागः "तेष्वपचरत्सु दण्डं धारयेत्" वसिष्ठः—१६-८

**अपचारिणी**—व्यभिचारिणी स्त्री ।

अन्नादे भ्रूणहा मार्ष्टि पत्यौ भार्यापचारिणी ।
गुरौ शिष्यश्च याज्यश्च स्तेनो राजनि किल्बिषम् ॥

मनुः—८-३१७

**अपचितिः**—पूजा ।

तानुवाच महातेजा कौरवान् मधुसूदनः ।
सर्वे भवन्तो गच्छन्तु सर्वा मेऽपचितिः कृता ॥

महाभा०उद्—६१-३७

भवेदपचितिः पूजाव्ययनिष्कृतिहानिषु ॥

इति मेदिनी—१६-१८५

**अपत्यम्**—पुत्रकन्ये पुत्रः कन्या वा ।

उत्पादनमपत्यस्य जातस्य परिपालनम् ।
प्रत्यहं लोकयात्रायाः प्रत्यक्षं स्त्रीनिबन्धनम् ॥

मनुः—६-२७

कुमारी च न भर्त्तारमपत्यं गर्भमङ्गना ॥

याज्ञ०—१-२७५

**अपदिष्टकः**—कृताभिशंसन इति श्रीमूला ।

चौरेणाभिशस्तः वैरद्वेषाभ्यामपदिष्टकः शुद्धः स्यात् ।

कौट०—४-८

**अपदेशः**—छलम् ।

साध्यभावे प्रणिधिभिर्वयोरूपसमन्वितैः ।
अपदेशैश्च संन्यस्य हिरण्यं तस्य तत्त्वतः ॥
अत्रापदेशः व्याजमिति कुल्लूकः । मनुः—८-१८२

**अपध्वंसजः**—व्यभिचारजातः । "अपध्वंसजा व्यभिचारजाता" इति विज्ञानेश्वरः । याज्ञ०—१-६० प्रतिलोमज इति कुल्लूकः । शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः । मनुः—१०-४१

ये द्विजानामपसदा ये चापध्वंसजास्तथा ।
ते निन्दितैर्वर्त्तयेयुर्द्विजानामेव कर्मभिः ॥

मनुः—१०-४६

एतेन अनुलोमजा अपसदशब्देन प्रतिलोमजा अपध्वंसजशब्देन उक्ता इति स्पष्टं प्रतीयते । अन्यत्रापि अपसदशब्देन अनुलोमजा एव उक्ता ।

विप्रस्य त्रिषु वर्णेषु नृपतेर्वर्णयोर्द्वयोः ।
वैश्यस्य वर्णे चैकस्मिन् षड़ेतेऽपसदाः स्मृताः ॥

मनुः—१०-१०

**अपन्नदत्**—अपतितदन्तः यावत्स्वभावतो दन्ता न पतन्ति तावत् भक्ष्योऽप्यभक्ष्यः इति लक्ष्मीधरो हरदत्तश्च । "अपन्नददवसन्नवृथामांसानि" गौतमः—१७-१६ । अपन्नदन्नेति वा पाठः—२-६-३१

अजातदन्त इति मदीयं मतम् । यतः
यदा वै पशोर्दन्ताः पद्यन्ते अथ स मेध्या भवतीति बह्वृचब्राह्मणे । देवी भागवते हरिश्चन्द्रो पाख्यानेऽप्येवम् ।

**अपपर्यावर्त्तनम्**—अप्रदक्षिणीकरणम् ।
"नापपर्यावर्त्तेत गुरोः" आप०—१-२-७-२

**अपपातः**—चाण्डालादिः, इति नित्याचारे नरसिंहवाजपेयिनः तत्र बौधायनः—"शूद्रापपातदर्शनश्रवणयोश्च तावन्तं कालम्" इति । मुद्रितबौधयनधर्मसूत्रे तु अपपातस्थाने अपपात्र इति पाठः—१-११-२१-१७

**अपपात्राः**—अपपात्रा प्रतिलोमा रजकादय इत्युज्वलाकारः ।

आप०—१-१-३-२५

पतितचाण्डालसूतिकोदक्यादयोऽपपात्राः अपगताः पात्रेभ्यः नहि ते पात्रे भोक्तुं लभन्ते इत्यन्यत्र हरदत्तः ॥

आप०—१-५-१६-३०

**अपपात्रा**—अपपात्रा कन्येति गोविन्दस्वामी ।

बोधा०—२-२-५

**अपपात्रितः**—

भिन्नोदकोकृतः इति दायभागे जीमूतवाहनः—५

येन सह पातित्यादिना एकमुदकं न पीयते ।

बान्धवैर्यस्य घटापवर्जनं कृतमिति व्यवहारकल्पतरुः

—६६८

**अपप्रसवः**—सप्तमाष्टममासयोर्गर्भनिर्गमः ।

आचतुर्थात् भवेत् स्रावः पातः पञ्चमषष्ठयोः ।

अपप्रसवसंज्ञा तु सप्तमाष्टममासयोः ॥

नित्याचारप्रदीपः—२-११६

**अपमारी**—दुर्मरणयुक्तः इति सायणः ।

या प्रलिखते तस्यै खलतिरपमारी ।

तैत्ति० सं०—२-५-१-५

**अपमार्जनम्**—मोदकेन पाणिना उच्छिष्टादिलिप्तस्य बालकादेः मार्जनमिति हरदत्तः ।

अन्यत्रापमार्जनप्रधावनावोक्षणेभ्यः" गौतमः—१-२-६

स्मृतिचन्द्रिकायां तु अपामार्जनमिति पाठः ।

व्यवहारकाण्डः—६५

**अपमृत्युञ्जयकल्पः**—पुण्ये नक्षत्रे जन्मनक्षत्रे जन्मवारे वा कृष्णाष्टम्यां चतुर्दश्यां वा देवालये नदीतीरे गोष्ठे पुण्यतमे स्थले वा स्वगृहे वा गोमयेनोपलिप्य पुण्याहं स्वस्त्ययनमृद्धिमिति वाचयित्वा अथ देवयजनोल्लेखनप्रभृत्याग्निमुखात् कृत्वा ओं भूर्भुवः स्वः स्वाहा इति प्रायश्चित्तं हुत्वा श्वेतदूर्वाः पालाशसमिधोऽष्टसहस्रमष्टशतमष्टाविंशतिं वा दधिमधुघृतपयांसि समुदायुत्य "त्रियम्बकं यजामहे" इति मन्त्रेण हुत्वाथ "अपैतुमृत्युः" "परं मृत्यो", "मानोमहान्तं", "मानस्तोके" "त्रियम्बकं "येते सहस्रम्" इति हुत्वा स्विष्टकृतमवदायाथाज्याहुतीश्चोपजुहोति नक्षत्रे राशौ जातस्य शर्मणः मृत्युर्नश्यत्वायुर्वर्धतां भूः स्वाहा, पूर्ववत् शर्मणः मृत्युर्नश्यत्वायुर्वर्धतां भुवः स्वाहा, पूर्ववत् शर्मणः मृत्युर्नश्यत्वायुर्वर्धतां स्वः स्वाहा पूर्ववत् शर्मणः मृत्युर्नश्यत्वायुर्वर्धतां भूर्भुवः स्वः स्वाहा इति । अथ स्विष्टकृतं हव्यवाहमभिमातिसाहम् इति पुरोऽनुवाक्यामनूच्य स्विष्टमग्न इति याज्यया जुहोति जयाभ्यातानाम् राष्ट्रभृतः इति हुत्वा तन्त्रशेषं समाप्य दर्भस्तम्ब-हुतशेषं निदधाति । तच्छंयारावृणीमहे इति । अथ दक्षिणां दद्यात् यथाचार्यस्तुष्टः प्रसन्नहृदयो भवेत् तथा दद्यात् । शेषेभ्योऽपि यथाशक्ति दत्वा ब्राह्मणान् भोजयेत् । इति अग्निवेश्यगृह्यसूत्रे—२-५-४

**अपरपक्षः**—कृष्णपक्षः । "हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टकाः" इत्याश्वलायनः—२-५-१

"अपरपक्ष ऊर्ध्वं चतुर्थ्याः पितृभ्यो दद्यात् ।

वसिष्ठः—११-१६

**अपररात्र**—रात्रेस्तृतीय भाग इति आपस्तम्बविवृतौ हरदत्तः—१-३-९-२३

उत्थायापररात्रमधीत्य न पुनः प्रतिसंविशेत ।

वसिष्ठः—१२-४६

रात्रेः पश्चिमयाम इति हरिहरः ।

पारस्करः—१११

**अपरागः**—द्वेषः ।

कृत्स्नंचाष्टविधं कर्म पञ्चवर्गं च तत्त्वतः ।

अनुरागापरागौ च प्रचारं मण्डलस्य च ।

मनुः—७-१५४

दुर्गोत्सवानन्तरवैष्णवर्क्षे
तिथौ दशम्यामपराजितायाम् ।
रामो जिगीषुर्दशदिक्षु वेधं
कृत्वा जगामारिपुरं प्रवीरः ॥
इति श्राद्धदीपे ॥

**अपराजिता**—(१) दिक् । ऐशानी दिक् इति नरसिंहवाजपेयिनः—१-२४
कुल्लूकश्च तथैव पूर्वोत्तरादिगिति हेमाद्रिः ।
अपराजितां वास्थाय व्रजेद्दिशमजिह्मगः । मनुः—६-३१
क्षत्रदिङ्नियमो न स्याज्जपहोमादि कर्मसु ।
तिस्रस्तत्र दिशः प्रोक्ता ऐन्द्री सौम्यापराजिता ॥
गोभिलस्मृतिः—१-६

(२) लताविशेषः ।

**अपराजितादशमी** —आश्विनशुक्लदशमी ।
श्रवणेन जुता चेत्स्याद्दशमी चापराजिता ।
तत्र नीराजनं कृत्वा यात्रा कार्या जिगीषुणा ॥

**अपरान्तकम्**—गीतविशेषः ।
अपरान्तकमुल्लोप्यं मद्रकं प्रकरीं तथा ।
औवेणकं सरो विन्दुमुत्तरं गीतकानि च ॥
याज्ञ०—३-११३

तल्लक्षणम्—
तानि गीतानि वक्ष्यामस्तेषामाद्यं तु मद्रकम् ।
अपरान्तकमुल्लुप्यं प्रकर्य्योवेणकं ततः ॥
रोविन्दकोत्तरे सप्त गीतकानीत्यवादिषुः ।
छन्दकासारिते वर्द्धमानकं पाणिकं तथा ॥
ऋचो गाथा च सामानि गीतानीति चतुर्दश ।
शिवस्तुतौ प्रयोज्यानि मोक्षाय विदधे विधिः ॥
इति सङ्गीतरत्नाकरे—५-५५

**अपराह्णः**—दिवसस्य द्विधाविभागपक्षे द्वितीयो भागः त्रिधाविभागपक्षे तृतीयो भागः । पञ्चधाविभाग पक्षे चतुर्थो भागः ।
पूर्वाह्णो वै देवानामपराह्णः पितॄणामिति श्रुतिः ।
तथा श्राद्धस्य पूर्वाह्णादपराह्णः प्रशस्यते ॥
मनुः—३-२७८

श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् ।
न हि प्रतीक्षते मृत्युः कृतं वास्य न वा कृतम् ॥
विष्णुस्मृतिः—२०-४१

**अपरोधः**—त्यागः, निरोधो वा ।
यस्य व्रत्येऽहनि पत्न्यनालम्भुका तामपरुध्य यजेत् ।
मिताक्षरा—३-५५

**अपरोपतापिता**—परपीड़ाराहित्यम् । इयं तु शीलविशेषः।

**अपर्त्तुः**—वर्षर्त्तुः इति हरदत्तः । गौतमः—२-७-१०

**अपलापः**—निह्नवः ।

**अपवर्गः**—(१) समाप्तिः । "कर्मापवर्गे ब्राह्मण भोजनम्" शांखायनगृ०—१-२-१ "एवमपवर्गे" काठकगृ० —४-३-१० ।

(२) मुक्तिः—
त्रिदण्डं लिङ्गमाश्रित्य जीवन्ति बहवो द्विजाः ।
न तेषामपवर्गोऽस्ति लिङ्गमात्रोपजीविनाम् ॥
लघुविष्णुस्मृतिः—४-३४

(३) निर्गमः । "तथापवर्गः ।" बौधा०—१-७-१५-२
कर्मसमाप्तौ निर्गमनमिति कल्पतरुः ।

**अपवर्जनम्**—दानम् ।

बालमूढास्वतन्त्रार्त्तमत्तोन्मत्तापवर्जितम् ।

कर्त्ता ममायं कर्मेति प्रतिलाभेच्छया च यत् ॥

इत्यदत्तनिर्देशे नारदः—५-६

**अपवादः**—(१) भर्त्सनम्, आक्षेपः, आक्रोशः, अभिशंसनम् इति यावत् । "प्रतिलोम्यापवादेषु द्विगुणत्रिगुणा दमाः ।" याज्ञ०—२-२०७

(२) बाधकम् । अत्र केषुचिदपवादो मैत्रायणीयपरिशिष्टे दर्शितः ।

उद्वाहे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे ।

तीर्थे ब्राह्मण आयाते षड़ेते जीवतः पितुः ॥

स्मृतिचन्द्रिका-श्राद्ध—१५

(३) शोकापनोदनम् । तत्रैतानपवदेयुरिति पारस्करः—३-१०-२२

स्नातानपवदेयुस्तानितिहासैः पुरातनैः । याज्ञ०—३-७

नाशौचं नोदकं नाश्रु नापवादानुकम्पने ।

ब्रह्मदण्डहतानां तु न कार्य्यं कटधारणम् ॥

अत्रिसंहिता—२१६

(४) दोषकीर्त्तनम् ।

पुराणैर्धर्मवचनैः सत्यमाहात्म्यकीर्त्तनैः ।

अनृतस्यापवादैश्च भृशमुत्रासयेदिमान् ॥

नारदः—४-२००

**अपविद्धः**—(१) मातृपितृभ्यां परित्यक्तः अन्येन सवर्णेन पुत्त्रत्वेन परिगृहीतः पुत्रविशेषः ।

मातापितृभ्यामुत्सृष्टो तयोरन्यतरेण वा ।

यं पुत्रं परिगृह्णीयादपविद्धः स उच्यते ॥

मनुः—६-१७१

(२) त्यक्तः "तेनाहमपविद्धश्च हृतदारश्च राघव ।"

रामायण-किष्कि०—१०-२७

(३) पापिष्ठविशेषः—

देवत्यागी पितृत्यागी गुरूणामप्यपूजकः ।

गोब्राह्मणस्त्रीवधकृदपविद्धः प्रकीर्त्तितः ॥

इति स्मृतिमुक्ताफले यमः

**अपवृत्तिः**—कृषिः इति नित्याचारप्रदीपे । तत्र हारीतः—

ऋतामृतसत्योपहितसम्पन्नापवृत्तयो भवन्ति ॥

**अपवेधः**—अन्यथा वेधः—

मणीनामपवेधे तु दण्डः प्रथमसाहसः ॥ मनुः—६-२८६

**अपव्ययनम्**—अपलापः । कौट०—३-२०

पृष्टोऽपव्ययमानस्तु कृतावस्थो धनैषिणा ।

त्र्यवरैः साक्षिभिर्भाव्यो नृपब्राह्मणसन्निधौ ॥

मनुः—८-६०

कुलनीवीग्राहकस्यापव्ययेन विधवां छन्दवासिनीं प्रसह्याधिचरत इत्यादि कौट०—३-२०-१५

**अपसदः**—(१) अवरः ।

(२) अनुलोमजः ।

ये द्विजानामपसदा येचापध्वंसजास्तथा ॥

मनुः—१०-४६

विस्तरस्तु अपध्वंसजशब्दे द्रष्टव्यः ।

**अपसरः**—अवसरः । क्रयादन्यः प्रतिग्रहादिरागम इति मेधातिथिः । प्रतिग्रहक्रयादिरिति कुल्लूकः । अपसरत्यनेन स्वामिनः सकाशाद्धनमिति प्रतिग्रहादि-धनोपायेऽपसर इति व्यवहारकाण्डे कल्पतरुः ।

पृ०—३५२

निरन्वयोऽनपसरः प्राप्तः स्याच्चोरकिल्विषम् ॥

मनुः—८-१६८

**अपसर्प**—(१) चरः। "सवर्णापसर्पोपगमे वा मिथ्यावादी द्वादशपणं दद्यात्। कौट०—३-३

(२) गुप्तचरः।

कण्टकशोधनोक्ताश्चापसर्पाः परेषु कृतवेतनावसेयुरसम्पातिनश्चारार्थम्। इति तेषामन्तेवासिनः शिल्पशौचयुक्ताः संख्यायकादीनामपसर्पाः॥

कौट०—१-१२-१७-२-६-३०

**अपसलः**—अष्टकाप्रकरणे बौधायनगृह्यसूत्रे "अथैनान् संक्षालनेन त्रिरपसलैः परिषिञ्चति उर्जं वहन्तीरिति।

—२-११-४६

**अपसलवि**—अपसव्यम्। अवसलवि इति गोभिल-गृह्यपाठः। चन्द्रकान्तभाष्ये "गृह्यान्तरे प्रदेशिनाङ्गुष्ठयोरन्तरा अवसलवि अपसव्यं वेति।

गोभिलगृ०—१-४-१२

स्वरतोजीवविषाणे स्वमूत्रमासिच्यापसलवि।

त्रिः परिषिञ्चन् परीयात् इति। पारस्करः—३-७-२

अत्रापि अपसलवि अप्रादक्षिण्येनेति भाष्यकाराः।

**अपसव्यः**—प्रचीन आवीति, दक्षस्कन्धस्थापियज्ञोपवीत इति यावत्। याज्ञ०—१-२३२

**अपस्नानम्**—स्थलस्नानस्नुतजलं, गात्रोद्वर्त्तनमलं वा शवस्नानं वा।

भस्मास्थि-रोमतूषकपालापस्नानानि नाधितिष्ठेत्॥

बौधा०—२-३-१६

स्नानोदकमिति कुल्लूकः—४-१३२। मृतस्नानमिति हलायुधः।

अपस्नानं मृतस्नानं निवपः पितृतर्पणम्। का—३

**अपस्वानम्**— निर्घातः।

इति हरिहरः आप०—१-३-११-३०

**अपह्नवः**—"यात्वाध्वानं मिमुच्य रथं यवसोदके दापयेदेष उहवाहस्यापह्नवः। पारस्करः—३-१४-१५

अपराधमार्जनमिति गदाधरः क्षमापनमिति हरिहरः।

(२) अपलापः।

ऋणे देये प्रतिज्ञाते पञ्चकं शतमर्हति।

अपह्नवे तद्द्विगुणं तन्मनोरनुशासनम्॥

मनुः—८-१३९

**अपात्रीकरणम्**—

निन्दितेभ्यो धनादानं वाणिज्यं शूद्रसेवनम्।

अपात्रीकरणं ज्ञेयमसत्यस्य च भाषणम्॥

मनुः—११-६९

**अपानम्**—गुदेन्द्रियम्।

एका लिङ्गे करे तिस्र उभयोर्मृद्द्वयं स्मृतम्।

पञ्चापाने दशैकस्मिन् उभयोः सप्तमृत्तिकाः॥

वसिष्ठः—६-१८

**अपानः**—गुददेशस्थो वायुः।

"हृदि प्राणो गुदेऽपानं" इति देवीभागवते—७-२२-४०

कोष्ठस्थितो वायुर्मुखनासिकाभ्यां निःसरन् प्राणः पुनस्तेनैव मार्गेण अन्तः प्रविशन् अपानः। प्राणो रेचकः अपानः पूरकः इति गदाधरः। पारस्करः—१-१९-११

"अधो नयत्यपानस्तु आहारं च नृणामधः।

मूत्रशुक्रवहो वायुरपान इति कीर्त्यते॥

इति शब्दकल्पद्रुमे

**अपाननम्**—नासापुटाभ्यां बाह्यवायोरन्तराकर्षणम् ॥

**अपामार्गः**—ओषधि-विशेषः । बुधग्रहस्य समित् ॥

याज्ञ०—१-३०२

प्रशस्तदन्तकाष्ठम्

आम्राम्रातकधात्रीणां कङ्कोलखदिरोद्भवम् ।
शम्यपामार्गखर्जुरीशेलुश्रीपर्णिपीलुजम् ॥
राजादनं च नारङ्गं कषायं कटुकण्टकम् ।
क्षीरवृक्षोद्भवं वापि प्रशस्तं दन्तधावनम् ॥

इति स्कान्दे काशीखण्डे—३५-८०

**अपामार्जनस्तोत्रम्**—विष्णुस्तोत्रविशेषः ।

नमः परमनाथाय पुरुषाय महात्मने ।
अरूपबहुरूपाय व्यापिने परमात्मने ॥

नित्याचारप्रदीपे—२-१६०

**अपाश्रयः**—(१) पीठाद्यवष्टंभेनावस्थानम् ।

इति वीरमित्रोदये

कुड्यस्तम्भाद्याश्रित्यावस्थानमिति मिताक्षरावृत्तौ ।
गुरुदर्शने कण्ठप्रावृतावसक्थिकापाश्रयणपादप्रसारणानि ॥

गौतमः—१-२-२०

(२) अयोग्याश्रयः "कर्णे कृतापाश्रय इति ।"

**अपाश्रयणम्**—अपाश्रयः ।

कुड्यस्तम्भाद्याश्रित्यासनमिति हरदत्तः ।

**अपिधानी**—कपाटम् तदर्गलमित्यन्ये इति हरदत्तः
"उत्तरेणापिधान्याम्" आप०—२-२-४-३

**अपूपः**—"अपूपा मण्डकाः स्मृता" इति कात्यायनः—८-१८
गोभिलस्मृतिः—३-१५०
"अपूपाः पूरिका इति सिद्धा" इति लक्ष्मीधरः

नियतकालः—२८१

अस्नेहपक्वो गोधूमविकार इति विज्ञानेश्वरः ॥

याज्ञ०—१-१७३

गोधूमसूक्ष्मपिष्टं गुडेन युक्तं जलेन संमृदितम् ।
तद्वेल्या वर्तुलनिभा घृते विपक्वा भवन्ति चापूपाः ॥
"पाउँरुटि" इति केचिदाहुरिति वैद्यकशब्दसिन्धौ
कात्यायनगोभिलादिवचनात् अपूपः मण्डकपिष्टकमेव ।
'पाउँरुटि' इति मतं निर्मूलमनुपादेयम् ॥

**अपूर्वः**—कर्मजन्यमदृष्टम् ।

चरित्रशब्देन गङ्गास्नानाग्निहोत्रादिजनितमपूर्वमुच्यते ।

इति विज्ञानेश्वरः—२-६१

**अपोशानम्**—अमृतोपस्तरणमसि अमृतापिधानमसि ।
इति भोजनाद्यन्तकालिकं जलचुलुकपानात्मकं कर्म ॥
परिधानमपोशानं पूर्वमाच्छादनं परम् ।
भवत्यन्नमनग्नं हि सोत्तरीयं तथामृतम् ॥
इति कल्पतरौ वृद्धशातातपः । नियतकालः—२२६

आचारेन्दौ इत्थमेव पाठः—३१७

**अपोहनम्**—(१) दूरीकरणम् ।
सर्वान् रसानपोहेत कृतान्नं च तिलैः सह ।

मनुः—१०-८६

"मत्तः स्मृतिर्ज्ञानमपोहनं च", भ० गीता—१५-१५
अत्र अपोहनम्-अपायनं अपगमनमिति श्रीशङ्कराचार्याः ।

(२) कुतर्कः ।

**अप्दुर्गम्**—अगाधोदकेन सर्वतः परिवृतं दुर्गम् ।
धन्वदुर्गं महीदुर्गमब्दुर्गं वार्क्षमेव वा ।
नृदुर्गं गिरिदुर्गं वा समाश्रित्य वसेत्पुरम् ॥
मनुः—७-७०

**अप्ययः**—विनाशः ।
लोकेशाधिष्ठितो राजा नास्याशौचं विधीयते ।
शौचाशौचं हि मर्त्यानां लोकेशप्रभवाप्ययम् ॥
मनुः—५-९७

**अप्यूरम्**—जलपात्रम् ।
वस्त्रयुग्मं तथाप्यूरं केयूरं कर्णभूषणम् ।
अङ्गुलिभूषणं चैव मणिबन्धस्य भूषणम् ॥ इति मात्स्ये ।
अत्र "आपः पूर्यन्ते अस्मिन्निति अप्यूरं जलपात्रमिति शान्तिमयूखे नीलकण्ठः—४

**अप्रतिकर्म**—अनलंकरणम् । अलङ्करणाभाव इत्यर्थः ।
"भर्त्तरि प्रवसिते अप्रतिकर्म क्रिया"
इति विष्णुः—२५-९

**अप्रकृतिः**—भूतगृहीतो वा द्यूतादिव्यसनगृहीतो वा स्वभावप्रकृतिपरित्यक्त इति असहाय भाष्ये ।
स्वतन्त्रोऽपि हि यत्कार्यं कुर्यादप्रकृतिं गतः ।
तदप्यकृतमेवाहुरस्वतन्त्रः स हेतुतः ॥ नारदः—२-३६

**अप्रतिकालः**—अप्रतिषेधः । "चोदनाप्रतिकालस्वरूपं तु चोदनाया धनदानादिविषयकप्रेरणाया अप्रतिकालो अप्रतिषेधः इति व्यवहारप्रकाशे—१६८

**अप्रतिरथम्**—आशुःशिशान इत्यादि मन्त्राः ।
अप्रतिरथऋषि-दृष्टाः ॥

**अप्रतिरथसूक्तम्**—पवित्रं धर्मशास्त्रप्रतिरथं च मध्ये गायत्रीमनुश्राव्यम् । इति कल्पतरौ शङ्खलिखितौ । श्राद्धकाण्डे –१९६

**अप्रतिश्राविणी**—अनङ्गीकारिणी स्त्री वा प्रतिश्राविणी पतिकृतमृणमन्यत्र गोपालकार्द्धसीतिकेभ्यः ।
कौट—३-११

**अप्रतिष्ठिता**—निर्द्धना अपुत्रा वा ।
स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानां च ।
गौतमधः—२८२४

**अप्रतिहतः**—अल्पावशिष्टः "साम्वत्सरिकस्य चूडाकरणम्" तृतीये वा अप्रतिहते । पारस्करः—२-१-२
अप्रतिहते अल्पावशिष्ठे इति हरिहरः ।

**अप्रतिहतावकाशः**—वृत्तिशून्यदेशः । यत्र आवरणं नास्ति ।

**अप्रमादता**—विहिते निषिद्धार्थानुष्ठाने च सावधानत्वमिति हेमाद्रिः ।

**अप्रयतः**—अशुचिः इति मेधातिथिः ।
स्पृशन्ति बिन्दव पादौ य आचामयतः परान् ।
भौमिकैस्ते समाक्षेया न तैरप्रयतो भवेत् ॥
इति मनुः—५-१४१

**अप्रशस्तम्**—न प्रशस्तम्, अनुचितमित्यर्थः
अप्रशस्तं तु कृत्वाप्सु मासमासीत भैक्षभुक् ।
मनुः—११-२५५

**अप्रामाण्यम्**—अप्रामाण्यं च वेदानामार्षाणां चैव कुत्सनम्।
अव्यवस्था च सर्वत्र एतत् नाशनमात्मनः ॥
इति वसिष्ठः—१२-४१

**अप्रायत्यम्** अशुद्धिः।

**अबीजम्**—कदल्यादिः "बहुबीजमबीजं च विकारि च विवर्जयेदिति" चातुर्मास्यप्रस्तावे निर्णयसिन्धौ।

**अब्जम्**—मुक्तादि रत्नम्। विष्णुः—२३-७

**अब्दः**—(१) संवत्सरः।

(२) मेघः, नैनं छन्दांसि वृजिनात्तारयन्ति मायाविनं मायया वर्त्तमानम्। द्वे ऽप्यक्षरे सम्यगधीयमाने पुनाति तद्ब्रह्म यथा इषेब्दाः। इति वसिष्ठः—६-५

**अब्दपर्ययः**—समाप्ते वर्षे वर्षान्तरप्रवृत्तिः।
इष्टिं वैश्वानरीं नित्यं निर्वपेदब्दपर्यये। मनुः—११-२७

**अब्लिङ्गमन्त्राः**—आपोहिष्ठा इत्यादयः। शङ्खः—११-३
अब्लिङ्गा आपोहिष्ठा इत्यादय इति कल्पतरुः—६३

**अभिक्रमः**—प्रारम्भ इति श्रीशंकराचार्याः।
नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते।
भ० गीता—२-४०

**अभिक्रमणम्**—आभिमुख्येन गमनम्।
'अभिक्रमण' वचनाददृष्टेन। गौतमः—१-२-३१

**अभिक्रान्तिः**—अधिपत्येनाधिष्ठायावस्थानम् इति हरदत्तः।
गौतमः—३-७-५
त्रय इमे लोका एषां लोकानामभिजित्या अभिक्रान्त्या इति।

**अभिगमनम्**—स्त्रीसंभोगः ऋतुकालाभिगामी स्यात्।
मनुः—३-५५
गर्भिण्यभिगमने निषेधस्तु इति हरिहरः।
पारस्करः—१-११-८

**अभिग्रहः**—कलहाह्वानम्।
अभियोगस्त्वभिग्रहः। अमरः—३-२-१३

**अभिघुष्टम्**—को भोक्ष्ययत इति वाचाघुष्टम्।
वसिष्ठः—१४-६

**अभिचारः**—श्येनादियागेन शत्रोर्मारणम्। परहिंसार्थं होमजपादिकर्म अभिचार इति शूलपाणिः।
अदृष्टेनोपायेन मन्त्रादिशक्त्या मारणमभिचारः।
मेधातिथिः—६-२६०
अदृष्टोपायेन परपीड़ा अभिचार इति विज्ञानेश्वरः।
याज्ञ०—१-२६५
हिंसाकर्माभिचारः स्यादित्यमरः।—३-२-१६

**अभिजनः**—(१) विशिष्टकुले जन्म इति गौतमीये हरदत्तः।
—२-२-१२
कुलशुद्धिरित्युज्ज्वलावृत्तौ। आप०—२-२-२६-५
अभिजनः कुलमिति विज्ञानेश्वरः। याज्ञ०—१-१२३

(२) पूर्वपुरुषाधिवासः।
निवासाभिजनयोः को विशेषः निवासो नाम यत्र संप्रत्युष्यते। अभिजनो नाम यत्र पूर्वैरुषितमिति॥
पातंजलमहाभाष्ये—४-३-१

**अभिजितिः**—भोगयोग्यतापादनमिति हरदत्तः।
"त्रय इमे लोका एषां लोकानामभिजित्या अभिक्रान्त्या"
इति गौतमः—३-७-५

**अभिजित्**—(१) यज्ञविशेषः । मनुः—११-७४

(२) श्रवणाप्रथमोऽंश इति निर्णयसिन्धौ ।

नक्षत्रविशेषश्च उत्तराषाढ़ाश्रवणयोर्मध्यवर्त्ती ।

उत्तराषाढ़ायाश्चतुर्थः पादः श्रवणस्याद्यं घटीचतुष्टयम् ॥

इति वैजयन्त्यां विष्णुः—७-८-२७

दुग्धं त्वभिजिते योगे दत्वा मधुघृतप्लुतम् ।

इत्यादि महाभारत, दानधर्म—६४-२७

पुरस्तात् शोणाया अभिजितः सदैव तस्य हुत्वा ॥

बोधा०—२-८-८-३३

**अभिज्ञानम्**—शुक्लपञ्चमो दिवसभागस्य नाम ।

कालमाधवः—२

**अभितपत्**—कृष्णचतुर्दशीदिनभागः ।

कालमाधवः—२

**अभित्रासः**—भयोत्पादनम् । आप०—१-२-८-२६

उत्कलभाषायां धमकाइवा धडकाइवा इत्यादिः ।

**अभिद्रोहः**—आक्षेपः । अभिद्रोहः क्रोधः गर्हाक्षेप इति मेधातिथिः । "आक्रोशः ब्राह्मणादीनां रे त्वं यज्ञदत्त ब्राह्मणापसद इत्याक्रोशेन नाम जातिग्रहणं कुर्वतः ।" इति कुल्लूकः "नाम जातिग्रहं त्वेषामभिद्रोहेण कुर्वतः ।

मनुः—८-२७१

अभिद्रोह: हिंसनमिति विज्ञानेश्वर—या०२-२१२

**अभिनिर्मुक्तः**—अस्तसुप्त इति नित्याचारप्रदीपे नरसिंहवाजपेयिनः ।

**अभिनिवेशः**—(१) आग्रहः ।

वितताभिनिवेशश्च । मनुः—१२-५

वितताभिनिवेशवान् । याज्ञ०—३-१५५

परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनम् ।

वितथाभिनिवेशश्च त्रिविधं कर्म मानसम् ॥

मनुः—१२-५

(२) अननुभूतान्मरणादेर्भीतिः ।

(३) तात्पर्य्येणानुष्ठानम् । धर्मिणां विशेषेण स्वर्गं लोकं धर्मविदाप्नोति ज्ञानाभिनिवेशाभ्याम् ॥

गौतमः—३-१०-५०

**अभिनिष्ठानः**—अवसानम् । समाप्तिः ।

नाम चास्मै दद्यु घोंषवदाद्यन्तरन्तस्थमभिनिष्ठानान्तमित्याश्वलायनगृह्ये—१-५-५

अभिनिष्ठानमवसानमिति हरिहरः पारस्करः—१-१७-२

(२) विसर्जनीयः इति स्मृतिचन्द्रिकायाम् । संस्कार—५५

अभिनिष्ठानोऽप्यक्षरमात्रे विसर्गनीयेऽपि ।

मेदिनी—२०-१३०

**अभिप्लवः**—सोमयागे षण्णामहर्विशेषाणां गणः अभिप्लवः पृष्ठ्यश्च कालमाधवः । प्रायणीयो अतिरात्रः प्रथममहः चतुर्विंशो द्वितीयम्, उक्थ्यस्तृतीयम्, ज्योतिर्गौः चतुर्थम् आयुर्गौः पञ्चमम् । आयुर्ज्योतिः षष्ठमहः सोऽयं षड़होऽभिप्लवः ॥

**अभिमन्त्रणम्**—गार्हपत्यमभिमन्त्रयते इत्यादौ अभिमन्त्रणं नाम गार्हपत्यादेरवेक्षणसमकालं मन्त्रजप इति श्रौतपदार्थनिर्वचने ॥

**अभिमर्शः**—सम्भोगाय स्पर्शः ।

परदाराभिमर्शेषु प्रवृत्तान् नॄन्महीपतिः ।
उद्वेजनकरैर्दण्डैश्छिन्नयित्वा प्रवासयेत् ॥

मनुः—८-३५२

**अभिमर्शनम्**—(१) मन्त्रजपसमकालं पदार्थस्पर्शनम् ।
(२) ग्रहणम् ।

दक्षिणानामदानं च ब्राह्मणस्याभिमर्शनम् ।
सर्वाण्येतान्यकार्य्याणि प्राहुर्धर्मविदो जनाः ॥

महा०:शान्ति०— ३४-१३

**अभिमानः**–(१) मारणम् अभिमन्यते मारयति इति हरदत्तः ।

यो ह्यात्मानं परं वाभिमन्यतेऽभिशस्त एव स भवति ॥

आप०—१-१०-२८-१७

(२) कामना इति महाभारतव्याख्याने नीलकण्ठः ।

"दाण्डक्यो नाम भोजः कामात् ब्राह्मणकन्याम-भिमन्यमानः सबन्धुराष्ट्रो विननाश करालश्च वैदेहः"

इति कौटलीये—१-६-५

अत्र अभिमन्यमानः कामयमानः ।

**अभिमानी**—आत्मसम्भावित इति नीलकण्ठः ।

महाभा० विरा०—१-२८-१७

य आत्मानं सर्वापेक्षया उत्कृष्टं मन्यते सः ।

**अभिमुखम्**—ब्रह्मद्वारम् ध्रुवममण्डलमिति हेमाद्रिः ।

श्राद्धकल्पे—६८६

मण्डलस्यास्य पुच्छे तु शिशुमाराकृतिर्ध्रुवः ।
मध्ये नारायणश्चेति ब्रह्मद्वारमिदं जगुः ॥

इति गारुडात् ।

ध्रुवमण्डलं चात्राधिष्ठानलक्षणया उत्तरा दिगिति आह्निकप्रकाशे मित्रमिश्राः ।

**अभिरूपः**—उत्कृष्टः, गुणवान् ।

नात्मार्थमभिरूपमन्नं पाचयेत् ।

आप०—२-४-८-४

कामं श्राद्धेऽर्चयेन्मित्रं नाभिरूपमपि त्वरिम् ।
द्विषता हि हविर्भुक्तं भवति प्रेत्य निष्फलम् ॥

मनुः—३-१४४

षट्कर्मनिरत इति हरदत्तः । गौतमः—२-१-४४

**अभिवादनम्**—अभिवादनं विहितशब्देननमस्कार इति वृद्धाः इति संस्कारप्रकाशे—४५१

अभिवादने पादग्रहणं नास्ति पादस्पर्शनं कार्यं न वा इति हरिहरः ॥ पारस्करः—४-२-८

उपसंग्रहणे तु करद्वयेन पादद्वयग्रहणपूर्वकं शिरोऽवनमन-मिति अभिवादनात् तस्य भेदः । नमस्कारे तु न पादग्रहणं न पादस्पर्शः न वा अभिवादनवाक्यप्रयोग-नियमः इति ताभ्यामस्य भेदः ।

अभिवादनशीलस्य नित्यं वृद्धोपसेविनः ।
चत्वारि तस्य वर्द्धन्ते आयुर्विद्यायशोवलम् ॥

मनुः—२-१२१

**अभिवादनवाक्यम्**—अभिवादये देवदत्त शर्माहमस्मि भोः इति मनुः—२-१२२-१२४

**अभिशंसनम्**—आक्रोश इति कल्पतरुकुल्लूकौ ।

पञ्चाशद् ब्राह्मणो दाप्यो क्षत्रियस्याभिशंसने ।

मनुः—८-२६८

विप्रे शतार्द्धं दण्डस्तु क्षत्रियस्याभिशंसने इति बृहस्पति । पतनीयादन्यः सर्वप्रकार आक्रोश इति कल्पतरुः । नियतकाल—६८

**अभिशस्तः**—(१) "मिथ्यापवादयुक्त इति सायणः ।
तै० सं०—२-५-१-५

असता सता वा ब्रह्महत्यादिना अभियुक्तोऽभिशस्तः ।
विज्ञानेश्वरः—१-२२३

सता असता वा दोषेण ख्यात इति गौतमीयवृत्तौ हरदत्तः ।
ब्रह्महत्यादिपापेनाभियुक्त इति हरिहरभाष्ये पारस्करः ।
पारस्करः—२-११-५

दोषकारितया केनचित्सभायामावेदित इति स्मृतिचद्रिका
श्राद्ध—१८३

सर्वं वापि चरेद्ग्रामं पूर्वोक्तानामसम्भवे ।
नियम्य प्रयतो वाचमभिशस्तस्तु वर्जयेत ॥
मनुः—२-१८५

वत्सस्य ह्यभिशस्तस्य पुरा भ्रात्रा यवीयसा ।
नाग्निर्ददाह रोमापि सत्येन जगतः स्पशः ॥
मनुः—८-११६

(२) ब्रह्महत्यापातकयुक्तः । पूर्वयोर्वर्णयोर्वेदाध्यायं हत्वा सवनगतं चभिशस्तः । आप०—१-७-२४-७

**अभिशापः**—(१) पातकाभियोगः इति मिताक्षरा ।
साहसस्तेयपारुष्यगोभिशापात्यये स्त्रियाम् ।
विवादयेत् सद्य एव कालोऽन्यत्रेच्छया स्मृतः ॥
याज्ञ०—२-१२

(२) अनिष्टचिन्तामात्रम् ।
अप्रजाः मन्त्वम्रिण इत्यभिशापः । वसिष्ठः—१७-३

(३) लोकगर्हता ।
लज्जया परयोपेतो धर्मराज्ये युधिष्ठिरः ।
अभिशापभयाद्भीतो भवन्तं नोपसर्पति ॥
महा० शान्ति०—५५-११

**अभिश्रवः**—शृगालादीनां मिलितानां दीर्घः शब्दः ।
समूहसन्ततस्तनितविद्यु दभिश्रवसा मिति हारीतः ।

**अभिषङ्गः**—पराभवः ।
तं भीमरूपं त्वरितं द्रवन्तं दुर्योधनं शत्रुसहोऽभिषङ्गात् ।
महा० विरा०—६५-१४

तमाहुरार्त्ता ऋषयो महर्षिं न ते वयं पुष्करं चोरयामः ।
मिथ्याभिषङ्गो भवता न कार्यः शपाम तीक्ष्णैः शपथैर्महर्षे ॥
महा० अनु०—६४-१४

**अभिषवः**—उदकेन संसृज्य परिवासनम् अभिषव इति श्राद्धकल्पे हेमाद्रिः—६१६

सन्धानमिति पृथ्वीचन्द्रः । शुक्तमिति चन्द्रिका ।
वर्ज्याश्चाभिषवा नित्यं शतपुष्पा गवेधुकाः इति मार्कण्डेये ।
सन्धासमिति कुल्लूकः ।
दधिभक्ष्यं च शुक्तेषु सर्वं च दधिसम्भवम् ।
यानि चैवाभिषूयन्ते पुष्पमूलफलैः शुभैः ॥
मनुः—५-१०

अत्र "यानि तु पुष्पमूलफलैरुदकेन सन्धीयन्ते तानि भक्षणीयानि" इति कुल्लूकः ॥
कन्दमूलफलैः पुष्पैः शस्तैः शुक्तान् न वर्जयेत ।
अविकारि भवेद्भक्ष्यमभक्ष्यं तद् विकारकृत् ॥
इति तत्र बृहस्पतिः ।

**अभिष्टुतम्**—अभिमन्त्रितम् ।
ओङ्काराभिष्टुतं सोमसलिलपावनं पिबेत् ।
याज्ञ०—३-३०६

अभिष्टुत ओङ्कार इति स्मृचिद्रिकायाम्—३६१
स्पृष्ट्वा चाभिष्टुता तोयं मूर्द्धनि ब्रह्ममुखेन तु ।
आपोहिष्टेति सूक्तेन दर्भैर्मार्जनमाचरेत् ॥

**अभिसन्धानम्**—वशीकरणम् ।

तान् सर्वानभिसन्दध्यात् सामादिभिरुपक्रमैः ।

मनुः—७-१५६

अभिसन्दध्यात् वशीकुर्यादिति कुल्लूकः ।

**अभिसन्धिः**—अभिप्रायः ।

अनभिसन्धिकृते प्रायश्चित्तमपराधे ।

अभिसन्धिकृतेऽप्येके ॥ वसिष्ठः—२०-२

**अभिसारिणी**—(गौः) यागमभिधानार्थमभिसरति इति बालम्भट्टी । याज्ञ०—२-१६३

**अभिसूयमाणा**—कृष्णपक्षमी रात्रिः ।

कालमाधवः—२

"सुता सुन्वती प्रसूता सूयमाणा अभिसूयमाणा आपीती प्रपा संपा तृप्तिस्तर्पयन्ती कान्ता काम्या कामदाता आयुष्मती कामदूघा एतानि कृष्णपक्षरात्रिनामानि इति तैत्तरीयाः सावित्रचयने पठन्ति ।

**अभिहृतम्**—आवद्धम्-(स्रगादि) ।

स्नातस्तु काले यथाविध्यभिहृतम् ।

आप०—१-२-८-७

**अभीषङ्गः**—(१) "पुरोजिती वो अन्धस इत्यादिसामत्रयम् इति कल्पतरुः । नियतकाल—६३

पुरोजिती वो अन्धसः सुताय मादयित्नवे ।

अपश्वानं श्नथिष्टन सखायो दीर्घजिह्वयम् ॥ १ ॥

अयं पूषा रयिर्भगः सोमः पुनानो अर्षति ।

पतिर्विश्वस्य भूमनो व्यख्यद्रोदसी उभे ॥ २ ॥

सुतासो मधुमत्तमाः सोमा इन्द्राय मन्दिनः ।

पवित्रवन्तो अक्षरन् देवान् गच्छन्तु वो मदाः ॥ ३ ॥

अत्रप्रथमे आन्धीगुः श्यावाश्विः ऋषिः अपरयोः ययातिर्नाहुषः ।

(२) आक्रोशः "आक्रोशनमभीषङ्गः इत्यमरः—३-२-६

(३) युद्धम् ।

तं भीमरूपं त्वरितं द्रवन्तं दुर्योधनं शत्रुसहोऽभिषङ्गात् ।

प्रस्फोटयद्योद्धुमनाः किरीटी वाणेन विद्धं रुधिरं वमन्तम् ॥

महा० विरा०—६५-१४

**अभीषुः**—प्रग्रहः "अभीषुः प्रग्रहे रश्मौ ।"

इत्यमरः—३-३-२१६

सतानमीषुम् पुनराददानः प्रगृह्य शङ्ख द्विषतां निहन्ता ।

महा० भीष्म०—६१-१०५

अभीशुभिर्वाजिन इव यजुः—३४-६, इत्यत्र तालव्यपाठः ।

**अभ्यङ्गः**—(१) तैलादिना गात्रमर्दनम् ।

(२) मूर्ध्नि दत्तं यदा तैलं भवेत् सर्वाङ्गसङ्गतम् ।

स्रोतोभिस्तर्पयेद् बाहू अभ्यङ्गः स उदाहृतः ॥

इति प्रायश्चित्तविवेके पृ—४३४

**अभ्यञ्जनम्**—तैलादिना गात्रमर्दनम् । "तैलादिना देहाभ्यङ्ग इति कुल्लूकः ।"

अभ्यञ्जनं स्नापनं च गात्रोत्सादनमेव च ।

गुरुपत्न्या न कार्याणि केशानां च प्रसाधनम् ॥

मनुः—२-२११

**अभ्यवहारः**—भक्षणम् । मृन्नशकृच्छुकाभ्यवहारेषु चैव-मिति वसिष्ठः—२०-२०

ग्रस्तावेवास्तगमनं रवीन्दू प्राप्नुतो यदि ।
तयोः परेद्युरुदये स्नात्वाभ्यवहरेन्नरः ॥
इति कालदीपे ॥

**अभ्यागतः**—गृहाभिमुख्येन भोजनार्थमागतः ।
अतिथिलक्षणाद्बहिर्भूतः ॥

वालखिल्यो यतिश्चैव विज्ञेयो ह्यतिथिः सदा ।
अभ्यागतः पचानः स्यादतिथिः स्यादपाचकः ॥
शूद्रो वा प्रतिलोमो वा पथि श्रान्तः क्षुधातुरः ।
भोजयेत्तं प्रयत्नेन गृहमभ्यागतो यदि ॥
वृद्धहारीतः—८-२३६

**अभ्यागमनम्**—प्रीत्या आभिमुख्येन गमनम् ।
आप०—१-१-३३

तेषामभ्यागमनं भोजनं विवाहमिति च वर्जयेत् ॥
आप०—१-१-३३

**अभ्याघातः**—आक्रमणम् । आक्रमणस्थानं विपत्क्षेत्रम् ।

राष्ट्रेषु राष्ट्राधिकृताः सामन्ताश्चैव चोदिताः ।
अभ्याघातेषु विज्ञेया यथा चौरास्तथैव ते ॥
नारदः—१६-७५

**अभ्यातानाः**—अग्निर्भूतानामधिपतिरित्यादयोऽष्टादशमन्त्रा अभ्यातानाः । पारस्करः—१-५-१०

अभ्यातानहोमे तु चतुर्गृहीतं जुहोतीति देवपाल-भाष्ये काठक । गृ०—३-१-१४

**अभ्याशः**—समीपम् ।

पर्वते नगराभ्यासे तथा राजपथस्य च ।
ऊषरं मूषकव्याप्तं क्षेत्रं यत्नेन वर्जयेत् ॥
इति व्यवहारप्रकाशे बृहस्पतिः ॥

**अभ्यासः**—(१) समीपम् ।

जलाभ्यासे कुद्दालेन वा बोधा०—३-२-३

(२) आवृत्तिः ।

सर्वेषामपि पापानां संकरे समुपस्थिते ।
अभ्यासो दशसाहस्रः सावित्र्याः शोधनं महत् ॥
वसिष्ठः— २५-१२

**अभ्युत्थानम्**—गुर्वादिप्राप्तौ तदाभिमुख्येन आसनत्याग-पूर्वकमुत्थानम् ।

सुधावस्तूनि वक्ष्यामि विशिष्टे गृहमागते ।
मनश्चक्षुर्मुखं वाचं सौम्यं दद्याच्चतुष्टयम् ॥
अभ्युत्थानमिहागच्छ पृच्छालापप्रियान्वितः ।
उपासनमनुव्रज्या कार्य्याण्येतानि यत्नतः ॥
दक्षस्मृतिः—३-५

**अभ्युद्यतः**—उदये सुप्त इति नरसिंहवाजपेयिनः ।

**अभ्युपपत्तिः**—(१) अनुग्रह इति मेधातिथिः ।
अमरश्च—३-२-१३

कामिनीषु विवाहेषु गवां भक्ष्ये तथेन्धने ।
ब्राह्मणाभ्युपपत्तौ च शपथे नास्ति पातकम् ॥
मनुः—८-११३

(२) रक्षणम् ।

"स्त्रीबालाभ्युपपत्तौ ।" मनुः—१०-६२

**अभ्युपयनम्**—प्रवेशः । अभ्युपयन्ति आभिमुख्येन उपनयन्ति, उपनयनमत्र प्रवेशः ।

शरीरमग्नौ संयोज्यानवेक्षमाणा अपोऽभ्युपयन्ति ।

इति शातातपः । मिता०—३-३

**अभ्युष्णम्**—ईषदुष्णम् । "अभ्युष्णं सर्वमन्नं स्यात्" इति हेमाद्रौ मनुः ।

प्रकाशित स्वतन्त्रमनुस्मृतिपुस्तकेषु तु अत्युष्णमितिपाठः । तत्र भोजनोचितमुष्णमिति कुल्लुकः—३-२३६

**अभ्रिः**—तीक्ष्णाग्रदण्डविशेषः । "अभ्रिंकार्ष्णायसीं दद्यात् सर्पं हत्वा द्विजोत्तमः" इति मनुः—११-१३३

प्रायश्चित्तविवेके तु अभ्रीति दीर्घान्तः पाठः तत्र "तीक्ष्णप्रान्ता कीलिका अभ्रीति शूलपाणिः" कीलिका तु खनित्रविशेषः इति गोविन्दानन्दः । अभ्री खनित्री इति नन्दपण्डितः । विष्णुः—५०-३४

**अमत्रम्**—पात्रम् "भुक्त्वा स्वयममत्रं प्रक्षालयीत ।"

आप०—१-१-३-३६

अमत्राणां दहनमिति बौधायनः—१-८-२६

**अमत्सरः**—परगुणामहनो मत्सरः, तद्विपरीतः अमत्सरः ।

**अमरकंटकः**—पर्वतविशेषः ।

"प्रभासे पुष्करे काश्यां नैमिषेऽमरकंटके ।
गङ्गायां सरयूतीरे निवसेद्धार्मिको जनः ॥

इति विष्णुधर्मोत्तरे ॥

गङ्गायमुनयोस्तीरे पयोष्ण्यमरकण्टके ।
नर्मदावाहुदातीरे भृगुलिंगे हिमालये ॥
गङ्गाद्वारे प्रयागे च नैमिषे पुष्करे तथा ।
× × × दत्तमक्षयतां व्रजेत् ॥

श्राद्धदेशत्वे उक्तः हेमाद्रौ श्राद्धकाण्डे पृ०—१६१

शङ्खस्मृतौ तु ।

गङ्गायमुनयोस्तीरे पयोष्ण्यमरकण्टके ।
नर्मदाया गयातीरे सर्वमानन्त्यमश्नुते ॥

विष्णुस्मृतिव्याख्यायाम् अमरकण्टकेन तीर्थेनोपलक्षिते पर्वते मेकलाभिधे विन्ध्यपादे इति विष्णुः—२५-६

**अमा**—(१) अमावास्या । (२) सहभावः । (३) कन्या । (४) सूर्यरश्मिः । (५) चन्द्रकला चेति अमाशब्दस्य चत्वारोऽर्था इति माधवाचार्याः ।

चन्द्रकला—

अमा षोड़शभागेन देवि प्रोक्ता महाकला ।
संस्थिता परमा माया देहिनां देहधारिणी ॥

इति स्कन्दपुराणे प्रभासखण्डे ॥

**अमात्यः**—(१) अमात्याः गृहजनाः । अमा गृहं तत्र भवाः । प्राङ्मुखः प्रतिग्रहीतासामात्याः प्रत्यङ्मुखः प्रदाता ।

काठक-गृ०—२-३-२

(३) कर्मसचिवः ।

अन्यानपि प्रकुर्वीत शुचीन् प्राज्ञानवस्थितान् ।
सम्यगर्थसमाहर्तॄनमात्यान् सुपरीक्षितान् ॥

मनुः—७-६०

कर्मसचिवशब्दो द्रष्टव्यः ।

**अमावास्या**—कृष्णपक्षपञ्चदशीतिथिः । अमाशब्दस्य सहभावः कन्या, सूर्यरश्मिः चन्द्रकला चेति

चत्वारोऽर्थाः । वसुशब्दस्य च इन्द्रश्चन्द्रः पितृविशेषो निवासश्चेति चत्वारोऽर्था इति कालमाधवे माधवाचार्याः ।

मत्स्यवायुपुराणयोः—

अमावसेतामृक्षे तु यदा चन्द्रदिवाकरौ ।
एषा पंचदशीरात्रिरमावास्या ततः स्मृता ॥

ब्रह्माण्डपुराणे—

अमा नाम कला रश्मिः सहस्रप्रमुखस्थितः ।
त्रैलोक्यदीपकः प्रोक्तश्चन्द्रलोके प्रकाशते ।
यस्मात्सोमो विशत्यस्याममावास्या ततः स्मृता ।

स्कान्दे—

अमा नाम कला रश्मिः सहस्रप्रमुखस्थितः ।
यस्याश्च तेजसा सूर्यः प्रोक्तस्त्रैलोक्यदीपकः ॥
तस्मिन् विशति येनेन्दुरमावास्या ततः स्मृता ।
अक्षया धर्मकृत्ये सा पितृकृत्ये विशेषतः ॥

शतपथश्रुतौ—

सर्वे देवानां विस्त्वन्नं ह्येषां तद्यदा रात्रिमिहामावसति तस्मादमावास्या नाम, स चन्द्रमाः ।

"यः परमविकर्षः सूर्याचन्द्रमसोः सा पौर्णमासी । यः परमः संनिकर्षः साऽमावास्या" इति

गोभिल-गृ०—१-५-७

**अमुत्र**—परलोके ।

पौत्रदौहित्रयोर्लोके विशेषो नोपपद्यते ।
दौहित्रोऽपि ह्यमुत्रैनं सन्तारयति पौत्रवत् ॥

मनुः—९-१३९

**अमृतम्**—(१) यज्ञशेषान्नम् । "यज्ञशिष्टं तथामृतम् ।"

इति मनुः—३-२८५

दर्शपौर्णमासादि यज्ञशिष्टं पुरोडाशाद्यमृतमिति कुल्लूकः । देवयज्ञादिशिष्टान्नममृतमिति भगवद्गीताव्याख्याने भगवान् शंकराचार्यः ॥

(२) अयाचितवृत्तिश्चामृतम् । "अमृतं स्यादयाचितम् ।"

मनुः—४-५

(३) मोक्षः । "प्राप्यते ह्यमृतं ततः" मनुः—१२-८५
"विद्ययामृतमश्नुते" मनुः—१२-१०४

(४) मन्त्रविशेषाः ।

अब्लिङ्गं बार्हस्पत्यं च वाक्सूक्तममृतं तथा ।

शङ्खस्मृतिः—११-३

(५) कृष्णसप्तमीदिनभागमात्रम् । कालमाधवः—२

(६) ब्राह्मणान्नम् ।

अमृतं ब्राह्मणस्यान्नं क्षत्रियान्नं पयः स्मृतम् ।

अत्रिसंहिता—३७०, आप०—८-१२

(७) पुत्रपौत्रादिपरम्परा ।

प्रजामनुप्रजायसे तदु ते मर्त्यामृतमिति ।

आप०—२-२४-१

प्रजाभिरग्नेरमृतत्वमश्याम् । ऋग्वेदः—५-४-१०

**अमृतवापी**—रामनाथसमीपस्था वापी ।

स्कन्द-ब्रह्म-सेतुमाहात्म्य—१३ अध्याये ।

**अमेध्यम्**—मद्यादि ।

मानुषास्थिशवं विष्ठा रेतो मूत्रार्त्तवं वसा ।
स्वेदाश्रु दूषिका श्लेष्म मद्यं चामेध्यमुच्यते ॥

मिता०—१-१९१

**अमेध्यभूमिः**—यत्र प्रसूयते नारी म्रियते दह्यतेऽपि वा ।
चण्डालाध्युषितं यच्च यत्र विष्ठादिसंहतिः ॥
एवं कश्मलाभूयिष्ठा भूरमेध्या प्रकीर्त्तिता ॥
इति मिताक्षरायां देवलः—१-१८८

**अमेध्याशी**—नपुंसकविशेषः । "अमेध्याशी पुमान् क्लीब इति स च मुखे भग इति परिशिष्टप्रकाशे ।

**अमौत्रः**—अरजकः इति हरिहरगदाधरौ ।
अहतं वासो धौतं वा अमौत्रेणाच्छादयीत ॥
पारस्करः—२-६-१५

**अम्बरीषः**—(१) भर्जनपात्रम् । "अम्बरीषो भवेत्भाष्ट्रः ।"
इति हलायुधः का०—२
सूत्रान्तरमतेन अम्बरीषाद् बहुयाजिनो ब्राह्मणस्य गृहाद् बह्वन्नपाकाद् ब्राह्मणमहानसाद्वा ॥
इति हरिहरभाष्ये पारस्करः—१-२

(२) युद्धमिति मेदिनी—३१-४८

**अम्बष्ठः**—ब्राह्मणाद् वैश्यकन्यायां विवाहितायां जातः ।
ब्राह्मणाद्वैश्यकन्यायामम्बष्ठो नाम जायते ।
मनुः—१०-८

**अम्बुपटः**—अम्बुपटः कर्णिकार इत्याचारेन्दुः—१५४ ।
पूजाप्रकाशे तु चारुपुटमितिपाठः ।
जाती शताह्वा सुमनाः कुन्दं चाम्बुपटं तथा ।
इति वामनपुराणे

**अम्भृणम्**—उम्हेइ इत्युत्कलभाषाप्रसिद्धमग्निपात्रम् । बृहन्मुखामार्त्तिकघटा अम्भृणपदवाच्या इति श्रौतपदार्थनिर्वचने । शीतर्त्तौ शीतप्रतिकारार्थं यत्राग्निं संस्थाप्य वृद्धाः सेवन्ते तदेव मृत्पात्रम् ॥

**अम्लका**—पालङ्गशाक इति वैद्यकशब्दसिन्धौ ।

**अम्लानः**—बन्धुजीवकवृक्षे झिण्टिकाभेदे अम्लातनवृक्षे इति वैद्यकशब्दसिन्धौ । उत्कलप्रसिद्धः अंलाइपुष्पवृक्षविशेषः भवितुमर्हति । तस्य पुष्पस्य हि म्लानिर्नास्ति । "अम्लानः पुष्पजाति ।" अयं बाणपुष्प इति गौड़ादौ प्रसिद्धः इति भावप्रकाशः इति गर्भशब्दविवरणे शब्दकल्पद्रुमे । सूर्यदेये "कुब्जकस्तगरश्चैव कर्णिकारः कुरुण्टकः" इत्यस्य विवरणे कुरुण्टकोऽत्र पीताम्लान इति नरसिंहवाजपेयिनः "अम्लानः विष्णुप्रियपुष्पविशेष इति शेफालीशब्दे द्रष्टव्यः ।"

**अम्लिका**—तिन्तीड़ीति नरसिंहवाजपेयी नित्याचारप्रदीपः—१-२८४ । "अम्लिका तिन्तीड़ीवृक्षे आम्रे पलाशीलतायां माचिकायां पूदिनाश्वेताम्लिकायां चाङ्गेर्यामिति वैद्यकशब्दसिन्धौ ।" अम्लिकादन्तकाष्ठाय विष्णुना निषिद्धा । विष्णुः—६१-५

**अयः**—लौहम् "ताम्रायः कांस्यरौप्यानां त्रपुणः सीसकस्तथा।
शौचं यथार्हकर्त्तव्यं क्षाराम्लोदकवारिभिः ॥"
मनुः—५-११४

**अयनम्**—(१) सूर्यस्य गतिभेदः । अयते गच्छति अनेन ऋतुत्रयेण सूर्यः उत्तराशां दक्षिणाशां वेति अयनम् । तच्च उत्तरायण-दक्षिणायन-भेदेन द्विधा । मकरसंक्रान्तिरुत्तरदिग्गमनारम्भकालः कर्कटसंक्रान्तिर्दक्षिणदिग्गमनारम्भकालः ।

(२) सूर्यस्य राशिगतिरपि क्वचिदयनसंज्ञया व्यवह्रियते । तदाह कालमाधवे जावालिः—"संक्रान्तिषु यथाकालस्तदीयेऽप्ययने तथा" इति, मेषादिसंक्रान्तयो यस्मिन् दिने भवन्ति तस्मात् दिनात् पूर्वेभ्य एकादशदिनेभ्यः प्राचीनदिने मेषायनं वृषायनमित्येवं तत्तन्नामाङ्कितमयनं भवति इति माधवाचार्याः । कर्कटसंक्रान्तिर्दक्षिणदिग्गमनारम्भकालः । अयनस्य विनियोगस्तु—

देवतारामवाप्याद्रिप्रतिष्ठोदङ्मुखे रवौ ।
दक्षिणाशामुखे कुर्वन् न तत्फलमवाप्नुयात् ॥
इति मदनरत्ने सत्यव्रतः ॥

(३) मार्गो विभागश्च ।
अयनेषु च सर्वेषु यथाभागमवस्थिताः ।
भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि ॥
भ० गीता—१-११

**अयाचितम्**—व्रतविशेषः । तत्र अपञ्चितमन्नमश्नन्ति ।
अप्रयत्नलब्धं परदत्तम् अयाचितम् ।
त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम् ।
त्र्यहं परं च नाश्नीयात् प्राजापत्यं चरन् द्विजः ॥
मनुः—११-२११

(२) प्रीतिदायः प्रतिग्रहरूप इति नित्याचारप्रदीपे —२-२६७

**अयातयामः**—नूतनः, उपादेयः ।
मासे नभस्यमावास्या तस्यां दर्भोच्चयो मतः ।
अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः ॥
नित्याचरप्रदीपः—१-३४

**अयातयामानि**—दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणा हविरग्नयः ।
अयातयामान्येतानि नियोज्यानि पुनः पुनः ॥

**अयुगूः**—काकवन्ध्यायां या कन्या जायते सा अयुगूः ।
"नायुग्वा" इति गोभिलः—३-५-४
अयुगूः काकवन्ध्यायां जातां तां न विवाहयेत् ।
गोभिलः—३-१३६

**अयोगुडः**—अयोगोलक इति हेमाद्रिः ।
यावतो ग्रसते पिण्डान् हव्यकव्येष्वमन्त्रवित् ।
तावतो ग्रसते प्रेत्य दीप्तशूलष्ट्यंयोगुडान् ॥
मनुः—३-१३३

**अयोनिः**—मार्गादि, उंच्छस्थानेभ्य एकम् नित्याचारे हारीतः । "अयोनिकण्डनं गोस्थानं धान्यकरणं लवनमिति पञ्च उंच्छस्थानानि ।

**अरणिः**—अरणिर्लक्षणं यथा—
अश्वत्थो यः शमीगर्भः प्रशस्तोर्वीसमुद्भवः ।
तस्य या प्राङ्मुखीशाखा उदीची चोर्द्ध्वगापि वा ॥
अरणिस्तन्मयी ज्ञेया तन्मध्ये चोत्तरारणिः ।
सारवद्दारवं चात्रमोविलो च प्रशस्यते ॥
संसकटमूलीयः राम्याः सशमीगर्भ उच्यते ।
अभावे त्वशमीगर्भादाहरेदविलम्बितः ॥
चतुर्विंशांगुलो दीर्घा विस्तारेण षडंगुला ।
चतुरंगुलमुत्सेधा अरणिर्याज्ञिकैः स्मृतः ॥
मूलादष्टांगुलं त्यक्त्वा अग्राच्च द्वादशांगुलम् ।
अन्तरं देवयोनिः स्यात्तत्र मथ्यो हुताशनः ॥

मूर्धाक्षिकर्णवक्त्राणि कन्धरा चापि पंचमी ।
अङ्गुष्ठमात्राण्येतानि द्व्यङ्गुष्ठं वक्ष उच्यते ॥
अङ्गुष्ठमात्रं हृदयं त्र्यंगुष्ठमुदरं तथा ।
एकांगुला कटिर्ज्ञेया द्वौ वस्तिर्द्वे च गुह्यकम् ॥
अरण्यवथवा ह्येते याज्ञिकैः परिकीर्त्तितः ।
यत्तद्गुह्यमिति प्रोक्तं देवयोनिः स उच्यते ॥
प्रथमे मन्थने ह्येष नियमो नीतरेषु च ।
अष्टांगुलः प्रमन्थः स्याच्चात्रं स्याद्द्वादशांगुलम् ॥
ओविली द्वादशैव स्यादेतन्मंथनयन्त्रकम् ।
गोवालैः क्षणसंमिश्रैस्त्रिवृद्वृत्तमनंशुकम् ॥
व्यामप्रमाणं नेत्रं स्यात्तेन मथ्यो हुताशनः ।
चात्र बुध्ने प्रमन्थाग्रं गाढं कृत्वा विचक्षणः ॥
इति हरिहरभाष्ये पारस्करः—१-२

**अरणिप्रदानः**—आरणेयोऽग्निः । अरणिः प्रदानमुपादानं कारणमुत्पत्तिस्थानं यस्य सोऽरणिप्रदानः इति हरिहरः । पारस्करगृ०—१-१-५

**अरत्निः**—सकनिष्टिकः करः अरत्निरिति हेमाद्रिः ।
बद्धमुष्टिहस्त इति शब्दकल्पद्रुमे ।
प्रसृताङ्गुलिर्हस्त इति कल्पतरौ । गार्हस्थ्य—१६४
निष्कनिष्टमुष्टिहस्त इति विवादरत्नाकरे—२२०
विड्मूत्रोदकचक्रं च वह्नि श्वभ्रनिवेशनम् ।
अरत्निद्वयमुत्सृज्य परकुड्यान्निवेशयेत् ॥ इति कात्यायनः

**अरला**—चर्मपट्टिकाजातीयेति श्रीमूला । कौट०—३-२०

**अरलुः**—समिदनर्हवृक्षविशेषः । गोभिलः—१-५-१५
अरलुः स्योनाक इत्यमरः—२-४-५७

**अरालिकः**—पाककर्त्ता ।
अरालिकोऽन्नपाकी स्यात्सूपकर्त्ता तु शाककृत् ।
तैलान्नं पचते यस्तु गोविकर्त्ता स उच्यते ॥
इति नीलकंठकृतटीकायाम् ॥
अरालिको गोविकर्त्ता सूपकर्त्ता नियोधकः ।
आसं युधिष्ठिरस्याहमिति वक्ष्यामि पृच्छतः ॥
इति भीमवाक्यम् । महा० विरा०—२-६

**अरिमेदः**—विट्खदिरवृक्ष इति कल्पतरुः ।
गयावावला इति भाषा इति शब्दकल्पद्रुमे । गोहिरा-इत्यस्य उत्कलेषु नामभवेत् । स च दन्तकाष्ठाय विष्णुना प्रदर्शितः । विटासनार्क खदिरकरञ्जवदरसर्जनिम्बारि-मेदापामार्गमालतीककुभविल्वानामन्यतमम् ।
विष्णुः—६१-१४

**अरिषड्वर्गः**—कामक्रोधलोभमोहमात्सर्यमदाः ।
तस्मादरिषड्वर्गत्यागेन इन्द्रियजयं कुर्वीत ॥
कौट०—१-७-१

**अरिष्टम्**—पूयवृक्षफलमिति गोविन्दस्वामी ।
बौधा०—१-५-८-३४
रीठेति प्रसिद्धमिति बालंभट्टी । रीठाफलमित्युत्कल भाषाप्रसिद्धम् । रीठी इति मध्यदेशे प्रसिद्ध इति आह्निकप्रकाशे—१२४
अरिष्टो लशुनं निम्बे फेनिले काककंकयोः ।
अरिष्टमशुभे तक्रे सूतिकागार आसवे ॥
शुभेमरणचिह्ने च इति विश्वः "सारिष्टैः कुतपं तथा ।"
इति याज्ञ०—१-१८६
तत्काष्ठं दन्तघर्षणे निषिद्धं च विष्णुना—६१-२

**अरिष्टकः**—(१) राजसर्षपः ।
अक्षतानरिष्टकांश्चान्यानि चाभिमङ्गलानि ।
इति पारस्करः—३-५-२
(२) अरिष्टफलम् । रेठाफल इति प्रसिद्धम् ।
तत्काष्ठं दन्तधावनेन ग्राह्यमित्याह विष्णुः—६१-२
नैव श्लेष्मातकोऽरिष्टं विभीतकधवधन्वनजम् ।
अत्र अरिष्टः फेनिल इति नन्दपण्डितः ॥

**अरिष्टनेमिः**—अप्रतिहतचक्रः ।

**अरुणम्**—कृष्णैकादशीदिनभागः । कालमाधवः—२

**अरुणासरस्वतीसङ्गमः**—अरुणायाः सरस्वत्याश्च मिश्रणम् पृथूदकात् उत्तरपूर्वस्यां सार्द्धक्रोशदूरे इति धर्मशास्त्र-इतिहासे ।
सरस्वती विश्वामित्रेण शप्ता रुधिरवहा अरुणा जाता ।
पुनः सा मुनिभिः शोधिता सरस्वत्यां पातिता । तयोः नद्योः सङ्गमः अरुणासरस्वतीसङ्गमः ।
वामनपुराणे—४०-४३

**अरुणोदयः**—सूर्योदयात्पूर्वं द्विमुहूर्त्तकालः ।
उदयात् प्राक् चतस्रस्तु नाड़िका अरुणोदयः ।

**अरेपाः**—रेप इति पापनाम, तद्यस्य नविद्यते स अरेपा इति गोविन्दस्वामी ।
अरेपा वा पवित्रकामो वा । बौधा०—३-७:७-५

**अर्कः**—अर्कवृक्षः सूर्यग्रहस्य समित् ।
अर्कः पलाशः खदिरः अपामार्गोऽथ पिप्पलः ।
उदुम्बरः शमी दूर्वा कुशाश्च समिधः क्रमात् ॥
याज्ञ०—१-३०२
दन्तकाष्ठवर्गे विष्णुना प्रदर्शितः अर्कः मन्दार इति नन्दपण्डितः । विष्णुस्मृतिः—६१-१४ । वस्तुतस्तु अर्कमन्दारौ विभिन्नौ वृक्षौ लोके प्रसिद्धौ । ततः अर्को न मन्दारः ॥

**अर्घः**—(१) मूल्यमिति श्रीमूला । ततः परमर्घं वर्धयता क्रये विक्रये वेति कौट०—४-२-३६
समर्घं धान्यमादाय महार्घं यः प्रयच्छति ।
स वै वार्द्धुषिको नाम ब्रह्मवादिषु गर्हितः ॥
इति वसिष्ठः—२-४१
(२) वृद्धिरिति गोविन्दस्वामी । "यः समर्घमृणं गृहीत्वा" बौधा०—१-१०-२४
(३) आचार्यादीनां पूजाविधिविशेषः । "षडर्घ्या भवन्ति आचार्य ऋत्विग् वैवाह्यो राजाप्रियः स्नातक" इति पारस्करः—१-३-२

**अर्घप्रक्षेपणम्**—मूल्यनिर्द्धारणम् । "अर्घप्रक्षेपणाद्विंशभागं शुल्कं नृपो हरेत्" याज्ञ०—२-२६१

**अर्घुकः**—समृद्धः । "द्विनामा ब्राह्मणोऽर्घुकः" इति श्रुतिविवरणे बौधा०—१-२१-१६

**अर्चा**—(१) प्रतिमा । "द्रव्यवत् कृतशौचानां देवतार्चानां भूयः प्रतिष्ठापनेन" इति विष्णुः—२३-३४
प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना ।
प्रतिच्छायाप्रतिकृतिरर्चा पुंसि प्रतिनिधिः ॥
इत्यमरः—२-१०-३५

(२) पूजा।

हरेरर्चा तु वैशाखे तपःपूजा च कार्त्तिके।
तपोऽभ्यर्चा तथा दानं त्रयं माघे विशिष्यते॥

इति कालसारोद्धृत भविष्योत्तरे॥

**अर्जकम्**—श्वेतकुवेरकपत्रमिति श्राद्धमयूखे वंशकरीरं सुरसमर्जकं भूतृणानि च। हेमा० परि०—५५६

**अर्जुनी**—गौः "सरः सुपूर्णेषु तथाऽर्जुनीषु" इति विष्णुवाक्यम् अर्जुनी गौरिति कृत्यरत्नाकरे—२७४

कल्पतरौ व्रतकाण्डे च—६३

**अर्थः**—(१) शब्दादिविषय इति नीलकण्ठः।

महा० उद्०—४२-१०

मिथ्यार्थयोगाभिहतान्तरात्मा स्मरन्नुपास्ते विषयान् समन्तात्॥

(२) "कार्यम्, व्यावहारिकानार्थान् कुर्य्युः" कौट०—३-१

न वृथा शपथं कुर्य्यात् स्वल्पेऽप्यर्थे नरो बुधः।

मनुः—८-१११

(३) प्रयोजनम्।

स्वभावे नैव यत् ब्रूयुस्तद्ग्राह्यं व्यावहारिकम्।
अतो यदन्यद्विब्रूयुर्धर्मार्थं तदपार्थकम्॥

मनुः—८-७८

(४) वित्तं, गृहक्षेत्रादि इति विज्ञानेश्वरः—१-१७३

सर्वेषामेव शौचानामर्थशौचं परं स्मृतम्।
योऽर्थे शुचिर्हि स शुचिर्नमृद्वारिशुचिः शुचिः॥

मनुः—५-१०६

**अर्थदूषणम्**—व्यसनविशेषः।

दण्डस्य पातनं चैव वाक्पारुष्यार्थदूषणे।
क्रोधजेऽपि गणे विद्यात्कष्टमेतत्त्रिकं सदा॥

मनुः—७-५१

मात्स्येतु—

अर्थस्य दूषणं राजा द्विप्रकारं विवर्जयेत्।
अर्थानां दूषणं चैकं तथार्थेषु च दूषणम्॥
प्राकाराणां समुच्छेदो दुर्गादीनामसत्क्रियाः।
अर्थानां दूषणं प्रोक्तं विप्रकीर्णत्वमेव च॥—१२
अदेशकाले यद्दानमपात्रे दानमेव च।
अर्थेषु दूषणं प्रोक्तमसत्कर्मप्रवर्त्तनम्॥—२१४

**अर्थवचनम्**-कार्यसंदेहे राजाज्ञयैव निर्द्धारणमिति कुल्लूकः।

मनुः—७-१५४

**अर्द्धकृच्छ्रम्**—कृच्छ्रार्द्धव्रतम्।

सायं प्रातस्तथैकैकं दिनद्वयमयाचितम्।
दिनद्वयं च नाश्नीयात् कृच्छ्रार्धः सोऽभिधीयते॥

इति प्रायश्चित्तविवेके आप०—५०१

**अर्द्धपलम्**—कर्षद्वयम् खारीशब्दे द्रष्टव्यम्।

**अर्धशशवः**—कुडवापरपर्यायः खारीशब्दे द्रष्टव्यः।

**अर्धशाणीपक्षः**—शणस्य विकारः शाणीपटी, तस्याः अर्धम् अर्धशाणी, तस्याः पक्षः अर्धशाणीपक्षः आयामविस्तारयोरुभयोरप्यर्धमिति हरदत्तः।
"अरण्ये कुटीं कृत्वा वाग्यत शवशिरोध्वजोऽर्धशाणीपक्षमधोनाभ्युपरिजान्वाच्छाद्य।"

इति आप०—१-६-२४-११

**अर्द्धसीतिकः**—अर्द्धसीरी । "अर्द्धसीतिकाः कृषिकर्मसिद्धसीताफलार्द्धभागिन" इति श्रीमूला ।
स्त्री वा प्रतिश्राविणी पतिकृतम् ऋणम् ।
अन्यत्र गोपालकार्द्धसीतिकेभ्यः ॥ कौट०—३-११-२३

**अर्धसीरी**—"मिलित्वाकर्षक" इति कल्पतरुः, नियतकालः —२५६
"संभूयसमुत्थापितया हलपर्यायसीरोपलक्षितकृषिफलभागग्राही" इति हेमाद्रिः ।
हलपर्यायसीरोपलक्षित-कृषिफलभागग्राहीति विज्ञानेश्वरः ।
शूद्रेषु दासगोपालकुलमित्रार्द्धसीरिणः ॥
इति याज्ञ०—१-१६६

**अर्धोदयः**—योगविशेषः ।
अर्कश्रुतिव्यतीपातयुक्तात्मा पुष्यमाघयोः ।
असावर्धोदयो योगः कोट्यर्कग्रहसंनिभः ॥
इति पूर्वाङ्गिरसे—१८०

**अर्बुदम्**—ईषत्कठिनं मांसपिण्डरूपम् । इति विज्ञानेश्वरः ।
मांस्यर्बुदं द्वितीये तु । याज्ञ०—३-७५
अर्बुदो मांसकीलेऽस्त्री पुरुषे दशकोटिषु । महीधरविशेषे ना, इति मेदिनी—१८-१६

**अर्बुदः**—(१) श्राद्धदेशविशेषः, क्षेत्रविशेषः, पर्वतविशेष इति शब्दकल्पद्रुमे । स च पर्वतः आरावली श्रेण्यां आबूपर्वत इति धर्मकोशे ।
गङ्गाद्वारे प्रयागे च नैमिषे पुष्करेऽर्बुदे ।
सन्निहत्यां गयायां च श्राद्धमक्षय्यतां व्रजेत् ॥
इति मिताक्षरायाम् । याज्ञ०—१-२६१

(२) अस्थिविशेषश्च । याज्ञ०—३-८६
(३) रोगविशेषश्च ।

**अर्मणः**—परिमाणविशेषः द्रोणपर्याय इति खारीशब्दे द्रष्टव्यः ।

**अर्हः**—योग्यः ।
अनर्हते यद् ददाति न ददाति यदर्हते ।
अर्हानर्हापरिज्ञानाद् दानधर्मोऽपि दुष्करः ॥
महाभा० शान्ति०—२०-६

**अलक्ष्मीः**—निर्ऋतिः ।
अलक्ष्मीः कालकर्णी च दुःस्वप्नं दुर्विचिन्तितम् ।
अस्मात्तेणाभिषिक्तस्य नश्यन्त इति धारणा ॥
विष्णुः—६४-४१

**अलसः**—विद्वेषिणो व्यसनिनः शालीनालसभीरवः ।
लुब्धातिवृद्धबालाश्च न कार्य्याः कार्य्यचिन्तकाः ॥
इति स्मृतिचन्द्रिकायां बृहस्पतिः । स्मृतिव्यवहारः—२२४

**अलाजादाही**—अकृतविवाहः ।
अजाविका माहिषिकाः सर्वविक्रयिणश्च ये ।
वैष्णवीषु च ये सक्ता अलाजादाहिनस्तथा ॥
इति कल्पतरौ यमः ॥
लाजानां दाहो विवाहः तद्रहिताः ।
ते च कृतसमावर्त्तना बोद्धव्याः ॥ श्राद्ध०—८४

**अलातम्**—अर्द्धदग्ध-साग्निकाष्ठम् ।
अलातमुल्मुकं ज्ञेयमुल्का ज्वालास्य निर्गता ।
अलातं तिन्दुकस्येव मुहूर्त्तमपि विज्वल ॥
मा तुषाग्निरिवानर्चिर्धूमायस्वजिजीविषुः ॥
महाभा० उद्०—१३३-१४

**अलावुः**—(१) स्रु,चां भाजनमिति विवरणे गोविन्दस्वामी ।
अलाबुबिल्वविनालानां गोवालैः परिमार्जनम् ॥
बोधा०—१-१४-१०

(२) विषविशेषः ।
कालकूटमलाबुं च विषं यत्नेन वर्जयेत् ।
इति मिताक्षरायां नारदः । याज्ञ०—२-११०

**अलाबूः**—प्रतानविशेषः । यस्याः फलपृष्ठं यतीनां भोजनपात्रं भवति ।
अलाबूदारुपात्रं च मृण्मयं वैदलं तथा ।
एतानि यति-पात्राणि मनुः स्वायंभुवोऽब्रवीत् ॥
मनुः—६-५४

**अलिः**—वृश्चिकः । सौरमार्गशिरमासः । रवौ कन्या-तुलालिस्थे इत्यादि हेमाद्रिपरिशिष्टे—८१६
नीहारांशुदिनोत्तरादितिगुरुब्रह्मानुराधाश्विनी
शुक्रे भास्करवायुविष्णुवरुणत्वाष्ट्रे प्रशस्ते तिथौ ।
कुम्भाजालिगते रवौ शुभकरे प्राप्तोदये भार्गवे
जीवज्ञास्फुर्जतां दिने नववधूवेश्मप्रवेशः शुभः ॥
इति निर्णयसिन्धौ बादरायणः ॥

**अलिञ्जरः**—मणिकः महत् जलपात्रमित्यर्थः ।
मणिकस्य अलिंजरस्येति गदाधरः पारस्करगृः—३-५-१
मृदादिनिर्मित जलाधारविशेषः इति शब्दकल्पद्रुमे ।

**अलूक्षः**—क्रोधादिवर्जितः इति माधवाचार्याः ।
अरूक्ष इत्यस्य पाठान्तरम् । आयुक्तशब्दे द्रष्टव्यम् ।

**अवकरः**—(१) "मार्जनीनिरस्तधूल्यादिसंचयः ।"
इति कल्पतरुः गार्हस्थ्य—४२२
अवकरः अमेध्यस्थानमिति हरदत्तः ।

(२) अवकरः दोषः "अवकर इत्येके" गौतमः—३-५-१३
दासः कर्मकरो वावकरादमेध्यपात्रमानीय ।
गौतमः—३-२-४

**अवकर्षणम्**—आकुञ्चनम् ।

**अवकाशः**—(१) देशः ।
अवकाशेषु चोक्षेषु नदीतीरेषु चैव हि ।
विविक्तेषु च तुष्यन्ति दत्तेन पितरः सदा ॥
मनुः—३-२०७

(२) स्थानम् ।
अग्निदानभक्तदांश्चैव तथा शस्त्रावकाशदान् ।
सन्निधातॄंश्च मोषस्य शिष्याच्चौरमिवेश्वरः ॥
मनुः—९-२७८

**अवकीर्णम्**—पृथूदकवर्त्ती तीर्थविशेषः सरस्वतीतीरस्थः ।
पृथूदके महातीर्थे अवकीर्णेति नामके ।
जुहाव धृतराष्ट्रस्य राष्ट्रं नरपतेस्ततः ॥
इति वामनपुराणम्—३८-२

**अवकीर्णः**—व्रतभ्रष्टब्रह्मचारी ।
"गुप्तायां वैश्यायामवकीर्णः सम्वत्सरं त्रिषवणमनुतिष्ठेत्" इति मिताक्षरायाम् ।
शङ्खलिखितौ—३-२८

**अवकीर्णव्रतम्**—अवकीर्णिनः विशुद्धये विहितं व्रतम् ।
अवकीर्णी तु काणेन गर्दभेन चतुष्पथे ।
पाकयज्ञविधानेन यजेत निर्ऋतिं निशि ॥
मनुः—११-११९

**अवकीर्णी**—व्रतभ्रष्टब्रह्मचारी । शब्दस्य प्रयोगः अवकीर्णशब्दे द्रष्टव्यः ।

**अवकूलनम्**—कुशाग्निना स्पर्श इति गोविन्दस्वामी ।
उच्छिष्टसमन्वारब्धानामवकूलनम् । बोधा०—१-१४-१
अम्राबुष्णीकरणमिति वैद्यकशब्दसिन्धौ ।

**अवकृष्टः**—जुगुप्सितः अवरः । चान्द्रायणं चरेत्सर्वानवकृष्टा-न्निहत्य तु । याज्ञ०—३-२६२

**अवक्रयः**—(१) अदत्तमूल्येन, अर्धदत्तमूल्येन भाटकदानेन वा वस्तुस्वीकारः ।
अर्धदत्तमदत्तं तु क्रयमाहुरवक्रयम् ।
अवक्रयो निवर्त्तेत यदि कालेन दीयते ॥
इति सरस्वतीविलासे सुमन्तुः—३२१

(२) भाटकम्—अवक्रयः शकटवलीवर्दादिभाटकमिति श्रीमूला । स्वयमभिप्रस्थितो वर्षावक्रयशेषं दद्यात् ।
कौट०—३-८-२५
प्रक्षेपं पण्यनिष्पत्तिशुल्कं वृद्धिमवक्रयम् ।
व्ययानन्यांश्च संख्याय स्थापयेदर्घमर्घवित् ॥
इति कौट०—४ २-३६

(३) लोके संज्ञा इति ख्यातः । यथा कौटलीये प्रक्रया-वक्रयाधिभोगभोगनिसृष्टोपभोक्तारश्चैषां प्रतिकुर्युः
—३-६-३६
अत्र, "फलिते अफलिते वा क्षेत्रादौ फलमेतावत् प्रतिनियतं स्वामिने दास्यामीति संविदाक्षेत्रादि स्वीकारोऽवक्रय इति श्रीमूला—३-६-३६

**अवक्षुतम्**—यस्योपरि क्षवथुः कृतः तादृशम् अन्नम् ।
इति हेमाद्रिः परि—७७३
अनर्चितं वृथा मांसमवीरायाश्च योषितः ।
द्विषदन्नं नगर्य्यन्नं पतितान्नमवक्षुतम् ॥
मनुः—४-२१३

**अवक्षेपः**—त्यागः ।
अवक्षेपेण हि सतामसतां प्रग्रहेण च ।
अभूतानां च हिंसानामधर्म्याणां प्रवर्त्तनैः ॥
कौट०—७-५-१६

**अवक्षेपणम्**—कुत्सनम् ।

**अवगणः**—असहाय । इति तीर्थचिन्तामणिः—२
बहूपकरणा यज्ञा नानासंभारविस्तराः ।
प्राप्यन्ते पार्थिवैरेते समृद्धैर्वा नरैः क्वचित् ॥
नार्थन्यूनैरवगणैरेकात्मभिरसंहतैः इति महाभारते ।
अवगणैः तक्षादिसहायरहितैरिति तीर्थप्रकाशे मित्रमिश्रः ॥

**अवगाढः**—पराभूतः पराजित इत्यर्थः ।
अवगाढा द्विषन्तो मे सुखो वातोऽभिवाति माम् ।
यस्त्वं धनमथाजैषीः कुरुभिर्ग्रस्तमाहवे ॥
महाभा० विरा—६८-७५

**अवगूरणम्**—तिरस्कारः ।
न्यङ्गावगोरणं वाचा क्रोधात्तु कुरुते यदा ।
वृत्तदेशकुलानां च अश्लीला सा बुधैः स्मृताः ॥
कात्यायनः—७७१
अवगूरणं तिरस्करणमिति लक्ष्मीधरः व्यवहार—४७२

**अवगृहीतः**—दण्डितः । श्रीमूला-कौटल्यः—३:१
तत्रापि क्रुद्धेनार्त्तेन मत्तेनोन्मत्तेनावगृहीतेन वा कृता व्यवहारा न सिद्ध्येयुरिति ।

**अवगोरणम्**—दण्डादिनिपातनोद्यमः । "अवगूर्यवर्षशतम्"
इति मनुः—११-२०६
अभिक्रुद्धावगोरणं ब्राह्मणस्य वर्षशतमस्वर्ग्यम् ॥
गौतमः—३-३-२०

**अवगोरणी**—दण्डनिपातनोद्यमी "अवगोरणी छिन्नहस्तः"
गौतमधर्म-सूत्रपरिशिष्ट—४-२७

**अवग्रहः**—निरोधः ।
अधर्मस्य प्रसङ्गेन धर्मस्यावग्रहेण च ।
अकार्य्याणां च करणैः कार्य्याणां च प्रणाशने ॥
कौट०—७-५-२०

**अवघट्टनम्**—निरोधः ।
प्रदीप्तं गृहमासन्न अद्भिर्यायात्त्वरान्वितः ।
सायं प्रातर्गृहद्वारं भिक्षार्थं नावघट्टयेत् ॥
इति कल्पतरौ देवलः । गार्हस्थ्य—४०६

**अवघोषणम्**—जनेषु सम्यक् ज्ञापनम् ।
प्रचारे चावघोषयेत् "अमुना प्रकृतेनोपहताः प्रज्ञापयन्तु"
इति कौट०—२-८-२४

**अवच्छातः**—उत्कृत्तचर्मा । भक्तत्यागेन कृशीभूत इति हरदत्तः
अनशनकर्शित-कलेवर इति विज्ञानेश्वरः—३-२४७
प्रायश्चित्तमग्नौ सक्तिर्ब्रह्मन्निरवच्छातस्य ।
इति गौतमः—३-४-२

**अवजयः**—तस्करादीनां नीचजनानां वा पराजितता-सम्पादनम् ।
चौरहृतमवजित्य यथास्थानं गमयेत् । गौतमः—३-४-२

**अवटः**—यस्य कूपस्य गभीरता पञ्चभ्यो हस्तेभ्यो न्यूना स अवटः । अवटोऽर्वाक् स पञ्चभ्य इति गर्गस्मरणात् । स च अवटः सोपानयुक्तः वापी इत्युच्यते इति । वाप्यवटयोर्भेदः ।

अवटं यो नरः कुर्य्यादपां पूर्णं सुशोभनम् ।
पितॄंस्तारयते पश्चात् तं दत्वा स नरोत्तमः ॥
इति केशववैजयन्त्युद्धृते स्कान्दे । विष्णुः—६१-१

**अवटुः**—कृकाटिका । याज्ञ०—३-६८
ग्रीवापश्चाद्भागः इति स्वामिमुकुटौ ।
ग्रीवायामुन्नतभागः घाटी इति ख्यात
इति अमरव्याख्याने—२-६-८८

**अवतारिणी**—(गौः) दानाय जले अवतारिता गौः ।
कनकालंकृतां कृत्वा तत्र (जले) गामवतारयेत् ।
सामगाय च सा देया ब्राह्मणाय विशांपते ॥
इति द्वैतनिर्णयोद्धृतमत्स्यपुराणे ॥

**अवतोका**— स्रवद्गर्भा गौः । अवतोका तु स्रवद्गर्भा
इत्यमरः—२-९-६९

**अवदानम्**—स्थापितहविषः । होमपरिमितस्य भागस्य ग्रहणार्थं खण्डनमवदानमिति श्रौतपदार्थनिर्वचने ।
वपां श्रपयित्वा स्थालीपाकमिश्राण्यवदानानि च रुद्राय वपामन्तरिक्षाय-इत्यादि पारस्करगृः—३-८-६
अवदानैर्वा सह । एकैकस्यावदानस्य द्विर्द्विरवद्यति ।
इति आश्वलायनगृ०—१-११-१४
अङ्गुष्ठपर्वमात्रम् । अङ्गुष्ठपर्वमात्रमवदानमिति
स्मृतिचन्द्रिकायामाह्निके—२४७

**अवधानम्**—(१) स्थापनम् ।
अथातो मणिकावधानम् । पारस्करः—३-५-१

(२) वेष्टनम् । अवधाय वेष्टयित्वा ।

इति गोभिलीय चन्द्रकान्तभाष्ये—१-२-२

दक्षिणं बाहुमुद्धृत्य शिरोऽवधाय सव्येऽंसे प्रतिष्ठापयति ।

दक्षिणं कक्षमन्ववलम्बं भवत्येवं यज्ञोपवीती भवति ॥

गोभिल-गृ०—१-२-२

**अवधूतम्**—"वस्त्रावधूननरेणुस्पृष्टमवधूतमिति माधवाचार्य्याः —६-६४

अवधूतं मुखवातेन वाससा वा निर्वापितम् ।

पादेन चापहतम् इति नन्दपण्डितः ॥

विष्णुः—२३-३८

न चैतदवधूनयेदित्यस्यव्याख्याने न च उत्क्षिप

उत्क्षिप्यान्नं पात्रे क्षिपेत् ।

अवधूतमुखश्वासहतमिति नरसिंहवाजपेयी ॥

नित्या०—१-१०१

**अवधूननम्**—कम्पनम् इति कुल्लूकः । मनुः—३-२२६

वस्त्रावधूननरेणुस्पर्श इति माधवः ।

**अवधूपनम्**—धूपेन स्वेदनम् ।

मृण्मयानां पात्राणानुच्छिष्टसमन्वारब्धानामवधूपनमिति वैजयन्त्यां बोधायनः । विष्णुः–२३-३३

**अवनेजनम्**—प्रक्षालनम् "पितरःशुन्धध्वमितिपाण्योरवनेजनं दक्षिणा निषिच्यानुलिप्य जपेत् ।"

इति पारस्करः—२-६-१४

**अवपन्नः**—संस्पृष्टः ।

मत् क्रुद्धातुराणां च न भुञ्जीत कदाचन ।

केशकीटावपन्नं च पदा स्पृष्टं च कामतः ॥

मनुः—४-२०७

अत्र अवपन्नं संसृष्टमिति हेमाद्रिः । श्राद्धकल्पे–६१०

**अवभृथः**—याज्ञिककर्मविशेषः । अर्वाचीनानि म्रियन्ते-यज्ञपात्राणि अस्मिन्निति अवभृथः "अयमृथ निचुम्पुण निचेरुरसि निचुम्पुणः" यजुः—३-४८

यजेत वाश्वमेधेन । मनुः—११-७४

**अवभृथस्नानम्**—अवभृथकालिकस्नानम् ।

**अवमः**—तिथिद्वयावसानयुक्तो करः ।

"यत्रैकः स्पृशतितिथिद्वयावसानंवारश्चेदवमदिनं तदुक्तमार्य्यैः । यः स्पर्शाद् भवति तिथित्रयस्य चाह्नां त्र्यहस्पृक्कथितामिदं द्वयंचनेष्टम्" इति निर्णयसिंधौ रत्नमाला । यो दिनवारः तिथिद्वयस्य अन्तद्वयं स्पृशति तद्दिनमवमम् इति पण्डितसर्वस्वकाराः ।

अवमः तिथिक्षय इति मुहूर्त्त चिन्तामणियाख्यायाम् ।

—२-५-६

अवमः सर्वनिकृष्ट इत्यर्थः ।

पूर्णप्रात्रोऽवमः पाकयज्ञानां दक्षिणा ॥

इति गोभिल-गृ०—१-६-१०

**अवमर्दः**—पीड़नम् ।

यन्त्राणि विविधान्येव क्रियास्तेषां च वर्णिताः ।

अवमर्दः प्रतीघातः केतनानां च भञ्जनम् ॥

महा० शान्ति०—५६-६२

**अवमेहनम्**—मूत्रकर्म इति हरदत्तः । आप०–११-३०-२७

अहोरात्रयोरुदग्दक्षिणामुखः प्रावृत्य शिर उच्चरेदवनेहेद्वा ।

बौधा०—१-६-१०-१०

**अवरम्**—उल्वम् । जरायुवेष्टितं गर्भवेष्टनमिति हरिहरः ।

पारस्कर-गृ०—१-१६-१

**अवरः**—(१) पश्चाद्वर्त्ती पुरुषः । एवमवरो वरः परेषाम् ।

आप०—२-६-२४-४

(२) हीनः । श्रद्दधानः शुभां विद्यामाददीतावरा अपि ।
अन्त्यादपि परं धर्मं स्त्रीरत्नं दुष्कुलादपि ॥

मनुः—२-२३८

**अवरार्ध्यः**—अवरः न्यूनतम इति यावत् ।
अवरपर्यायोऽवरार्ध्यशब्द इति हरदत्तः ।

आप०—२-६-२५-८

अवरार्ध्यः जघन्य कल्प इति कल्पतरौ ।

नियतकाल—१८४

**अवरुद्धा**—या दासी स्वामिना शुश्रुषार्थं गृहे एव स्थातव्यमित्येवं पुरुषान्तरोपभोगतो निरुद्धा सा अवरुद्धा इति मित्रमिश्रः । व्यवहारप्रका०—४०१ मिताक्षरायां तथैव—२-२६०

**अवरेढः**—द्वितीयेन पित्रा जातः ।
द्वितीयस्य पितुर्योन्निं भुक्त्वा परिणतो द्विजः ।
अवरेढ इति ज्ञेयः शूद्रधर्मेण जीवनः ॥

इति कल्पतरौ देवलः

शूद्रधर्मा स जातित इति चतुर्थपादपाठी हेमाद्रौ ।
अन्यथाऽपि तत्रैव परिशिष्टकाण्डे—३६०
द्वितीयेन तु यः पित्रा सवर्णायां प्रजायते ।
अवरेढ इति ज्ञेयः शूद्रधर्मा स जातितः ॥ इति

**अवरोपितः**—ह्रासतां प्रापितः । "इतरेष्वागमाद्धर्मः पादशस्त्ववरोपित" इति मनुः—१-८२

**अवरोहः**—ओहल इति भाषायाम् ।
अर्वाचीनमधः रोहन्ति जायन्ते इत्यवरोहाः यथा वटवृक्षशाखाभ्यो जाताः शिफाः भूमिमागच्छन्ति इत्येवं प्रकाशः ॥

**अवरोहणम्**—यानादिभ्य अवतरणम् ।
गार्दभं यानमारोहणे विषमारोहणावरोहणानिचवर्जयेत् ।

आप०—१-११-३२-२५

**अवर्णः**—निन्दा ।
विप्रतिपत्तौ विवादे अवर्णस्य स्थापने कृते ।
तत्रैव स्थापयेद्दिव्यं शिरः पूर्वं महीपतिः ॥

**अवलिप्तः**—गर्वितः ।
अवलिप्तस्य मूर्खस्य दुर्वृत्तस्य च दुर्मतेः ।
अन्नमश्रद्दधानस्य यो भुङ्क्ते स तु भ्रूणहा ॥

हेमाद्रौ यमः । परिशेषखण्डः—७६६

**अवलेखनम्**—(१) केश-प्रसाधनम् ।
कंकतादिना केशानां विभागे नावस्थापनमिति उज्वलावृत्तिः आप०—१-२-८-५
अवलेखन दन्तप्रक्षालनपादप्रक्षालनानि ।

इति गोभिलः—३-१-२१

(२) घर्षणम् । "उच्छिष्टसमन्वारब्धानामवलेखनम् ।"

बौधायनः—१-६-१३-२६

**अववर्णः**—चाण्डालादिः इति आह्निके मित्रमिश्रः ।
क्षुते श्लेष्मपरित्यागे धौते वा भक्षिते सति ।
अववर्णस्य संभाषे सुप्ते वा दन्तधावने ॥
आचम्य प्रयतो भूत्वा ततः शुद्धो भवेन्तरः ।

इति ब्रह्मपुराणे ।

अत्राधीते-पाठे इत्यस्य निष्ठायां रूपम् । नित्याचारे नरसिंहवाजपेयी—१-२६७

**अववाटः**—द्वितीयेन पित्रा जातः।

द्वितीयेन तु यः पित्रा सवर्णाया प्रजायते।
अववाट इति ख्यातः शूद्रधर्मा स जातितः॥

इति मन्वर्थमुक्तावल्यां देवलः। मनुः—१०-५

अववाटावरेढ़ौ पृथक्संज्ञाशब्दौ पाठभेदादुत्पन्नौ वेति संशयः।

**अवशः**—परतन्त्रः।अकाम इति यावत्।

नाद्यादविधिना मांसं विधिज्ञो नापदि द्विजः।
जग्ध्वा ह्यविधिना मांसं प्रेत्य तैरद्यतेऽवशः॥

मनुः—५-३३

**अवशर्धनम्**—कुत्सितो गुदशब्दः।

अवनिष्ठीवतो दर्पाद् द्वावोष्ठौ छेदयेन्नृपः।
अवमूत्रयतो मेढ्रमवशर्धयतो गुदम्॥ मनुः—८-२८२

**अवशी**—परतन्त्रः।

अस्वतन्त्रस्य निर्द्धनस्य इति उज्ज्वला।
अवशिनः कीनाशस्य कर्मन्यासे दण्डताड़नम्।

इत्यापस्तम्बः—२-११-२८-२

**अवषट्कारहोमः**—अग्निहोत्रोपासनवैश्वदेवादयः।

इति समयमयूखे—१६८

अवषट्कारहोमाश्च पर्वचान्द्रायणं तथा।
मलमालेऽपि कर्त्तव्यं काम्या इष्टी विवर्जयेत्।

इति गृह्यपरिशिष्टवचनं कालसारे॥

**अवष्टम्भः**—शीर्षकस्थ इति व्यवहारप्रकाशे मित्रमिश्रः।

पृ०—१७१

शीर्षकस्थस्तु पराजयप्रयुक्त दण्डभाक् इति शीर्षकशब्दे द्रष्टव्यः। अवष्टम्भः निश्चय इति व्यवहारतत्त्वे। अवष्टम्भेन सहितः सावष्टम्भः स्वोपरिदण्डमङ्गीकृत्य लापितः सावष्टम्भः, निश्चयः इति कल्पतरुः—२०६ महाभियोगेषु शंकितेषु सावष्टम्भेषु चाविशेषेण प्राप्तावपवादमाहेति विज्ञानेश्वरः—१-६५

**अवसक्थिका**—जानुनोरुपरिकरबन्ध इति लक्ष्मीधरः।

ब्रह्मचारीकाण्डः—२१८

उरौ पादमारोप्यावस्थानमिति गौतमीयवृत्तौ हरदत्तः। अवसक्थिका खट्वा इति वैद्यकशब्दसिन्धौ। वर्जयेदित्यनुवृत्तौ गुरुदर्शने कण्ठप्रावृतावसक्थिकापाश्रयणपादप्रसारणानि। इति गौतमः—१-२-२०

**अवसर्जनम्**—क्षतिपूरणम्।

"स्वामिभ्योऽव सृजेत्" आप०—२-११-२६-७

**अवसलवि**—अपसलवि, इत्यस्य पाठान्तरम्, अपसलविशब्दो द्रष्टव्यः।

**अवसानम्**—(१) गृहम्। "अथाभिशस्ताः समवसाय चरेयुः" इत्यापस्तम्बव्याख्यायाम् अवसानं गृहमिति हरदत्तः।

गृहेभ्यः स्वाहा अवसानेभ्यः स्वाहा।
अवसानपतिभ्यः स्वाहा इत्यादि॥

आपस्तम्बः—१-१०-२६-८

(२) गृहवास्तु।

तत्रावसानं प्राग्द्वारं यशस्कामो बलकामः कुर्वीत।

गोभिलः—४-७-१५

अवसानं समं समूलम्। मानव गृ०—२-११-१

(३) अवसानं भूप्रवेश इति देवपालः ।

काठक-गृ०—१-११-१

(४) मरणम् । न योषिद्भ्यः पृथक् दद्यादवसानदिनादृते ।

गोभिलस्मृतिः—२-१०३

(५) समाप्तिः ।

स चार्वाक् तर्पणात्कार्य्यः पश्चाद्वा प्रातराहुतेः ।

वैश्वदेवावसाने वा नान्यत्रत्तेँ तिमित्तकात् ॥

गोभिलस्मृतिः—२-१८

**अवसायः**—पराजयः।

धर्मशास्त्रार्थशास्त्रे तु स्कन्धद्वयमुदाहृतम् ।

जयश्चैवावसायश्च द्वे फले समुदाहृते ॥

इति स्मृतिचन्द्रिकायां कात्यायनः व्यवहारकाण्डः—२७

**अवस्कन्दः**—(१) कारणोत्तरम् ।

कारणं स्यादवस्कन्दो मिथ्या स्यात्साध्यनिह्नुतिः ।

इति व्यवहारचिन्तामणौ व्यासः ।

कारणोत्तरस्वरूपं यथा सत्यं गृहीतं प्रतिदत्त चेति ।

(२) विजिगीषूणां सेनानिवेशस्थानम् । (३) अवगाहनम् ।

(४) आक्रमणम् ।

**अवस्कन्दनम्**—कारणोत्तरम् । अवस्कन्द इत्यस्य नामान्तरम् स्वरूपं चास्य अवस्कन्दशब्दे द्रष्टव्यम् ।

**अवस्करः**—(१) गृहमार्जितपांश्वादिनिचयस्थानमिति

विज्ञानेश्वरः—२-१८२

(२) विष्ठेत्यमरः—२-६-६७

अवस्करस्थलश्वभ्रभ्रमस्यन्दनिकादिभिः ।

चतुष्पथसुरस्थानरथ्यामार्गांश्च रोधयेत् ॥

नारदः—११-१५

**अवस्तरणम्**—तूलिकोपरिपटः । अवस्तरणमुपरिपट इति हरदत्तः "आवसथं दद्यादुपरिशय्यामुपस्तरणमुपधानं सावस्तरणमभ्यञ्जनं चेति । आप०—२-३-६-१५

अवस्तरणं तूलिकोपरि पट इति कल्पतरौ ।

नियतकालः—१८४

**अवस्फूर्जनम्**—अशनिशब्दः ।

अवस्फूर्जनमशनिनिपात इति उज्ज्वलावृत्तिः ।

"अथापि वाजसनेयिब्राह्मणम् । ब्रह्मयज्ञोह वा एष यत् स्वाध्यायस्तस्यैते वषट्कारा यत् स्तनयति यद्विद्योतते यदवस्फूर्जति यद्वातो वायति" इति ।

आप०—१-४-१२-३

**अवस्फोटनम्**—अङ्गुलीनां सशब्दं प्रसारणमिति हरदत्तः।

गौतमः—१-६-५१

सावष्टंभेन भुजताडनमिति मित्रमिश्राः । छेदनभेदनविलेखनविमर्दनावस्फोटनानि नाकस्मात्कुर्य्यात् ।

बौधा०—१-६-५१

गौतमीयेऽप्येवं पाठः । अङ्गुल्याद्यङ्गस्फोटनमिति कल्पतरुः । ब्रह्मचारी—२१८

**अवहननम्**—कुट्टनम् । उलूखले उप्तानां ब्रीह्यादीनां नैस्तुष्यसिद्ध्यर्थं मुसलेन कण्डनम् अवहननम् ।

(२) अवहननं फुस्फुसः मिता०—३-६४

**अवहारः**—(१) दण्डः। अवहार्यशब्दो द्रष्टव्यः।

(२) ग्रहणम्। धार्म्यं शुल्कमवहारयेत्।

आप०—२-१०-२६-६

अनिच्छन्त्योर्ग्रहणम् अवहारः।

**अवहार्यः**—(१) दण्डनीयः।

अवहार्यो भवेच्चैव सान्वयः षट्शतं दमम्।
निरन्वयोऽनपसरः प्राप्तः स्याच्चौरकिल्बिषम्॥

मनुः—८-१४५

**अवहासः**—परिहासः।

यच्चावहासार्थमसत्कृतोऽसि विहारशय्यासनभोजनेषु।

भ० गी०—११-४२

कामं देशजातिगोत्रचरणमैथुनावहासेन नर्मयेयुः॥

कौट०—४-१-६१

**अवहितः**—सावधानः।

"वेदेतिहासधर्मशास्त्रार्थकुशलं कुलीनमव्यङ्गं तपस्विनं पुरोहितं च वरयेत्"—७०

शुचीनलुब्धान् अवहितान् शक्तिसंपन्नान् सर्वार्थेषु च सहायान्॥ ७१—विष्णुः—३-७१

**अवहितपाणिः**—द्रव्यहस्तः। अवहितपाणिः समित्कुशादि हस्तः दात्रादिहस्तो वेति उज्वलाकारः।

न सोपानद्वेष्टितशिरा अवहितपाणिर्वा सीदेत्।

आप०—१-२-६-१०

**अवहीनम्**—नष्टं क्षतिश्च।

अकृषन्तोऽवहीनं दद्युः। कौट०—२-१

**अवाकीर्णम्**—सरस्वत्यास्तीर्थविशेषः।

ब्रह्मयोनेरवाकीर्णं जगाम यदुनन्दनः।
यदा लभ्यो बको राजन्नाश्रमस्थो महातपाः॥

महाभा० शल्य०—४१-१

**अवारः**—वारः निर्दिष्टसमयः तद्भिन्नः कालः।

सेतुभ्यो मुञ्चतस्तोयमवारे षट्पणो दमः।
वारे वा तोयमन्येषां प्रमादेनोपरुन्धतः॥

कौट०—३-६-३८

**अविजातः**—प्राकृत इति नीलकंठः।

महाभा० विरा०—३८-१६

अविजातो विजातस्य मौर्ख्यात् धूर्तस्य पश्यतः।
परिदेवयते मन्दः सकाशे सव्यसाचिनः॥ इति

**अविदासी**—अशोष्यो ह्रदः।

अविदासी नाम अशोष्यो ह्रदः इति गदाधरः।

पारस्करगृ० भा०—१-८

अविदासिनो ह्रदान्सर्वसंपन्ना इत्याश्वलायनगृह्ये॥

—१५६

ग्रीष्मेऽप्यक्षीणजल इति चन्द्रकान्तः॥

गोभिलगृ०—४-५-२८

अवतारा ह्यसंख्येया हरेः सत्त्वनिधेर्द्विजाः।
यथाऽविदासिनः कुल्याः सरसः स्युः सहस्रशः॥

श्रीभागवते—१-३-२६

**अविमुक्तम्**—वाराणसीक्षेत्रम्। हेमाद्रौ जाबालोपनिषदि तु "अत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रतारकं ब्रह्म व्याचष्टे। येनासावमृती भूत्वा मोक्षी भवति तस्मादविमुक्तमेव॥ निषेवेताविमुक्तं न विमुञ्चेदेनमेवैतद् याज्ञवल्क्यः।

मात्स्ये—
विमुक्तं न मया यस्मान् मोक्ष्यते वा कदाचन ।
महत् क्षेत्रमिदं तस्मादविमुक्तमिति स्मृतम् ॥
काशीखण्डे—
मुनेः प्रलयकालेऽपि न तत्क्षेत्रं कदाचन ।
विमुक्तं हि शिवाभ्यां यदविमुक्तं ततो विदुः ॥
—२६-२७

शिवपुराणे च—२-१-६-३०
त्रिस्थलीसेतौ प्रविमुक्तं शिवाभ्यामिति पाठ उद्धृतः ॥

**अविमुक्तकः**—माधवीलतेति हेमाद्रौ श्राद्धकल्पे ।

**अविषह्या**—अनिर्णेया ।
सीमायामविषह्यायां स्वयं राजैव धर्मवित् ।
प्रदिशेद्भूमिमेतेषामुपकारादितिस्थितिः ॥
मनुः—८-२६५

**अवीरा**—पतिपुत्ररहिता स्त्री ।
अनर्चितं वृथामांसमवीरायाश्च योषितः ।
द्विषदन्नं नगर्य्यन्नं पतितान्नमवक्षुतम् ॥
न भुञ्जीत इति मनुः—४-२१३
अवीरा स्त्री स्वतन्त्रा व्यभिचारमन्तरेणापि ।
पतिपुत्ररहितेत्यन्ये इति विज्ञानेश्वरः ॥
याज्ञ०—१-१६३

**अवोक्षणम्**—अवाचीनेन हस्तेन जलप्रोक्षणम् ।
उत्तानेन तु हस्तेन प्रोक्षणं समुदाहृतम् ।
न्युब्जताभ्युक्षणं प्रोक्तं तिरश्चावोक्षणं स्मृतम् ॥
इति शुद्धितत्त्वे ॥
अयत्रापमार्जनप्रधावनावोक्षणेभ्यः इति गौतमः—१-२-६

**अव्यवस्था**—शृङ्खलाभङ्गः ।
अप्रामाण्यं च वेदानामार्षाणां चैव कुत्सनम् ।
अव्यवस्था च सर्वत्र एतन्नाशनमात्मनः ॥
इति वसिष्ठः—१२-४१

**अव्रतघ्नानि**—यानि व्रतघ्नानि न भवन्ति ।
अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः ।
हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम् ॥
इति प्रायश्चित्तविवेके बौधा०—२०-१०-१८-२२

**अव्रत्यम्**—नियमलोपकृतं पापम् ।
अथ यदि ब्रह्मचार्य्यव्रत्यमिव चरेत् ।
बौधा०—३-४-४-१

**अशोकवर्त्तिका**—पिष्टकभेद इति नित्याचारप्रदीपे—६६५
खण्डलड्डुक ग्रीवेष्टकासाराशोकवर्त्तिका ।
स्वस्तिका लोपिका दुग्धग्रीवेष्टक किलाटिका ॥
इति तत्रैव भविष्ये देवदेये ॥

**अशोकषष्ठी**—चैत्रशुक्लषष्ठीं आरण्यषष्ठीं पश्यन्तु ।

**अशोकाष्टमी**—चैत्रशुक्लाष्टमी ।
मीने मधौ शुक्लपक्षे अशोकाख्या तथाष्टमी ।
पिबेदशोककलिकाः स्नायाल्लौहित्यवारिणि ॥
इति स्कान्दे ।
अत्र श्रीलिङ्गराजदेवस्य रथयात्रा भवति ।

**अशौचम्**—अशौचशब्देन च कालस्नानाद्यपनोद्यः पिण्डोदकदानादिविधेः अध्ययनादिपर्युदासस्य च निमित्तभूतः पुरुषगतः कश्चनातिशयः न पुनः कर्मानधिकारमात्रम् ।
इति विज्ञानेश्वरः—३-१

**अश्मकुट्टः**—अश्मभिः पाषाणैः कुट्टयित्वायोभुङ्क्ते ।
अग्निपक्वाशनो वा स्यात् कालपक्वभुगेव वा ।
अश्मकुट्टो भवेद्वापि दन्तोलूखलिकोऽपि वा ॥
मनुः—६-१७

**अश्मन्तकः**—तृणविशेषः अपटेति प्रसिद्ध इत्याचारेन्दौ —२८६
"तृणविशेषः" अम्लकुचाइ इति भाषा, वृक्षविशेषश्च आवुटा इति पश्चिमदेशे ख्यातः इति शब्दकल्पद्रुमे । कुशसदृशः तृणविशेष इति कल्पतरुः ब्रह्म०—१११

**अश्मा**—पाषाणः विष्णुः—२३-७

**अश्रुमुखाः**—पितृपितामहप्रपितामहाः ।
पितापितामहश्चैव तथैव प्रपितामहः ।
त्रयो ह्यश्रुमुखा ह्येते पितरः संप्रकीर्तिताः ॥

**अश्लीकम्**—यत् श्रीकरं न भवति ।
अश्लीकमश्लीकरमिति कल्पतरुः । नियतकालः—२५६
अश्लीकमेतत्साधूनां यत्र जुह्वत्यमी हविः ।
प्रतीपमेतद्देवानां तस्मात्तत्परिवर्णयेत् ॥
मनुः—४-२०६

**अश्लीला वाक्**—अश्लीला भाषा ।
न्यंगावगूरणं वाचा क्रोधात्तु कुरुते यदा ।
वृत्तदेशकुलानां तु अश्लीला सा बुधैः स्मृता ॥
इति कात्यायनः ।
न्यंगावगूरणं निकृष्टांगप्रदर्शनेन तिरस्करणमित्यपरार्कः —२-२०४

**अश्वकर्णः**—वृक्षविशेष इति कालमाधवे । शालवृक्ष इति शिआलि लता इति च वैद्यकशब्दसिन्धौ ।
अश्वस्य कर्ण इत्यवयवार्थप्रतीतावपि तमुपेक्ष्य रूढ्या वृक्षविशेषवाचित्वस्वीकारात् । कालमाधवे—४

**अश्वतरः**—"अश्वात् गर्दभ्यामुत्पन्नः इति गदाधरः ।
पारस्करगृ०—३-१५-६
खरतुरगीयसंपर्काज्जातोऽश्वतरवज्जात्यन्तरत्वात्" इति कृल्लूकः—१-२
क्षुद्रपशवः सर्वथा अनिर्वार्याः अश्वतरगजवाजिनश्चादण्ड्याः अवश्याः शनैरपवार्य्याः इति शंखलिखितौ विवादरत्नाकरे—२४१

**अश्वन्तकः**—कुशसदृशतृणविशेषः इति कल्पतरौ संस्कारप्रकाशः—४३१

**अश्वपदम्**—नागकेशर-पुष्पमिति विष्णुदेये नरसिंहवाजपेयी।
नित्या०—१-६२७
"यूथिकाश्वपदं कुन्दं कदम्बं शिखिपिङ्गलम्" इति सम्पूर्णपाठः शेफालीशब्दे द्रष्टव्यः ।

**अश्वमेधः**—यज्ञविशेषः ।

**अश्वसूक्तम्**—अयं ते अस्तु हर्यत इत्यादि । ऋ—३-३-८
"गोसूक्तं चाश्वसूक्तं च इन्द्रशुद्धे च सामनी" इति विज्ञानेश्वरोद्धृतपाठः—३-३०८
अश्वसूक्तं यथा—
अयं ते इत्यादिमन्त्राणां विश्वामित्र ऋषिः बृहतीछंदः इन्द्रो देवता षोडशीशस्त्रे विनियोगः ।
ओं अयंते अस्तु हर्यतः सोम आहरिभिः सुतः ।
जुषाण इन्द्रहरिभिर्न आगह्या तिष्ठ हरितं रथम् ॥१॥

हर्यन्नुष समर्चयः सूर्यं हर्यन्नरोचयः ।
विद्वांश्चिकित्वान् हर्यश्ववर्धसइन्द्र विश्वा अभिश्रियः ॥२॥
यामिद्रो हरिधायसं पृथिवीं हरिवर्पसम् ।
आधारयद्धरितोर्भूरिभोजनं ययोरन्तर्हरिश्चरत् ॥३॥
जज्ञानो हरितोवृषाविश्वमाभाति रोचनम् ।
हर्यश्वो हरितं धत्त आयुधमावज्रं बाह्वोर्हरिम् ॥४॥
इन्द्रोहर्यन्तमर्जुनं वज्रंशुक्रैरभिवृतम् ।
अपावृणोद्धरिभिरद्रिभिः सुतमुद्गाहरिभिराजत ॥५॥
गोसूक्तमश्वसूक्तं च इन्द्रसूक्तं च साममी ॥

शङ्खः—११-४

"गोसूक्ताश्वसूक्ते सामनी यदिन्द्राहं यथा त्वं इत्यस्यामृचि प्रसिद्धे" इति कल्पतरुः । नियतकालः—६४

**अश्वस्तनिकः**—श्वोभवं धनं यस्यास्ति सश्वस्तनिकः । तथा न भवतीति अश्वस्तनिकः सद्यः प्रक्षालक इति यावत् ।
कुसूलधान्यको वा स्यात् कुम्भीधान्यक एव वा ।
त्र्यहैहिको वापि भवेदश्वस्तनिक एव वा ॥ मनुः—४-७

**अश्वारातिः**—पुष्पविशेषः । "करवीर" इति आचारेन्दौ निर्णयसिन्धौ च ।
"विल्वापामार्गजाती तुलसिशमिशताकेतकीभृङ्गदूर्वा-
मन्दाम्भोजाहिदर्भासुनितिलतगरब्रह्मकल्हारमल्यः ।
चम्पाश्वारातिकुम्भीदमनमरुवका विल्वतोहानिशस्ता
त्रिशत् ३० त्र्ये ३ का० १ यं० ६ री ६ शो ११
दधि ४ निधि० ६, वसु ८ भू १ भू १ यमा २
भूय एव ॥ इति निर्णयसिन्धौ वोपदेवः ।

**अष्टकर्मा**—आदाने च विसर्गे च तथा प्रैषनिषेधयोः ।
पञ्चमे चार्तवचने व्यवहारस्य चेक्षणे ॥
दण्डशुद्धयोः समायुक्तस्तेनाष्टगतिकोनृप ।
अष्टकर्मादिवं याति राजाशक्राभिपूजित ॥
इति उशनसोक्तं विवरणं चास्य मन्वर्थमुक्तावल्यांद्रष्टव्यम्।

मनुः—७-१५४

**अष्टका**—श्राद्धतिथिविशेषः । "ऊर्ध्वमाग्रहायण्यास्तिस्रोष्टकाः ऐन्द्री वैश्वदेवी प्राजापत्या पित्र्येति अपूप मांसशाकैः यथासंख्यम्" पारस्करः—३-३-३
मध्यावर्षे च तुरीया शाकाष्टका । पारस्करः—३-३-३
तेन पौषमाघफाल्गुनानां कृष्णाष्टम्यास्तिस्रः आश्विनकृष्णाष्टमी चेति, चतस्रः अष्टकाः । हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टकैकस्यां चेत्याश्वलायनः । एतन्मते चैत्री च ॥
कालसारोद्धृत वायुपुराणेऽपि—
पितृदानाय मूले स्यूरष्टकास्तिस्र एव च ।
कृष्णपक्षे विशिष्टा हि पूर्वा चैन्द्रीति भाष्यते ॥
प्राजापत्या द्वितीया स्यात्तृतीया वैश्वदेविका ।
आद्या पूपैः सदा कार्या मांसैरन्या भवेत्तथा ॥
शाकैः कार्या तृतीया स्यादेष द्रव्यगणे विधिः ।
अष्टकैव च पितृणां नित्यमेव विधीयते ॥
यचाप्यन्या चतुर्थी स्यात्तां च कुर्याद् विशेषतः ॥

इति चतुर्थी न नित्या ॥

**अष्टचत्वारिंशत् संस्काराः**—चत्वारिंशत संस्कारा अष्टौ चात्मगुणाः इति एते अष्टचत्वारिंशत्संस्कारा भवन्ति । ते च गौतमेन प्रदर्शिताः स्व स्व शब्दे द्रष्टव्याः । गौतमः—१-८-१३-२४

**अष्टपलम्**—अष्टौ पलानि । मानिकाशवराश्च पर्यायशब्दाविति भावप्रकाशे उक्तम् । खारीशब्दे द्रष्टव्यम् ।

**अष्टभोगाः**—आदौ निधिः सदा प्रोक्तो निक्षेपस्तदनन्तरम् ।
जलपाषाणकौ पश्चाद् अक्षिण्यागामिनौ तथा ।
सिद्धाः साध्याश्च विक्रेयाश्चाष्टभोगाः प्रकीर्त्तिताः ॥
इति वरदराजीये मनुः ॥
प्रकाशित-मनुपुस्तकेषु नायं पाठः समुपलभ्यते ।

**अष्टमङ्गलानि**—लोकेऽस्मिन्मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः ।
हिरण्यं सर्पिरादित्य आपो राजा तथाष्टमः ॥
एतानि सततं पश्येन्नमस्येदर्चयेच्च यः ।
प्रदक्षिणं च कुर्वीत तथास्यायुर्न हीयते ॥
नारदसंहिता—१६-५१

**अष्टमानम्**—कुडवापरपर्यायः खारीशब्दे द्रष्टव्यः ।

**अष्टमिका**—कर्षद्वयमिति भावप्रकाशे खारीशब्दे द्रष्टव्या ।

**अष्टवसवः**—ध्रुवो ध्वरश्च सोमश्च आपश्चैवानलोनलः ।
प्रत्यूषश्च प्रभावश्च वसवोऽष्टौ प्रकीर्त्तिताः ॥
मिताक्षरायां तु—
"धरोध्रुवस्तथासोम आपश्चैवानिलोनलः ।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्त्तिताः ॥—२-१०२

**अष्टाकपालः**—अष्टासु कपालेषु संस्कृतः पुरोडाशः ।

**अष्टाक्यम्**—अष्टका इति नरसिंहवाजपेयी ।
"वैरमणे गुरुष्वष्टाक्यत्वौपाकरण इति त्र्यहाः"
आप०—१-३-१०-२

**अष्टाङ्गपिण्डः**—मधु साज्यं जलं सार्धं पुष्पं धूपं विलेपनम् ।
बलिं दद्याच्च विधिवत् पिण्डोऽष्टांगो भवेत्तथा ॥
इति कालसारोद्धृतब्राह्मे ॥

**अष्टाङ्गप्रणामः**—प्रणामविशेषः ।
उरसा शिरसा दृष्ट्या मनसा श्रद्धया तथा ।
पद्भ्यां कराभ्यां वाचा च प्रणामोऽष्टांग उच्यते ॥
पुराणान्तरे इति पूजाप्रकाशे—८८

**अष्टाङ्गमैथुनम्**—स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम् ।
संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ॥
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ।
विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम् ॥
इति गोभिलः । हेमाद्रिपरिशेषः—१००४

**अष्टाङ्गोऽर्घ्यः**—आपः क्षीरं कुशाग्राणि दध्यक्षततिलास्तथा ।
यवाः सिद्धार्थकाश्चैवमर्घोऽष्टाङ्गः प्रकीर्त्तितः ॥
पूजाप्रकाशे—३४
स्कान्दे काशीखण्डे तु—
सदध्ना मधुनाज्येन नीरार्द्राक्षतदूर्वया ।
तिलैः कुशैः प्रसूनैस्तमष्टाङ्गार्घ्यैरपूजयत् ॥—१-४४
दध्यक्षतकुशाग्राणि क्षीरं दूर्वा तथा मधु ।
यवाः सिद्धार्थकास्तद्वदष्टाङ्गोऽर्घः फलैः सह ॥
इति मात्स्ये—२६६-२
आपः क्षीरं कुशाग्राणि दध्याज्यमधुतण्डुलाः ।
तिलाश्च सर्षपाश्चैव अर्घ्योऽष्टाङ्गः प्रकीर्त्तितः ॥ इति
शङ्करस्य अष्टाङ्गोर्घ्य उक्तः भविष्ये नित्याचारप्रदीपोद्धृते ।

**अष्टादश-पुराणानि**—
ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा ।
तथान्यन्नारदीयं च मार्कण्डेयं च सप्तमम् ॥
आग्नेयमष्टमं चैव भविष्यं नवमं स्मृतम् ।
दशमं ब्रह्मवैवर्त्तं लैङ्गमेकादशं स्मृतम् ॥

वाराहं द्वादशं चैव स्कान्दं चैव त्रयोदशम्।
चतुर्दशं वामनं च कौर्मं पञ्चदशं स्मृतम् ॥
मात्स्यं च गारुडं चैव ब्रह्माण्डं च ततः परम् ॥
विष्णु० पु०—३-६-२१-२४

**अष्टादश-मातृगणः—**
गौरीपद्माशचीमेधासावित्री विजया जया ।
देवसेना स्वधा स्वाहा मातरो लोकमातरः ।
धृतिः पुष्टिः क्षमा तुष्टिः आत्मदेवतया सह । कुलदेवता—१८
गणेशेनाधिकास्त्वेता वृद्धौ पूज्याश्च षोड़श ।
इति गोभिलस्मृतौ ॥

**अष्टादशविद्याः—**
अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः।
धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश ॥
आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः ।
अर्थशास्त्रं चतुर्थं तु विद्या ह्यष्टादश स्मृताः ॥
इति विष्णुपुराणे—३-६-२८

**अष्टापाद्यम्**—अष्टगुणम् । "अष्टापाद्यं तु विप्रस्य स्तेये भवति किल्विषम्" मनुः – ८-३३७

**अष्टिः**—हानिः दोष इति यावदिति मित्रमिश्राः ।
त्यजेत्प ञ्चाष्टिकं चापि विषसंयुक्तदुग्धवत् ।
पञ्च अष्टयोऽस्मिन्निति पञ्चाष्टिकम् ॥

**अष्टौ शान्तिः**—द्यौः शान्तिरित्यादिको मन्त्रः । अष्टौ शान्तिरिति नित्याचारप्रदीपे—२-१०६
चतुःस्वस्ति पयः पञ्च षड्विष्णो द्वादशदेवताः ।
अष्टौ शान्तिं प्रकुर्वीत पुनर्जन्म न विद्यते ॥
इति यजुर्विधाने ॥

**अष्ठीला**—फलान्तर्ग्रन्थिः । महाभा० उद्०—७५-१६
अनित्यं किल मर्त्यस्य पार्थ चित्तं चलाचलम्।
वात-वेग-प्रचलिता अष्ठीला शाल्मलेरिव ॥ इति

**असंस्तुता**—अपरिचिता ।
"असंस्तुतापि परपत्नी भगिनीति वाच्या पुत्रीति मातेति वा" विष्णुः—३२-७

**असकाशः**—दूरम् "सकाशशब्दे प्रयोगो वक्ष्यते ।

**असंकुसुकः**—स्थिरमतिः इति कुल्लूकः ।
अनग्निरनिकेतः स्याद् ग्राममन्नार्थमाश्रयेत् ।
उपेक्षकोऽसङ्कुसुको मुनिर्भाव समाहितः ॥
मनुः—६-४३
अजिह्मोऽशठोऽशरणोऽसंकुसुकः । वसिष्ठः—१०-२७

**असनः**—तन्नामप्रसिद्धो वृक्षविशेषः दन्तकाष्ठाय विष्णुना प्रदर्शितः । तत् सूत्रं (६१-४१) अरिमेदशब्दे द्रष्टव्यम् । असनः आसन इति मध्यदेशेप्रसिद्ध इति मित्रमिश्रः ।
आह्निके—१२५
असनः जीवकमिति नन्दपण्डितः वैजयन्त्याम्—६१-१४

**असाक्षी**—असाक्ष्यपि हि शास्त्रेषु दृष्टः पञ्चविधो बुधैः।
वचनाद्दोषतोभेदात्स्वयमुक्तिमृतान्तरः ॥
श्रोत्रियाद्यावचनतः स्तेनाद्या दोषदर्शनात् ।
भेदाद्विप्रतिपत्तिः स्याद्विवादे यत्र साक्षिणाम् ॥
स्वयमुक्तिरनिर्दिष्टः स्वयमेवेत्यो वदेत् ।
मृतान्तरोऽर्थिनि प्रेते मुमूर्षु श्रावितादृते ॥
श्रोत्रियास्तापसा वृद्धा ये च प्रव्रजिता नराः ।
असाक्षिणस्ते वचनान् नात्र हेतुरुदाहृतः ॥

स्तेनाः साहसिकाश्चण्डाः कितवा वधकाश्च ये।
असाक्षिणस्ते दुष्टत्वात्तेषु सत्यं न विद्यते ॥
राज्ञा परिगृहीतेषु साक्षिष्वेकार्थनिश्चये।
वचनं यत्र भिद्येत ते स्युर्भेदादसाक्षिणः ॥
अनिर्दिष्टस्तु साक्षित्वे स्वयमेवेत्य यो वदेत्।
सूचीत्युक्तः स शास्त्रेषु न स साक्षित्वमर्हति ॥
योऽर्थः श्रावयितव्यः स्यात्तस्मिन्नसति चार्थिनि।
क्व तद्वदतु साक्षित्वमित्यसाक्षी मृतान्तरः ॥
सन्तोऽपि न प्रमाणं स्युर्मृते धनिनि साक्षिणः।
अन्यत्र श्रावितावस्मात्स्वयमासन्नमृत्युना ॥

नारदसंहिता—२-८२

**असिपत्रवनम्**—नरकविशेषः, नरकशब्दे मृग्यः।

**असूया**—गुणेषु दोषारोपः।

पराभ्युदयानुसन्तापः असूया इति हरदत्तः।

आप०—१-१-३-२४

**असौत्रः**—अरजकः। असौत्रेण अरजकेन इति हरिहर-गदाधरौ।

"अहतं वासो धौतं वाऽसौत्रेण" इति पारस्करः

—२-६-१५

**अस्तेयम्**—अहार्यपरस्वानपहार इति हेमाद्रिः अदत्तानुपादानमिति विज्ञानेश्वरः—१-१२२

परद्रव्यानपहार इति च विज्ञानेश्वरः याज्ञ०—३-६६

**अस्त्रम्**—शरादि, अस्यते निक्षिप्यते यत्।

**अस्थि**—शरीरस्थं चतुर्थं धातु। तच्च षष्ठ्युत्तरशतत्रयसंख्यापरिमितम्। तदाह याज्ञवल्क्यः—

स्थाले सह चतुःषष्टिर्दन्ता वै विंशतिर्नखाः।
पाणिपादशलाकाश्च तेषां स्थानचतुष्टयम् ॥८४॥
षष्ट्यङ्गुलीनां द्वे पार्ष्ण्यौ गुल्फेषु च चतुष्टयम्।
चत्वार्यरत्निकास्थीनि जङ्घयोस्तावदेव तु ॥८६॥
द्वे द्वे जानुकपोलोरुफलकांससमुद्भवे।
अक्षतालूषकश्रोणीफलके च विनिर्दिशेत् ॥८७॥
भगास्थ्येकं तथा पृष्ठे चत्वारिंशच्च पञ्च च।
ग्रीवा पञ्चदशास्थि स्यात् जत्र्येकैकं तथा हनुः ॥८५॥
तन्मूले द्वे ललाटाक्षिगण्डे नासाघनास्थिका।
पार्श्वकाः स्थालकैः सार्द्धमर्बुदैश्च द्विसप्ततिः ॥८६॥
द्वौ शङ्खकौ कपालानि चत्वारि शिरसस्तथा।
उरः सप्तदशास्थीनि पुरुषस्यास्थिसंग्रहः ॥

याज्ञ०—३-६०

**अस्पृहा**—गौतमोक्त आत्मगुणविशेषः।

विवर्जयेदसन्तोषं विषयेषु सदा नरः।
परद्रव्याभिलाषं च साऽस्पृहा कथ्यते बुधैः ॥

इति गौतमविवृत्तौ—१-८-२४

यथोत्पन्नेन कर्त्तव्यः सन्तोषः सर्ववस्तुषु।
न स्पृहेत परदारेषु साऽस्पृहा परिकीर्त्तिता ॥

अत्रिसंहिता—३८

**अस्यन्दनम्**—एकत्रावस्थानम्।

शकटं शाकटो गावो जालमस्यन्दनं वनम्।
अनूपं पर्वतो राजा विपत्तौ नववृत्तयः ॥

इति नित्याचारप्रदीपे छागलेयः ॥

**अस्यवामीयम्**—अस्यवामस्य पलितस्य इत्यादिसूक्तम्।
ऋ० अ०—२-३-१४

सकृज्जप्त्वास्य वामीयं शिवसंकल्पमेव च।
सुवर्णमपहृत्यापि क्षणाद् भवति निर्मलः॥
मनुः—११-२५०

द्विपञ्चाशदृक्संख्यकमिदमिति मिताक्षरायाम्।—३-३०२

**अस्रः**—(१) लोहगोलकादिषु अश्लक्ष्णता, भाषायां आंस इति प्रसिद्धा।

अस्रहीनं समं कृत्वा अष्टाङ्गुलमयोमयम्।
पिण्डं तु तापयेदग्नौ पञ्चाशत्पलिकं समम्॥
इति मिताक्षरायां पितामहः—२-१०५

(२) गृहादीनां कोणः।

चतुरस्रे समे क्षेत्रे परिधी कर्णभूषिते।
अष्टास्रं वर्द्धयेद् येन विधिना तत् शृणुष्व मे॥
इतीशानसंहितायावचनमित्याचारप्रदीपे—१-१६६

**अस्रम्**—लोतकम् रोदनमिति मित्रमिश्राः।

अस्रंगमयति प्रतान्कोपोऽरीननृतंशुनः।
पादस्पर्शो तु रक्षांसि दुष्कृतीनवधूननम्॥
मनुः—३-२३०

**अस्रामा**—अम्लाना, गोभिलः—२-६-६

प्रागुदीच्यां दिशि न्यग्रोधशुङ्गामुभयतः फलामस्रामामकृमिपरिसृप्तां त्रिसप्तैर्यवैर्माषैर्वा परिक्रीयोत्थापयेत॥
इति गोभिलगृ०—२-६-६

अत्र अस्राना अम्लाना इति चन्द्रकान्तः॥

**अस्विन्नम्**—असिद्धधान्यम्। आतपतण्डुला इति यावत् हैमान्तिकं सिताऽस्विन्नमित्यादि हविष्यप्रकरणे विहितं हविष्यशब्दे द्रष्टव्यम्।

**अहतम्**—सकृद्धौतं वस्त्रम्। अहतमधौ तमिति हेमाद्रिः ईषद्धौतमिति स्थानान्तरे स एव। तत्र ईषद्धौतम् अकारुधौतमिति। तदुक्तं सत्यतपसा—

अहतं यन्त्रनिर्मुक्तमुक्तं वासः स्वयंभुवा।
शस्तं तन्माङ्गलिक्येषु तावत्कालं न सर्वदा॥

अहतमनुपभुक्तमभिनवमिति गोविन्दस्वामी।

अहतं वाससां शुचि। बौधा०—१-१३-४

अहतं नव्यं सदशं सकृत्प्रक्षालितमिति हरिहरः।
पारस्करः—१-१४-३

ईषद्धौतं नवं श्वेतं सदशं यन्नधारितम्।
अहतं तद्विजानीयात्पावनं सर्वकर्मसु॥
इति हलायुधकोशव्याख्योद्धृते महाभारते॥

**अहिंसा**—अविहितवधवर्जनमिति हेमाद्रिः।

अहिंसकस्य दान्तस्य धर्मार्जितधनस्य च।
नित्यं च नियमस्थस्य सदा सानुग्रहा ग्रहाः॥ इति
अहिंसासत्यमस्तेयं शौचमिन्द्रियनिग्रहः।
दानं दमो दया क्षान्तिः सर्वेषां धर्मसाधनम्॥
याज्ञ०—१२२

**अहिः**—नागचम्पकः (पुष्पवृक्षः) इत्याचारेन्दौ। नागकेशर इति निर्णयसिन्धौ। प्रयोगस्त्वश्वारातिशब्दे द्रष्टव्यः।

**अहितुण्डिकः**—सर्पक्रीडोपजीवी।
इति व्यवहारप्रकाशे—११८

**अहीनः**—अनेकसुत्याको यागः द्विरात्रादिद्वादशाहान्तः इति नन्दपण्डितः ।

अयाज्ययाजनं कृत्वा परेषामन्त्यकर्म च ।
अभिचारमहीनं च त्रिभिः कृच्छ्रैर्व्यपोहति ॥

विष्णुः—५४-२५

व्रात्यानां याजनं कृत्वा परेषामन्त्यकर्म च ।

मनुः—११-१९७

**अहुतः**—जपः । मनुः—३-७४

जपोऽहुतो हुतो होमः प्रहुतो भौतिको बलिः ।
ब्राह्मं हुतं द्विजाग्र्यार्चा प्रशितं पितृतर्पणम् ॥

मनुः—३-७४

उपहारोऽहुतानाम् इति काठकगृह्ये—१३-४

उपहारः—उपाग्निविष्टरमास्तीर्य आवाहनं कृत्वा स्रजोगन्धांश्चोपहृत्य धूपं प्रदाय बल्युपहारादिदानान्तम्॥ इति देवपालभाष्ये ॥

अहुतः संध्यावन्दनादिरिति श्रीनिवासाध्वरिव्याख्यायाम्।

जैमि० गृ—१-१

अहुतः होमबलिरहितं कर्म यथास्रस्तरारोहणम् ।

इति हरिहरभाष्ये पारस्करः—१-४-१

# आ

**आकरः**—(१) उत्पत्तिस्थानम् ।

सर्वाकरेष्वधीकारो महायन्त्रप्रवर्त्तनम् ।
हिंसौषधीनां स्त्रीजीवोऽभिचारो मूलकर्म च ॥

मनुः—११-६३

आकराः शुचयः सर्वे वर्जयित्वा सुराकरम् ।
अदूष्यास्सन्तता धारा वातोद्धूताश्च रेणवः ॥

बौधा०—१-६-६-३

आकाराहृतवस्तूनि नाशुचीनि कदाचन ।
आकराः शुचयः सर्वे वर्जयित्वा सुराकरम् ॥

अत्रिसंहिता—२४०

**आकर्षफलकम्**—आकर्षफलकेन औदुम्बर्येण बाहुमात्रेण सर्पाकृतिना इति हरिहरः ।

स यावन्तं गणमिच्छेत्तावतस्तिलानाकर्षफलकेन जुहुयात् । पारस्करगृ०—२-१०-१७

आकर्षफलकम् वैकंकतमिति गदाधरः ।

**आकारः**—देहभवस्वेदरोमांचादिरिति कुल्लूकः ।

बाह्यैर्विभावयेल्लिंगैर्भावमन्तर्गतं नृणाम् ।
स्वरवर्णेङ्गिताकारैश्चक्षुषा चेष्टितेन च ॥ मनुः—८-२५

**आकामावै**—आषाढ़-कार्त्तिक-माघ-वैशाखमासाः । अत्र-नामैकदेशग्रहणेन नाममात्रस्य ग्रहणम् ।

आकामावैषु यच्छ्राद्धं यच्च दानं यथाविधिः ।
उपवासादिकं यच्च तदनन्तफलं स्मृतम् ॥
आषाढी कार्त्तिकी माघी वैशाखीषु च यत्कृतम् ।
तदनन्तफलं प्रोक्तं स्नानदानजपादिकम् ॥

इति गौतमधर्मसूत्रक्रियाकाण्डे—४६१

**आकारणम्**—आह्वानम् ।

आकारणे रक्षणे च साक्ष्यर्थप्रतिवादिनाम् ।
सभ्याधीनः सत्यवादी कर्त्तव्यस्तु स्वपूरुषे ॥

इति व्यवहारमयूखे बृहस्पतिः पृ—३

**आकालिकः**-आकालिकानिर्घातभूमिकम्प राहुदर्शनोल्का।

गौतमः—२-७-२२

तद्दिननिर्दिष्टसमयात्परेद्युः तत्कालपर्य्यन्तः अनध्यायः । यस्मिन् काले एते भवन्ति परेद्युस्तत्पर्यन्तं काल आकालः तत्संबद्ध आकालिकः ।

**आकाशगङ्गा**—निर्मेघवृष्टिः ।

आकाशगङ्गासलिलं समादाय गभस्तिमान् ।
अनभ्रगतमेवोर्व्यां समुत्क्षिपति रश्मिभिः ॥
तस्य संस्पर्शनिर्धूतपापपङ्को द्विजोत्तमः ।
न याति नरकं सद्यो दिव्यं स्नानं हि तत्स्मृतम् ॥

विष्णुपु०—२-६-१४

अनभ्रवृष्टौ निरावरणस्य अवस्थानं दिव्यस्नानमिति नित्याचारप्रदीपे—१-३४५

**आकाशजननी**—प्राचीरस्थवक्षक्षुद्रछिद्रम् ।

प्रगण्ड्यां एकपक्षायां भित्तौ तत्रत्यानां रक्षणभूतायां वाह्यार्थदर्शनार्थानि क्षुद्रछिद्राणि (आकाशजनन्यः) यद्वारा आग्नेयास्त्रगुलिकाः प्रक्षिप्यन्ते इति नीलकण्ठः ।

प्रगण्डीः कारयेत्सम्यगाकाशजननीस्तथा ।
आपूरयेच्च परिखां स्थाणुनक्रझषाकुलाम् ॥

महाभा० शान्ति०—६९-४३

**आक्रन्दः**—(१) आक्रन्द उच्चैःशब्द इति मेधातिथिः ।

छेदने चैव यन्त्राणां योक्त्ररश्म्योयोस्तथैव च ।
आक्रन्दे चाप्यपेहीति न दण्डं मनुरब्रवीत् ॥

मनुः—८-२९२

(२) आक्रन्दः पर्ष्णिग्राहस्य पार्ष्णिग्राहः— राजमण्डले विजिगीषोः पृष्ठवर्त्तिभूपतिरितिकुल्लूकः ॥

मनुः—७-२०७

आक्रन्दः पृष्ठमित्रम् इति श्रीमूला—७-१३-४१

मित्रेण ग्राहयेत्पार्ष्णीमभियुक्तोऽभियोगिनः ।
मित्रमित्रेण चाक्रन्दं पार्ष्णिग्राहान्निवारयेत् ॥

**आक्रीड़ः**—क्रीड़ास्थानम् । महाभा० उद्—१००-१४

आक्रीडान् पश्य दैत्यानां तथैव शयनान्युत ।
रत्नवन्ति महार्हाणि भजनान्यासनानि च ॥

**आक्रीड़ी**—सततक्रीडनशील इति कल्पतरुः श्राद्धकाण्डे-८८

मृगयाशील इति हेमाद्रिः । हेमा० परि०—४६५

**आक्रोशः**—(१) विशुद्धबुद्धया उच्चैर्भाषणम् ।

उच्चैर्भाषणमाक्रोश इति विज्ञानेश्वरः । मिता०-२-२०४

कलहप्रियाः खलु गौड़ाः इति देशाक्रोशः ।

नितान्तं लोलुपाः खलु विप्रा इति जात्याक्रोशः इत्यादि॥

**आक्षारणम्**—परदारागमनाभिशापः इति प्रायश्चित्तविवेके शूलपाणिः ।

**आक्षारितः**—मैथुननिमित्तं मिथ्यादूषितः ।

यस्त्वनाक्षारितः पूर्वमभिभाषेत कारणात् ।

मनुः—८-३५५

अत्र अनाक्षारितः—

तत्स्त्रीप्रार्थनाभिशापरहित इति कुल्लूकः ।

**आक्षिकम्**—द्यूतपराजयनिमित्तकं ऋणम् इति स्मृतिचन्द्रिकायाम् । व्यवहार०—३९६

**आक्षिप्तषण्डः**—रेतो निरोधात् षण्डीभूत इति मित्रमिश्रः । विसर्गसमये यस्य रेतः प्रत्यक् प्रवर्त्तते इत्यपरार्कः । —१-५५

आक्षिप्तमोघवीजाभ्यां कृतेऽपि पतिकर्मणि ।
पतिरन्यः स्मृतो नार्य्या वत्सरार्द्धं प्रतीक्ष्य तु ॥

नारदः—१२-१६

**आक्षुतम्**—क्षुतेनाक्रान्तमिति हेमाद्रिः ।

मूषकस्य पुरीषं वा क्षुतं यच्चावधूनितम् ।
भस्मना स्पृश्य चाश्नीयादभ्युक्ष्य सलिलेन वा ॥

आक्षेपः—(१) आज्ञातिक्रम इति विज्ञानेश्वरः।

(२) भर्त्सनम्।

साक्षेपं निष्ठुरं ज्ञेयमश्लीलं व्यङ्गसंयुतम्।

इति नारदः—२-२०४

(३) ऋणिकहस्तात् प्रयुक्त धनग्रहणम्।

"जीवति पितरि पुत्राणामर्थादानविसर्गविभागाक्षेपेष्वस्वातन्त्र्यम्" इतिव्यवहारमयूखे हारीतः—५६

आक्षेपः ऋणिकहस्तात् तद्धनग्रहणमिति चण्डेश्वरः।

विवादरत्नाकरः—४६१

(४) दोषोत्पाद इति बालम्भट्टी।

फलमूलोदकादीनां क्षेत्रोपकरणस्य च।

भङ्गाक्षेपोपमर्द्दाद्यैः प्रथमं साहसं स्मृतम्॥

नारदः—१४-४

आक्षोडम्—काश्मीरप्रसिद्धगिरिसंभवपिलुफलमिति-दिव्यसिंहमहापात्राः। हेमाद्रिस्तु आक्षीडम् आखोटमिति च पाठभेदो प्रदर्श्य आखोटं, द्वीपान्तरीयपिलुफलं आखरोट इति प्रसिद्धमित्याह। संप्रति तत् आखुरोट् इत्युच्यते।

आखुः—मूषिकः। स्थूलोन्दुर इति हेमाद्रौ परि०—५८५ महामूषिक इति गृहस्थ-रत्नाकरः। धान्यं हृत्वा भवत्याखुः इति मनुस्मृतिः—१२-६२

स्थूलोन्दुररिति वीरमित्रोदये।

आख्यानम्—बाह्वृचादौ पठ्यमानं सौपर्णमैत्रावरुणादि इति कुल्लूकः।

स्वाध्यायं श्रावयेत् पित्र्ये धर्मशास्त्राणि चैव हि।

आख्यानानीतिहासांश्च पुराणानि खिलानि च॥

मनुः—३-२३२

आगः—अपराधः।

आगःसु ब्राह्मणस्यैव कार्यो मध्यमसाहसः।

विवास्यो वा भवेद्राष्ट्रात् सद्रव्यः सपरिच्छदः॥

मनुः—६-२४१

आगमः—(१) वेदः।

"सतामाश्वासयत्कन्यां दृष्टान्तागमहेतुभिः।

महाभा० उद्०—१७५-४५

अत्र आगमो वेद इति नीलकण्ठः।

(२) प्राप्तिः।

चतुष्पात्सकलो धर्मः सत्यं चैव कृते युगे।

नाधर्मेणागमः कश्चिन्मनुष्यान् प्रतिवर्त्तते॥

मनुः—१-८१

शास्त्रं च विविधागममिति मनुः—१२-५

(३) शास्त्रम्।

दिव्यस्य स्वरूपप्रामाण्ययोरागमगम्यत्वात्।

मिताक्षरा—२-२२

(४) स्वत्वहेतुः प्रतिग्रहक्रयादिः। मिताक्षरा—२-२७

संभोगो दृश्यते यत्र न दृश्येतागमः क्वचित्।

आगमः कारणं तत्र न संभोग इति स्थिति॥

मनुः—८-२००

(५) तन्त्रशास्त्रम्।

आगतं शिववक्त्रेभ्यो गतं च गिरिजामुखे।

मतं च वासुदेवस्य तस्मादागममुच्यते॥

इति तन्त्रशास्त्रे॥

(६) जनप्रवादः।

असाक्षिकहते चिह्नैर्युक्तिभिश्चागमेन च।

द्रष्टव्यो व्यवहारस्तु कूटचिह्नकृतो भयात्॥

याज्ञ०—२-२१२

इत्यत्र आगमेन जनप्रवादेनेति विज्ञानेश्वरः।

(७) आचारः ।

शिष्टागमस्तृतीयः । बोधा०—१-१-४

अत्र आगम्यते इति आगमः ।

शिष्टैराचरित इति गोविन्दस्वामी ॥

**आगारम्**—गृहम् । तां दृढपुरुष उन्मथ्य प्राग्वोदग्वाऽनुगुप्त आगार आनडुहे रोहिते चर्मण्युपवेशयति ॥

पारस्करगृ०—१-८-१०

**आग्नीध्रः**—अग्नीत् इत्याख्यस्य ऋत्विजः नामान्तरम् । ततस्वरूपं अग्नीत् शब्दे द्रष्टव्यम् ॥

**आग्नेयतीर्थम्**—हस्तमध्यम् ।

पाणिमध्ये आग्नेयमिति वसिष्ठः—३-६७

मध्ये आग्नेयमिति हारीतः । नित्याचार प्र०-१-२६४

**आग्नेयस्नानम्**—देहे भस्मलेपनम् ।

आग्नेयं भस्मना स्नानमिति हेमाद्रौ छागलेयः ।

श्राद्धकल्पे—८५४

कूर्मपुराणे च आग्नेयं भस्मना पादमस्तकाद्देहधूलनम् ।

इति तत्रैव ।

**आग्रयणम्**—नवान्ननिष्पत्तौ आहिताग्नेरिष्टिविशेषः इति हेमाद्रिः । नवान्नश्राद्धं व्रीह्याग्रयणं श्यामाकाग्रयणं चेतिद्विधा ।

"व्रीहिश्यामाकयवानां नवोत्पन्नानां भक्षणं तेन तेन द्रव्येण अग्निहोत्रहोमानन्तरं भवति । अथवा तद्व्रीह्यादिद्रव्यम् 'अग्निहोत्रहोमपयःप्रदां गां भक्षयित्वा तद्विकृतिभूतेन पयसा, अग्निहोत्रहोमं नित्यं कृत्वा समन्त्रकं भवति । तत्र व्रीह्याग्रयणकालः शरत्, श्यामाकाग्रयणकालो वर्षाः यवाग्रयणकालो वसन्तः । अपि वा क्रियायवेषु इति सूत्रेण यवाग्रयणविकल्प आश्वलायनेनोक्तः । राज्ञस्तु आग्रयणेष्टिरेव भवति । इतरेषामिष्टिविकल्पः तेनैवोक्तः । इदं कर्म अग्रे नवान्नोत्पत्त्यनन्तरम्" आदौ अयनम् आचरणं यस्येति व्युत्पत्त्या आग्रयणमित्युच्यते ॥ शरद्ग्रीष्मयोराग्रयणेन इति विष्णुः—५९-६

**आग्रहायणी**—(१) मार्गशिरपूर्णिमा ।

(२) आग्रहायणीमार्गशीर्षपौर्णमास्यां क्रियमाणः सर्पबलिरुत्सर्गहोमः । हेमन्ते प्रत्यवरोहणाख्यं च कर्म आग्रहायणीशब्देनोच्यते इति हरदत्तः ।

"अष्टकापार्वणः श्राद्धं श्रावण्याग्रहायणी चैत्र्याश्वयुजीति सप्तपाकयज्ञसंस्थाः । इति गौतमः—१-८-१९

(३) मार्गशिरामावास्या ।

आग्रहायण्यमावास्या तथा ज्येष्ठस्य या भवेत् ।

विशेषमाभ्यां ब्रुवते चन्द्रचारविदो जनः ॥

अत्रेन्दुराद्ये प्रहरेऽवतिष्ठते चतुर्भागोनकलावशिष्टः । तदन्त एव क्षयमेति तदन्न एव क्षयमेति कृत्स्नमेवं ज्योतिश्चक्रविदो वदन्ति ॥ इति श्राद्धदीपे कात्यायनः । अनयोर्मलमासभिन्नवर्षेषु अमातिथिप्रारम्भत एव पञ्चदशकलाक्षयप्रवृत्तिरितिभावः ।

**आग्रहायणेष्टिः**—नवान्नेष्टिः ।

**आग्रहारिकः**—करटक इति गोविन्दानन्दः प्रायश्चित्तविवेकटीकायाम्—७३

**आघाटः**—मर्यादा ।

छिद्यते अनेनेति छेदः । नद्याघाटौ इति मिताक्षरायाम् ।

—१-३२०

आवाट इति पाठभेदः । घाट घाटी इत्यादि लोकव्यवहारागमशब्ददर्शनात् तन्मूलत्वेन आघाटशब्दं युक्तं मन्ये । आघाटः सीमा इति कोषग्रन्थविशेषे ।

**आघारः**—वह्नेः किंचिद्देशमारभ्य देशान्तरपर्यन्तं समन्त्रकम् आज्यधाराया आहरणं प्रक्षेपणम् आघार इत्युच्यते । इति श्रौतपदार्थनिर्वचने । स्मार्त्तहोमेषु प्रजापतये स्वाहा, इन्द्राय स्वाहा इत्याहुतिद्वयम् आघारः ॥

**आङ्गिरसः**—हंसः शुचिषद् इत्यादिमन्त्रः इति हरदत्तः उज्वलावृत्तौ आप०—१-२-२

**आचमनम्**—(१) शुद्ध्यर्थे जलपानम् । तच्च वारत्रयं प्रणवोच्चारणेन विष्णुपदोच्चारणेन केशवादिनामत्रयेण वा ॥ उच्चारणं त्वत्र मानसम् ॥

(२) आचमनं मुखम् । "दर्व्याचमनं प्रक्षाल्य निदधाति ।
पारस्करः—२-१४-१६
दर्व्या आचमनं मुखं प्रक्षाल्य निदधाति स्थापयति इति हरिहरभाष्ये ।

**आचमनव्यपेतम्**—यत्रार्धभुक्ते आचमनं कृतं तत् अन्नमाचमनव्यपेतम् ।
वृथान्नाचमनोत्थानव्यपेतानि । गौतमः—२-८-१२

**आचमनीयम्**—आचमनार्थं जलम् "मुखप्रक्षालनजलमिति भावः ।

**आचरितम्**—(१) अनुष्ठितम् ।
सद्भिराचरितं यत्स्याद्धार्मिकैश्च द्विजातिभिः ।
तद्देशकुलाजातिनामविरूद्धं प्रकल्पयेत् ॥
मनुः—८-४६

(२) आगमनम् । "नीहारे वादित्रशब्द आर्त्तस्वने ग्रामान्ते श्मशाने श्वगर्दभोलूकशृगालसामशब्देषु शिष्टाचरिते च तत्कालम् ।" पारस्करगृ०—२-११-६
अत्र शिष्टस्य श्रोत्रियस्य आचरिते आगमने इति हरिहरगदाधरौ ।

(३) द्वारावस्थानेन प्रयुक्तधनसाधनम् ।
दारयुत्तू पशून्वध्वा कृत्वा द्वारोपवेशनम् ।
यत्रर्णे दाप्यतेऽर्थं स्वं तदाचारितमुच्यते ॥
इति बृहस्पतिः ॥ विवादरत्नाकरे—६८
धर्मेण व्यवहारेण च्छलेनाचरितेन च ।
प्रयुक्तं साधयेदर्थं पञ्चमेन बलेन च ॥
मनुः—८-४६
आचरितेन आभोजनेन इति विज्ञानेश्वरः—२-४०

**आचामः**—(१) यवागुः "यवानामाचामीयवागुरिति विवरणे गोविन्दस्वामी ।
गोमूत्रं गोमयं क्षीरं दधिसर्पिः कुशोदकम् ।
यवाचामेन संयुक्तो ब्रह्मकूर्चोऽति पावनः ॥
बौधा०—४-५-२५

(२) भक्तमण्डः ।
पिण्याकाचामतक्राम्बुसक्तूनां प्रतिवासरम् ।
एकरात्रोपवासश्च कृच्छ्रः सौम्योऽयमुच्यते ॥
अत्र आचामः ओदननिस्राव इति विज्ञानेश्वरः ।
याज्ञ०—३-३२१
अचाम ओदननिस्राव इति पराशरमाधवे -१२-८०
मासराचामनिस्रावाभक्तमण्ड समुद्भवे ।
अमरः—२-९-४६

**आचारः**—रागमात्रं कर्म आश्रित्य शास्त्रेण पुरुषाभ्युदयाय विधीयमानोऽर्थं आचार इति अपरार्कः ।
आचाराल्लभते ह्यायुराचारादीप्सिताः प्रजाः ।
आचाराद्धनमक्षय्यमाचारो हन्त्यलक्षणम् ॥
मनुः—४-१५६
आचारप्रभवो धर्मः इति महाभारते ।
आचारो नित्यनैमित्तिकानुष्ठानमिति कल्पतरुः ॥
गार्हस्थ्य०—३५६

**आचारकरणम्**—व्यवहारनिर्णयः इति सरस्वतीविलासे ।
आचारकरणे दिव्ये कृत्वोपस्थाननिर्णयम् ।
नोपस्थितो यदा कश्चित् स्थलं तत्र न कारयेत् ॥
इति नारदः । व्यवहारप्रकाशे तु बृहस्पतिः—७६
आचारकरणे व्यवहारकरणे इति बृहस्पतिः ॥

**आचार्यः**—उपनयनपूर्वकं वेदाध्यापकः ।
उपनीय दद्द्वेदमाचार्यः स उदाहृतः । याज्ञ०—१-३४
यस्माद्धर्मानाचिनोति तस्मादाचार्यः इत्यापस्तम्बः ।
१-१-१-१४
आचिनोति च शास्त्राणि आचारे स्थापयत्यपि ।
स्वयमाचरते यस्तु तमाचार्यं प्रचक्षते ॥
इति हेमाद्रौ बृहस्पतिः, परि०—३५३
उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः ।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥
मनुः—२-१४०
अध्यापयेत्तु यः शिष्यं कृत्योपनयनं द्विजः ।
सरहस्यं च सकलं वेदं भरतसत्तमः ॥
तमाचार्यं महाबाहो प्रवदन्ति मनीषिणः ॥
इति महाभारते । हेमाद्रिधृते परि०—३५३

**आचार्यप्रत्ययः**—आचार्याद् वेदाक्षरग्रहणमित्याचारे नरसिंह वाजपेयी ।
आचार्यप्रत्यय आत्मप्रत्यय ज्ञानप्रत्ययश्च इति हारीतः ।

**आचितम्**—अवस्थितम् ।
इन्द्र नीलकडाराढ्यं विपरीतमिवाम्बरम् ।
फलावलीसमुद्भूतवनसंघमिवाचितम् ॥
विष्णुः—१-३८
आचितम् अवस्थितमिति वैजयन्ती ।

**आचितः**—शकटः ।
गोभिलीयचन्द्रकान्तभाष्ये गृह्यपरिशिष्टम्ः ।
आचितं शकटं प्राहुर्द्रोणः स्यात्कांस्यमानकः ॥
कंचुकाश्च कणाश्चैव फलीकरण कक्कुशा इति ।
अचितो दशभाराः स्युः शाकटो भार आचितः ॥
इत्यमरः—२-९-८७

**आच्छादः**—वस्त्रम् ।
पणोदेयोवकृष्टस्य षडुत्कृष्टस्य वेतनम् ।
षाण्मासिकस्तथाच्छादो धान्यद्रोणस्तु मासिकः ॥
मनुः—७-१२६

**आछेदः**—कर्त्तनम् । बलाद् ग्रहणम् ।
ग्रासाच्छादनवासानामाच्छेदो यत्र योषितः ।
तत्र स्वमाददीत स्त्री विभागं रिक्थिनः सदा ॥
इति व्यवहारमयूखे देवलः ॥
अनाच्छेद्यमनाहार्यं सर्वभागविवर्जितमित्यादि-
शासन-स्वरूप-वर्णने शासनशब्दे ।

**आजम्**—पूर्वभाद्रपदनक्षत्रम् इति हेमाद्रौ परिशिष्टे—२६८
कुप्यद्रव्यमाजे इति विष्णुः—७८-३१

**आजिपथः**—संग्रामेण जेतव्यादस्यवो येन पथाग्रामं प्रविश्य-गवादिकमपहृत्य अपसरन्ति स आजिपथ इति हरदत्तः
आजिपथे वा कुटीं कृत्वा इत्यादि आप०—१-९-२४-२१

**आजीवः**—(१) जीवनोपायः ।
परेषां देशजातिकुलविद्याशिल्परूपवृत्ताचारपरिच्छद-शरीरकर्माजीवानां तत्प्रत्यक्षं दोषवचनं परुषमिति देवलः अत्र आजीवः जीविका इति । कल्पतरौ गार्हस्थ्य०—३५६

(२) लाभ इति अर्थशास्त्रव्याख्याने श्रीमूला ।
कारुशिल्पिनां कर्मगुणापकर्षमाजीवमिति कौटलीये ।

(३) उपभोगश्च ।
आजीवन् स्वेच्छया दण्ड्यो दाप्यस्तं चापि सोदयत् ।
याज्ञ०—२-६७

(४) जीविका ।
बहिरन्तश्च कर्मान्ता विभक्ताः सर्वभाण्डिकाः ।
आजीवपुररक्षार्थाः कार्य्याः कुप्योपजीविना ॥
कौट०—२-१७-१७

**आजीवनम्**—जीविका ।
याजनाध्ययने राज्ञो भूतानां चाभिरक्षणम् ।
पाशुपाल्यं कृषिश्चैव वैश्यस्याजीवनं स्मृतम् ॥
पुलस्त्यः—१०

**आज्ञाक्रयः**—मूल्यदानमन्तरा संपूर्णमूल्यदानमन्तरा वा आदेशमात्रेण क्रयः ।
मूल्यस्यपादमर्द्धं वा मूल्यमाज्ञाक्रये स्थितम् ।
मूल्यं तदाग्रमखिलं दत्त्वा क्षेत्रं समाप्नुयात ॥
आत्रिभोगात्ततः क्रेतुः पुरतो दृढतामियात् ।
इति सरस्वतीविलासे सुमन्तुः—३२३
त्रिभोगात्—त्रिपुरुषभोगात् ।

**आज्ञाधिः**—आज्ञाधिर्नाम यो राज्ञा संसदा वा आज्ञया कृतः आधिः ।

**आज्ञापत्रम्**—सामन्तेष्वथ भृत्येषु राष्ट्रपालादिकेषु वा ।
कार्यमादिश्यते येन तदाज्ञापत्रमुच्यते ॥
इति व्यवहारप्रकाशे वसिष्ठः ॥
श्लोकोऽयं वसिष्ठस्मृतौ न लभ्यते ।

**आज्ञालेखः**—भर्तुः निग्रहानुग्रहरूपः लेख ।
भर्त्तुराज्ञा भवेद्यत्र निग्रहानुग्रहौ प्रति ।
विशेषेण तु भृत्येषु तदाज्ञालेखलक्षणम् ॥
कौट०—२-१०-४०

**आज्यपाः**—वैश्यानां पितरः ।
वैश्यनामाज्यपा नाम शूद्राणां तु सुकालिनः ।
मनुः—३-१९७

**आज्यदोहानि**—आज्यदोहमित्यादीनि त्रीणि ।
त्रीण्याज्यदोहानि रथन्तरं च वसिष्ठः—२८-१५
मूर्द्धानं दिवो अरतिं पृथिव्या इत्यस्यामृचि गीयमानं सामत्रयम् आज्यदोहानि । इति वैजयन्त्यां नन्दपण्डितः ।
विष्णुः—५६-२७

**आज्यप्रतिपत्**—आश्विनशुक्लप्रतिपत् ।

गर्भस्थोऽपि च दौहित्रो अश्वयुक् प्रतिपद्दिने ।
कुर्य्यान्मातामहश्राद्धं पितरौ यदि जीवतः ॥—१२
आज्यप्रतिपदि श्राद्धं नान्दीश्राद्धवदिष्यते ।
नात्यंसपाशशुद्धिः स्यादामध्याह्नाद्विशिष्यते ॥

प्रजापतिः—१७१

आर्य्यप्रतिपत् इति युज्यते ।

**आज्यभागः**—ऐशानभागे आग्नेयम् आग्नेयदेशे सौम्यमाज्यभागं जुहोति ।

अग्नये स्वाहा सोमाय स्वाहा इत्याहुतिद्वयम् इति याज्ञिकाः ।
विज्ञायते चक्षुषी वा एते यज्ञस्य वा यदाज्यभागौ ॥

आश्व० गृ०—१-१३-१५

**आज्यस्थाली**—होमार्थं यस्यामाज्यं गृह्यते सा आज्यस्थाली ।

आज्यस्थाली च कर्त्तव्या तैजसद्रव्यसम्भवा ।
महीमयी वा कर्त्तव्या सर्वास्वाज्याहुतीषु च ॥
आज्यस्थाल्याः प्रमाणं तु यथाकामं तु कारयेत् ।
सुदृढामव्रणां भद्रामाज्यस्थालीं प्रचक्षते ॥
तिर्य्यगूर्द्ध्वं समिन्मात्रा दृढा नाति बृहन्मुखी ॥

गोभिलस्मृतिः—२-७१

**आटरूपः**—वासकपुष्पम् वासङ्क इति ख्यातम् । सिंहास्यः इति हेमाद्रिः । श्राद्धकल्पे—६८३

चूताशोकाटरूपं च तुलसीं तिलकं तथा ॥

इति ब्रह्मपुराणे श्राद्धदेयपुष्पगणना । आटरूपो वासक इति माधवाचार्याः नरसिंहवाजपेयिनश्च । वासा इति निर्णयसिन्धावपि । जाती शताह्वा सुमनाः कुन्दश्चाटरूपस्तथा इत्यादि विष्णुदेयत्वेन वामनपुराणे उक्तमिति नित्याचारप्रदीपे ॥

**आटिः**—जलचर-पक्षीति गदाधरः ।

आट्यान्ब्रह्मवर्चसकामस्य । पारस्करः—१-१९-९

**आटिकी**—अनुपजातपयोधरादिस्त्रीव्यञ्जना इति भगवान् शङ्कराचार्यः छान्दो०—१-१०-१

**आटी**—पक्षिविशेषः "आटिः शरालि इति ख्यातः टिटिहिरी इति भाषा इति हलायुधकोषव्याख्याने ।

कापिञ्जलमांसेनान्नाद्यकामस्य-३ मत्स्यैर्जवनकामस्य-७ कृकषाया आयुष्कामस्य-८ आट्याब्रह्मवर्चसकामस्य-९ ॥

पारस्करगृ०—१-१९

**आट्या**—भ्रमणम् ।

मृगयाक्षो दिवास्वप्नः परिवादः स्त्रियो मदः ।
तौर्यत्रिकं वृथाट्या च कामजो दशको गणः ॥

मनुः—७-४७

**आड़वः**—खाद्यम्ल-कटुप्रायवस्त्वाढ्यः प्रलेह्य आड़वः इत्याचारसारे गदाधरः । खांडवशब्दो द्रष्टव्यः । न पर्युषितमन्यत्र रागांशुकआड़वदधिगुडेत्यादि सुमन्तुः ।

**आढ़कः**—पुष्कलानां चतुष्टयम्, द्रोणचतुर्थांशश्च ।

अष्टमुष्टिर्भवेत किंचितकिंचिदष्टौ च पुष्कलम् ।
पुष्कलानि च चत्वारि आढ़कः परिकीर्त्तितः ॥
चतुराढको भवेद् द्रोणः इति आढ़कः प्रस्थचतुष्टयम् ।
भाजनं कांस्यपात्रं चतुःषष्टिपल इति ॥

तस्य पर्यायशब्दाः खारीशब्दस्थाने द्रष्टव्याः ।

**आढ़की**—हरड़डालि इति प्रसिद्धा । तुवरी इति श्राद्धमयूखे नीलकण्ठः । तितुड़ी इति नित्याचारप्रदीपे नरसिंहवाजपेयी । सम्प्रति उत्कलेषु हरड़डालि इति हिन्दीभाषायां प्रसिद्धा ॥

**आटरूषकः**—सिंहास्य इति हेमाद्रिः ।
आटरूषस्य पाठान्तरमेतत् ॥

**आणिद्वारम्**—क्षुद्रद्वारम् ।
किष्कुमात्रमणिद्वारमन्तरिकायां खण्डफुल्लार्थमसंपातं कारयेत् क्षुद्रद्वारम् इति श्रीमूला । कौटल्यः—३-८

**आतङ्कः**—रोगः ।
दीर्घतीव्रामयग्रस्तं ब्राह्मणं गामथापि वा ।
दृष्ट्वा पथि निरातङ्कं कृत्वा तु ब्रह्महा शुचिः ॥
याज्ञ०—३-२४५

**आततायी**—अग्निविषादिना प्राणाद्यपहारकर्त्ता ।
उद्यतासिविषाग्निं च शापोद्यतकरं तथा ।
आथर्वणेन हन्तारं पिशुनं चैव राजसु ॥—१६२
भार्यातिक्रमिणं चैव विद्यात् सप्ताततायिनः ।
यशो वित्तहरानन्यानाहुर्धर्मार्थहारकान् ॥
विष्णुस्मृतिः—५-१९३
उद्यतासिः प्रियाधर्षी धनहर्त्ता गरप्रदः ।
अथर्वहन्ता तेजोघ्नः षडेते आततायिनः ॥
इति वैजयन्त्यां वृद्धवसिष्ठः । विष्णुः—५-१९३
अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः ।
क्षेत्रदारहरश्चैव षडेते आततायिनः ॥
वसिष्ठः—३-१६

**आतिवाहिकम्**–(शरीरम्) वायवीयम् । प्रेतशरीरमित्यर्थः ।
अतिवाहो वायुः तत्सम्बन्धीति गोविन्दानन्दः ।
तत् क्षणादेव गृह्णाति शरीरमातिवाहिकम् ।
ऊर्द्ध्वं व्रजन्ति भूतानि त्रीण्यस्मात्तस्य विग्रहात् ॥
आतिवाहिकसंज्ञोऽसौ देहो भवति भार्गव ।
केवलं तन्मनुष्याणां नान्येषां प्राणिनां क्वचित् ॥
इति प्रायश्चित्तविवेकोद्धृतविष्णुधर्मोत्तरे—१३
त्रीणि भूतानि पृथिव्यप्तेजांसि इति गोविन्दानन्दः ।

**आतुरः**—रोगी । न स्नानमाचरेद् भुक्त्वा नातुरो न महानिशि । मनुः—४-१२९
आतुरः महारोगोपसृष्ट इति विज्ञानेश्वरः—१-१६२
वातव्याध्यश्मरीकुष्ठमेहोदरभगन्दराः ।
अर्शांसि ग्रहणीत्यष्टौ महारोगाः प्रकीर्त्तिताः ॥
इति तत्रैव ॥

**आतुरस्नानम्**—आतुरे स्नान उत्पन्ने दशकृत्वो ह्यनातुरः ।
स्नात्वा स्नात्वा स्पृशेदेनं ततः शुद्ध्येत्स आतुरः ॥
पराशरः—७-१०

**आत्मगुणाः**—अष्टावात्मगुणाः, मङ्गलमकार्पण्य । दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गलमकार्पण्यमस्पृहेति । गौतमः—१-८-२४
दयादीनां लक्षणानि तत्तच्छब्दे द्रष्टव्यानि ।

**आत्मत्यागी**—आत्महत्याकारी "जीवन्नात्मत्यागी कृच्छ्रं द्वादशरात्रं चरेत् । वसिष्ठः—२३-१६

**आत्मप्रत्ययः**—आत्मज्ञानात्परलोकनिश्चयः इत्याचारे नरसिंहवाजपेयी । प्रयोगस्तु आचार्यप्रत्ययस्थाने द्रष्टव्यः ॥

**आत्मबन्धुः**—आत्मनः पितृष्वसृपुत्त्रादयः ।
आत्मपितृष्वसुः पुत्रा आत्ममातृष्वसुः सुताः ।
आत्ममातुलपुत्राश्च विज्ञेया आत्मबान्धवाः ॥
इति मिताक्षरायाम्—२-१३६

**आत्मम्भरिः**—देवपित्रादिभ्योऽप्रदाय निजोदरभरणमात्रपरायण इति हेमाद्रिः ।

**आत्मयाजी**—आत्मनि समारोपिताग्निः ।
बौधा०—२-७-१२-१

**आत्मलाभः**—आत्मज्ञानम् । आप०—१-८-२

**आत्मवान्**—(१) जितेन्द्रियः । "आत्मवन्तो जितेन्दिया" इति हरदत्तः । यच्चात्मवन्तो वृद्धाः सम्यग् विनीता दम्भलोभमोह-वियुक्ता वेदविद आचक्षते तत्समाचरेत् ॥
गौतमः—१-६-६२

शोकोन्मादादिरहितः नियतेन्द्रियो वेति विज्ञानेश्वरः ।
निमन्त्रयेत पूर्वेद्यु ब्राह्मणानात्मवान् शुचिः ।
तैश्चापि संयतैर्भाव्यं मनोवाक्कायकर्मभिः ॥
याज्ञ०—१-२२५

(२) आत्महितेच्छुः ।
आचारः परमो धर्मः श्रुत्युक्तः स्मार्त एव च ।
तस्मादस्मिन् सदा युक्तो नित्यं स्यादात्मवान् द्विजः ॥
मनुः—१-१०८

गुरुरात्मवतां शास्ता शास्ता राजा दुरात्मनाम् ।
अथ प्रच्छन्नपापानां शास्ता वैवस्वतो यमः ॥
वसिष्ठः—२०-३

(३) आत्मवान् दृढ़ज्ञानवान् इति प्रायश्चित्तविवेके ।—६५

(४) स्वतन्त्रः ।
ब्राह्मणस्यर्णसंयोगस्त्रिभिर्भवति जन्मतः ।
तानि मुच्यात्मवान् भवति विमुक्तो धर्मसंशयात् ॥
बौधा०—२-६-१६-४

**आत्मोपजीवी**—य आत्मना स्वशरीरश्रमेण जीवति मूल्यकर्मकर इति यावत् ।
कारुकान् शिल्पिनश्चैव शूद्रांश्चात्मोपजीविनः ।
एकैकं कारयेत्कर्म मासि मासि महीपतिः ॥
मनुः—७-१३८

**आत्ययिकम्**—कालासहं कर्म आवश्यकं च । "निवेद्य मन्त्रात्ययिकं हिमेऽस्ति" इति महाभा० उद्—३१-४
व्यपैति गौरवं यत्र विनाशस्त्याग एव च ।
कालं तत्र न कुर्वीत कार्य्यमात्ययिकं हि तत् ॥
इति मिताक्षरावृत्तौ कात्यायनः ॥ गौतमः—२-४-३०

**आत्रेयी**—(१) ऋतुस्नाता स्त्री ।
रजस्वलामृतुस्नातामात्रेयीमाहुरिति वसिष्ठः—२०-३५

(२) अत्रिगोत्रा चात्रेयी "अत्रिगोत्रां वा नारीम्" इति विष्णुः—५०-६

(३) नदीविशेषश्च ।
सरयूर्वारवत्याथ लांगली च सरिद्वरा ।
करतोया तथात्रेयी लौहित्यश्च महानदः ॥
इति महाभा० सभा०—६-७२

**आदर्शः**—दर्पणः ।
मलिनो हि यथादर्शो रूपालोकस्य न क्षमः ।
तथा विपक्वकरण आत्मज्ञानस्य न क्षमः ॥
याज्ञ०—३-१४१

**आदायः**—ग्रहणम् "यथादायस्तथाग्रहः" । मनुः—८-१६५
अत्र दायपदेन दानं तथा आङ्योगे ग्रहणार्थः सिद्ध्यति ।
लोके च अद्यापि ग्रहणार्थे आदायशब्दस्य व्यवहारो दृश्यते ॥

**आदायी**—ग्रहणशील इति कुल्लूकः ।

राज्ञो हि रक्षाधिकृतोः परस्वादायिनः शठा; ।
भृत्या भवन्ति प्रायेण तेभ्यो रक्षेदिमाः प्रजाः ॥

मनुः—७-१२३

**आदिः**—सप्तधा विभक्तदिवसस्य तृतीयो भागः ।

"अथ यत् संगववेलायां स आदिः ।।"

इति कालमाधवे श्रुतः—८७

**आदित्याः**—"भगश्चैवार्यमांशश्च मित्रो वरुण एव च ।
धाता चैव विधाता च विवस्वांश्च महाद्युतिः ॥
त्वष्टा पूषा तथैवेन्द्रो द्वादशो विष्णुरुच्यते ॥

बृहद्देवता—५-१४८

इन्द्रो धाता भगः पूषा मित्रोऽथ वरुणोर्यमा
अत्रिर्विवस्वांस्त्वष्टा च सविता विष्णुरेव च ।
एते वै द्वादशादित्या देवानां प्रवराः मताः ॥

इति हेमाद्रौ पैठीनसिः—६३७

मिताक्षरायां तु—

धातार्यमा च मित्रश्च वरुणोऽंशुर्भगस्तथा ।
इन्द्रो विवस्वान्पूषा च पर्जन्यो दशमः स्मृतः ॥
ततस्त्वष्टा ततो विष्णुरजघन्योऽजघन्यजः ॥

याज्ञ०—२-१००

महाभारतेऽपि—

धातार्यमा च मित्रश्च वरुणोऽंऽशो भगस्तथा ।
इन्द्रो विवस्वान् पूषा च त्वष्टा च सविता तथा ॥
पर्जन्यश्चैव विष्णुश्च आदित्या द्वादश स्मृताः

—१-१२२-६७

**आदिष्टी**—ब्रह्मचारी ।

आदिष्टी नोदकं कुर्यादाव्रतस्य समापनात् ।
समाप्ते तूदकं कृत्वा त्रिरात्रेणैव शुद्ध्यति ॥

मनुः—५-८८

**आदेशः**—(१) उच्चारणम् । आदिश्यते इत्यादेशः समुच्चारणमिति चन्द्रकान्तभाष्ये गोभिलः—१-७-३

(२) उक्तिः ।

उत्कोचकाश्चोपधिका वञ्चकाः कितवास्तथा ।
मङ्गलादेशवृत्ताश्च भद्राश्चेक्षणिकैः सह ॥

मनुः—६-२५०

(३) अन्यस्मै दीयतामित्युक्त्वा तदन्यस्य हस्ते अर्पितं द्रव्यमादेश इति श्रीमूला । एतेनादेशोऽन्वाधिश्च व्याख्यातौ । इति कौट०—३-१२-१८

**आद्यम्**—पूर्वाषाढ़ानक्षत्रम् इति व्रतकल्पतरौ—५२

**आद्यश्राद्धम्**—एकादशाह-श्राद्धम् ।

आद्यश्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि ।
कर्त्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव स ॥

इति शङ्खः । मिताक्षरायाम्—२-१५६

**आधमनम्**—बन्धकः ।

योगाधमनविक्रीतं योगदानप्रतिग्रहम् ।
यत्र वाप्युपधिं पश्येत् तत्सर्वं विनिवर्त्तयेत् ॥

मनुः—८-१६५

**आधमार्णिकः**—अधमर्णः

कर्मणाऽपि समं कुर्याद्धनिकायाधमर्णिकः ।
समोऽवकृष्टजातिस्तु दद्याच्छ्रेयांस्तु तच्छनैः ॥

मनुः—८-१७७

**आधाता**—आधिकर्त्ता ।

आधिमेकं द्वयोर्यत्र कुर्यात् का प्रतिपद् भवेत् ।
द्वयोः पूर्वतरं याह्यमाधाता चौरदण्डभाक् ॥

इति विवादरत्नाकरे कात्यायनः पृ०—३५

**आधानम्** (१) स्थापनम्। तदनुसृत्य गर्भाधानादयोऽपि आधानशब्देनोच्यन्ते। यथा गर्भाधानम्। अग्न्याधानम्।

(२) प्रक्षेपः। "आधानं प्रक्षेप इति हरिहरः" अत्र समिदाधानम्। इति पारस्करः—२-३-१

(३) आधिकरणम्।
पत्नीभर्तृधनंभुंजीतैव परं न तु तस्य दानाधान विक्रयान्कर्त्तुमर्हति दाय०— ११-१

**आधारः**—आधारः अल्पसर इति अन्यत्र जलाधारखात इति श्रीमूला। उत्कलेषु तु निम्नोन्नतायां भूमौ निम्नभागे बन्धं विधाय यत्र क्षेत्रसेचनार्थं जलं स्थाप्यते तत्र जलाक्रान्त भूमिः आहार इत्युच्यते, यस्त्वाधारशब्दस्यापभ्रंशः।
आधार परिवाहकेदाशोपभोगैः परक्षेत्रकृष्टबीजहिंसायां यथोपघातं मूल्यं दद्युः॥ इति कौट०—३-९
गृहं क्षेत्रमारामः सेतुबन्धस्तटाकमाधारो वा वास्तु॥
कौट०—३-९

**आधिः**—(१) बन्धकम्।
आधिर्बन्धः समाख्यातः स च प्रोक्तश्चतुर्विधः।
जङ्गमः स्थावरश्चैव भोग्यो गोप्यस्तथैव च॥
"यादृच्छिकः सावधिश्च लेख्यारूढोऽथ साधिमान्" इति विवादरत्नाकरे बृहस्पतिः। जङ्गमादि भेदेनाधिश्चतुर्धा इति कल्पतरुः। तत्रैव नारदः
अधिक्रियते इत्याधिः सविज्ञेयो द्विलक्षणः।
कृत कालोपनेयश्च यावद्देयोद्यतस्तथा॥
स पुनः द्विविधः प्रोक्तो भोग्यो गोप्यस्तथैव च।
उपचारस्तथैवास्य कामहानिर्विपर्य्यये।
प्रमादाद्धनिनस्तद्वदाधौ विकृतमागते॥—१-१२६
आधिः प्रणश्येद्द्विगुणे धने यदि न मोक्ष्यते।
याज्ञ०—२-५८

आधिस्तु भोग्यगोप्यभेदेन द्विविधः। यत्र बंधकीभूतद्रव्यस्य फलं भुज्यते स भोग्याधिः यत्र तु द्रव्यं केवलं रक्षणीयं न च फलभोगः स गोप्याधिः॥
"स्वगृहे परान् वासयित्वा तेभ्यो भृतिग्रहणमाधिः स्तोम इति प्रसिद्ध" इति उज्ज्वलावृत्तौ हरदत्तः॥
आप०—१-६-१८-२०
पुनरप्याधिः अकृतकालकृतकालभेदेनापि भिद्यते। तदाह याज्ञवल्क्यः—
काले कालकृतो नश्येत् फलभोग्यो न नश्यति॥
—२-५८

(२) मनोव्यथा।
धर्मेण व्यवहारेण प्रजाः पालय पाण्डव।
युधिष्ठिर यथायुक्तो नाधिबन्धेन योक्ष्यसे॥
महाभा० शान्ति०—७१-२५

(३) मनःपीड़ा।
अवेक्ष्या गर्भवासश्च कर्मजा गतयस्तथा।
आधयो व्याधयः क्लेशाः जरारूपविपर्य्ययः॥
याज्ञ०—३-६३

(४) पीड़ा।
आधिः साहसमाक्रम्य स्तेयमाधिश्छलेन च।
आधि पीड़ा स यत्रातिक्रम्य क्रियते तत्साहसम्।
छलेन स्वाधिकरणे चौर्य्यमिति व्यवहारकल्पतरो—५००

**आधिपत्रम्**—जङ्गमं स्थावरं बन्धं दत्त्वालेख्यं करोति यत् ।
गोप्यभोग्यक्रियायुक्तमाधिलेख्यं तु तन्मतम् ॥
सरस्वतीविलासे यमश्च
आधिं कृत्वा तु यो द्रव्यं प्रयुङ्क्ते स्वधनं धनी ।
यत्तत्र क्रियते लेख्यमाधिपत्रं तदुच्यते ॥ इति

**आधिभोगः**—यस्मिन् स्थावरोपभोगः आधित्वेन परिकल्पते सः ।
आधिभोगस्त्वशेषो यो वृद्धिस्तु परिकल्पितः ।
प्रयोगो यत्र चैवं स्यादाधिभोगः स उच्यते ॥
इति कात्यायनः । विवादरत्नाकरे—१२

**आधिलेख्यम्**—आधिं दृष्टेन लेख्येन भुंक्ते यदणिकाद्धनी ।
नृपो दमं दापयित्वा आधिलेख्यं विनाशयेत् ॥
स्मृतिचन्द्रिका—१४१

**आनकः**—वाद्यविशेषः । उत्कलेषु नागरा इति प्रसिद्धः ।
ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः ।
सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥
भगवद्गीता—१-१३
आनकः मृदङ्ग इति केचित् । किन्तु प्रवादितासु भेरीझर्झरेष्वानुकेषु च इति पाठाद् आनकमृदङ्गयोर्भेदः प्रतीयते । मृदङ्गेष्वपि राजेन्द्र वाद्यमानेष्वनेकशः ॥
महाभा० द्रोण०—१०४-१६

**आनतिः**—आनमनं प्रीतिः इति दायभागव्याख्याने रघुनन्दनभट्टाचार्य्याः । आनमनं वशीकार इति तत्रैव श्रीनाथरामचन्द्रौ परितोष इति अच्युतानन्दश्च ॥ दक्षिणाशब्दः परिक्रयार्थे द्रव्ये वर्त्तते येन ऋत्विजामानतिर्भवतीति पारस्करभाष्ये हरिहरः—१-११-३

परकीयगृहे यस्तु स्वान् पितॄन् तर्पयेज्जडः ।
तद्भूमिस्वामिनस्तस्य हरन्ति पितरो बलात् ॥
अग्रभागं ततस्तेभ्यो दद्यान्मूल्यं च जीवताम् ॥
इति ब्राह्मवचनव्याख्याने तद्भूमिस्वामिषु जीवत्सु आनतिकरं किंचिद्द्रव्यं तेभ्यो दद्यादित्यर्थ इति कालसारे गदाधरः ॥

**आनमनम्**—आनुकूल्यम् । दायभागः—५

**आनन्दवनम्**—वाराणसी ।
पुरानन्दवनं नाम क्षेत्रमेतत्प्रकीर्त्तितम् ।
अविमुक्तं तदारभ्य नामास्य प्रथितं भुवि ॥
स्कन्द० काशी०—६६-७४
अस्यानन्दवनं नाम पुराऽकारि पिनाकिना ।
क्षेत्रस्यानन्दहेतुत्वादविमुक्तमनन्तरम् ॥
शिवपुराणे—२-१-६-३१

**आनर्त्तः आनर्त्तकः**—प्रदेशविशेषः । यस्मिन् द्वारका वर्त्तते इति कल्पतरौ ब्रह्मचारिकाण्डः—४६
कृत्स्नानामानर्त्तसुराष्ट्राणां पालनार्थं नियुक्तेन पह्लवेन ।
इति रुद्रदामनशिलालेखे आनर्त्तानां सुराष्ट्रसामीप्यं सुस्पष्टम् ॥
आनर्त्ता अङ्गमगधाः सौराष्ट्रा दक्षिणापथाः ।
अपास्याः सिन्धुसौवीरा एते सङ्कीर्णयोनयः ॥
इति स्मृतिचन्द्रिकायां व्यवहारकाण्डे बौधायनः—२२

**आनालकः**—"कोलप" इति भाषाप्रसिद्धः यत्साहाय्येन गृहादिकं चौरादिभ्यः सुरक्षितं क्रियते ।

**आन्दोलकम्**—दोला ।
आन्दोलकं सास्तरणं सोपधानं प्रसुन्दरम् ।
मत्तवारणशोभाभ्यां प्रथितं मृदुभिः पटैः ॥

धातुजाभिः सुरम्याभिः शृङ्खलाभिश्च संयुतम् ।
ददाति पितृकार्य्येषु यो हि श्रद्धापरायणः ॥
इत्यादि-हेमाद्रिधृतविष्णुधर्मोत्तरे। हेमा० परि०—७०६

**आन्ध्रः**—जातिविशेषः ।
मत्स्यघातो निषादानां त्वष्टिस्त्वायोगवस्य च ।
मेदान्ध्रचुंचुमद्गूनामारण्यपशुहिंसनम् ॥ मनुः—१०-४८

**आन्वीक्षिकी**—तर्कविद्या ।
न्यायविद्या इति हरदत्तः । गौतमः— २२-३
आत्मवेदनशीलत्वात् अन्वीक्षणपराथवा ।
अन्वीक्षां कुरुते यस्मात्तस्मादान्वीक्षिकी स्मृता ॥
इति शब्दकल्पद्रुमोद्धृतदेवीपुराणे ।
प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् ।
आश्रयः सर्वधर्माणां शश्वदान्वीक्षिकी मता ॥
कौट०—१-२-१२
अर्थतत्त्वस्य हेतुभिः परीक्षणम् अन्वीक्षा । सा प्रयोजनमस्या इति आन्वीक्षिकी हेतुविद्या इति श्रीमूला ॥

**आपणः**—क्रयविक्रयभूः ।
गवं वार्यापणं धान्यं पशुस्त्रीवाहनानि च ।
उपेक्षया विनश्यन्ति यान्ति चासारतां तथा ॥
इति विवादरत्नाकरे बृहस्पतिः । पृ०—३५
आचारादर्शे च पृ०—७

**आपणीयम्**—पण्यवीथ्यां क्रीतं लब्धं वा द्रव्यम् ।
नापणीयमन्नमश्नीयात् ॥ आप०—१-५-१७-१५

**आपीती**—कृष्णपक्षषष्ठीरात्रिः । कालमाधवः—२

**आपीनम्**—क्षीराशयः क्षीरयुक्तस्तन इत्यर्थः ।
ऊधस्तु क्लीबमापीनमित्यमरः—२-९-७३

**आपूर्यमाणपक्षः**—शुक्लपक्षः ।
उदगयन आपूर्यमाणपक्षे पुण्याहे कुमार्याः पाणिं गृह्णीयात्।
इति पारस्करः—१-४-५६
आपूर्यमाणाशुक्लैकादशीरात्रिः । कालमाधवः—२

**आपृष्टम्**—अनुमतम् ।
आभिमुख्येन पृष्टम् अनुमान्यलब्धमित्यर्थः ।
तृणं वा यदि वा काष्ठं पुष्पं वा यदि वा फलम् ।
अनापृष्टं तु गृह्णानो हस्तच्छेदनमर्हति ॥
इति स्मृतिचन्द्रिकायां मनुः।

**आपोथिताग्रम्**—ईषच्चूर्णिताग्रं (दन्तकाष्ठादि) इति लक्ष्मीधरः । नित्याचारप्रदीपे वाजपेयिनश्च—१-२८४

**आपोशनम्**—अमृतोपस्तरणमसि स्वाहा इति भोजनात्पूर्वमाचमनं तथा अमृतापिधानमसि स्वाहा इति भोजनात्परमाचमनम् ।
आपोशानेनोपरिष्टादधस्तादश्नता तथा ।
अनग्नममृतं चैव कार्य्यमन्नं द्विजन्मना ॥
याज्ञ०—१-१०६

**आपोशानम्**—अपोशनम् ।
आपोशानक्रियापूर्वमश्नीयादन्वहं द्विजः।
व्यासः—१-६८

आप्तः—(१) कुशलः निपुण इति यावत् ।
प्राजकश्चेद्भवेदाप्तः प्राजको दण्डमर्हति ।
युग्यस्थाः प्राजकेऽनाप्ते सर्वे दण्ड्या शतं शतम् ॥
मनुः—८-२९४

आप्यम्—पूर्वाषाढ़ानक्षत्रम् ।
समुद्रयानसिद्धिमाप्ये इति विष्णुः—७८-२५
आप्ये पूर्वाषाढ़ा नक्षत्रे इति वैजयन्त्याम् ॥

(२) शङ्खादिः ।

आप्यः—हिरण्यवर्णाः शुचयः पावका इत्ययमनुवाकः ।
बौधा० गृ० शे०—१-१४
मन्त्रातिः ऋषिः आपो देवताः त्रिष्टुपछन्दः ।
हिरण्यवर्णाः शुचयः पावका यासु जातः सविता यास्वग्निः ।
या अग्निं गर्भं दधिरे सुवर्णास्ता न आपःशं स्योना भवन्तु ॥
यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यन् जनानाम् । या अग्निं यासां देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे बहुधा भवन्ति । याः अग्निं शिवेन चक्षुषा पश्यतापः शिवया तन्वोपस्पृशत त्वचं मे । घृतश्चुतः शुचयो याः पावकास्तान आपः शं स्योनाः भवन्तु ॥
अथर्व०—१-६-३३

आप्यायनम्—वृद्धिकरं पोषकमिति यावत् ।
देवकार्य्याद् द्विजातीनां पितृकार्य्यं विशिष्यते ।
दैवं हि पितृकार्यस्य पूर्वमाप्यायनं स्मृतम् ॥
मनुः ३-२०३
अक्रोधनान्सुप्रसादान् वदन्त्येतान् पुरातनान् ।
लोकस्याप्यायने युक्तान् श्राद्धदेवान् द्विजोत्तमान् ॥
मनुः—१-२१३

आप्यायमाना—शुक्लषष्ठीरात्रिः । कालमाधवः—२

आप्रीतम्—क्वचित् कार्य्यं पाकादौ उपयुक्तमिति उज्वला-वृत्तिकारः ।
अनाप्रीते मृण्मये भोक्तव्यम् । आप०—१-५-१७-६

आप्लवनम्—स्नानम् ।
निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च ।
सवासा जलमाप्लुत्य शुद्धो भवति मानवः ॥
मनुः—५-७७

आप्लावनम्—स्नापनम् ।
आप्लाव्य स्नापयित्वेति हरिहरः । पारस्करगृ०—१-१४-३

आबन्धः—आबन्धो योत्रं योक्त्रम् इत्यमरः—२-६-१३
द्वावन्धौ निहतौ वृद्धौ माता जनयिता च मे ।
तौ नूनं दुर्बलावन्धौ मत्प्रतीक्षौ पिपासितौ ॥
रामायणे, अयोध्या—६३-४०

आबन्धनीयम्—आबन्धनीयं, बालस्य कण्ठादौ बन्धनार्हं सुवर्णमिति देवपालः काठक-गृ०—३-११-५

आबन्ध्यम्—भूषणादि इति श्रीमूला ।
वृत्तिराबन्ध्यं वा स्त्रीधनम् । कौट०—३-२-१४

आभिहारिकम्—छलेन गृहीतम् इति नरसिंहवाजपेयौ ।
पण्यमूल्यं भृतिर्न्यासो दण्डो यच्चाभिहारिकम् ।
वृथादानाक्षिकपणा वर्द्धन्ते नापि वर्द्धिताः ॥
इति नारदः ।
विवादरत्नाकरे तु "नापि वर्द्धिता" इत्यत्र "नाविवक्षिता" इति पाठः । तत्र अविवक्षिताः धनिखादकाभ्याम् अपरिभाषिता इति चण्डेश्वरः । पृ०—२०

नारायणचन्द्रप्रकाशितनारदस्मृतौ तु—

पण्यमूल्यं भृतिर्न्यासो दण्डो यच्चावहारकम् ।

वृथा दानाक्षिकपणा वर्द्धन्ते नाविवक्षिताः ॥—२-३६

**आभीरः**—ब्राह्मणादम्बष्ठकन्यायां जातः जातिविशेषः ।

ब्राह्मणादुग्रकन्यायामावृतो नाम जायते ।

आभीरोऽम्बष्ठकन्यायामायोगव्यां तु धिग्वणः ॥

मनुः—१०-१५

**आभोगः**—उच्चता इति आचारमयूखे—१००

**आभ्युदयिकम्**—अभ्युदयनिमित्तकं नान्दिमुखश्राद्धम् इत्यर्थः। वृद्धिश्राद्धमित्यस्य नामान्तरम् । तत्र प्रथमं मातरः मध्ये पितरः अन्ते मातामहाः पूज्यन्ते ।

**आमम्**—तुषहीनं धान्यम् ।

आमं तण्डुलादि इति हरदत्तः ॥ आप०—१-६-१८-१

शस्यं क्षेत्रगतं प्राहुः सतुषं धान्यमुच्यते ।

आमं वितुषमित्युक्तं स्विन्नमन्नमुदाहृतम् ॥

इति कालसारे श्राद्धप्रकरणे वसिष्ठः ।

"क्षमेनामेन तु पक्वस्य सम्प्रत्यर्थे" अत्र आमेन तण्डुलेन इति उज्ज्वलावृत्तौ गौतमः—१-७-२१

**आमगर्भः**—अपूर्णगर्भः ।

विरूपा आमगर्भाश्च ज्ञाताज्ञातास्तथैव च ।

क्रियालोपगता ये च ये चान्ये गर्भसंस्थिताः ॥

अत्र आमगर्भाः अपक्वगर्भाः अपूर्णगर्भाः ।

इति स्मृतिचन्द्रिका । श्राद्ध०—१५१

**आमन्त्रणम्**—राज्ञः आस्थानमण्डपः ।

तस्य पुरस्तात् आवसथस्तदामन्त्रणमित्याचक्षते ।

आप०—२-१०-२५-४

**आमयः**—व्याधिः । उदाहरणम् आतङ्कशब्दे द्रष्टव्यम् ॥

**आमयावी**—मन्दानलः । "अजीर्णान्न इति विज्ञानेश्वरः ।

याज्ञ०—३-२१०

मन्दानल इति कुल्लुकः ।

हीनक्रियं निष्पुरुषं निश्छन्दो रोमशार्शसम् ।

क्षय्या मया व्यपस्मारि श्वित्री कुष्ठिकुलानि च ॥

मनुः—३-७

**आमाशयः**—उदरस्य अपक्वान्नस्थानम् । याज्ञ०—३-६५

**आमिक्षा**—तप्ते पयसि दधिप्रक्षेपेण यो घनीभूतो भागः सा आमिक्षा । जलरूपी भागस्तु वाजिनः । "मध्यमायाः प्रथमे रन्ध्रिण्यामिक्षां दशमेऽभितः सप्त सप्तापूपान् परिश्रयति ।" कौशिकसूत्र—६५-६-५

छेना इति उत्कलभाषायां प्रसिद्धं वस्तु ।

तद्विधेषु यवागूं राजन्यो वैश्य आमिक्षाम् ॥

बौधा०—३-७-७-१०

**आमिषम्**—(१) मांसम् ।

पितॄणां मासिकं श्राद्धमन्वाहार्य्यं विदुर्बुधाः ।

तच्चामिषेण कर्त्तव्यं प्रशस्तेन प्रयत्नतः ॥

मनुः—३-१२३

(२) आमिषरूपेण प्रसिद्धं द्रव्यम् ।

प्राण्यङ्गमामिषं चूर्णं क्षीरं गव्येतरं तथा ।

आमिषं च मधुप्रोक्तं कांस्यभोजनमामिषम् ॥

"आमिषं सुन्दरोशाकं चर्मपानीयमामिषम्" इत्याचारसारे शिष्टवाक्यानि ॥

आमिषं दृतिपानीयं गोवर्ज क्षीरमामिषम् ।
मसूरमामिषं शस्ये फले जंभीरमामिषम् ॥
आमिषं शुक्तिकाचूर्णमारनालं तथामिषम् ।
इति मयूखे स्मृत्यन्तरम् ॥

प्राण्यङ्गचूर्णं चर्माम्बु जम्बीरं बीजपूरकम् ।
अयज्ञशिष्टमाषादि यद्विष्णोरनिवेदितम् ॥
इति निर्णयसिन्धौ पाद्मे ॥

गोच्छागीमहिषीदुग्धादन्यद्दुग्धादि चामिषम् ।
धान्यं मसूरिकाः प्रोक्ता अन्नं पर्युषितं तथा ॥
द्विजक्रीता रसाः सर्वे लवणं भूमिजं तथा ।
ताम्रपात्रस्थितं गव्यं जलं पल्वलसंस्थितम् ॥
आत्मार्थे पाचितं चान्नमामिषं तत्स्मृतं बुधैः ।
इति तत्रैव मुद्रितपद्मपुराणे ॥

**आम्नातम्**—कथितम् ।
अधीतमिति उज्वलावृत्तिः । आप०—१-३-११-३८

**आम्नायः**–(१) वेदः । आम्नायः पुनर्मन्त्राश्च ब्राह्मणानि च ।
इति कौशिकगृ० सू०—१-१-३
यथाम्नायो विदध्यात् । गोभिलः—१-६-१२
आम्नाये स्मृति तन्त्रे च लोकाचारे च सूरिभिः ।
शरीरार्द्धं स्मृता जाया पुण्यापुण्यफले समा ॥
इति बृहस्पतिः ।

(२) शास्त्रम् इति कुल्लूकः ।
साम्बत्सरिकमाप्तैश्च राष्ट्रादाहारयेद्बलिम् ।
स्याच्चाम्नायपरलोके वर्त्तेत पितृवन्नृपु ॥ मनुः–७-८०

**आम्रम्**—(१) आम्रफलम् ।
आम्रकाष्ठं दन्तधावने प्रशस्तमिति शेलुशब्दे द्रष्टव्यम् ।

(२) परिमाणविशेषः ।
पलस्य नामान्तरम् । खारीशब्दं पश्यन्तु ।

**आम्रातम्, आम्रातकम्**–आम्बड़ा (सालमा) इति उत्कल भाषाप्रसिद्धं फलमम्लरसप्रधानम् ॥ अम्रातकः कपीतन इति हेमाद्रिः । कपीतफलमिति श्राद्धमयूखे ।
हेमा० श्राद्ध०—११५३
आम्राम्रातकधात्रीणामिति दन्तकाष्ठप्राशस्त्ये स्कान्दे ।
काशी०—२५-८०
अपामार्गशब्दे द्रष्टव्यम् । अम्बाड़ा इत्याचारेन्दौ ।

**आम्रावर्त्तः**—शुष्कपक्वाम्ररसः । "आम्बसड़ा" इति प्रसिद्ध इति वैद्याः ।

**आम्लोटः**—साहड़ाफलम् । इति नरसिंहवाजपेयी ।
नित्या० प्र०—१-६६४
आम्रातकः श्रुवाम्लोटः फलमालपियालकम् ।
जम्बूविल्वफले चैव जात्यं वीणातकं तथा ॥
इति नित्याचारप्रदीपोद्धृतविष्णुधर्मे ।

**आयः**—लब्धधनम् ।
आयः प्रतिदिवसं प्रतिमासं प्रत्यब्दं वा यदुत्पद्यते ।
इति विज्ञानेश्वरः ।
दश्याद् वा तद्विभागः स्यादायव्ययविशोधितात् ।
याज्ञ०—१२२

**आयतनम्**—(१) अविमुक्तादिक्षेत्रम् । तत्तु पुण्यायतनम् । बाराणसी महाभैरवं देवदारुवनं सौरं प्राचीनवाहः केदारं मध्यमं महारुद्रं महावलं महालयं कुमारमहालयं रुद्रावतारं वङ्गलं (चगलण्डं) विष्णुशिवं महाकालं पुरुषोत्तमं जम्बूमार्गं चेतेतान्यायतनानि ।
इति देवलः पराशरमाधवे प्राय०—४७८

(२) निवेशनम् । पलालकूटाद्यर्थं विभक्तो भूप्रदेशः
मिताक्षरा—२-१५४
अरण्यं देवतास्थानं तीर्थान्यायतनानि च ।
तस्मात्तेषु मृता लोके यान्ति लोकान् दिवौकसम् ॥
इति कल्पतरौ देवलः ।
अत्र आयतनं अविमुक्तादि इति लक्ष्मीधरः ।
गार्हस्थ्य०—३४२

**आयतिः**—उत्तरकालः ।
आयतिं सर्वकार्याणां तदा त्वं च विचारयेत् ।
अतीतानां च सर्वेषां गुणदोषौ च तत्त्वतः ॥
मनुः—७-१७८

**आयन्त्यम्**—शुक्लद्वादशीदिवसभागः । कालमाधवः—२

**आयामः**—दैर्घ्यम् ।
विलिखेत्तत्र पुण्ड्रादिविस्तारायामभेदतः ।
वृद्धहारीतः—२-५४
आयामः सप्ततालः स्याच्चतुस्तालं च विस्तृतम् ।
द्वितालमुन्नतं ज्ञेयमेतत्पर्य्यङ्कलक्षणम् ॥
इत्याचारेन्दौ—१५३

**आयुक्ताः**—राजादिनियोगं विना ये स्वतः कर्मणि प्रवृत्ताः ।
आयुक्ता अपरप्रयुक्ता इति श्रीशंकराचार्य्याः तैत्तिरीये
—१-११
"युक्ताः, शास्त्रतत्पराः, आयुक्ताः तदर्थानुष्ठानतत्पराः ।
इति कालमाधवे माधवाचार्याः ।

**आयुधीयः**—(१) आयुधजीवी ।
आयुधान्यायुधीयानां बाह्यादीन् बाह्यजीविनाम् ।
नारदः सं०—१६-११

(२) उत्तमभृतकः ।
भृतकस्त्रिविधो ज्ञेय उत्तममध्यमोऽधमः ।
उत्तमस्त्वायुधीयोऽत्र मध्यमस्तु कृषीवलः ॥
अधमो भारवाहः स्यादित्येष त्रिविधो भृतः ॥
नारदः—५-२२-२३

**आयुष्मती**—कृष्णचतुर्दशी रात्रिः । कालमाधवः—२

**आयोगः**—कर्मिसन् इति सांप्रतिकाः ।
"ये तत्र ब्राह्मणाः समदर्शिनो युक्ता आयुक्ता अलूक्षा धर्मकामाः स्युः यथा ते तत्र वर्त्तेरन् तथा तत्र वर्तेथा
इति तैत्तिरीये—१-११
आयुक्ता अपरप्रयुक्ता इति श्रीशङ्कराचार्य्याः । न परतन्त्रा इति भावः ।

**आयोगवः**—शूद्राद्वैश्यायां जातः ।
शूद्रादायोगवः क्षत्ता चण्डालश्चाधमो नृणाम् ।
वैश्यराजन्यविप्रासु जायन्ते वर्णसंकराः ॥ मनुः—१०-१२
नृपायां वैश्यसंसर्गादायोगव इति स्मृतः ॥
तन्तुवाया भवन्त्येते ॥ औशनसस्मृतिः—१३

**आरः**—मङ्गलग्रहः ।
नन्दाश्वकामरव्यारभृग्वग्निपितृकालभे ।
गण्डे वैधृतिपाते च पिण्डास्त्याज्याः सुतेप्सुभिः ॥
कालभमृद्विजाः इति निर्णयसिन्धौ महालयाप्रकरणे-३११

**आरकूटः**—पित्तलम् ।

**आरक्षः**—रक्षा ।
आरक्षः रक्षा इति कुल्लूकः । मन्मते तु रक्षकः ।
"तेषामारक्षभूतं तु पूर्वं दैवं नियोजयेत् ॥ मनुः—१-२०

**आरक्षकः**—"आरक्षको ग्रामरक्षीनियुक्त इति विवाद-रत्नाकरे—३४३

"आरक्षकः कोटवार इति प्रसिद्ध" इति विवादचिन्तामणिः।
—१४७

गृहे वै मुषिते राजा चौरग्राहांस्तु दापयेत्।
आरक्षकान् राष्ट्रिकांश्च यदि चौरो न लभ्यते ॥
नारदसंहिता—१६-७८

**आरग्वधः**—राजवृक्षः। सुनारिगछ इति उत्कलभाषा-प्रसिद्धः

**आरट्टः**—देशविशेषः। बौधा०—१-२-१५

**आरण्यकम्**—(१) पवित्रमन्त्रविशेषः। आरण्यकं च यजुः ऋचं वाचं प्रपद्ये मनो यजुः। प्रपद्ये इत्यादि तत्रैव (वाजसनेयके) पठ्यते इति विज्ञानेश्वरः।

शुक्रियारण्यकजपी गायत्र्याश्च विशेषतः।
सर्वपापहरा ह्येते रुद्रैकादशिनी तथा ॥
याज्ञ०—३-३०८

(२) उपनिषत्।

"ततस्तत्र महानासीद्ब्राह्मणः संशितव्रतः।
शेषावत्यस्तपोवृद्धः शास्त्रे चारण्यके गुरुः ॥
महाभा० उद्०—१७५-१८

**आरण्यषष्ठी**—ज्येष्ठशुक्लषष्ठी।

प्रसूता द्वादशे मासि संपूज्यापत्यवृद्धये।
सुते जाते तथा षष्ठ्यां षष्ठी द्वादशरूपिणी।
वैशाखे चान्दनी षष्ठी ज्येष्ठे चारण्यसंज्ञिता।
आषाढे कादशी ज्ञेया श्रावणे लुण्ठनी मता।
भाद्रे चपेटी विख्याता दुर्गाख्याश्वयुजे तथा।
नाड्याख्या कार्त्तिके मासि मार्गे मूलकरूपिणी।
पौषे मात्मन्नरूपा च शीतला तपसि स्मृता।
गोरूपिणी फाल्गुने च चैत्रेऽशोका प्रकीर्त्तिता ॥
इति स्कन्दपुराणमिति शब्दकल्पद्रुमे।

**आरण्यकषष्ठी**—ज्येष्ठशुक्लषष्ठी।

**आरण्यपशुः**—पक्षिवानरमहिषमरीसृपरुरुपृषतमृगाश्चेति सप्तारण्याः पशवः इति पैठीनसिः कल्पतरौ।

**आरनालम्**—काञ्जी इति उत्कलभाषाप्रसिद्धम्।

आरनालं पयस्तक्रं दधितैलाज्यपाचितम्।
मणिकस्थोदकं चैव न दुष्येद्राहुदर्शने ॥
इतिसमयमयूखे षट्त्रिंशन्मतम्—११३

अन्यत्रापि—

आरनालं तथा क्षीरं किलाटं घृतसक्तवः।
स्नेहपक्वं च तैलं च न कदाचित् प्रदुष्यति ॥

**आरम्भणम्**—क्रयः इति नागेशः।

"आकृतौ चोदितायां द्रव्ये आरम्भणालंभनप्रोक्षणविशसनादीनि क्रियन्ते इति पातञ्जलमहाभाष्ये।

**आरम्भणः**—आरभ्यन्ते आलभ्यन्ते इति आरम्भणाः। त्वगालम्भनाः स्रक्चंदनादयः। शिरनालंभनाः स्त्र्युपभोगादयः। उदरालंभनाभक्ष्यभोज्यादयः इत्युज्वलावृत्तिः।

मनसा वाचा प्राणेन चक्षुषाश्रोत्रेण त्वक्शिश्नोदरा—रंभणास्तावान् परिवृंजानोऽमृतत्वाय कल्पते ॥
आप०—२-२-५-१६

त्वगाद्यर्थं येषामारंभस्ते त्वगारंभणादय
इत्यर्थः समीचीनतर इति मन्मतम् ॥

**आरा**—लौहयुक्तदण्डः इति गोविन्दस्वामी ।
"अस्यूतनासिकाभ्यां समुष्काभ्यामतुदन्नारया मुहुर्मुहु-
रभ्युच्छन्दयन् ।" बौधा०—२-२-४-२१

**आरार्च्चः**—देशविशषः ।
"पञ्च नद्यो बहन्त्येता यत्र निःसृत्य पर्वतात् ।
आरार्च्चा नाम ते देशा न तेष्वार्य्योऽन्वहं वसेत् ॥
इत्यादि पुराणे इति परिभाषाप्रकाशे—५६

**आराग्रा**—आरम्भदिने पय आदिकमल्पं भुक्त्वा तत्परं
प्रतिदिनं क्रमशो वृद्धिरिति आराग्रा ।
विस्तर उपसन्न्याये द्रष्टव्यः ॥

**आरामः**—उद्यानम्, उद्यानभूमिश्च ।
पुष्पफलोपचयहेतुर्भूभाग इति विज्ञानेश्वरः ।
याज्ञ०—२-१५४

**आरालिकः**—हस्तिदमकः । केचित्तु भक्ष्यकार इति ।
"आरालिको त्रपाकी स्यात्सूपकर्त्ता तु शाककृत् ।
तैलान्नं पचते यस्तु गोविकर्त्ता स उच्यते ॥
इत्यत्र मूलं मृग्यमिति नीलकंठः ॥
महाभा०, विराट०—२-६
"आरालिको गोविकर्त्ता सूपकर्त्ता नियोधकः ।
आसं युधिष्ठिरस्याहमिति वक्ष्यामि पृच्छत ॥
इति भीमवाक्यम् ॥
सूदारालिकव्यञ्जना वा प्रणिहिता दूष्यं रसेनातिसंदध्युः
कौट०—५-१-३६
अत्र आरालिकः भक्ष्यकार इति श्रीमूला ॥

**आरुकम्**—(१) आरण्यैर्वादकमिति हेमाद्रिः । जपसाधन-
मिन्द्राक्षनामकमित्यपरः ।

(२) माससमात्रपितृतृप्तिसाधनम् अरुह इति मध्यदेशभाषायां
प्रसिद्धमिति पृथ्वी चन्द्रोदये मार्कण्डेय इति
निर्णयसिन्धौ ।
"गोधूमैरिक्षुभिर्मुद्‌गैः सतीनैश्चणकैरपि ।
श्राद्धेषु दत्तैः प्रीयन्ते मासमेकं पितामहाः ॥
विदार्य्या च भरुण्डैश्च तिलैः शृंगाटकैस्तथा ।
कंचुकैश्च तथा कन्दैः कर्कन्धूबदरैरपि ॥
पालेवतैरारुकैश्चाप्यक्षोटैः पनसैस्तथा ।
काकोल्याक्षीरकाकोल्या तथा पिण्डालकैः शुभैः ॥
लाजाभिश्च सधानाभिस्त्रपुपैर्वारुचिर्भटैः ।
सर्षपराजशाकाभ्यामिङ्गुदै राजजम्बुभिः ॥
प्रियालामलकैर्मुख्यैः फल्गुभिश्च तिलण्टकैः ।
वेत्राङ्कुरैस्तालकन्दैश्चक्रिकाक्षीरिकावचैः ॥
लोचैः समोचैर्लकुचैस्तथा वै वीजपूरकैः ।
मुञ्जातकैः पद्मफलैर्भक्ष्यभोज्यैश्च संस्कृतैः ॥
रागखाण्डव चोष्यैश्च द्विजातकसमन्वितैः ।
दत्तैस्तु मासं प्रीयन्ते श्राद्धेषु पितरो नृणाम् ॥

(३) आरुकम् इन्द्राक्ष इति कल्पतरुः ।
नियतकाल०—१०१

**आरूढपतितः**—संन्यासाश्रमादिभ्रष्टः प्रत्यवसितविशेषः ।
ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा ।
उत्तमां वृत्तिमाश्रित्य पुनरावर्त्तते यदि ।
आरूढपतितो ज्ञेयः सर्वधर्मबहिष्कृतः ॥
लघुविष्णुः—४-३१

न दिवा स्वप्नशीलेन न च सर्वान्नभोजिना ।
कामं शक्यं न भोगन्तुमारूढपतितेन वा ॥
बौधा०—२-२-४-२४

आर्त्विगम्—ऋत्विग्भ्रेषमन्त्रा बौधायनीयाः ।
इति मिताक्षराटिप्पण्याम् ।
"आर्त्विगं बार्हस्पत्यं च वाक्सूक्तं मध्वृचस्तथेति मिताक्षरायां वसिष्ठः—३-३०८
उपलब्धवसिष्ठस्मृतौ तु "अवलिङ्गबार्हस्पत्यं तु वाक्सूक्तं मध्वृचस्तथा" इति पाठः—२८-१३

आर्द्रकम्—अदा इति भाषायम् ।
दाड़िमं मागधी चैव नागरार्द्रकतिन्तिड़ीः ।
आम्रातकं जीरकं च कुम्बरं च नियोजयेत ॥
इति हेमाद्रौ श्राद्धकल्पे—५५२
श्राद्धदेये "नागरं चात्र वै देयं दीर्घमूलकमेव च" इति वचनव्याख्याने यद्यपि आर्द्रकस्य न स्वशब्देनोपादानं तथापि नागरस्य आर्द्रकप्रकृतित्वान्नागरशब्देन शुण्ठ्यार्द्रकयोर्ग्रहणमिति श्राद्धदीपे ॥

आर्धिकः—(१) यो भूमिकर्षणादिना सस्यार्द्धभागग्राही ।
आर्धिकः कुलमित्रं च गोपालोदासनापितौ ।
एते शूद्रेषु भोज्यान्नायश्चात्मानं निवेदयेत् ।
मनुः—४-२५३

(२) जातिविशेषः ।
वैश्यकन्यासमुद्भूतो ब्राह्मणेन तु संस्कृतः ।
स ह्यार्धिक इति ज्ञेयो भोज्यो विप्रैर्न संशयः ।
पराशरः—११-२३

आर्यः (१) स्वधर्मनिरत इति विवादरत्नाकरे । उदारचरित इति कुल्लूकः । आर्यः ऋजुप्रकृतिरवक्र इति मेधातिथिः । व्यवहारेऽपि अवक्रबुद्धिरिति मन्वर्थचन्द्रिका "महाकुलीनमार्यं च राजा सम्पूजयेत् सदा ।
मनुः—८-३९५

(२) आर्यो ज्येष्ठ इति वीरमित्रोदये । गुरुपुत्रे चार्येषु ।
मनुः—२-२०७

(३) मातामहः ।
जातमात्रोऽपि दौहित्रो जीवत्यपि च मातुले ।
प्रातः संगवयोर्मध्ये आर्य्यस्य प्रतिपद्भवेत् ॥
इति निर्णयसिन्धौ । अस्मादेव आर्य्यशब्दात् उत्कलभाषाया "अजा" शब्दः अपभ्रष्टः ॥
धर्मार्थविभागज्ञो निविष्टो वेदशासने ।
क्रियालज्जाक्षमाधीमानार्य्यो म्लेच्छो विपर्य्यये ॥
इति हेमाद्रौ परिशिष्टखण्डे देवलः—३५५
श्रेयःसु गुरुवद्वृत्तिं नित्यमेव समाचरेत् ।
गुरुपुत्रेषु चार्य्येषु गुरोश्चैव स्वबन्धुषु ॥ मनुः—२-२०७

आर्यम्णम्—उत्तरफाल्गुनीनक्षत्रमिति हेमाद्रिः ।
श्राद्धकल्पे—२६७
धनमार्य्यम्णे इति विष्णुः—२८-१७

आर्य्यावर्त्तः—देशविशेषः ।
आसमुद्रात्तु वै पूर्वादासमुद्रात्तु पश्चिमात् ।
तयोरेवान्तरं गिर्योरार्यावर्त्तं विदुर्बुधाः ॥
मनुः—२-२२

प्रागदर्शात्प्रत्यक्कालकवनाद्दक्षिणेन हिमवन्तमुदक्पारियात्रमेतदार्य्यावर्त्तमिति बौधायनः—१-२-१०

"आर्य्यावर्त्तः प्रागादर्शात् प्रत्यक्कालकवनादुदक् परियात्राद् दक्षिणेन हिमवतः (८) उत्तरेण च विन्ध्यस्य।" वसिष्ठः—१-६

गङ्गायमुनयोरन्तरेऽप्येके॥—१-१२

यावद्वा कृष्णमृगो विचरति तावद्ब्रह्मवर्चसमित्यन्ये॥

वसिष्ठः—१-१३

**आर्षम्**—(१) प्रवर इति मेधातिथिः। ऋषेरिदम् आर्षं नाम प्रवर इति विज्ञानेश्वरः—१-५३

अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम्।

पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा॥ याज्ञ०—१-५३

(२) धर्मः।

अप्रामाण्यं च वेदानामार्षाणां चैव कुत्सनम्।

अव्यवस्था च सर्वत्र एतन्नाशनमात्मनः॥

वसिष्ठः—१२-४२

(३) आर्षं वेदवाक्यमिति गार्हस्थ्यकाण्डे कल्पतरुः—७३

**आर्षतीर्थम्**—अङ्गुल्यग्रे आर्षं तीर्थमिति आग्निवेश्य गृ० —२-६-१

तदेव वेदतीर्थमिति मनुः—२-५९

**आर्षभीवीथी**—"तथा द्वे चापि फल्गुन्यौ मघा चैवार्षभी मता" देवीभागवतम्—८-१५

**आर्षविवाहः**—धर्मसाधनायगोमिथुनग्रहणपूर्वकं कन्यादानमार्षविवाहः।

एकं गोमिथुनं द्वे वा वरादादाय धर्मतः।

कन्याप्रदानं विधिवदार्षो धर्मः स उच्यते॥

मनुः—३-२९

**आर्षोढा**—आर्षविवाहविधिना विवाहिता स्त्री।

दैवोढाजः सुतश्चैव सप्त सप्त परावरान्।

आर्षोढाजसुतस्त्रींस्त्रीन् षट् षट् कायोढजः सुतः॥

मनुः—३-३८

**आलम्भः**—(१) स्पर्शः "शृङ्खाणिकाश्वालंभे लोहितस्य केशानामग्नेर्गवां ब्राह्मणस्य स्त्रियाश्चालंभे।"

इत्यापस्तम्बः—१-५-१६-१४

(२) आलम्भो व्यापादनं यज्ञपशोः।

"अश्वालम्भो गवालम्भो संन्यासं पलपैतृकम्।

देवराच्च सुतोत्पत्तिः कलौ पंच विवर्जयेत्। इति

**आलम्भनम्**—(१) स्पर्शः। अत ऊर्द्ध्वमसमालम्भनं दशरात्रात्। गोभिल-गृ०—२-७-२३

(२) यज्ञेषु पशोर्मारणम्।

(३) अनुलेपनम्।

"आलभेदङ्गानिमृदेदं विष्णुरिति कात्यायनस्नानसूत्रम्। १-१०

**आलस्यम्**—सामर्थ्ये सति अवश्यकर्त्तव्यकरणानुत्साह इति लक्ष्मीधरः।

**आलिः**—सेतुः।

**आलिप्तमुखः**—चन्दनादिलिप्तमुखः। माल्यालिप्तमुख उपलिप्तकेशश्मश्रुरक्तोऽभ्यक्तो वेष्टित्युपवेष्टितीकाञ्च्युपानही पादुकी। आप०—१-२-८-२

आलु—मूलशाकविशेषः । दंडालुमध्वाल्वाद्यनेकभेदभिन्नः ।
आलुर्गलन्तिकायां स्त्री क्लीबं मूले च भेलके इति विश्वः
पुंसिप्रयोगोऽपि दृश्यते ।
मृणालं शतकन्दं च मध्वालुशीतकन्दकम् ।
कालेयं कालशाकं च सुनिषण्णं सुवर्चला: ॥
श्राद्धदीपे ॥

आवन्त्यः—व्रात्यात् विप्राज्जातः । तस्यैव भूर्जकण्टकादि
संज्ञाभेदाः मनुः—१०-२१
"व्रात्यात्तु जायते विप्रात् पापात्मा भूर्जकण्टकः ।
आवन्त्यवाटधानौ च पुष्पधः शैख एव च ॥ इति

आवपनम्—(१) पूरणम् आवपनं च भूमेः ।
गौतमः—१-१-३१
अन्यत आनीयपूरणमिति हरदत्तः । यत्र पूर्वमस्थि-
कपालाद्यस्ति तदुद्धृत्य मृदामन्यासां प्रक्षेप इति
मेधातिथिः । मनुः—५-१२२

(२) गोण्यादिभाण्डम् ।
"आवपनापमार्जनापस्थानतुषभस्मास्थिकपालसंचयं
नाधितिष्ठेत् इति हारीतः" इति संस्कारप्रकाशे ।
—५७७

आवर्त्तनम्—(१) सूर्यस्य पश्चिमदिग्गमनारम्भकालः ।
"आवर्त्तनात् प्राग्यदिपर्वसंधिः ।"
इत्यत्र आवर्त्तनम् हनोर्मध्यभाग इति माधवाचार्याः ॥

(२) आवर्त्तनं दुग्धा वह्निसाहाय्येन घनीभाव-
संपादनम् ।

(३) लौहादीनां वह्नौ संप्रतापनेन द्रवीभावापादनम् ।
"तैजसानां कुणपमध्ये त्वन्तवासितानामावर्त्तनम् ।
इति बौधायनीये ।

(४) आवर्त्तनम् आलोडनम् उरुठ्हीति तोयमामन्त्र्या-
वर्त्तयेत् । कात्यायनस्नानसूत्रम्—१-७
अत्र आवर्त्तयेत् आलोडयेत् इति हरिहरः ।

(५) जपः, आवृत्ति, "अन्तर्जलेऽघमर्षणं त्रिरावर्त्तयेत् ।"
कात्यायनस्नानसूत्रम्—१-१८
यत्र यत्र च संकीर्णं पश्यत्यात्मनि संशयम् ।
तत्र तत्र तिलैर्होमो गायत्र्यावर्त्तनं तथा ॥
लघुशङ्खः—७१

आवर्त्तितम्—सिद्धं दुग्धादि । वह्नितापेन यत्र
भूमिरुत्पद्यते ॥ आवर्त्तितदुग्धस्य पुनः कालान्तरेण पाके
द्विःपक्वता इत्याचारे गदाधरः । आउटा इति
उत्कलभाषायाम् ॥
एतैरेव तथा स्पृष्टं ताम्रसौवर्णराजतम् ।
शुद्ध्यत्यावर्त्तितं पश्चादन्यथा केवलाम्भसा ॥
हेमाद्रौ शङ्खवसिष्ठकश्यपाः । परि०—८२०

आवश्यकम्— मलोत्सर्गः । मूत्रपुरीषोत्सर्ग इति लक्ष्मीधरः
"उत्थायावश्यकं कृत्वा ।" मनुः—४-९३

आवसथः—(१) विश्रामस्थानम् । "आवसथं दद्यादुपरि-
शय्यामुपस्तरणमुपधानमिति आपस्तम्बः—२-३-६-१५
आसनावसथौ शय्यामनुव्रज्यामुपासनाम् ।
उत्तमेषूत्तमं कुर्याद्धीने हीनं समे समम् ॥
मनुः—३-१०७

(२) गृहम् । "आवसथ्याधानं दारकाले ।"

पारस्करः—१-२-१

अत्र शालाग्नि-गृह्याग्न्यादिपर्यायसाम्येन आवसथ्याग्निशब्दगतावसथशब्दस्य गृहार्थतैव ॥

(३) आमन्त्रणम् । आस्थानमण्डप इति यावत् ।

तस्य पुरस्तादावसथस्तदामन्त्रणमित्याचक्षते ॥

आप०—२-१०-२५

एतावसन्त्यस्मिन्निति आवसथः इति हरदत्तः ॥

**आवसथ्यः**—गृह्याग्निः शालाग्निरौपासनश्चेति तस्यैव नामान्तरम् ।

**आवापः**—(१) प्रधानहोम इति चन्द्रकान्तभाष्ये । "प्राक्स्विष्टकृत आवापः" इति गोभिलः—१-८-१६

"सर्वप्रायश्चित्तं प्राजापत्यान्तरमेतदावापस्थानं विवाहे" इति पारस्करः—१-५-६

(२) क्षेत्रेषु व्रीह्यादिबीजानां प्ररोहार्थं प्रक्षेपः ।

गवां प्रचारे गोपालाः शस्यावापे कृषीवलाः ।

शिल्पिनश्चापि तत्कालमायुधीयाश्च विग्रहे ॥

इति मिताक्षरायां नारदः—२-५

**आवासः**—गृहम् । मनुः—६-७७

**आवाहः**—कुलधर्मः इति नीलकंठः ।

महाभा० उद्—१४१-१४

इद्रं च बहुभिर्यज्ञैः सह सूतैर्मयाऽसकृत् ।

आवाहाश्च विवाहाश्च सह सूतैर्मया कृताः ॥

इति श्रीकृष्णं प्रति कर्णः ।

**आविद्धम्**—भ्राम्यमाणम् ।

अग्निचक्रमिवाविद्धं सव्यदक्षिणमस्यतः ।

गाण्डीवमभजद्राजन् पार्थस्य सृजतः शरान् ॥

महाभा० विरा०—६१-१४

अरालं वृजिनं जिह्म-मूर्मिमत्कुञ्चितं नतम् ।

आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि ॥

इत्यमरः – ३-१-७१

**आवीरम्**—फगु इति अवीर इति प्रसिद्धं चूर्णम् । फल्गु-इति शब्दकल्पद्रुमे ।

चन्दनागुरुकस्तूरीकुङ्कुमद्रवसंयुतम् ।

आवीरचूर्णं रुचिरं गृह्यतां परमेश्वर ॥

इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे । अ०—८

**आवृतः**—ब्राह्मणात् उग्रकन्यायां जातो जातिविशेषः ।

"ब्राह्मणादुग्रकन्यायामावृतो नाम जायते ॥"

मनुः—१०-१५

**आवृत्**—इति कर्त्तव्यता, रीतिः, अनुक्रमः, क्रिया ।

"पिण्डयज्ञा वृतादेयं प्रेतायान्नं दिनत्रयम् ॥

याज्ञ०—३-१६

अत्र पिण्डपितृयज्ञप्रक्रियता इति विज्ञानेश्वरः ।

आवृदितिकर्त्तव्यता इति अष्टावक्रभाष्ये ॥

मानवगृ०—२-६-७

आवृत्क्रिया इति देवपालभाष्ये ।

परिपाटीति गोभिलीयचन्द्रकान्तभाष्ये—१-१-१

चतुर्विंशतिसंग्रहे च—१७८

"तेष्वावृदुपचारस्तूष्णीम्" इति काठकगृह्ये—११-५

अमन्त्रिका तु कार्य्येऽयं स्त्रीणामावृदशेषतः।
संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम् ॥
मनुः—२-६६

अत्र आवृत जातकर्मादिक्रियाकलाप इति कुल्लूकः।

आवेणः—आशुव्रीहिः। "श्यामाकावेणरालकान्।"
इति चतुर्वर्गचिन्तामणौ व्रतखण्डे।

आवेशः—आविर्भावः। "तदाविशन्ति भूतानि महान्ति-
सहकर्मभिः।" मनुः—१-१८

आविशन्ति उत्पद्यन्ते इति कुल्लूकः।

आवेष्टः—मरणफलकग्रीवावेष्टनमावेष्टः इति हेमाद्रिः।
परिशिष्टखण्डे—४६४

पीड़ाकर्षांशुकावेष्टपादाध्यासे शतं दशः ॥
याज्ञ०—२-२-१७

आवेष्टकः—वृतिः।
वाट आवेष्टको वृतिरिति हलायुधः। का०—२
वाड इति भाषायाम्।

आवेष्टिकः—आवेष्टेन पशुसंज्ञपनार्थं यो यज्ञे परिक्रियते
स आवेष्टिक इति हेमाद्रिः।
"मीनघातकावेष्टिकपौश्चलवार्द्धुषिकाहितुण्डिक इत्यादि
श्राद्धवर्ज्यं तत्र हारीतः।

आवेष्टिका—शिरोवेष्टनम्, 'ठेका' इति भाषायाम्।
कासत्तिकशब्दो द्रष्टव्यः।

आशः—ग्रासः। प्रातराशशब्दो द्रष्टव्यः।

आशयः—अन्तःकरणम्।
कर्त्तव्याशयशुद्धिस्तु भिक्षुकेण विशेषतः।
ज्ञानोत्पत्तिनिमित्तत्वात्स्वातन्त्र्यकरणाय च ॥
याज्ञ०—३-६२

अत्र आशयः अन्तःकरणमिति विज्ञानेश्वरः ॥

आशीः—कल्याणाशंसनम्।
"यां वै कां च यज्ञे ऋत्विज आशिषमाशासते
यजमानस्यैव सा" इति श्रुतिः
इति गदाधरभाष्ये पारस्करगृ०—२-२-११

आशुधान्यम्—तुच्छधान्यम् इति निर्णयसिन्धुटीकायाम्।
"राजमाषान्कुलित्थांश्च आशुधान्यं च सन्त्यजेत्।
इति चातुर्मास्यव्रते स्कान्दे।

आश्च्योतः—प्रक्षेप्तव्यं द्रव्यमिति हेमाद्रिः ॥ तन्मते
स्तोतव्या चेह पृथिवी निवापाश्च्योतधारिणी।
वैष्णवी काश्यपी चेति तथैवेह क्षयेति च ॥
शम्भुकरत्राजपेयिचरणानां श्राद्धपद्धतौ तु
"स्तोतव्या चेह पृथिवी निवापस्य च धारिणी।
वैष्णवी काश्यपी चैव तथैवेक्ष्वाकवीति च॥ इति पाठः

आश्यान्नः—(१) भोज्यान्नः। (२) क आश्यान्नः।
(३) य इच्छेदिति कण्वः। (४) पुण्य इति कौत्सः।
यः कश्चिद्दद्यादिति वर्ष्यायणिः। आप०—१-७-१९-५

आश्रमः—ब्रह्मचर्यादिचतुष्टयम्।
"ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा।
एते गृहस्थप्रभवाश्चत्वारः पृथगाश्रमाः ॥
मनुः—६-८७

**आश्वयुजी**—(१) आश्विनपूर्णिमा ।

(२) पाकयज्ञसंस्थकर्मविशेषः इति गौतमः—८-१६

तत्र आश्वयुजी इन्द्रध्वजहोम इति मस्करिः ॥

पशुपतेः स्थालीपाकयज्ञ इति हरदत्तः ॥

इन्द्रध्वजहोमाख्यं कर्म इति स्मृतिचन्द्रिकायाम्—४१४

**आश्विनम्**—(१) अश्विनी-नक्षत्रम् । हेमाद्रिः श्राद्धकल्पे —२६७

(२) "तुरङ्गमानाश्विने" इति श्राद्धप्रकरणे विष्णुः—७८-३४

(३) यज्ञे द्विकोणं पात्रं च आश्विनसंज्ञकम् ।

**आष्टाक्यम्**—अष्टका । स्वार्थे अण् इति हरदत्तः ।

आप०—१-१-१०-२

**आसङ्गः**—उत्तरीयम् । यथैतदभिचारणीष्विष्टिपशुसोमेषु लोहितोष्णीषा लोहितवाससश्चर्त्विजः प्रचरेयुः चित्रवासमश्वित्रासङ्गा वृषाकपाविति च ।

बौधा०—१-६-१३-६

**आसनम्**—राजधर्मोक्तगुणविशेषः ।

क्षीणस्य चैव क्रमशो दैवात् पूर्वकृतेन वा ।
मित्रस्य चानुरोधेन द्विविधं स्मृतमासनम् ॥

मनुः—७-१६६

आसनम् उपेक्षा इति सरस्वतीविलासे ४३

**आसन्दी**—आसन्दी पीठिकेति गौतमीये हरदत्तः ।

गौतमः—९-६-३२

वेत्रादिनिर्मितमासनमिति गदाधरराजगुरुः ॥

आचारसारः—१७४-१

तथैव कल्पतरुः । नियतकालः—२४४

राष्ट्रभृदसि इत्याचार्य्य आसन्दीमनुमन्त्रयते ॥

वाराह गृ०—१२-२

चतुरस्रकाष्ठासनमपि ।

"नासन्द्यां भुञ्जीत" वसिष्ठः—१२-३६

लघुखट्टिका इति हारावलीति वैद्यकशब्दसिन्धौ ।

"आसन्दी मञ्चिका" इतिमहीधरः । शु० य०—१६-१६

**आसादनम्**—(१) यज्ञपात्रदीनां सुशोभिततया रचनम् ।

दक्षिणतो ब्रह्मासनमास्तीर्य्य प्रणीय परिस्तीर्य्यार्थवदासाद्य इत्यादि पारस्करगृ०—१-१-२

(२) प्राप्तिः "ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान् दिवि देवभोगान्" इति भगवद्गीता—९-२०

**आसारितम्**—शिवस्तुतौ प्रयोज्यो गीतविशेष इति सङ्गीत-रत्नाकरे—५-५

अपरान्तकमुल्लोप्यं मद्रकं प्रकरीं तथा ।
त्र्यौवेणकं सरो विन्दुमुत्तरं गीतकानि च ॥

याज्ञ०—३-११३

**आसिद्धः**—राजाज्ञयावरुद्धः ।

स्थानासेधः कालकृतः प्रवासात् कर्मणस्तथा ।
चतुर्विधस्यादासेधो नासिद्धस्तं विलङ्घयेत् ॥

इति नारदः—१-४६

**आसुरविवाहः**— शुल्कदानपूर्वकं कन्याग्रहणम् ।

"आसुरो द्रविणादानात्" याज्ञ०—१-६१

ज्ञातिभ्यो द्रविणं दत्त्वा कन्यायै चैव शक्तितः ।
कन्याप्रदानं स्वाच्छन्द्यादासुरो धर्म उच्यते ॥

मनुः—३-३१

वसिष्ठेनायं मानुषविवाह इत्युच्यते ।
"पणित्वा धनक्रीता स मानुषः" वसिष्ठः—१-३५
"तस्माद् दुहितृमतेऽधिरथं शतं देयमितीह क्रयो विज्ञायते" वसिष्ठः—१-३६

आसुरी—राजसर्षपः इति लक्ष्मीधरः । श्राद्ध—५१
"राजमाषासुरीपर्युषितकृतलवणानि" इति
विष्णुः—७६-१८
"आसुरीराजिका चेति कथ्यते राजसर्षप" इति
हलायुधः—२-५८१

आसेद्धा—आसेधकर्त्ता ।
आसेधकाल आसिद्ध आसेधं यो व्यतिक्रमेत् ।
स विनेयोऽन्यथा कुर्वन्नासेद्धा दण्डभाग् भवेत् ॥
इति नारदः—१-५१
मिताक्षरायां तु यो व्यतिक्रमेत् स्थाने योऽतिवर्त्तते
इति पाठः—२-५

आसेधः—राजाज्ञयाऽवरोधः इति धर्मकोशे ।
वक्तव्येऽर्थे ह्यविष्ठन्तमुत्क्रामन्तं च तद्वच ।
आसेधयेद्विवादार्थी यावदाह्वानदर्शनम् ॥
मिताक्षरायां नारदः—२-५
स तु चतुर्विधः स्थानासेध कालासेध प्रवासासेधकर्मासेधभेदेन ॥

आस्तिकः—अस्ति परलोक इति मतिर्यस्य स आस्तिक ।
"अस्तीत्यस्यमतिः आस्तिकः" इति पातञ्जलमहाभाष्ये
विधिवद्यः श्राद्धं संप्रयच्छति—२६७
हस्तिकादिमरण्यन्तं स कामानाप्नुयादिमान् ।
आस्तिकः श्रद्दधानश्च व्यपेतमदमत्सरः ॥ याज्ञ०—१-२६८

आस्थानम्—राजसभा "आस्थानंनृपतेः सभा।" इति हलायुधः
का०—४

आस्फोटः—पुष्पवृक्षविशेषः ।
वृद्धहारीतेन विष्णुदेयपुष्पवर्गे पठितः । आस्फोटं कुटजं लोध्रं कर्णिकारं च किंशुकम् इति ।—७-५६

आस्फोटनम्—पाणिनाबाहुमूलाभिघातः इति कल्पतरुः ।
गार्हस्थ्य—४००
नास्फोटयेन्न च क्ष्वेडेत् ॥ मनुः—४-६४
"पाणिना बाहौ ध्वनिरूपमास्फोटनं न कुर्यात्"
इति कुल्लूकः ।

आस्यहोमः—ग्रासभक्षणम् ।
दष्टावशिष्ट भक्षणमिति हेमाद्रिः ॥
प्राणाहुतिषु सोमे च मधुपर्के तथैव च ।
आस्यहोमेषु सर्वेषु नोच्छिष्टो भवति द्विजः ॥
इति स्मृतिचन्द्रिकायां वसिष्ठः—२६८

आस्रावः—आस्रावः आस्यजलमितिगौतमीवृत्तौ हरदत्तः
गौतमः—१-१-४३

आस्रावाः—यैः पुरुष आस्राव्यते बहिराकृश्यते ते आस्रावाः शब्दादयो विषया इति उज्वलावृत्तौ हरदत्तः । "मनसा वाचा प्राणेन चक्षुषा श्रोत्रेण त्वक्शिश्नोदरारम्भणान् अस्रावान् परिवृञ्जानोऽमृतत्वाय कल्पते ॥
आप०—२-२-५-१८

आहवः—युद्धम् । मनुः—१०-११६
"नाहवेस्यात्पराङ्मुखः" इति
"न दोषो हिंसायामाहवे" गौतम०—२-१-१७
यत्र परस्परमाह्वयन्ते स आहव इति उज्ज्वलाकारः ॥

**आहवनीयः**—आहवनीयकुण्डस्थापितोऽग्निः। आहूयतेऽस्मिन् इति व्युत्पत्त्या "मुख्यहोमाधारत्वात् आहवनीय पदवाच्यः" अध्वर्युः उत्तरस्य हविर्धानस्य नीडे एकमम्भृणं स्थापयति। स आहवनीय इत्युच्यते।
इति श्रौतपदार्थ निर्वचने॥

**आहार्यवृत्ताः**— ऋत्विग्विशेषः। ऋत्विक् शब्दो द्रष्टव्यः।

**आहावः**—जलाधारपात्रविशेषः। आह्वयन्त्यत्र पानार्थं बलीवर्दानिति आहावो जलाधारः पात्रविशेषः।
"द्रोणाहावमवतमश्मचक्रम्" इति ऋक्—१०-१०१-७

**आहिण्डिकः**—निषादेन वैदेह्यां जातः। मनुः—१०-३७
"आहिण्डिको निषादेन वैदेह्यामेव जायते॥ इति

**आहितकम्**—आधित्वेन गृहीतं वस्तु इति श्रीमूला।
कौट०—४-६

**आहितिका**—आधित्वेन गृहीता दासी। "धात्रीमाहितिकां वाऽकामां स्ववशां गच्छतः पूर्वः साहसदण्डः। परवशां मध्यमः।" कौट०—३-१३-११

**आहिताग्निः**—साग्निकः। येन अग्नयः आहिताः।
न पितृयज्ञियो होमो लौकिकेऽग्नौ विधीयते।
न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः॥
मनुः—३-२८२

**आहितुण्डिकः**—सर्पक्रीडोपजीवी।
आहितुण्डिकः व्यालग्राहीति कल्पतरुः।
व्यवहारप्रकाशः—१११
प्राग्दृष्टदोषः शैलूषविषजीव्याहितुण्डिकाः।
इति क्षमाक्षिप्रकरणे नारदः—४-१८१

**आहिर्बुध्नम्**—उत्तरभाद्रनक्षत्रमिति हेमाद्रिपरिशिष्टे।
—२६९
गृहमाहिर्बुध्ने इति विष्णुः—७८-३२
"अहिर्बुध्न्याय प्रोष्ठपदाभ्यः" इति
शांखायन-गृ०—१-२६-२५

**आह्वायकः**—आह्वानकर्मणि नियुक्ता धर्माधिकारिण इति नीलकंठः। मन्मते नैते धर्माधिकारिणः अपि तु अर्थिप्रत्यर्थिनामाह्वाने नियुक्ताः पुरुषाः।
आह्वायका देवलका नाक्षत्रा ग्रामयाजकाः।
एते ब्राह्मणचाण्डाला महापथिकपञ्चमाः॥ इति
महाभा० शान्ति०—७६-६

# इ

**इक्षुः**—मिष्टरसस्तृणविशेषः। "इक्षवः पौण्ड्रकवांशिककमरिनेपालशातपर्वकादय" इति हेमाद्रिः। श्राद्धकल्पे-५३८
ताम्बूलेक्षुफले चैव भुक्तस्नेहानुलेपने।
मधुपर्के च सोमे च नोच्छिष्टं धर्मतो विदुः॥
पराशरः—७-३१

**इङ्गना**—नाम।
ऐश्वर्यस्यसमग्रस्य वीर्यस्य यशसः श्रियः।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना॥
इति विष्णुपुराणे—६-५-७४
समुपलब्धगीताप्रेसविष्णुपुराणे ईरणा इति पाठो दृश्यते। मन्वर्थमुक्तावल्यां तु इङ्गनेति पाठः। मनुः—१-२

**इङ्गितम्**—इङ्गितमधोनिरीक्षणादिरिति कुल्लूकः॥
मनुः—८-२५

आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च ।
नेत्रवक्त्रविकारैश्च गृह्यतेऽन्तर्गतं मनः ॥

मनुः—८-२६

**इङ्गुदम्**—तापसतरुफलमिति श्राद्धमयूखे । तच्च दन्तकाष्ठाय विष्णुना निषिद्धम् । "न च कोविदारशमीपीलुपिप्पलेङ्गुदगुग्गुलुजम्" इति विष्णुः—६१-४
अत्र इङ्गुदः तापसतरुरिति नन्दपण्डितः ॥

**इङ्गुदः**—इङ्गुवाकः कण्टकीवृक्षविशेष इति आह्निके मित्रमिश्रः । विष्णुना दन्तकाष्ठार्थे निषिद्धः ।—१२४
इङ्गुदः तापसतरुरिति वैजयन्त्यां नन्दपण्डितः ॥

**इङ्गुदी**—तापसतरुरिति हेमाद्रिः । विष्णुदेये—
इङ्गुदीफलबिम्बानि बदरामलकानि च ।
खर्जूरान् पनसांश्चैव मालकार्कपरूषकान् ॥
आम्रादुदुम्बरांश्चैव तथाप्लक्षफलानि च ॥ इति वाराहे इति पूजाप्रकाशे—७६

**इज्या**—यागः ।
इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम् ।
अयं तु परमो धर्मो यद् योगेनात्मदर्शनम् ॥

याज्ञ०—१-८

इज्या यागे देवपितृपूजा इति उज्वलावृत्तौ हरदत्तः ।

गौतम०—२-१-१

**इट्**—अन्नम् । "इषेराये रमस्व" शुक्लयजुः—१३-३५
"इषेत्वोर्जेत्वा" शु० य०—१-१
वस्नेव विक्रीणावहा इषमूर्जं शतक्रतोः ।

शु० यजुः—३-४६

**इडा**—हुत हविः शेषादवदाय इडापात्रे स्थाप्यमानो हविर्भाग इडा इति श्रौतपदार्थनिर्वचने ।

**इडापात्रम्**—अश्वत्थकाष्ठनिर्मितं चतुरङ्गुलपरिणाहं पदपरिमितायामबिलयुक्तं चतुरङ्गुलदण्डं इडाया आधारत्वात् इडापात्रमित्युच्यते । इति श्रौतपदार्थनिर्वचने ।

**इण्ड्वम्**—कुण्डलाकारं पत्रम् "घृताक्तानि कुशेण्ड्वानि जुहुयात्" इति पारस्करः—३-७-३
"कुशानाम् इण्ड्वानि कुण्डलाकाराणि पत्राणि"

इति हरिहरः ।

**इति**—समाप्तिसूचकमव्ययपदम् ।
इतिहेतुप्रकरणप्रकाशादि समाप्तिषु ।

इत्यमरः—३-३-२४५

**इतिकृत्यम्**—इतिकर्त्तव्यता । कर्त्तव्यकलापः इति यावत् ।
त्रिष्वेतेष्वितिकृत्यं हि पुरुषस्य समाप्यते ।
एष धर्मः परः साक्षादुपधर्मोऽन्य उच्यते ॥

मनुः—२-२३७

त्रिषु मातृपित्राचार्य्येषु इति ॥

**इतिहासः**—महाभारतादिग्रन्थः । यत्र पुरावृत्तं वर्णितमस्ति । पुरावृत्तं च ॥ पुराणादस्य प्रभेदः पुराणशब्दे द्रष्टव्यः ॥
"आख्यानानीतिहासांश्च पुराणानि खिलानि च ।"

मनुः—३-२३२

"इतिहासाः सत्यतप उपाख्यानसीमोत्पत्ति प्रभृतय"

इति सरस्वतीविलासे ।

"तमितिहासश्च पुराणं च गाथाश्च नाराशंसी श्चानुव्यचलन्"

अथर्व—१५-६-११

अत्रेतिहासशब्दः महाभारतादिव्यतिरिक्त-
वैदिकेतिहासपरः ॥

**इतिहेतिहः**— पुरावृत्तकथनपरः ।

अनाक्रोशकोऽपिशुनः कुलंकुलो नेतिहेतिहः स्यात् ।

इति शांखायनगृह्ये अ० ४ खण्ड०-१२-११

**इदावत्सरः**—"संवत्सरस्तु प्रथमो द्वितीयः परिवत्सरः
इदावत्सरस्तृतीयस्तु" इति ब्रह्मवैवर्त्ते ।

संवत्सरे तु दातृणां तिलदानं महाफलम् ।
परि पूर्वे तथादानं यवानां द्विजसत्तम ॥
इदा पूर्वे तु वस्त्राणां धान्यानां चानुपूर्वके ।
इत्पूर्वे रजतस्यापि दानं दत्तं महाफलम् ॥

इति कालसारोद्धृत विष्णुधर्मोत्तरे ॥

**इद्वत्सरः**—सम्वत्सरादिपञ्चके पञ्चमः ।

"इत्पूर्वे रजतस्यापि दानं दत्तं महाफलमिति
विष्णुधर्मोत्तरे ॥

**इध्मः**—समित् ।

"अथेध्मानुपकल्पयते" इति गोभिलः—१-५-१४

"सधस्तर्पणमिन्धनमधः समिदिध्म इत्यभिन्नार्थाः ॥
इति हलायुधः का—१

इध्मः समिद्विशेषः । तदुक्तं गोभिलस्मृतौ "प्रदेशान्ना-
धिकान्यूना"—१-११५ इति समित्प्रमाणम् । इध्मस्य
तु "प्रादेशद्वयमिध्मस्य प्रमाणं परिकीर्त्तितम्"—१-११६

समिधोऽष्टादशेध्मस्य प्रवदन्ति मनीषिणः ।
दर्शे च पौर्णमासे च क्रियास्वन्यासु विंशतिः ॥—१-११७

इध्मसमिधोर्भेदो यथा—

समिधादिषु होमेषु मन्त्रदैवतवर्जिताः ।
पुरस्ताच्चोपरिष्टाच्च इन्धनार्थं समिद्भवेत् ॥—१-४४८
इध्मोऽप्येधार्थमाचार्य्यैं हविराहुतिषु स्मृतः—१-११६

**इन्दुसौकथ्यम्**—चन्द्रशुद्धिः । दत्तकमीमांसा पृ—२३६

गुणाश्रयुग्मनिशाशुक्राधिक्यस्त्रीक्षामतेन्दुसौकथ्यपुंसवना-
पूर्वादयो योगिमन्वादिभिरेव इति दत्तकमीमांसा ।

**इन्द्रकीलः**—पुरद्वारेस्थापितकाष्ठविशेषः इति गोविन्दस्वामी ।

इन्द्रकीलं कीलयद्भिरिति नरसिंहवाजपेयी ।

"पुरद्वारेन्द्रकीलपरिधावन्तरेणनातीयात् ।"
बौधा०—२-६-११

कपाटधारणार्थं प्रधानः कीलकविशेष इति श्रीमूला ।
कौट०—२-१

**इन्द्रगोपः**— रक्तवर्ण ईषच्चिपिटवर्त्तुलाकृतिः कीटविशेषः
"साधववोहू" इति प्रसिद्धः ।

तालुस्थमिन्द्रगोपाभं त्रिकोणं रेफसंयुतम् ।
रुद्रेणाधिष्ठितं तेजो ध्यात्वा वह्निं जयेदिति ॥
स्कन्द० काशी—४१-११५

**इन्द्रशुद्धे सामनी**—इन्द्राय सामगायतेत्यादये (ऋ ६-७-१)
इति याज्ञवल्क्यटिप्पण्याम् ।

एतोन्विन्द्रस्तवाम इत्यस्यामृचिप्रसिद्धे इति कल्पतरुः ॥

एतोन्विन्द्रं स्तवाम शुद्धं शुद्धेन साम्ना ।
शुद्धै रुक्थैर्वावृध्वांसं शुद्धैराशीर्वान् ममत्तु ॥
इति साम०—१-३५

शतरुद्रियार्थशिरास्त्रिसुपर्णं महाव्रतम् ।
गोसूक्तं चाश्वसूक्तं च इन्द्रशुद्धे च सामनी ॥
इति मिताक्षरायां वसिष्ठः । मिता०—३-३०८
प्रकाशितवसिष्ठस्मृतौ "शुद्धाशुद्धीये सामनी ।"
इति चतुर्थपादपाठः । वसिष्ठः—२८-१४

**इन्द्राक्षः**—आरुकम् (जपसाधनम्) इति कल्पतरुः सुवर्णमणिमुक्ताफलस्पटिकपद्माक्षेन्द्राक्षपुत्रजीवकानां मन्यतमादथ मालां कुर्यात्कुशग्रन्थिकृतां वाहस्तोपामैर्वा गणयेत् इति शङ्खः ॥

**इन्द्रावसिक्तः**—इन्द्रेणसिक्तैर्वन्यैर्वल्यादिभिर्यो जीवति, तादृश सर्वारण्यकः वानप्रस्थः ।
सर्वारण्यका नाम द्विविधाः द्विविधमारण्यमाश्रयन्तः इन्द्रावसिक्तारेतोवसिक्ता इति ॥ बौधा०—३-३-४

**इन्द्रियम्**—श्रोत्रादि । एकादशविधम् ।
"एकादशेन्द्रियाण्याहुर्यानि पूर्वे मनीषिणः ।
तानि सम्यक् प्रवक्ष्यामि यथावदनुपूर्वशः ॥
श्रोत्रं त्वक् चक्षुषी जिह्वानासिका चैवं पञ्चमी ।
पायूपस्थं हस्तपादं वाक् चैव दशमी स्मृता ॥
एकादशं मनो ज्ञेयं स्वगुणे नोभयात्मकम् ।
यस्मिन् जिते जितावेतौ भवतः पञ्चकौ गणौ ॥
मनुः—२-८९-९२

अत्र श्रोत्रादीनाम् आकाशादिमहाभूतगुणशब्दादे ग्राहिकत्वेन ज्ञानसाधनत्वात् ज्ञानेन्द्रियत्वम्, तथा कर्मेन्द्रियाणां तत्तन्महाभूतगुणकारकत्वेन कर्मेन्द्रियत्वमिति आकाशादि क्रम एव इन्द्रियक्रमे हेतुः । तेन मनूक्तौ कर्मेन्द्रियेषु क्रमबाधे संजाते मालाक्रमस्तत्र विवक्षित इति समाधानम् ।

मालाक्रमस्तु—श्रोत्रं (१) त्वक् (२) चक्षुषी (३) जिह्वा (४) नासिका (५)
वाक् (१०) पादः (९) हस्तः (८) उपस्थम् (७) पायु (६)
इति प्रकारेण भवति ।

त्रीण्याहुरतिदानानि गावः पृथ्वी सरस्वती ।
तारयन्तीह दातारं जपवापनदोहनैः ॥
इति बृहस्पतिवचने—१८

तेन श्रोत्रादीनि शब्दादीनाम् आकाशादिभूतगुणानां क्रमेण ग्राहकाणि भवन्ति । यथा शब्दग्राहकं श्रोत्रमिति । तथाविपरीतक्रमेण पाय्वादीनि पञ्चकर्मेन्द्रियाणि पृथिव्यादिमहाभूतगुणानां गन्धादीनां कारकाणि भवन्ति क्रमेण । यथा पाय्विन्द्रय-पृथिवीगुणस्य गन्धस्य कारकं भवति पर्दनपुदीषकरणेन । उपस्थं रसधर्मिणो जलस्य कारकं मूत्रशुक्रादिना । हस्तेन्द्रियं तेजोगुणस्य रूपस्य कारकं निर्माणसाधनत्वेन पादेन्द्रियं तु वायुगुणं स्पर्शं नियतमाचरति गत्यवस्थानाभ्याम् । तथा वायुधर्मं प्रक्षेपणं स्थानान्तरप्राप्तिरूपं पादेन्द्रियमेव करोति । दशमी च वाक् आकाशगुणं शब्दं करोति इत्येतेषां तत्तत् कर्मसाधकत्वेन कर्मेन्द्रियत्वमिति मन्मतं गुणिगणादरणीयमस्तु ।

**इन्वका**—मृगशीर्षनक्षत्रम् । बौधा, गृ० प०—३-२

**इरा**—शुक्लदशमी रात्रिः । कालमाधवः—२

**इरिणम्**—ऊषरप्रदेशः ।
इरिणमूषरं मरुभूमिर्वेति विज्ञानेश्वरः । याज्ञ०-१-१५१

**इभः**—गजः ।

खराश्वोष्ट्रमृगेभानामजाविकवधस्तथा ।
सङ्करीकरणं ज्ञेयं मीनाहिमहिषस्य च ॥

मनुः—११-६८

**इषः**—आश्विनो मासः-इषश्चोर्जश्च शारदावृतू ।

शु० यजु०—१४-१६

**इषीकम्**—(१) काशतृणम् । तृणविशेष इति गोविन्दस्वामी
"यथा हि तूलमैषीकमग्नौप्रोतं प्रदीप्यते ।"

बौधा०—२-१३-१

(२) इषीकं शरकाण्डं सुवर्णमित्येके इति देवपालभाष्ये ।

काठक गृ०—१-१-६

इषीकवर्णेलेखभू सुभगो सुस्मिते ।
मूर्धन्वाँस्त्वामन्धर्वोमामभिनियच्छतु सरस्वत्यनुवाकः

—१८

**इषीका**—काशतृणे, शरकाण्डे चेति वैद्यकशब्दसिन्धौ ।
इषीकायस्य हेमाभा पत्रं यस्य सुपिंजरम् ।
मतमुंज इति ख्याता स शरः पर्पटः स्मृतः ॥

इति काठकगृह्यभाष्ये—१-१-६

चतसृभिर्दर्भेषीकाभिः शरेषीकाभिर्वा समुंजाभिः सतूलाभिरित्येकैकया त्रैककुभस्याञ्जनस्य संनिकृष्येत्यादि । मैत्रायणीमानवगृह्यसूत्रे । पू०—१-११-८

**इष्टम्**—(१) अग्निहोत्रादि ।
"अग्निहोत्रं तपः शौचं वेदानां चानुपालनम् ।
आतिथ्यं वैश्वदेवश्च इष्टमित्यभिधीयते ॥

इति कालसारे जातूकर्ण्यः ।

"अग्निहोत्रं तपः सत्यं वेदानां चैव पालनम् ।
आतिथ्यं वैश्वदेवश्च इष्टमित्यभिधीयते ॥

अत्रिस्मृतिः—४

वेदानां चैव धारणमिति लघुशङ्खस्मृतौ विशेषः—५
"एकाग्निहोत्रावहन त्रेतायां यच्च हूयते । अन्तर्वेद्यां च यद्दानमिष्टं तदभिधीयते" इति कालसारोद्धृत-महाभारते ॥

(२) प्रियम् (वाच्यलिङ्गम्) "तिलप्रदः प्रजामिष्टाम् ।"

मनुः—४-२२९

**इष्टका**—इष्टकाकृतिः खण्डेष्टकाख्यो भक्ष्यविशेषः । इष्टका इति हेमाद्रिः ।
भक्ष्यान् वक्ष्ये करम्भश्च इष्टकाघृतपूरकाः ।
कृसरं मधुसर्पिश्च पयः पायसमेव च ॥

इति वायुपुराणे ।

कालसारेतु—
"भक्ष्यान्नं नीरकुम्भश्च इष्टका घृतपूरकाः ।
कृशरं दधि सर्पिश्च पयः पायसमेव च ॥

इति मार्कण्डेयपुराणे ।

तत्र इष्टका कासारखण्डा इति लिखितम् ।

**इष्टिः**—दर्शपौर्णमासादियागः ।
इष्टिशब्द ऋत्विक्चतुष्टय संपाद्य सपत्नीकयजमानकर्तृककर्मनामधेयम्, इति श्रौतपदार्थनिर्वचने ।
"प्राजापत्यां निरुप्येष्टिं सर्ववेदसदक्षिणाम् ।
आत्मन्यग्निं समारोप्य ब्राह्मणः प्रव्रजेद्गृहात् ॥

मनुः—६-३८

**इष्टिश्राद्धम्**—इच्छाश्राद्धमिति लक्ष्मीधरः।

इष्टिश्राद्धशब्देन पारिभाषिकं कर्माङ्गश्राद्धमुच्यते इति श्राद्धमयूखकारः। तत्रैव पारस्करः—

निषेककाले सोमे च सीमन्तोन्नयने तथा।

ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं वृद्धिवत्कृतम्॥

वृद्धिवत् इत्यनेन वृद्धिश्राद्धात्कर्माङ्गश्राद्धमन्यदिति ज्ञायते इति माधवाचार्य्याः।

**इष्वासः**—धनुः। अमरः—२-८-८३

"अत्र शूरा महेष्वासा भीमार्जुनसमा युधि।"

इति महाभारते भीष्मः।

# ई

**ईक्षणम्**—(१) अतिथि-प्रतीक्षणम्।

**ईक्षणिकः**—हस्तरेखाद्यवलोकनेन शुभाशुभफलकथनजीवी।

"मङ्गलाचारवृत्ताश्च भद्राश्चेक्षणिकैः सह।

मनुः—६-२५८

**ईतिः**—अतिवृष्टिप्रभृतिः।

"अतिवृष्टिरनावृष्टिः शलभा मूषिकाः खगाः।

प्रत्यासन्नाश्च राजानः षडेते ईतयः स्मृताः॥

पर्जन्यः कामवर्षी स्यादीतिभ्यो न भयं भवेत्।

इति श्राद्धदीपोद्धृतभविष्योत्तरे जन्माष्टमीप्रकरणे॥

**ईरणा**—उक्तिः।

"ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः।

ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा॥

विष्णुपुराणे—६-५-७४

मन्वर्थमुक्तावल्यां तु इङ्गनेति पाठः। मनुः—१-२

**ईरिणम्**—ऊषरभूमिः।

यथेरिणे बीजमुप्त्वा न वप्ता लभते फलम्।

तथानृचे हविर्दत्वा न दाता लभते फलम्॥

मनुः—३-१४२

**ईर्वारुः**—कर्कटी (फुटि) इति वैद्यकशब्दसिन्धौ।

स्फुटिरिति हलायुधकोषव्याख्याने जयशङ्करः॥

**ईर्ष्या**—परगुणासहिष्णुता। परोत्कर्षासहिष्णुता।

"पैशुन्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणम्।

वाग्दण्डजं च पारुष्यं क्रोधजोऽपि गणोऽष्टकः॥

मनुः—७-४८

**ईर्ष्यापण्डः**—ईर्ष्यया परसंभोगदर्शनेन पुंस्त्वमुत्पद्यते यस्य स ईर्ष्यापण्डः॥

ईर्ष्यापण्डादयो येऽन्ये चत्वारः समुदाहृताः।

त्यक्तव्यास्ते पतितवत् क्षतयोन्या अपि स्त्रियः॥

नारदः—१२-१५

**ईशित्वम्**—प्रभुत्वम्। अष्टैश्वर्यान्तर्गत ऐश्वर्यविशेषः।

अणिमा लघिमा व्याप्तिः प्राकाम्यं गरिमा तथा।

ईशित्वं च वशित्वं च तथा कामावसायिता॥ इति।

**ईश्वरः**—प्रभुः।

ब्राह्मणो जायमानो हि पृथिव्यामधिजायते।

ईश्वरः सर्वभूतानां धर्मकोशस्य गुप्तये॥

मनुः—१-९९

**ईषा**—ईष इति प्रसिद्धः रथावयवविशेषः।

सोपस्करैरधिष्ठानैरीषादण्डैश्च बन्धुरैः।

अक्षैर्विमथितैश्चक्रैर्बहुधा पतितैर्युगैः॥

महाभा० द्रो०—४१-१८

**ईहा**—चेष्टा, उद्यमः कृषिवाणिज्यपशुपालनादिः ।

धर्मार्थं यस्य वित्तेहा तस्यानीहा गरीयसी ॥

महाभारते—३-१०

नेहेतार्थान् प्रसङ्गेन न विरुद्धेन कर्मणा ।

न विद्यमानेष्वर्थेषु नार्त्यामपि यतस्ततः ॥

मनुः—४-१५

ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे ।

राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे ॥

मनुः—२-३७

अत्र ईहा कृषिवाणिज्यपशुपालनादिः ।

# उ

**उ**—(१) उ विस्मये इति श्रीधरस्वामी ।

यत्नन्त्रिशावहमुखाण्डवमग्नयेऽदामिति ।

श्रीमद्भागवते—१-१४-५

(२) लक्ष्मीः । (३) यजुर्वेदः ।

उकारस्तु भवेल्लक्ष्मीर्यजुर्वेदात्मको महान् ।

इति वृद्धहारीतस्मृतिः—६-४१

(४) प्रजापतिः । (५) सम्बोधनम् ।

नदीज लङ्केशवनारिकेतुर्नगाह्वयो नाम नगारिसूनुः ।

एषोऽङ्गनावेशधरः किरीटी जित्वा वयं नेष्यति चाद्य गा वः ॥

महाभा० विरा०—३६-१०

**उक्तलाभः**—क्रयविशेषः ।

किञ्चिच्च द्रव्यमादाय काले दास्यामि ते क्वचित् ।

नोचेन्मूलमिदं त्यक्तं केदारस्येति यः क्रयः ।

स उक्तलाभ इत्युक्त उक्तकालेऽप्यनर्पणात् ॥

इति सरस्वतीविलासे भरद्वाजः पृ०—३२४

उक्तलाभात् संगृहीता च भूमिरुक्तलाभाद्द्वादशाब्दोपभुक्ता ।

स्वत्वं गच्छेदागतेन क्रमेण तुल्यं सद्भिस्तद् भवेत्संमतेन ॥

त्रिभोगेनाज्ञया क्रीत उक्तलाभो दशाब्दिकः ।

अवक्रयस्त्रिभोगेन सद्यः सिद्ध्येद्दणक्रयः ॥

इति व्यवहारसमुच्चये भरद्वाजः—११०

**उक्थम्**—स्तोत्रम् इति सायणः "उक्थेष्विन्द्रमाभजत् ।"

ऋ० सं०—४-३०-१६

उक्थं सामविशेष इति व्याख्यासुधायाम् ।

अमरः—१-५-३०

नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति ।

शुक्लयजुर्वेदः—२७-३१

परलोकभोगान् सम्पादयितुं यज्ञेषु उक्थानि शंसन्ति

उक्थशासः शस्त्रस्तोतार इति महीधरभाष्ये ।

**उक्थः**—प्राण इति श्रीधरस्वामी ।

"उक्थेन रहितो ह्येष मृतकः प्रोच्यते यथा ॥"

श्रीमद्भागवतम्—१-१४-८

**उखा**—अग्निपात्रविशेषः ।

"हाण्डि इति भाषा इति शब्दकल्पद्रुमे ।"

करीषचूर्णशाल्मलीतूलपर्णादिगर्भास्तिस्र उखा अधिश्रित्य तावत्सन्तापयेत् यावत्तास्वग्निरुत्पद्येत इति साग्निकदाहप्रकरणे गदाधरपद्धतौ ॥

**उग्रः**—(१) वाक्कायव्यापारेणोद्वेजकः इति मिताक्षरायाम् ।

याज्ञ०—१-१६१

(२) शिवः । "अशोकैरर्चयेदुग्रमशोककलिकाः पिबेत्" इति कालदीपे । "उग्रान्नं सूतिकान्नं च पर्याचान्तमनिर्दशम्" इति अभोज्यप्रकरणे मनुः—४-२१२

उग्रो दारुणकर्मा इति कुल्लूकः ।

(१) क्षत्रियात् शूद्रकन्यायां जातो जातिविशेषः।

क्षत्रियात् शूद्रकन्यायां क्रूराचारविहारवान्।

क्षत्रशूद्रवपुर्जन्तुरुग्रो नाम प्रजायते ॥ मनुः—१०-९

शूद्रायां विप्रसंसर्गाज्जात उग्र इति स्मृतः।

नृपस्य दण्डधारः स्याद्दण्डं दण्ड्येषु संचरेत ॥

औशनसस्मृतिः—४६

**उच्चारः**—विष्ठा। उच्चार्यते परित्यज्यते इति उच्चारः।

मूत्रोच्चारसमुत्सर्गं दिवा कुर्य्यादुदङ्मुखः।

दक्षिणाभिमुखो रात्रौ सन्ध्ययोश्च यथा दिवा ॥

मनुः—४-५०

**उच्चावचम्**—उत्कृष्टापकृष्टम्।

"उच्चावचेषु भूतेषु स्थितं तं व्याप्य तिष्ठतः।

असंख्या मूर्त्तयस्तस्य निष्पतन्ति शरीरतः ॥

मनुः—१२-१४

उच्चावचानि भूतानि सततं चेष्टयन्ति याः ॥

मनुः—१२-१५

**उच्छन्नः**—नष्टः।

"कुलद्वयेऽपि चोत्सन्ने स्त्रीभिः कार्य्या क्रिया नृपः।

संघातान्तर्गतैर्वापि कार्या प्रेतस्य सत्क्रिया ॥

उत्सन्नबन्धुरिक्थाद्वा कारयेदवनीपतिः।

इति कालसारोद्धृतविष्णुपुराणे।

**उच्छादनम्**—(१) उद्वर्तनम्। "उच्छादनं च गात्राणां।"

मनुः—२-२०९

(२) छत्रधारणमिति बौधायनीये गोविन्दस्वामी।

आप०—१-३-३६

**उच्छिष्टम्**—(१) क्षीरम्।

क्षीरस्य वत्सपीतावशेषत्वात् उच्छिष्टत्वम्।

इति पूर्वाङ्गिरसे—१०६

(२) भोजनावशिष्टमन्नम्।

नोच्छिष्टं कस्यचिद्दद्यान्नाद्याच्चैव तथान्तरा।

न चैवात्यशनं कुर्यान्न चोच्छिष्टः क्वचिद् व्रजेत ॥

मनुः—२-५६

**उच्छिष्टः**—भुक्त्वा अकृताचमनः।

"न चोच्छिष्टः क्वचिद् व्रजेत्। मनुः—२-५६

**उच्छीर्षकम्**—(१) उपधानम्। माथि इति भाषाप्रसिद्धम्।

"सत्यां क्षितौ किं कशिपोः प्रयासैर्बाहौ स्वसिद्धे

ह्युपबर्हणैः किम्।" अत्र उपबर्हणैरुच्छीर्षकैरिति

श्रीधरस्वामी। श्रीमद्भा०—२-२-४

(२) गृहस्य शिरोभागोऽपि उच्छीर्षके श्रियै कुर्यात्।

इति मनुः—३-८९

**उच्छेषणम्**—उच्छिष्टम्।

उच्छेषणं भूमिगतमजिह्मस्याशठस्य च।

दासवर्गस्य तत्पित्र्ये भागधेयं प्रचक्षते ॥

मनुः—३-२४६

**उच्छ्वासः**—अन्तर्मुखश्वास इति शब्दकल्पद्रुमे।

उच्छ्वासः वहिर्देशात् अभ्यन्तरं प्रति गृहीतो वायुः ॥

नासिकाकृष्ट उच्छ्वासो ध्मातः पूरक उच्यते।

कुम्भको निश्चलश्वासो रिच्यमानस्तु रेचकः ॥

इति स्मृतिचन्द्रिका-आह्निक—१७२

"गुरुं हत्वा श्रोत्रियं वा कर्मसमाप्तमेतेनैव विधिनोत्तमा-

दुच्छ्वासाच्चरेत्।" आप०१९२४-२४

**उद्धामम्**—ऋणम् । अधमर्णे यत्दानकालात्परमपि वर्त्तमानं सोदयम् । उद्धामशब्देन ऋणमुच्यते इति व्यवहारकल्पतरुः ।

"उद्धामादिकमादाय स्वामिने न ददाति यः ।
स तस्य दासो भृत्यः स्त्री पशुर्वा जायते गृहे ॥

इति तत्र बृहस्पतिः ।

उद्याम इत्यस्य पाठान्तरम् ।

**उद्धामपत्रम्**—ऋणपत्रम् । व्यवहारकल्पतरुः—१५५

**उज्झः**—उत्सर्गः इति हरदत्तः । "ब्रह्मोज्झता वेदनिन्दा" इत्यादि । आप०—१-७-२१-८ मनुः—११-५६
अत्र भावे घञ् छान्दसो लिङ्गव्यत्ययः ।

**उञ्छः**—क्षेत्रादिपतितानां धान्यादीनां कणशः ग्रहणम् । एकैकधान्यादिगुडकोच्चयनमुञ्छ इति कुल्लूकः ॥

मनुः—४-५

**उञ्छनम्**—अङ्गुलिभिः नखैर्वा आदानमिति हरदत्तः ।

आप०—२-५-१०-५

**उण्डेरकः**—उण्डुरि इति नाम्ना प्रसिद्धः जलसिद्धः अपूपविशेषः । "दध्यादिव्यनुवृत्तौ मूलकं पूरिकापूपांस्तथेवोण्डेरकस्रजः ॥" इति मिताक्षरायां याज्ञ०—१-२८८

**उतूलः**—दुर्विनीतः इति हरिहरः । "उतूलपरिमेहः" पारस्करः—३-७-१

**उतूलपरिमेहः**—दुर्विनीतस्य दासस्य वशीकरणम् ।

पारस्करः—३-७-१

**उत्करः**—(१) वेदिपुरीषनिधानदेश इति गोविन्दस्वामी ।

बोधा०—१-१५-१५

(२) वेद्युत्तरांसशङ्कुमारभ्य प्रत्यक्पदचतुष्टयं मीत्वा उदीचे पदं मीत्वा शङ्कुं निहन्ति स उत्करः इति श्रौतपदार्थनिर्वचने ।

(३) धान्यादिस्तूपः ।

**उत्करिका**—संयावः । क्षीरगुडघृतादिकृतः पाकविशेष इति विज्ञानेश्वरः—१-१७३

**उत्कलः**—देशविशेषः "जगन्नाथप्रान्तदेशश्चोत्कलः परिकीर्त्तितः" इति शक्तिसंगमतन्त्रे ।
उत्कला मेकलाः पौण्ड्राः कलिङ्गान्ध्राश्च संयुगे ।
निषादाश्च त्रिगर्त्ताश्च बाह्लीकाश्च जितास्त्वया ॥

महाभा० द्रोण०—४८

**उत्कलिका**—संयावः घृतक्षीरचूर्णसिद्धः इति गदाधरराजगुरुः ।

**उत्कारिका**—यवमाषैरण्डबीजातसीकुसुम्भबीजादिभिः पिष्टखिन्नैः लप्सिका कृतिर्यः स्वेदनोपायः स उत्कारिका। गुटिकायां लप्सिकायाद् इति वैद्यकशब्दसिन्धौ । उत्कल-प्रसिद्धः अटकालि नामकः पाकः भवितुमर्हति। एक एवायं शब्दः पाठभेदेन उत्करिका । उत्कारिका उत्कलिका इति विभिन्नतां प्राप्त इति विज्ञायते ॥

**उत्कुटक**—ऊर्ध्वजानुः इति केशववैजयन्त्यां नन्दपण्डितः ।

विष्णुस्मृतिः—६८-१०

उत्कुटुक इति पाठान्तरम् ।

उत्कुटुकः—उत्कटाशन इति लक्ष्मीधरः।
नियतकालकाण्डे—२४७

उत्कोचः—लाञ्च इति भाषा प्रसिद्धः। अधिकारिणः कार्यसिद्ध्यर्थं कार्यिभ्यः यद्धनं गृह्णन्ति।
"कूटसाक्षिणां सर्वस्वापहारः कार्य्यः उत्कोचजीविनां सभ्यानां च" इति विष्णुः—५-१७५
उत्कोचस्वरूपमाह कात्यायनः—
स्तेयसाहसिकोद्वृत्तपारदारिकशंसनात्।
दर्शनाद्वृत्तस्य तथाऽसत्यप्रवर्त्तनात्॥
प्राप्तमेतैस्तु यत्किञ्चदुत्कोचाख्यं तदुच्यते॥
इति व्यवहारमयूखः—१२६
उत्कोच लञ्चा इति महाभारतव्याख्याने नीलकण्ठः।
शान्तिः—५६-५२

उत्कोचकः—ये कार्यिभ्यो धनं गृहीत्वा कार्यमकार्यं कुर्वन्ति इति कुल्लूकः। मनुः—९-२५८
उत्कोचकाश्चौपधिका वञ्चकाः कितवास्तथा।
मङ्गलादेशवृत्ताश्च भद्राश्चेक्षणिकैः सह॥
इति कण्ठकसंग्रहे मनुः—९-२५८

उत्क्रमणम्—(१) प्राणवायुनिर्गमः।
देहादुत्क्रमणं चास्मात् पुनर्गर्भे च संभवम्॥
मनुः—६-६३
(२) ऊर्द्ध्वं क्रमणम् उर्द्ध्वं गतिरित्यर्थः।
ऊर्द्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते॥
मनुः—२-१२०

उत्क्रोशः—साहाय्यार्थमुच्चैराह्वानम्।
उत्क्रोशतां जनानां च ह्रियमाणे धने तथा।
श्रुत्वा ये नाभिधावन्ति तेऽपि तद्दोषभागिनः॥
नारदः सं०—१५-१६
"उत्क्रोशतां धनं गृहीत्वा चौरागच्छन्ति परित्रायध्वं परित्रायध्वम् इति धने ह्रियमाणे आह्वानं कुर्वताम्॥"
नारद-भाष्ये—१५-१६

उत्क्षेपकः—चौरविशेषः। वस्त्रांचलबद्धद्रव्यं य उत्कृत्य अपहरति।
धनिनामनवधानमवधार्यान्तिकस्थं धनमुद्धृत्य ग्राहकः।
इति स्मृतिचन्द्रिका। व्यवहारकाण्डे—७३७
रक्षकस्याग्रत एवानवहितस्य दृष्टिं वञ्चयित्वार्थहारिण उत्क्षेपका इति विवादरत्नाकरे—२९२
उत्क्षेपकः सन्धिभेत्ता पान्थमुड्ग्रन्थिभेदकः।
स्त्रीपुंगोऽश्वपशुस्तेयी चौरो नवविधः स्मृतः॥
इति तत्र व्यासः॥

उत्तमः—तृतीयो मनुः।
"स्वारोचिषश्चोत्तमश्च तामसो रैवतस्तथा।
चाक्षुषश्च महातेजा विवस्वत्सुत एव च॥
मनुः—१-६२

उत्तमच्छ्वासः—मरणम्।
"गुरुं हत्वा श्रोत्रियं वा कर्मसमाप्तमेतेनैव विधिनोत्तमादुच्छ्वासाचरेत्।" इति आप०—१-९-२४-२४

उत्तमर्णः—ऋणदाता।
अधमर्णार्थसिद्ध्यर्थमुत्तमर्णेन चोदितः।
दापयेद्धनिकस्यार्थमधमर्णाद्विभावितम्॥ मनुः—८-४७

**उत्तमर्णिकः**—उत्तमर्णः ।

"यैर्यैरुपायैरर्थं स्वं प्राप्नुयादुत्तमर्णिकः ।
तैस्तैरुपायैः संगृह्य दापयेदधमर्णिकम् ॥

मनुः—८-४८

**उत्तमसाहसः**—(१) अर्थदण्डसंज्ञाविशेषः ।

"साशीतिपणसाहस्रो (१०८०) दण्ड उत्तमसाहसः ।"

याज्ञ०—१-३६६

पणानां द्वे शते सार्द्धे प्रथमः साहसः स्मृतः ।
मध्यमः पञ्च विज्ञेया सहस्रं त्वेव चोत्तमः ॥

मनुः—८-१३८

(२) साहसविशेषाश्च—

"व्यापादो विषशस्त्राद्यैः परदाराभिमर्शनम् ।
प्राणोपरोधि यच्चान्यदुक्तमुत्तमसाहसम् ॥

इति मिताक्षरायां नारदः—२-२२६

**उत्तमाङ्गम्**—मुखम्, मुखमण्डलं च ।

"उत्तमाङ्गोद्भवात्" मनुः—१-९३

**उत्तरम्**—(१) प्रत्यर्थिना लिखित्वा दत्तमर्थिनिवेदनपत्रस्यो-त्तरम् । उत्तरलक्षणं यथा—

"पक्षस्य व्यापकं सारमसंदिग्धमनाकुलम् ।
अव्याख्यागम्यमित्येतदुत्तरं तद्विदो विदुः ॥

मिता०—२-७

सत्यमिथ्याप्रत्यवस्कन्दनप्राङ्न्यायभेदेन तच्चतुर्विधम् ।
सत्यं मिथ्योत्तरं चैव प्रत्यवस्कन्दनं तथा ।
पूर्वन्यायविधिश्चैवमुत्तरं स्याच्चतुर्विधम् ॥
एतेषां प्रातिस्विकलक्षणं स्व स्व शब्दे द्रष्टव्यम् ।

(२) गीतविशेषः "ओवेणकसरोविंदमुत्तरं गीतकानि च ।"

याज्ञ०—३-११३

(३) उत्तरम् उत्तरीयम् "स्नातकानां तु नित्यं स्यादन्तर्वासस्तथोत्तरमिति ।" वसिष्ठः—१२-१४

**उत्तरगीतम्**—उत्तरं गीतविशेषः संगीतशास्त्रप्रसिद्धः ।

याज्ञ०—३-११३

(अपरान्तकशब्दे द्रष्टव्यः) ।

**उत्तरच्छदः**—उपरिवस्त्रम् । "शक्त्या शय्यासने तस्ये निवेद्य सोत्तरच्छदे" इति कल्पतरौ ब्राह्मे ।

नियतकालः—४०४

**उत्तरमानसम्**—विशिष्टश्राद्धदेशत्वेन उक्तम् ।

विष्णुस्मृतिः—८५-४०

"उत्तरमानसं केदारोत्तरपर्वतस्थम्" इति तत्र वैजयन्त्यां नन्दपण्डितः ।

**उत्तरमार्गः**—नागवीथ्यादयः उत्तरमार्गसंज्ञां लभन्ते ।

एतास्तु वीथयस्तिस्र उत्तरो मार्ग उच्यते ॥

देवीभाग० ८-१५

नागवीथी गजवीथी ऐरावतवीथी चेति वीथयः ।
उत्तरमार्गस्तु देवयानमार्गः ॥

**उत्तरवर्गः**—उत्तरभागः "एकं चेत्पूर्वस्योत्तरवर्गेणाच्छादयीत ।" पारस्करः—२-६-१७

**उत्तरवासः**—उत्तरीयम् ।

"नित्यमुत्तरं वासः कार्यम् ।" आप०—२-४-२२

**उत्तरवेदिः**—(१) इयं पाशुबंधिकी वेदिरित्युच्यते ।
न वैश्वदेवे उत्तरवेदिमुपकिरन्ति न शुनासीरीये ।
मिताक्षरा०—२-११५

(२) कुरुक्षेत्रम्-कुरुक्षेत्रशब्दो द्रष्टव्यः ।

**उत्तरसभा**—पुनर्न्यायः । नृपरहितायां तूत्तरसभायां दण्डविरहितः पुनर्न्यायः कार्य्यः । दण्डांशस्य नृपैककार्य्यत्वात् । उत्तरसभया च पूर्वसभातो ज्यायस्या भवितव्यम् । अन्यथा सन्देहानिवृत्तेः इत्यादि स्मृतिचन्द्रिकाव्यवहारकाण्डे
—३०३

**उत्तराभासः**—यदुत्तरवदाभासते वस्तुतस्तु नोत्तरं तत् ।

तदाह कात्यायनः—
संदिग्धमन्यत्प्रकृतादत्यल्पमतिभूरि च ।
पक्षैकदेशव्याप्यं यत् तच्च नैवोत्तरं भवेत् ॥

हारीतश्च—
व्यत्यस्तपदमव्यापि निगूढार्थमथाकुलम् ।
व्याख्यागम्यमसारं च नोत्तरं शस्यते बुधैः ॥
इति वरदराजीये ॥

**उत्तरायणम्**—सूर्यस्य उत्तरदिग्यात्राकालः मकरसंक्रान्तिमारभ्यमासषट्कात्मकः ।
भानोर्मकरसंक्रान्तेः षण्मासा उत्तरायणम् ।
कर्कादेस्तु तथैव स्यात् षण्मासा दक्षिणायनम् ॥
इति सूर्यसिद्धान्ते मानाध्याये—६

**उत्तरासंगः**—उत्तरीयम् । "यद्यु वा उभयं चिकीर्षेद्धौत्रं चैव ब्रह्मत्वं चैवैतेनैव कल्पेन छत्रं वोत्तरासङ्गं वोदकमण्डलुं दर्भवटुं वा ब्रह्मासने निधाय ।"
गोभिलगृ—१-६-२१

**उत्तरीयम्**—उत्तरवासः स्कन्धधार्यवस्त्रमित्यर्थः ।
देहस्य उपरिभागे धार्यवस्त्रमित्यर्थः ॥

**उत्थानम्**—(१) धनार्जनार्थमुद्योगः, उद्योगश्च ।
भ्रातॄणामविभक्तानां यद्युत्थानं भवेत् सह ।
न पुत्रभागं विषमं पिता दद्यात्कथञ्चन ॥
मनुः—६-२१५

(२) सूतिकाग्नेः विसर्जनम् । संप्रति उठिआरि इत्युच्यते ।
"आ उत्थानात्" सन्धिवेलयोः फलीकरणमिश्रान् सर्षपानग्नावावपति ।" पारस्करः—१-१६-१६
उत्थानं नाम सूतिकागारे निवेशितानामुदकुम्भादीनामपनयनं तच्च दशमेऽहनि भवति इत्युज्वलावृत्तौ हरदत्तः । आप०—१-५-१६-१६
"उत्थानं सूतकान्तमिति" हरिहरः "अन्तः सूतके चेदुत्थानादाशौचं सूतकवत् ।" पारस्करः—३-१०-६

(३) कृषिविषयको यत्नः "क्षेत्रंपरिगृह्योत्थानाभावात्फलाभावे यः समृद्धः स भावि तदपहार्य्यः ।"
आप०—२-११-२८-१

उत्कलेषु "उठिआ" इत्यस्य अपभ्रंशः । क्षेत्रं कृष्यर्थं परिगृह्य यदि उत्थानं कृषिविषयकं यत्नं न कुर्यात् इति उज्वलावृत्तौ ।
उत्थानं पौरुषे तन्त्रे संनिविष्टोद्गमेऽपि च ।
अमरः—१-३-११८

उत्तरवेदिः—(१) इयं पाशुबंधिकी वेदिरित्युच्यते ।
न वैश्वदेवे उत्तरवेदिमुपकिरन्ति न शुनासीरीये ।
मिताक्षरा०—२-१३५

(२) कुरुक्षेत्रम्-कुरुक्षत्रशब्दो द्रष्टव्यः ।

उत्तरसभा—पुनर्न्यायः । नृपरहितायां तूत्तरसभायां दण्डविरहितः पुनर्न्यायः कार्य्यः । दण्डांशस्य नृपैककार्य्यत्वात् । उत्तरसभया च पूर्वसभातो ज्यायस्या भवितव्यम् । अन्यथा सन्देहानिवृत्तेः इत्यादि स्मृतिचन्द्रिकाव्यवहारकाण्डे
—३०३

उत्तराभासः—यदुत्तरवदाभासते वस्तुतस्तु नोत्तरं तत् ।

तदाह कात्यायनः—
संदिग्धमन्यत्प्रकृतादत्यल्पमतिभूरि च ।
पक्षैकदेशव्याप्यं यत् तच्च नैवोत्तरं भवेत् ॥

हारीतश्च—
व्यस्तपदमव्यापि निगूढार्थमथाकुलम् ।
व्याख्यागम्यमसारं च नोत्तरं शस्यते बुधैः ॥
इति वरदराजीये ॥

उत्तरायणम्—सूर्यस्य उत्तरदिग्यात्राकालः मकरसंक्रान्तिमारभ्यमासषट्कात्मकः ।
भानोर्मकरसंक्रान्तेः षण्मासा उत्तरायणम् ।
कर्कादेस्तु तथैव स्यात् षण्मासा दक्षिणायनम् ॥
इति सूर्यसिद्धान्ते मानाध्याये—६

उत्तरासंगः—उत्तरीयम् । "यद्यु वा उभयं चिकीर्षेद्धौत्रं चैव ब्रह्मत्वं चैवैतेनैव कल्पेन छत्रं वोत्तरासङ्गं वोदकमण्डलुं दर्भवटुं वा ब्रह्मासने निधाय ।" गोभिलगृ—१-६-२१

उत्तरीयम्—उत्तरवासः स्कन्धधार्यवस्त्रमित्यर्थः ।
देहस्य उपरिभागे धार्यवस्त्रमित्यर्थः ॥

उत्थानम्—(१) धनार्जनार्थमुद्योगः, उद्योगश्च ।
भ्रातृणामविभक्तानां यद्युत्थानं भवेत् सह ।
न पुत्रभागं विषमं पिता दद्यात्कथञ्चन ॥
मनुः—६-२१५

(२) सूतिकाग्नेः विसर्जनम् । संप्रति उठिआरि इत्युच्यते ।
"आ उत्थानात्" सन्धिवेलयोः फलीकरणमिश्रान् सर्षपानग्नावावपति ।" पारस्करः—१-१६-१६
उत्थानं नाम सूतिकागारे निवेशितानामुदकुम्भादीनामपनयनं तच्च दशमेऽहनि भवति इत्युज्वलावृत्तौ हरदत्तः । आप०—१-५-१६-१६
"उत्थानं सूतकान्तमिति" हरिहरः "अन्तः सूतके चेदुत्थानादाशौचं सूतकवत् ।" पारस्करः—३-१०-६

(३) कृषिविषयको यत्नः "क्षेत्रंपरिगृह्योत्थानाभावात्फलाभावे यः समृद्धः स भावि तदपहार्य्यः ।"
आप०—२-११-२८-१
उत्कलेषु "उठिआ" इत्यस्य अपभ्रंशः । क्षेत्रं कृष्यर्थं परिगृह्य यदि उत्थानं कृषिविषयकं यत्नं न कुर्यात् इति उज्वलावृत्तौ ।
उत्थानं पौरुषे तन्त्रे संनिविष्टोद्गमेऽपि च ।
अमरः—३-३-११८

(४) निद्रात्यागः। "ब्राह्मे मुहूर्ते उत्थानम्" बार्हस्पत्यसूत्रम् —४-१

उत्थाय पश्चिमे यामे कृतशौचः समाहितः।
हुताग्निर्ब्राह्मणांश्चार्च्य प्रविशेत्स शुभां सभाम् ॥
मनुः—५७-१४५

(५) कर्मप्रवृत्तिः।
तस्मान्नित्योत्थितो राजा कुर्यादर्थानुशासनम्।
अर्थस्य मूलमुत्थानमनर्थस्य विपर्ययः ॥
अनुत्थाने ध्रुवो नाशः प्राप्तस्यानागतस्य च।
प्राप्यते फलमुत्थानाल्लभते चार्थसम्पदम् ॥
कौट०—१-१६-३५-३६

**उत्थानव्यपेतम्**—अभ्युत्थानसत्कारशून्यमन्नमिति हेमाद्रिः।
"वृथान्नाचमनोत्थानव्यपेतानि।" गौतमः—२-८-१८
अपेतादन्यद् व्यपेतम्, महितमिति।
"भोजनमध्ये यत् कोपादिना उत्थीयते" इति हरदत्तः।
उत्थानव्यपेतं यत्रार्द्ध भुक्ते उत्थानं कृतम्।
इति कल्पतरुः। नियतकालः—२६५

**उत्पवनम्**—स्थानान्तरिनपात्रान्तरप्रक्षेपः।
मिताक्षरा०—१-१९०
उत्पवनेन द्रवाणाम्। विष्णुः—२३-३०
वस्त्रपाद्यायेन क्षीरजलादीनां शुद्धिरिति यावत्।
हेमाद्रिपरिशिष्टकाण्डे—८२८

(२) दर्भपवित्रेण "सवितुस्त्वा प्रसव उत्पुनामि" इत्यनेन याज्ञिकप्रसिद्धप्रकारेण आज्यादेः संस्करणम् ॥ "उत्पवनं नामद्रवद्रव्यस्य आज्यादेः कस्मिंश्चित् पात्रे स्थितस्य दक्षिणोत्तराभ्यां हस्ताभ्यां परस्परं असंसृष्टे पवित्रे धृत्वा ताभ्यां तस्य द्रव्यस्य ऊर्द्ध्वभागेप्लवनम् उत्पवनम् ॥ श्रौतपदार्थनिर्वचने० ॥ उत्पवनं पवित्रेण पवनमिति देवपालः।
कठक-गृ०—३-१-८

(३) चालनी स्थालीत्यादि।
उत्पवनं चालनी स्थालीत्यादि इति विवादरत्नाकरे चण्डेश्वरः—४३४
"नाप्रक्षालितपाणिर्यात्रिकोत्पवनगोरसदधि गृह्णीयात्" इति तत्र व्यवहारकल्पतरौ हारीतः—६२५

**उत्पातः**—प्राणिनां शुभाशुभसूचकमहाभूतादिविकारः।
न चोत्पातनिमित्ताभ्यां न नक्षत्राङ्गविद्यया ॥
मनुः—६-५०

अथ यद्यगारे स्थूणाविरोहेत बकः कपोतो वागारमध्येऽधिपतेत गौर्वा गांधयेत् गौरात्मानं प्रलङ्घयेत अनड्वान् वासमुल्लिखेत् अनग्नौ वा धूमो जायेत अनग्नौ वा दीप्येत। मधु वा जायेत निर्यासं वोपजायेत छत्राकं वोपजायेत मण्डूको वा भूमौ ददृशे श्वानः प्रसूते वा सर्पो गृहपतिं जायां वोपतपति अन्येषु चाद्भुतोत्पातेषु ॥ इत्याग्निवेश्यगृह्यसूत्रे—२-५-२
एतेषु प्रतिकाराः तेषु तेषु ग्रन्थेषु मृग्याः।

**उत्सङ्गः**—(१) क्रोडः "न भक्ष्यानुत्संगे भक्षयेत्।
गौतमः—१-६-५०

(२) उत्संगे उदरे शरावं निधाय इति गदाधरभाष्ये पारस्करः—१-१५

उत्सन्नः—नष्टः ।
कुलद्वयेऽपि चोच्छिन्ने स्त्रीभिः कार्य्या क्रिया नृपः ।
संघातान्तर्गतैर्वापि कार्य्या प्रेतस्य सत्क्रिया ॥
उत्सन्नबन्धुरिक्थाद्वा कारयेदवनीपतिः ॥
विष्णुपुराणे—३-१३-३३

उत्सर्गः—(१) त्यागः । दानविधौ संप्रदानमस्ति उत्सर्गे तन्नास्ति इति दानात्तस्य भेदः ।
(२) पायिविन्द्रियम् "वाच्यग्निं मित्रमुत्सर्गे ।"
मनुः—१२-१२
(३) सामान्यनिर्देशः । (४) मूत्रपुरीषकरणम् ।
उत्तरं वासः कर्त्तव्यं पञ्चस्वेतेषु कर्मसु ।
स्वाध्यायोत्सर्गदानेषु भोजनाचमनयोस्तथा ॥
बोधा०—२-३-६-३६

उत्सादनम्—(१) उद्वर्त्तनमिति मेधातिथिः ।
अभ्यंजनं स्नापनं च गात्रोत्सादनमेव च ।
गुरुपत्न्या न कार्य्याणि केशानां च प्रसाधनम् ॥
मनुः—२-२११
गन्धद्रव्येण शरीरमार्जनमिति वैद्यकशब्दसिन्धौ
११-३६
(२) उन्मूलनम् ।
पूर्वं क्षत्रवधं कृत्वा गतमन्युर्गतज्वरः ।
क्षत्रस्योत्सादनं भूयो न खल्वस्य चिकीर्षितम् ॥
रामायणे—१-७४-२२

उत्साहः—पौरुषम् इति सरस्वतीविलासे ।
महोत्साहः स्थूललक्ष्यः कृतज्ञो वृद्धसेवकः ।
विनीतः सत्त्वसम्पन्नः कुलीनः सत्यवाक्शुचिः ॥
याज्ञ०—१-३०९

उत्सिक्तः—(१) गर्वितः । (२) उपप्लुतः ।
बालवृद्धातुराणां च गाढ्येषु वदतां मृषा ।
जानीयादस्थिरां वाचमुत्सिक्तमनसां तथा ॥
मनुः—८-७१

उत्सेकः—दर्पः ।
क्रोधं वाग्दण्डपारुष्ये उत्सेकं वैकृतान्स्वरान् ।
नर्म हासं विलासं च वर्जयेत् गुरुसन्निधौ ॥
इति देवलः ॥
उत्सेकः दर्प इति कल्पतरुः । ब्रह्मचारि-का०—२७२

उत्सेधः—(१) उच्चता । "उत्सेधः काय उन्नतिः ।"
इत्यमरः—३-३-९६
"कूर्मस्त्रियोजनोत्सेधो दशयोजनमण्डल" इति महाभारते गजकूर्मयुद्धे—२९-३१
(२) संनहनम् । "उत्सेधस्तूच्छ्रयेन स्त्रीक्लीबे संनहनेऽपि च" इति व्याख्यासुधायाम् ॥ "नानाजातीया अनियतवृत्तय उत्सेधजीविनः सन्धाव्राता" इति पातञ्जलभाष्यव्याख्याने । उत्सेधः शरीरमिति प्रदीपकारः कैयटः । व्रातशब्दो द्रष्टव्यः ॥

उदकनालिका—अर्थशास्त्रप्रसिद्धो राजदण्डविशेषः । यत्र नासिकायां लवणोदकमासिच्यते । "उदकनालिकानासायां सलवणोदकनिषेचनमिति श्रीमूला ।" कौट०—४-८
व्यावहारिकं कर्मचतुष्कम् । षट् दण्डाः । सप्तकशाः । द्वावुपरि निबन्धौ उदकनालिका च ॥ कौट०—४-८-२१

उदक्या—रजस्वला स्त्री ।
उदक्यास्त्वासते येषां ये च केचिदनग्नयः ।
कुलं चाश्रोत्रियं येषां सर्वे ते शूद्रधर्मिणः ॥
वसिष्ठः—५-१०

**उदगयनम्**—उत्तरायणम् "उदगयने आपूर्यमाणपक्षे पुण्याहे कुमार्य्याः पाणिं गृह्णीयात्" पारस्करगृ०—१-४-५

**उदञ्चम्**—पिधानपात्रम् । घोड़णि इति भाषायाम् ।
चतुर्विधानां भाण्डानां क्षालनं च समाचरेत् ।
पाचनानि बहिष्ठानि जलस्यानयनानि च ॥
स्थापनानि जलार्थं वा चतुर्विधमुदाहृतम् ।
पृथक् पृथगुदञ्चानि तेषु तेष्वपि विन्यसेत् ॥
वृद्धहारीतः—११-६२

**उदञ्चनम्**—(१) महज्जलपात्रात् जलोद्धरणार्थं यत् लघुजलपात्रं मार्त्तिकं व्यवह्रियते तत् श्रौतपदार्थनिर्वचने ।
(२) पिधानमिति हलायुधः ।
"पिधानं स्यादुदञ्चनमिति" काण्ड०—२
संप्रति तत् घोडणि इति ठिपि इति च उच्यते ॥
(३) उद्धरणपात्रम् ।
प्रतिप्रस्थानामंस्त्वानानयत्युन्नेता चमसेन वोदञ्चनेन वा ।
इति शतपथब्राह्मणे—४-३-५
एतेन उदञ्चनमुद्धरणपात्रमिति ज्ञायते ।

**उदञ्जरम्**—महज्जलपात्रम् । उदञ्जरं महज्जलपात्रमिति श्रीमूला । "एकपदीप्रतिक्रान्तमरत्निं वा चक्रिचतुष्पदस्थानमग्निष्ठमुदञ्जरस्थानं रोचनीं कुट्टनीं वा ॥"
कौट०—३-८

**उदधानम्**—(१) जलपात्रम् । "उदधानसंनिधौ नवमेन ।"
आप०—२-२-३-२६
उदधानं मणिकाख्यमिति हरदत्तः । आप०—२-२-४-२१
उदकन्धीयते यस्मिन् उदकन्दधाति य इति वा ।
उदधानं मणिक इति गोभिलीयचन्द्रकान्त-भाष्ये—१-४-६
(२) जलशाला ।
"उदधाने वरुणाय" विष्णुः—६७-११
अत्र उदधानं जलशाला इति नन्दपण्डितः ।

**उदपानम्**—कूपः ।
तड़ागान्युदपानानि वाप्यः प्रस्रवणानि च ।
सीमासन्धिषु कार्य्याणि देवतायतनानि च ॥
मनुः—८-२४८
"नोदपानमवेक्षेत" इति गोभिलः—३-५-१३
यावानर्थ उदपाने सर्वतः संप्लुतोदके ।
भवान् सर्वेषु वेदेषु ब्राह्मणस्य विशेषतः ॥
भ० गीता—२-४६
उदपानोदके ग्रामे ब्राह्मणो वृषलीपतिः ।
उषित्वा द्वादशसमाः शूद्रसाधर्म्यमिच्छति ॥
बौधा०—२-३-६-३

**उदयः**—वृद्धिः । सुध इति लोकभाषासु ।
हीनजातिं परिक्षीणमृणार्थं कर्म कारयेत् ।
ब्राह्मणस्तु परिक्षीणः शनैर्दाप्यो यथोदयम् ॥
याज्ञ०—२-४३
गृहीत्वोपगतं दद्यादृणिकायोदयं धनी ।
अददद्याच्यमानस्तु शेषहानिमवाप्नुयात् ॥
नारद०—४-११४
(२) सूर्य्यादीनामुद्गमः ।
आदित्योदयवेलायां याल्पापि हि तिथिर्भवेत् ।
सम्पूर्णत्येव मन्तव्या प्रभूतानोदयं विना ॥
इति कालसारे ॥

**उदवसानम्**—समारोपिताग्निमदरणिग्रहणपूर्वकं देवयजनदेशं प्रतिगमनमुदवसानमित्युच्यते इति श्रौतपदार्थनिर्वचने।

**उद्वासः**—उदकवासः । वसिष्ठकश्यपयोर्जलगतयोरुद-
वासादुत्तीर्य्य एकः प्रजामुत्पादयत्यविज्ञातो लोकानाम् ।
इति शङ्खलिखितौ विवादरत्नाकरे—५८१

**उदश्वित्**—अर्द्धाम्बुयुक्तं दधि ।
तक्रं ह्युदश्विन्मथितं पादाम्बर्धाम्बुनिर्जलम् ॥

**उदाचारः**—दृष्टिगोचरो देश इति उज्ज्वलाकारः ।
उदाचारेषु चास्यैतानि न कुर्यात् ।
गुरोरुदाचारेष्वकर्त्ता स्वैरकर्मणि ॥
आप०—१-१-३ १५

**उदानः**—कण्ठदेशस्थो वायुः ।
कण्ठदेशेऽप्युदानः स्याद् व्यानः सर्वशरीरगः ।
इति देवीभागवते—७-३१-४०
उत्क्रमणादिरूद्ध्वंगतिरुदान इति गदाधरः ।
पारस्कर-गृ०—१-१६-११

**उदामन्त्रणम्**—उच्चैः सम्बोधनम् यथा वधिरं प्रति ।
इति हरदत्तः । आप०—१-२-८-१५

**उदारः**—उत्कृष्टः ।
उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ।
आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥
भगवद्गीता०—७-१८
अत्र उदारा उत्कृष्टा इति श्रीशङ्कराचार्य्याः ॥

**उदासीनः**—(१) गृहस्थविशेषः ।
उदासीनः साधकश्च गृहस्थो द्विविधो मतः ।
ऋणानि त्रीण्यपाकृत्य त्यक्त्वा भार्यागृहादिकम् ।
एकाकी यस्तु विचरेदुदासीनः स मौक्षिकः ॥
इत्याचारसारे कूर्मपुराणम् ॥

(१) राजमण्डलान्तर्गतनृपतिविशेषः ।
राजमण्डले विजिगीषुमध्यमानां संहतानामनुग्रहे ।
समर्थो निग्रहे चासंहतानां समर्थ उदासीनः ॥
इति कुल्लूकः मनुः—७-१५५

**उदास्थितः**—गुप्तचरविशेषः ।
स च प्रव्रज्याप्रत्यवसित इति कुल्लूकः ॥ मनुः—७-१५४
प्रव्रज्या प्रत्यवस्थितः प्रज्ञाशौचयुक्त उदास्थितः ॥
कौट०—१-११-४

**उदितकालः**—सूर्यदर्शनारम्भकाल, ।
रेखामात्रं प्रदृश्येत तस्मिन्नित्रसमन्वितः ।
उदितं तं विजानीयात् तत्र होमं प्रकल्पयेत् ॥

**उदितोदितः**—उदिते शास्त्रे उदितः ।
पुरोहितं च कुर्वीत दैवज्ञमुदितोदितम् ।
दण्डनीत्यां च कुशलमथर्वाङ्गीरसे तथा ॥
याज्ञ०—१३१३
"उदितैः विद्याभिजनानुष्ठानादिभिः उदितं समृद्धमिति सरस्वतीविलासे ।" भारुचिस्तु उदिते राज्ञः पट्टबन्धसमये सम्पाद्यः । तथा च हारीतः "पट्टबन्धोदये कार्य एकएव पुरोहित," इत्यादि ॥

**उदीच्या**—शरावतीनद्या उत्तरतीरवासिनः । सरस्वतीनद्युत्तरवासिन इति हेमाद्रिः । श्राद्धकल्पे—१३५०
प्रागुदञ्चौ विभजते हंसः क्षीरोदकं यथा ।
विदुषां शब्दसिद्ध्यर्थं सा नः पातु शरावती ॥
इति वैयाकरणा इति हरदत्तः ॥

**उदुम्बरम्**—(१) ताम्रम् ।
गृहीत्वोदुम्बरं पात्रं वरिपूर्णमधोमुखः ॥
इत्यादिसंकल्पविषये ॥

(२) परिमाणविशेषः । कर्षस्य नामान्तरम् । खारीशब्दे द्रष्टव्यम् ॥

(३) वृक्षविशेषः । "पैलवौदुम्बरौ वैश्यो" मनुः—२-६५

**उद्गाता**—ऋत्विग्विशेषः । स च सामवेदीयः

होता वापि हरेदश्वमुद्गाता चाप्यनः क्रये ॥

मनुः—८-२०६

**उद्गीथम्**—उच्चैर्गीतम् । उद्गीथरम्यपदपाठवतां च साम्नाम् ॥ मार्कण्डेये—८४-१०

**उद्गीथः**—प्रणवः ।

उद्गीथः सामवेदः इति शान्तनवीटीकायाम् ।

अथ यः सम्प्रति मध्यन्दिने स उद्गीथः ॥

इति कालमाधवे ॥

भक्तियुक्तस्य साम्नः उद्गीथाख्या भक्तिः मध्यन्दिनरूपा ।

इति कालमाधवे प्र०—४

सप्तधाविभक्तदिवसस्य चतुर्थो भागः ।

"अथ यद् संप्रति मध्यन्दिने स उद्गीथः ॥

छान्दोग्योपनिषत्—२-९-५

**उद्ग्राहः**—(१) वादः ।

एतावताऽप्युद्ग्राहमल्लस्य देवलवचनं गलहस्तः ॥

दायभागः—४-२

(२) अधमर्णात् ऋणधनस्य उदयस्य तदुभययोर्वा ग्रहणम् ।

विवादरत्नाकरे—७३

**उद्ग्राहणम्**—अधमर्णात् ऋणधनस्य बलात् ग्रहणम् ।

उद्ग्राहणं च बलादुपायेन साधनम् ।

स्मृतिचन्द्रिकाव्यवहार—३८६

तत्र बृहस्पतिः ।

"पूर्णेऽवधौ शान्तलाभमृणमुद्ग्राहयेद्धनी" इति ।

**उद्दारः**—काञ्चनारवृक्ष इति निर्णयसिन्धौ ।

**उद्दालकव्रतम्**—उद्दालकव्रतमाह वसिष्ठः—११-७७

"द्वौ मासौ यावकेन वर्त्तयेत् । मासं पयसा, अर्द्धमासमामिक्षया, अष्टरात्रं घृतेन, षड्रात्रमयाचितेन त्रिरात्रमब्भक्षः अहोरात्रमुपवसेत् ॥ इति ॥

**उद्देशः**—(१) निश्चयः । (२) स्थानम् ।

लिङ्गोद्देशस्तु युक्तिः स्यादिति कात्यायनः ॥

**उद्धरणम्**—उन्मूलनम् । निराकरणम् ।

सम्यङ्निविष्टदेशस्तु कृतदुर्गश्च शास्त्रतः ।

कण्टकोद्धरणे नित्यमातिष्ठेद्यत्नमुत्तमम् ॥

मनुः—९-२५२

**उद्धरिणी**—जलोद्धारपात्रविशेषः ।

"उद्धरिण्या जलं देयम्" इति वृद्धहारीतः—७-८०

**उद्धर्षः**—उत्सवः ।

अशक्तोऽस्मि रणोद्धर्षे तपस्विशरणंगृहम् ॥

रामायणम् का०—४

**उद्धर्षणम्**—अङ्गमलापकर्षणम् । "अनश्नन्नग्नः स्नायात् । नाप्सु मेहेत । नोद्धर्षणं कुर्य्यात्" इति कल्पतरौ शङ्खलिखितौ । नियतकाल—३८

**उद्धारः**—(१) विभज्यमाने द्रव्ये ज्येष्ठादेः यः अधिकः ग्राह्योऽशः ।

ज्येष्ठस्य विंश उद्धारः । मनुः—९-११२

उद्धारो न दशस्वस्ति । मनुः—९-११५

(३) याचितकम् । यत् कार्यार्थे गृहीत्वा पुनः प्रत्यर्प्यते ।
कृतोद्धारमदत्त्वा यो याचितस्ते दिशं व्रजेत् ।
इति मिताक्षरायां कात्यायनः—२-३८
"कालमव्यवस्थाप्य गृहीतं धनम् उद्धार इति
विवादरत्नाकरे ।

(२) निष्कासनम् ।
विद्पण्यमुद्धृतोद्धारं विक्रेयं वित्तवर्द्धनम् ॥
मनुः—१०-८५
उद्धृतोद्धारं वर्जनीयवर्जिनमिति कुल्लूकः ।

(४) राजभागः ।
राज्ञश्च दद्युरुद्धारमित्येषा वैदिकी श्रुतिः ।
राज्ञा च सर्वयोधेभ्यो दातव्यमपृथग्जितम् ॥
मनुः—७-९७

(५) निराकरणम् ।
कण्टकोद्धरणे नित्यमातिष्ठेद्यत्नमुत्तमम् ॥
मनुः—९-२५२

(६) पुनर्व्यवहारः—
"यो हीनचिह्नेन जितस्तस्योद्धारं विदुर्बुधाः ।
स्ववाक्यहीनो यस्तु स्यात्तस्योद्धारो नविद्यते ॥ इति
व्यवहार-प्रकाशे कात्यायनः—७६

(७) कर्मपुरस्कारः । "उद्धार श्चापृथग्जये ।"
गौतमः—२-१-२२

(८) आहरणम् ।
पूर्वनष्टां तु यो भूमिमेकश्चाभ्युद्धरेत्क्रमात् ।
यथाभागं लभन्तेऽन्ये दत्त्वांशं तु तुरीयकम् ॥
स्मृतिचन्द्रिकायां शङ्खः । व्यवहारकाण्डे—६४२

(९) ऊर्ध्वदेशप्रापणम् ।
उद्धृत्य कूपवाप्यम्भस्त्वनुसारेण गृह्यते ।
इति दायभागे बृहस्पतिः ।

**उद्धारपत्रम्**—धनं वृद्ध्या गृहीत्वा तु स्वयं कुर्याच्च कारयेत् ।
उद्धारपत्रं तत् प्रोक्तमृणलेख्यं मनीषिभिः ॥
धर्मकोशः पृ०—३४८

**उद्धृतः**—परम्पराक्रमेण यः कार्यं जानाति ।
कार्यज्ञातृत्वं येषां पारम्पर्येण ते उद्धृता ।
इति स्मृतिचन्द्रिका—२३०
उपश्रवणसंभोग-कार्याख्यानोपचिह्निताः ।
उद्धरन्ति पुनर्यस्मादुद्धृतास्ते ततः स्मृताः ॥
साक्षिणश्चार्यपुरुषाः कर्त्तव्या नैकवर्णकाः ।
तेषामभावे सामन्ता मौलवृद्धोद्धृतादयः ॥
स्थावरे षट्प्रकारेऽपि कार्याऽन्यत्र विचारणा ॥
इति कात्यायनः ॥

**उद्बन्धकः**—जातिविशेषः । रजक इति ख्यातः ।
"सूनिकस्य नृपायां तु जात उद्बन्धकः स्मृतः ।
निर्णेजयेयुर्वस्त्राणि" औशनसस्मृतिः—१५

**उद्बन्धनम्**—उद्बन्धनम् ऊर्ध्वदेशे गलादौ बन्धनम् ।
प्रायानाशकशस्त्राग्निविषोदकोद्बन्धनप्रपतनैश्चेच्छताम् ।
गौतमः—२-५-११

**उद्बर्हणम्**—आकर्षणम् उद्धारः ।
उद्बबर्हात्मनश्चैव मनः सदसदात्मकम् ।
मनसश्चाप्यहङ्कारमभिमन्तारमीश्वरम् ॥
मनुः—१-१४

**उद्भिज्जः**—वृक्षादिः ।
ऊर्ध्वं भित्त्वा जायते इति उद्भिज्जः वृक्षादिः ।
उद्भिज्जाः स्थावराः सर्वे बीजकाण्डप्ररोहिणः ।
ओषध्यः फलपाकान्ताः बहुपुष्पफलोपगाः ॥
मनुः—१-४६

**उद्यानम्**—क्रीड़ार्था भूमिः इति विज्ञानेश्वरः ।

याज्ञ०—२-१५४

आम्रादिवनमिति स एव—१-१६०

तड़ागोद्यानतीर्थानि योऽमेध्येन विनाशयेत् ।

अमेध्यं शोधयित्वा तु दण्डयेत्पूर्वसाहसम् ॥

इति व्यवहारकल्पतरौ कात्यायनः—७५८

**उद्यामः**—देयोदयराशिः ।

त्रिविधस्यापि लेख्यस्य भ्रान्तिः संजायते यदा ।

ऋणिसाक्षिलेखकानां हस्तोक्त्या शोधयेत्ततः ॥

उद्याममुदयादानादाधानं फलसंग्रहात् ।

प्रयोगित्वं धनाद्यत्वात् ज्ञेयं यत्रोपधिः कृतः ॥

उद्याममृणिदेयादानात्, आधानमाधिः ।

प्रयोगित्वमुत्तमर्णत्वम् इति व्यवहारकल्पतरुः ॥

उक्तलेख्यपरीक्षावचने उदयस्य अदानेन उद्यामः ।

ज्ञेय इति दर्शनात् अदत्तदेयोदयराशिः उद्यामपदेनोच्यते । उद्धाम इति अस्यैव पाठान्तरं तच्चाप्यशुद्धं मन्ये ॥

**उद्रोहणम्**—खट्वारोहणम् ।

चैत्यामुद्रोहणमिति मानवगृ०—२-७-६

**उद्वत्सरः**—सम्वत्सरादि वर्गे उद्वत्सरः पञ्चमः ।

इति केचित् ।

**उद्वपनम्**—धामदानि इति भाषायाम् ।

खलादिधान्यं गृहं वा कोष्ठागारं नीयते ।

इति काठकगृह्यभाष्ये ।

"एवं प्रथमोद्वपनस्य" काठ० गृ०—५-१७-११

**उद्वर्त्तनम्**—हरिद्रादिना शरीरलेपनम् ।

"अभ्यङ्गमलापकर्षणपिष्टकादि" इति कुल्लूकः—४-१३२

"उद्वर्त्तनोत्सादने द्वे समे" अमर०—२-६-१२१

**उद्वहनम्**—वरस्य कन्यास्वीकारः ।

"राज्ञोक्षभेदे नदविमोक्षे यानविपर्यासे अन्यस्यां वा व्यापत्तौ स्त्रियाश्चोद्वहने" पारस्करः—१-१०-१

**उद्वासः**—पलायनम् ।

उद्वसतः कीनाशस्य दण्डेन ताड़नम् । इति विवादरत्नाकरे आपस्तम्बः । अत्र उद्वसतः पलायमानस्येति चण्डेश्वरः ।

**उद्वासनम्**—(१) संस्कारविशेषः ।

"अप उपस्पृश्य शालाद्वार्ये परिस्तरणपात्रसंसादनप्राक्षणाज्यनिर्वपणाधिश्रयणस्त्रुक्संमार्जनोद्वासनावेक्षणानि कृत्वाग्नीध्र उत्पूय पश्चाद् आज्यग्रहणम् ॥

कात्यायनः—६-१-२

अत्र उद्वासनमवतारणम् ।

(२) उद्वासनं मारणम् । अमरः—२-८-११५

(३) उद्वासनं वहिष्कारः ।

श्राद्धेनोद्वासनीयानीयानि उच्छिष्टान्यादिनक्षयात् ।

श्च्योतन्ते हि सुधाधारास्ताः पिवन्त्यकृतोदकाः ॥

वसिष्ठः—११-२१

**उद्वाहः**—उद्वहनम् । कन्यास्वीकार इत्यर्थः ।

**उद्वृत्तः**—वृत्तादुद्गतः दुर्वृत्त इत्यर्थः ।

स्तेयसाहसिकोद्वृत्तपारदारिकशंसनात् ।

इत्याद्युत्कोचलक्षणमुत्कोचशब्दे द्रष्टव्यम् ॥

**उद्वेजनम्**—भयप्रदर्शनम् ।
परदाराभिमर्शेषु प्रवृत्तान् नॄन् महीपतिः ।
उद्वेजनकरैर्दण्डैश्छिन्नयित्वा प्रवासयेत् ॥
मनुः—७-३५२

**उन्दनम्**—आर्द्रीकरणम् ।
"इतरयोश्चोन्दनादि" पारस्करः—२-१-१४

**उन्नता**—विशिष्टा सीमा ।
निम्नोन्नता च ध्वजिनी नैधानी राजकारिता ।
स्थिता पञ्चविधा सीमा मत्सिनी तु चला स्मृता ॥
शरकुब्जकवल्मीका यत्र देवगृहाणि च ।
अश्मकूटाश्च दृश्यन्ते सीमा सा तु समुन्नता ॥
इति व्यासः । विवादरत्नाकरः—२१५

**उन्मज्जकः**—अपचमानकवानप्रस्थविशेषः ।
बौधा०—३-३-३-१०

**उन्मत्तः**—(१) उन्मादग्रस्तः । मनुः—८-६७
(२) धुस्तूरवृक्षः ।

**उन्मानम्**—(१) तुलाधारः ।
(२) तुलादण्डेन परिमितीकरणम् ।
(३) उन्मानं द्रोणपर्यायः परिमाणविशेषवचनः खारीशब्दे द्रष्टव्यः ।
(४) उच्चता पुरुषादेः ।
"उन्मानमानगतिसंहतिसारवर्णस्नेहस्वरप्रकृतिसत्त्व मनूकमादौ" इतिपद्यमनूकशब्दे द्रष्टव्यम् ।

**उन्मीलिनी**—वैष्णवैकादशीविशेषः । तल्लक्षणं यथा—
एकादशी तु सम्पूर्णा वर्द्धते पुनरेव सा ।
द्वादशी च न वर्द्धेत कथितोन्मीलिनी च सा ॥ इति ॥

**उपकनिष्ठिका**—अनामिका ।
सव्यस्य पाणेरङ्गुष्ठेनोपकनिष्ठिकया चाङ्गुल्या ।
गोभिलः—१-६-१४

**उपकल्पमानम्**—शुक्लाष्टमीदिवसभागः । कालमाधवः—२

**उपकालनम्**—सञ्चारदेशात् गोष्ठं प्रति गवामानयनम् ।
"गाः प्रकाश्यमानाश्चोपकाल्यमानाश्च सदोपतिष्ठेत गव्यो षु ण" इति सामविधानब्राह्मणम्—३-३-१

**उपकाशः**—प्रातः । "उपकाशे प्रकाशकाले रजन्यन्ते" इति देवपालः । प्रभाते इति भाष्यान्तरे ।
काठक-गृ०—४-६-३

**उपकुर्वाणः, उपकुर्वाणकः**—यः ब्रह्मचारी गुरुकुलात् गृहं प्रति समावर्त्तते सः । तदाह वीरमित्रोदये बृहस्पतिः—
उपकुर्वाणस्य तत्सर्वं समादिष्टं मया व्रतम् ।
अधुना सम्प्रवक्ष्यामि नैष्ठिकस्य समासतः ॥
संस्कार-प्र०—५४६
ब्रह्मचारी भवेत्तावदूर्ध्वं स्नातो गृही भवेत् ।
प्रोक्तोऽसावुपकुर्वाणो द्वितीयः स्यात्तु नैष्ठिकः ॥
स्कान्दे काशी०—३६-३२
"उपकुर्वाणांश्च" इति गौतमधर्मसूत्रे—२-१-१२
द्विविधो ब्रह्मचारी तु स्मृतः शास्त्रे मनीषिभिः ।
उपकुर्वाणकस्त्वाद्यो द्वितीयो नैष्ठिकः स्मृतः ॥
इति दक्षः—१-८

**उपक्रमः**—(१) उपायः ।

तान् सर्वानभिसन्दध्यात्सामादिभिरुपक्रमैः ।
व्यस्तैश्चैव समस्तैश्च पौरुषेण नयेन च ॥

मनुः—७-१५६

(२) प्रारम्भः ।

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥

इति माधवाचार्य्यकृतमङ्गलाचरणम् ।

**उपक्रोशः**—अपवादः ।

चोरस्त्वं गुरुतल्पग इत्यादिभिरपवादैर्युक्तमित्यादि नारदभाष्ये—१६-१७-३

साक्षेपं निष्ठुरं ज्ञेयमश्लीलं न्यङ्गसंयुतम् ।
पतनीयैरुपक्रोशैस्तीव्रमाहुर्मनीषिणः ॥ इति

**उपक्लृप्तम्**—शुक्लनवमीदिनभागः ॥ कालमाधवः—२

**उपक्षेपः**—शूद्रस्वामिकान्तस्य पाकार्थे ब्राह्मणगृहे समर्पणम् ।

इत्याह्निकप्रकाशे—४६१

**उपक्षेपणधर्मः**—शूद्रसम्बन्धे सत्यपि ब्राह्मणसद्मनि पाकः शूद्रकार्यार्थम् ।

उपक्षेपणधर्मेण शूद्रान्नं यः पचेन्नरः । इति उपक्षेपणं शूद्रीयामान्नस्य विप्रगृहे पाकार्थे समर्पणमित्याचारेन्दुः

—३३४

ब्राह्मणान्नं ददच्छूद्रः शूद्रान्नं ब्राह्मणोऽददत् ।
द्वयमेतदभोज्यं स्याद् भुक्त्वा तूपवसेदहः ॥

इति मिताक्षरायां वृद्धयाज्ञवल्क्यः । विज्ञानेश्वरस्तु पर्यायान्नदानदुष्टत्वे इदमुदाहृतवान् । याज्ञ०—३-२८६

"शूद्रस्वामिकस्यान्नस्य पाकार्थे ब्राह्मणगृहे समर्पणमिति" कल्पतरुः । नियतकालः—२५६

**उपगतम्**—प्राप्तिपत्रम् । रसिद, चेक्, पाउति इत्यादि नामभिः भाषासु प्रसिद्धम् ।

लेख्यस्य पृष्ठे विलिखेद् दत्त्वादत्त्वार्णिको धनम् ।
धनी वोपगतं दद्यात् स्वहस्तपरिचिह्नितम् ॥

याज्ञ०—२-९३

गृहीत्वोपगतं दद्यादृणिकायोदयं धनी ॥

इति नारदः—४-११४

**उपगतः**—पुत्रविशेषः स्वयंदत्तपर्यायः ।

स्वयं बन्धुभिर्वा पुत्रभावोपगत उपगतः ।

कौट०—३-७

**उपगमः**—ग्रहणम् ।

पुष्पोपगमद्रुमच्छेदी मध्यमम् । विष्णुः—४५

दृष्टलिङ्गे मैथुनापहारे सवर्णापसर्पोपगमे वा मिथ्यावादी द्वादशपणं दद्यात् । कौट०—३-३

पैतृकं क्रीतमाधेयमन्वधेयं प्रतिग्रहम् ।
यज्ञादुपगमो वेणी तथा धूमशिखाष्टमी ॥

वसिष्ठः—१६-१६

**उपग्रहः**—वामहस्तधृतकुशमुष्टिः । तदुक्तमाचारसारे—

सव्यः सोपग्रहः कार्यो दक्षिणः सपवित्रकः ॥

इति कात्यायनः—११-३

उप समीपे गृह्यन्ते मार्जनाद्यर्थमिति उपग्रहाः ।

इति गदाधरराजगुरुः ।

उपग्रहाः कुशा इति आह्निकप्रकाशे—२६७

उपग्रहाः बहवः कुशा इति कल्पतरुः ।

ब्रह्मचारीकाण्डे—१७७

**उपघातः**—(१) पीड़ा। "उपघातं परस्य च" मनुः—२-१७६

(२) मारणम्।

दिवा पशूनां वृकाद्युपघाते पालेत्यनायति पालदोषः।

विष्णुः—५-१३८

अत्र उपघातः पीड़नं मारणं च ॥

(३) अस्पृश्यस्पर्शनम्।

उपघातः श्वकाकादिस्पर्श इति कल्पतरौ नियतकालकाण्डे—२२६

उपघातादृते दोषं नान्यस्योदीरयेद्बुधः इति मार्कण्डेयपुराणे—३४-२८

(४) उच्छिष्टादियोगोऽपि उपघात इति विज्ञानेश्वराभिप्रायः

याज्ञ०—१-१८६

उपघातः संस्पर्शनरूपं मनोदुःखोत्पादनमिति।

विज्ञानेश्वरः—२-११२

**उपघातकः**—अन्यद्वारा घातकः इति स्मृतिचन्द्रिकायाम्।

व्यवहारका०—७५६

विषाग्निदायकाश्चौरा घातकाश्चोपघातकाः।

स्वशरीरेण दण्ड्याः स्युर्मनुराह प्रजापतिः ॥

इति यमः

अत्र उपघातकाः प्रयोजकानुग्राहकानुमन्तृनिमित्तिन इति मन्मतम्।

**उपचयः**—वृद्धिः। सुध इति भाषायाम्।

**उपचारः**—(१) कर्म।

वैश्यशूद्रोपचारं च संकीर्णानां च सम्भवम्।

आपद्धर्मं च वर्णानां प्रायश्चित्तविधिं तथा ॥

मनुः—१-११६

(२) उपकरणम् यथा पूजादावासनादिकम्।

उपचारैः षोडशभिः संपूज्य त्रिदशास्तदा।

दण्डवत्पतिता भूमौ तानुवाचाथ माधवः ॥

पद्मपुराणे उत्त०—६२-१७

(३) अनुष्ठानकरणमिति गदाधरः।

पिण्डपितृवदुपचारः पित्र्ये इति कात्या० श्रा० सू०

—२-२

तेष्वावृदुपचारस्तूष्णीम् ॥ काठक-गृ०—२-१-८

(४) उपाय इति कुल्लूकः।

शिल्पोपचारयुक्ताश्च निपुणाः पण्ययोषितः।

एवमादीन् विजानीयात् प्रकाशाँल्लोककण्टकान् ॥

मनुः—९-२६८

(५) लक्षणम्।

उपचारस्तथैवास्य लाभहानिर्विपर्यये ॥

इत्यादि विवादरत्नाकरे आधितरङ्गे नारदः—४-१२५

(६) संचारः "उत्तरत उपचारो विहारः।"

बौधा०—१-७-१५-१

(७) प्रयोगप्रकारः।

तस्योपचारः पार्वणेन व्याख्यातः।

आप०—२-१-१-११

**उपचूलनम्**—वह्नौ सन्तापनम्।

"शुनाघ्रातावलीढस्य दन्तैर्विदलितस्य च।

अद्भिः प्रक्षालनं प्रोक्तमग्निना चोपचूलनम् ॥

इति प्रक्षिप्तमनुश्लोके—११-२००

आह्निकप्रकाशे पराशरश्च।

उपचूडनमिति वीरमित्रोदयपाठः।

उपचूर्णमिति प्रायश्चित्तविवेके पाठः—४५१

केशववैजयन्त्यां शातातपोऽपि" विष्णुः—५४-१२

**उपजननम्**—प्रजननम् । पुंलिङ्गमित्यर्थः ।
"जननीत्युपजननम्" इति वाराह-गृ०—१८-२०
उपरि जननमिति काठकगृह्ये पाठः—३-६-६

**उपजा**—मूल्यवृद्धिः । विक्रये पण्यानामर्घवृद्धिरुपजा ।
कौट०—२-७-२२

**उपजापः**—भेदः ।
उपजाप्यानुपजपेद्बुध्येतैव च तत्कृतम् ।
युक्ते च दैवे युध्येत जयप्रेप्सुरपेतभीः ॥
मनु०—७-१९७

**उपजिह्वा**—घण्टिका । इति विज्ञानेश्वरः—३-९६

**उपजीवनम्**—जीविकानिर्वाहार्थमपर्याप्ता वृत्तिः ।
भरणार्था वृत्तिः इति धर्मकोषे ।
तस्य वृत्तिं प्रवक्ष्यामि यच्च तस्योपजीवनम् ।
महाभारत—५-१३२-३०
गीताप्रेसपुस्तके नास्ति ।
भ्रातॄणां यस्तु नेहेत धनं शक्तः स्वकर्मणा ।
स निर्भाज्यः स्वकादंशात् किञ्चिद्दत्त्वोपजीवनम् ॥
मनुः—९-२०७
जीवनं जीविकानिर्वाहपर्याप्तं धनम्, प्रजीवनं प्रकृष्ट-जीविकानिर्वाहोचितम्, उपजीवनं तु जीविका-निर्वाहादपि न्यूनमिति एतेषां शब्दानामर्थभेदः ॥
इति मन्मतम् ॥

**उपतापी**—रोगी । सान्तानिकं यक्ष्यमाणमध्वगं सर्ववेदसम् ।
गुर्वर्थं पितृमात्रर्थं स्वाध्यायार्थ्युपतापिनः ।
नवैतान् स्नातकान् विद्याद्ब्राह्मणान् धर्मभिक्षुकान् ॥
मनुः—११-२
अत्र उपतापी रोगी इति कुल्लूकः ।

**उपदा**—उपहारः ।
पञ्च वृद्धिर्वा आयो वा लाभो वा शुल्को वा उपदा वा दीयते अस्मै-पञ्चक इति पातञ्जल-
महाभाष्ये—५-१-१
"उपायनमुपग्राह्यमुपहारस्तथोपदा ।" अमरः—२-८-२८
असौमेवान्धुरभियुक्तः तस्यायमनर्थः प्रतिक्रियताम् । अयं चार्थः प्रतिगृह्यतां इति । स चेत् तथा कुर्यात् उपदाग्राहक इति प्रवास्येत ॥ कौट०—४-४-६-७

**उपदेशः**—(१) शिक्षादानम् ।
धर्मोपदेशं दर्पेण विप्राणामस्य कुर्वतः ।
तप्तमासे चयेत्तैलं वक्त्रे श्रोत्रे च पार्थिवः ॥
मनुः—८-२७२

(२) साक्षान्निर्देशः । यथा "ब्रह्महा द्वादश समाः कुटीं कृत्वा वने वसेत् ॥ मनुः—११-७२
इति ब्रह्महत्याव्रतमुपदिष्टम् ।
तपसापनुनुत्सुस्तु सुवर्णस्तेयजं मलम् ।
चीरवासा द्विजोऽरण्ये चरेद् ब्रह्महणो व्रतम् ॥
मनुः—११-१०१
इति सुवर्णस्तेये ब्रह्महव्रतमतिदिष्टम् इत्युपदेशातिदेशयोः प्रभेदः ।

(३) शास्त्रम् ।
तेषु सर्वेषु यथोपदेशमव्यग्रो वर्त्तमानः क्षेमं गच्छति ।
आप०—२-९-२१-२

(४) उच्चारणम् ।
"अथ कः उपदेश उच्चारणम् । कुत एतत् दिशिरुच्चारणक्रिय इति पातञ्जलमहाभाष्ये । अतएव औपदेशिकं वाचनिकमिति पर्यायशब्दौ ॥

उपद्रवः—सप्तधाविभक्तस्य दिवसस्य षष्ठो भागः विप्लवश्च।
अथ यदूर्ध्वमपराह्णात् प्रागस्तमयात् स उपद्रवः।
इति कालमाधवे श्रुतिः—८८

उपद्रष्टा—(१) समीपवर्तित्वेन द्रष्टा।
रहस्यव्यवहारेषु एका स्त्री पुरुष उपश्रोता उपद्रष्टा वा साक्षी स्यात् ॥ कौट०—३-११-३१

(२) उदासीनः।
उपद्रष्टानुमन्ता च भर्त्ता भोक्ता महेश्वरः।
भगवद्गीता—३-२२

उपद्वारम्—द्वारसमीपदेश इति आह्निकप्रकाशे मित्रमिश्रः।
"न चत्वरोपद्वारयोर्मूत्रपुरीषे कुर्यात् न तीर्थे न यज्ञभूमौ न शस्यपूर्णे न याज्ञियानां वृक्षाणामधस्तात् इति तत्र हारीतः।

उपधर्मः—निकृष्टधर्मः।
अल्पफलको धर्म इति मित्रमिश्राः।
आह्नि० प्र०—३१०
एष धर्मः परः साक्षादुपधर्मोऽन्य उच्यते इति।
मनुः—२-२३७

उपधा—(१) छद्मना परीक्षा।
धर्मोपधा अर्थोपधा, कामोपधा, भयोपधा इति तस्या भेदः कौटल्यार्थशास्त्रात् विस्तरेणावगन्तव्यः।
शुचीन् धर्मार्थकामभयोपधाशुद्धानिति विज्ञानेश्वरः।
याज्ञ०—१-३१२

(२) छद्म।
उपधाभिश्च यः कश्चित् परद्रव्यं हरेन्नरः।
ससहाय स हन्तव्यः प्रकाशं विविधैर्वधैः ॥
मनुः—८-१९३

(३) व्यापारः (उपधाभृतशब्दो द्रष्टव्यः)।

(४) उपधायुक्तिरिति कल्पतरौ—१९३
समाक्षिके चिरकृते पृच्छेदुत्तरसाक्षिणः।
शपथान्वा प्रयुञ्जीयादुपधां वापि योजयेत् ॥

(५) भावदोषः।
धनिकस्योपधादोषात्तथा धारणिकस्य च।
इति कल्पतरुः। व्यवहार०—१९३

**उपधानम्**—तूलमयं शयनकाले शिरः आदि स्थापनाय निर्मितं माण्डी इति भाषाप्रसिद्धम्।
तूलिकान्युपधानानि पुष्परक्ताम्बराणि च।
शोषयित्वार्कतापेन प्रोक्षणेन विशुद्ध्यति ॥
इत्यङ्गिरःस्मृतिः—१४
उपधानं गेन्दुकादि इति कल्पतरुः।
नियतकाल—१८४

**उपधाभृतः**—भृत्यविशेषः।
उपधया व्यापारफलेन शस्यादिना भृत इति चण्डेश्वर।
जातशस्यात्त्रिभागं तु प्रगृह्णीतोपधाभृतः ॥
इति विवादरत्नाकरे बृहस्पतिः ॥

**उपधिः**—छद्म।
योगाधमनविक्रीतं योगदानप्रतिग्रहम्।
यत्र वाप्युपधिं पश्येत् तत्सर्वं विनिवर्त्तयेत् ॥
मनुः—८-१६५

**उपधिक्रयः**—अविहितक्रयः ।

अन्तर्गृहे बहिर्ग्रामान् निश्युपांशुसतो जनात् ।
हीनमूल्यं च यत् क्रीतं ज्ञेयोऽसावुपधिक्रयः ॥
इति विवादरत्नाकरे बृहस्पतिः ॥

**उपनयनम्**—(१) संस्कारविशेषः ।

समीपप्रापणमिति यौगिकोऽर्थः । तेन माणवकस्य-चूडाकर्मोत्तरभावी आचार्यसमीपप्रापणरूपो मौञ्जीबन्ध-नाख्यसंस्कार उपनयनशब्देनाभिधीयते ॥

गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् ।
गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः ॥
मनुः—२-३६

उपनयनं विद्यार्थस्य श्रुतितः संस्कार ।
इत्यापस्तम्बः—१-१-१-६

(२) परिवेषणम् ।

उभयोर्हस्तयोर्मुक्तं यदन्नमुपनीयते ।
तद्विप्रलुम्पन्त्यसुराः सहसा दुष्टचेतसः ॥
मनुः—३-२२५

**उपनिधिः**—वस्त्रादिपिहितं यद्वस्तु विश्वासादन्यत्र स्थाप्यते ।

अनाख्यातं व्यवहितमसंख्यानमदर्शितम् ।
मुद्राङ्कितं च यद्द्रव्यं तदौपनिधिकं स्मृतम् ॥
इति विवादरत्नाकरे बृहस्पतिः । विवाद—८३

वासनस्थमनाख्याय हस्तेऽन्यस्य यदर्प्यते ।
द्रव्यं तदौपनिधिकं प्रतिदेयं तथैव तत् ॥
याज्ञ०—२-६५

उपनिधिः भाण्डादिस्थः समुद्र इति मन्वर्थविवृतिः
—८-१८५

उपनिधिर्न्यासो निक्षेप इति पर्याया इति कौटलीयभाष्ये गणपतिशास्त्रिणः । किन्तु "निक्षेपश्चोपनिधिना" (कौट०—३-१२) इति वदता आचार्येण तत् न विवक्षितमित्यवगन्तव्यम् ॥

**उपनिपातः**—चौरादिभयम् ।

उपनिपातः चौरदैव्याग्न्यादिकृत उपप्लव इति श्रीमूला । "अन्यत्र भ्रेषोपनिपाताभ्यां नष्टं विनष्टं वाभ्यावहेयुः" इति कौटल्यः—३-१२

**उपनिमन्त्रितः**—पूर्वेद्युर्निमन्त्रितः । "नोपनिमन्त्रितः श्राद्धे ।" विष्णुः—६९-४

अत्र उपशब्देन पूर्वेद्युस्तनमेव निमन्त्रणं गृह्यते न कालान्तरीयमिति नन्दपण्डितः ।

**उपनिषत्**—(१) विद्या ।

यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च ।
गृणन्ति सत्यकर्माणं सत्यं सत्येषु सामसु ॥
महाभा० शान्ति—४७-२६

(२) ब्रह्मवादिनीविशेषः । निषत् शब्दो द्रष्टव्यः । उपनिषत्केवलात्मज्ञापकवाक्यं निषत्तु कर्माङ्ग—अवबन्धदेवताविज्ञानवाक्यमिति तयोर्भेदः ॥

**उपनिषदर्हः**—शिष्यः ।

अथोपनिषदर्हा इति काठक-गृ०—१-१०-१

**उपनिष्क्रमणम्**—बहिरवकाशः । हता इति भाषायाम् ।

उपनिष्क्रम्यते यत्र तदुपनिष्क्रमणम् मञ्चारार्थं बहिरवकाशः । "प्रभूतैधोदकयवसकुशमाल्योपनिष्क्रमणमार्यजनभूयिष्ठमनलससमृद्धं धार्मिकाधिष्ठितं निकेतनमावसितुं यजेत ।" गौतमः—१-९-६५

विहारभूमिरिति गोविन्दस्वामी । बौधा०—२-३-६-३१

**उपन्यासः**—(१) विचारः इति कुल्लूकः ।

पूर्वं प्रत्युदितं सद्भिः पूर्वजैश्च महर्षिभिः ।
विश्वजन्यमिमं पुण्यमुपन्यासं निबोधत ॥

मनुः—६-३१

(२) उपस्थापनम् ।

छलं निरस्य भूतेन व्यवहारान्नयेन्नृपः ।
भूतमप्यनुपन्यस्तं हीयते व्यवहारतः ॥

याज्ञ०—२-१९

**उपपक्षः**—कक्षः ।

उपपक्षौ कक्षौ इति भाष्यमिति पूजाप्रकाशे मित्रमिश्रः ।
स श्मश्रूण्यग्रेऽवपत्, अथोपपक्षौ अथ केशान् इति श्रुतौ ॥

**उपपतिः**—जारः ।

मृष्यन्ति ये चोपपतिं स्त्रीजितानां च सर्वशः ।
अनिर्दिशं च प्रेतान्नमतुष्टिकरमेव च ॥ मनुः—४-२१७

**उपपत्तिः**—न्यायः ।

कालं देशं तथात्मानं द्रव्यं द्रव्यप्रयोजनम् । उपपत्तिमवस्थां च विज्ञाय शौचं शौचज्ञः कुशलो धर्मेप्सुः समाचरेत् । बौधा०—१-५-९-४८

**उपपातकम्**—गोवधादि ।

महापातकतुल्यानि पापान्युक्तानि यानि तु ।
तानि पातकसंज्ञानि तदूनमुपपातकम् ॥

उपपातकमाह । मनुः—११-५९-६६

गोवधोऽयाज्यसंयाज्यपारदार्यात्मविक्रयाः ।
गुरुपितृमातृत्यागः स्वाध्यायाग्न्योः सुतस्य च ॥५९॥
परिवित्तितानुजेऽनूढे परिवेदनमेव च ।
तयोर्दानं च कन्यायास्तयोरेव च याजनम् ॥६०॥
कन्याया दूषणं चैव वार्धुष्यं व्रतलोपनम् ।
तडागारामदाराणामपत्यस्य च विक्रयः ॥६१॥
व्रात्यता बान्धवत्यागो भृत्याध्यापनमेव च ।
भृत्याच्चाध्ययनादानपण्यानां च विक्रयः ॥६२॥
सर्वाकरेष्वधीकारो महायन्त्रप्रवर्त्तनम् ।
हिंसौषधीनां स्त्र्याजीवोऽभिचारो मूलकर्म च ॥६३॥
इन्धनार्थमशुष्काणां द्रुमाणामवपातनम् ।
आत्मार्थं च क्रियारम्भो निन्दितान्नादनं तथा ॥६४॥
अनाहिताग्निता स्तेयमृणानामनपक्रिया ।
असच्छास्त्राधिगमनं कौशीलव्यस्य च क्रिया ॥६५॥
धान्यकुप्यपशुस्तेयं मद्यपस्त्रीनिषेवणम् ।
स्त्रीशूद्रविट्क्षत्रवधो नास्तिक्यं चोपपातकम् ॥६६॥

याज्ञवल्क्योऽपि—३-२३४-२४२

गोवधो व्रात्यता स्तेयमृणानां चानपक्रिया ।
अनाहिताग्निता पण्यविक्रयः परिवेदनम् ॥२३४॥
भृताद्ध्ययनादानं भृतकाध्यापनं तथा ।
पारदार्यं पारिवित्त्यं वार्धुष्यं लवणक्रिया ॥२३५॥
स्त्रीशूद्रविट्क्षत्रवधो निन्दितार्थोपजीवनम् ।
नास्तिक्यं व्रतलोपश्च सुतानां चैव विक्रयः ॥२३६॥
धान्यकुप्यपशुस्तेयमयाज्यानां च याजनम् ।
पितृमातृसुतत्यागतडागारामविक्रयः ॥२३७॥
कन्यासंदूषणं चैव परिविन्दकयाजनम् ।
कन्याप्रदानं तस्यैव कौटिल्यं व्रतलोपनम् ॥२३८॥
आत्मनोऽर्थे क्रियारम्भो मद्यपस्त्रीनिषेवणम् ।
स्वाध्यायाग्निसुतत्यागो बान्धवत्याग एव च ॥२३९॥
इन्धनार्थं द्रुमच्छेदः स्त्रीहिंसौषधजीवनम् ।
हिंस्रयन्त्रविधानं च व्यसनान्यात्मविक्रयः ॥२४०॥
शूद्रप्रेष्यं हीनसख्यं हीनयोनिनिषेवणम् ।
तथैवानाश्रमे वासः परान्नपरिपुष्टता ॥२४१॥

असच्छास्त्राधिगमनमाकरेष्वधिकारिता ।
भार्याया विक्रयश्चैषामेकैकमुपपातकम् ॥२४२॥
नरकभोगानन्तरं जलजयोनिप्रापकत्वमुपपातकम् ॥
तदाह विष्णुः—४४-२-५
अतिपातकिनां पर्यायेण सर्वाः स्थावरयोनयो, महापातकिनां कृमियोनयोऽनुपातकिनां पक्षियोनय उपपातकिनां जलजयोनय इति ॥

**उपपातनम्**—परिसमूहनम् ।
"परिसमूहनमिति प्रतिभातीति नित्याचारप्रदीपे नरसिंहवाजपेयिनः ।
"अदिति द्यौरित्युपपातनं करोति" इति तत्रत्ययजुर्विधाने ।

**उपपुराणम्**—पुराणशब्दे द्रष्टव्यम् ।

**उपप्लवः**—(१) सूर्यग्रहणं चन्द्रग्रहणं च ।
उपप्लवे चन्द्रमसो रवेश्च त्रिष्वष्टकास्वप्ययनद्वये च ।
विष्णुपुराणम्—३-१४-१३
(२) राहुग्रहः :
केतूपप्लव भौममन्दरवयः षष्ठत्रिसंस्थाः शुभाः ।
इति ज्योतिःशास्त्रम् ।
(३) उपद्रवः ।
नदीसन्तारकान्तारदुर्देशोपप्लवादिषु । आसिद्धस्तं परासेधमित्यादि नारदः—१-४६

**उपबर्हः**—उपधानम् ।

**उपबर्हणम्**—उपधानम् । माण्डी इति उत्कलेषु प्रसिद्धम् ।
तूलमयं शिरसोऽधस्तात् शयनकाले ध्रियते यत् तदुपबर्हणपदवाच्यम् ।
"सत्यां क्षितौ किं कशिपोः प्रयासैः बाहौ स्वसिद्धे ह्युपबर्हणैः किम् ॥ श्रीमद्भागवते—२-२-४

**उपभृत्**—स्रुग्विशेषः ।
"अश्वत्थकाष्ठनिर्मिता जुहूतुल्या उप समीपे भ्रियते भ्रियते इति व्युत्पत्त्या होमकाले अध्वर्युणा सव्यहस्तेन होमार्थधृतदक्षिणहस्तजुह्वाः समीपे धारणात्" उपभृत् इत्युच्यते इति श्रौतपदार्थनिर्वचने ।
स्रुग्भेद इत्यमरः—२-७-२५
उपभृच्छब्दस्य प्रयोगः अग्निहोत्रहवणीशब्दे द्रष्टव्यः ।

**उपभोगः**—भुक्तिः । दखल् इति भाषायाम् ।
आगमेनोपभोगेन नष्टं भाव्यमतोऽन्यथा ।
पञ्चबन्धो दमस्तस्य राज्ञे तेनाविभाविते ॥
याज्ञ०—२-१७१
न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते ॥
मनुः—२-९४

**उपमर्दः**—(१) सर्वनाश इति वीरमित्रोदये ।
क्षतं भङ्गोपमर्दौ वा कुर्याद्‌द्रव्येषु यो नरः ।
प्राप्नुयात् साहसं पूर्वमिति कात्यायनः ॥
(२) स्पर्शः ।
उपमर्दे लक्षगुणं ग्रहणे चन्द्रसूर्ययोः ।
मध्ये कोटिगुणं पुण्यं मुक्तिकाले त्वनन्तकम् ॥
इति समयमयूखोद्धृतब्रह्मपुराणे । अत्र उपमर्दस्पर्श इति नीलकण्ठः—१३३

उपयमः—उद्वाहः ।

भ्रातरि चैवं ज्यायसि यवीयान् कन्याग्न्युपयमेषु ।

गौतम०—२-६-१८

उपयमनम्—यज्ञपात्रविशेषः ।

महापुष्करं जुहूसदृशं महादण्डं पात्रमुपयमनमिति वैदिकाः ।

उपयमनकुशाः—कर्मसम्पादनार्थमासादिताः कुशाः ।

सप्तपत्राः शुभा दर्भा ब्रह्मग्रन्थिसमन्विताः ।

उपयमनकुशाः प्रोक्ता अग्निकार्य्यादिकर्मसु ।।

इति नित्याचारप्रदीपे—१-४२१

उपयोगः—नियमपूर्वकं वेदादेः ग्रहणमिति हरदत्तः ।

आपत्कल्पो ब्राह्मणस्याब्राह्मणात् विद्योपयोगः ।

गौतम०—१-७-१

उपरः—पशुबन्ध पञ्चारत्निपरिमाणयूपस्य मूलप्रदेशे प्रथमोऽरत्निपरिमितो भागो यो यूपावटे रोप्यते स उपर इत्युच्यते ॥

उपरक्तः—राहुग्रस्तः दिवाकरः, राहुग्रस्तश्चन्द्रश्च ।

"नेक्षेतोद्यन्तमादित्यमिति" मनुश्लोके ।

"नोपरक्तं न वारिस्थमिति" केशववैजयन्त्यां

पाठः—७१-२०

कालसारेऽपि उपसृष्टशब्दे द्रष्टव्यः ।

मयमयूखेऽपि नोपरक्तमिति पाठः—१३३

उपरतः—(१) मृतः ।

"पितर्युपरते पुत्रा विभजेयुर्धनं पितुः" नारदः ॥

पितर्युपरते पुत्रो मातुः श्राद्धान्निवर्त्तते ।

मातर्यपि च वृत्तायां पितुः श्राद्धादृते समाः ॥

इति श्राद्धप्रदीपे ॥

(२) नेष्टः ।

मातुर्निवृत्ते रजसि प्रत्तासु भगिनीषु च ।

निवृत्ते वापि रमणे पितर्य्युपरतस्पृहे ॥

नारदः—१३-३

उपरमः—मृत्युः ।

पाण्डोरुपरमं दृष्ट्वा देवकल्पा महर्षयः ।

ततो मन्त्रविदः सर्वे मन्त्रयांचक्रिरे मिथः ॥

महाभा० आदि०—१२५-१

उपरागः—(१) सूर्याचन्द्रमसोर्ग्रहणम् ।

संक्रान्तेः पूर्वकालस्तु षोड़शोभयतः कलाः ।

चन्द्रसूर्योपरागे च यावद्दर्शनगोचरः ॥

इति कालसारे जाबालिशातातपौ ।

(२) वन्दीकरणमिति केशववैजयन्त्याम् ।

"न गोब्राह्मणोपरागेऽश्नीयात्" विष्णुः—६८-४

उपरिगमनम्—आरोहणम् ।

आरोहणमुपरिगमनमिति हरिहरः ॥

पारस्करः—२-७-७

उपरिजननम्—पुम्प्रजननम् ।

"भसदित्यु परिजननम्" काठकगृ०—३-६-६

उपरिशय्या—खट्वा । उपरिशय्या खट्वेति हरदत्तः ।

आवसथं दद्यादुपरिशय्यानुपस्तरणमुपधानम् ।

आप०—२-३-६-१५

"खट्वादिका" इति कल्पतरुः । नियतकाल—१८४

उपरिष्टात्—ऊर्द्ध्वम् । पारस्करः—१-२-६

**उपरुद्धः**—मूत्रपुरीषकारी इति मित्रमिश्रः ।

उपरुद्धो न सेवेत छायां दृश्यं चतुष्पथम् ॥

इत्याह्निके यमः—३५

"मलमूत्रवेगधारी" इति आचारेन्दौ । तत्र मलमूत्रयोर्वेगं न धारयेत् । "नोपरुद्धःक्रियां कुर्यादिति" वचनात् । आचारेन्दुः—२४

**उपरूढः**—रक्षितः ।

"स्वयमुपरूढः कृतारमत्राण" इति श्रीमूला । नाविनिमग्नायां मुषितायां वा स्वयमुपरूढो नोपनिधिमभ्यावहेत् । कौट०—३-१२-२

**उपरोधः**—पीड़ा, बाधा च ।

तेषामनुपरोधेन पारत्र्यं यद् यदाचरेत् ।

तत्तन्निवेदयेत् तेभ्यो मनोवचनकर्मभिः ॥

मनुः—२-२३६

उपरोधस्यार्थः धारणमिति विवादरत्नाकरे । पृ०—६३४

"सर्वत्र त्रयाणां वर्णानां धनहारकारावधबन्धाः क्रियासु चोपरोधः महत्स्वपि पातकेषु विवासोऽङ्ककरणं ब्राह्मणस्येति" शङ्खलिखितौ । अत्रापि बाधारूपार्थ इति नार्थभेदः । शब्दकल्पद्रुमे तु उपरोधस्यार्थः अनुरोध इति लिखितः परन्तु तस्योदाहरणं न प्रदत्तम् । यदुदाहरणं दत्तं तत्प्रतिबन्धस्येति विज्ञेयम् ॥

**उपर्यासनम्**—खट्वादौ उपवेशनम् ।

उपरिखट्वादौ आसनम् उपवेशनम् आसनस्योपरि मसूरिकायासनं वेति हरिहरः । पारस्करगृ०—२-५-१२

**उपलः**—पाषाणः ।

अयःकांस्योपलानां च द्वादशाहं कणान्नता ।

मनुः—११-१६७

तैजसवद्धुपलमणिशङ्खमुक्तानाम् । गौतमः—१-१-२६

**उपला**—शिलपुआ (शिलापुत्री) इति प्रसिद्धा ।

"पाषाणनिर्मिता पेषणसाधनभूता उपला कथिता इति श्रौतपदार्थनिर्वचने ।

**उपलिङ्गनम्**—लिङ्गेन चिह्नेन विभावनम् ।

लभेत पुंश्चलीभोगं सङ्गमस्योपलिङ्गनात् ॥

कौट०—३-१३

**उपलिप्तकेशः**—संस्कृतकेशः ।

"उपलिप्तः आमलक्यादिभिः संस्कृतः केशो यस्य स इति हरदत्तः । आप०—१-२-८-२

सूत्रं तु आलिप्तमुखशब्दे द्रष्टव्यम् ।

**उपलेखनम्**—शस्त्रेण तक्षणम् ।

उपलेखनं नाम शस्त्रेणोपरिभागस्य तक्षणमिति ।

माधवाचार्याः—७-२३

**उपवनम्**—गृहवाटिका इति कल्पतरौ । श्राद्ध०—३१

वापी कूपतड़ागानि उद्यानोपवनानि च ।

पुनः संस्कारकर्त्ता च लभते मौलिकं फलम् ॥

बृहस्पतिः—६३

**उपवातम्**—वातेन शुष्कम् ।

प्रक्षालितोपवातान्यक्लिष्टानि वासांसि ।

इति बौधा०—१-१३-५

**उपवादः**—अन्धोऽसि, काणोऽसि, इत्याद्यङ्गवैकल्यादिप्रदर्शनपूर्वकं निन्दनमुपवादः ।

"शरीरप्रकृतिश्रुतवृत्तिजनपदानां शरीरोपवादेन काणखञ्जादिभिः सत्ये त्रिपणो दण्डः ।"

इति कौट०—३-१८

"तेन शरीरोपवादः, प्रकृत्युपवादः श्रुतोपवादः वृत्त्युपवादः जनपदोपवाद इति ॥

**उपवासः**—(१) भोजनत्यागः ।

"अलब्धोपवासः" आपस्तम्बः—१-६-२४-१७

(२) देवपरिचर्यार्थः भोजनत्यागः नियमसहितः ।

उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैः सह ।

उपवासः स विज्ञेयः सर्वभोगविवर्जितः ॥

इति कालसारोद्धृत-विष्णुः ॥

(३) कर्षकः इति श्रीमूला ।

"ग्रामार्थेन ग्रामिकं व्रजन्तम् उपवासाः पर्यायेण अनुगच्छेयुः ।" इति कौट०—३-१०

**उपविषम्**—गौणविषम् ।

"स्नुह्यर्ककरवीरलाङ्गलीगुञ्जाहिफेनवज्राणि धुस्तूरश्च इति वैद्यकशब्दसिन्धौ ॥

अर्कसेहुण्डधुस्तूरा लाङ्गली करवीरकः ।

गुञ्जाहिफेनमित्येताः सप्तोपविषजातयः ॥

इतिशार्ङ्गधरे मध्य—१२

**उपवीतम्**—यज्ञसूत्रम् ।

त्रयमूर्ध्ववृतं तन्तु तन्तुत्रयमधोवृतम् ।

त्रिवृच्च ग्रन्थिनैकेन उपवीतमिहोच्यते ॥

वृद्धहारीतः—८-४६

उपवीतं कटौ कृत्वा कुर्याद्गात्रानुलेपनम् ।

एकयामाश्च योऽश्नीयान्निराशाः पितरो गताः ॥

इति कालसारे शातातपः ॥

उपवीतं बटोरेकं द्वे तथेतरयोः स्मृतम् ।

एकमेव यतीनां स्यादिति शास्त्रस्य निर्णयः ॥

स्मृतिचन्द्रिका-संस्कार—८४

**उपवीती**—वामस्कन्धधृतयज्ञसूत्रः ।

उद्धृते दक्षिणे पाणावुपवीत्युच्यते द्विजः ॥

मनुः—२-६३

**उपवेदः**—आयुर्वेदादिः ।

तस्य च व्यवहारो वेदो धर्मशास्त्राण्यङ्गान्युपवेदाः पुराणम् ।

गौ० ध०—२-२-१६

ऋग्यजुःसाम चाथर्ववेदा आयुर्धनुः क्रमात् ।

गान्धर्वश्चैव तन्त्राणि उपवेदाः प्रकीर्त्तिताः ॥

इति शुक्रनीतौ—४, विद्याकला—२६

**उपवेष्टिती**—कटिप्रदेशः । द्वितीयेन वाससा वेष्टितो यस्य स उपवेष्टिती इति उज्वलाकारः ॥

आप०—१-२-८-२

**उपव्युषम्**—एषः समीपमिति उज्ज्वलाकारः ।

उपव्युषं यावता वा कृष्णां रोहिणीमिति ॥

आप०—१-३-६-२२

**उपव्रतम्**—व्रतपूर्वाहनियमः ।

उपव्रतं तु हारीतोक्तषोड़शगुणवृत्तेष्वन्यतमम् ।

उपव्रतत्वं दशम्यादावेकभक्ततादि इति माधवाचार्याः॥

अक्रोधो गुरुशुश्रूषा शौचमाहारलाघवम् ।

अप्रमादश्च नियमाः पञ्चैवोपव्रतानि च ॥

इति हेमाद्रौ व्यासः । हेमा० परि०—३६४

**उपश्रवणम्**—परम्पराप्रसिद्धिरिति व्यवहारकल्पतरुः-६७

परस्परप्रसिद्धिरित्यपरार्कः—२-१५१

परम्पराश्रवणमिति विवादरत्नाकरे- २१४

उपश्रवणसम्भोगकार्य्याख्यानोपचिह्निताः ।

उद्धरन्ति ततो यस्मादुद्धृतास्ते ततः स्मृताः ॥

कात्यायनः—७४५

**उपश्रुतिः**—रात्रावन्धकारादौ आकर्ण्यमानेन या वार्ता श्रूयते ।
नक्तं निर्गत्य यत्किञ्चिच्छुभाशुभकरं वचः ।
श्रूयते तद्विदुर्धीरा दैवप्रश्नमुपश्रुतिम् ॥
इति शब्दकल्पद्रुमे हारावली ।
उपश्रुतिः वार्ता इति नीलकण्ठः ।
न नर्मगां जातु वक्तासि रुक्षां नोपश्रुतिं कटुकां नोतमुक्ताम् ॥
महाभा० उद्—३०-५

**उपश्रोता**—आकस्मिकभावेन समीपवर्त्तित्वेन वा श्रोता, न पुनः साक्षिधर्मेण ।
"साधुतां चेत्प्रतिजानीतेऽग्निरुपद्रष्टा वायुरुपश्रोता-दित्योऽनुख्याता साधुतां प्रतिजानीते इत्यादि ॥"
आप०— १-२-३-६-२
"रहस्यव्यवहारेष्वेका स्त्री पुरुष उपश्रोता उपद्रष्टा वा साक्षी स्यात् ।" बौधा०—२-३-११

**उपसंव्यानम्**—अधोवस्त्रम् । अमरः—२-६-११७

**उपसंग्रहः**—तूलिका । उपसंग्रहः तूलिका इति नीलकण्ठः ।
उपातिष्ठत मेधावी पर्यङ्के सोपसंग्रहे ।
मञ्जीकरणापेक्ष्यद्रव्यमिति भावः ॥

**उपसंग्रहणम्**—उत्तानाभ्यां वामदक्षिणहस्ताभ्यां गुरोः वामदक्षिणपादयोः यथाक्रमं ग्रहणम् ।
व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः ।
सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन च दक्षिणः ॥
मनुः—२-७२
पद्माकारौ करौ कृत्वा पादोपग्रहणं गुरोः ।
उत्तानाभ्यां तु पाणिभ्यामिति पैठीनसेर्वचः ॥
इति गदाधरभाष्ये पारस्करगृ०—२-५

**उपसञ्चारः**—द्वारम् । "पश्चादुपसञ्चारः" इति गोभिलः —४-२-७
उपसञ्चरति अनेनेति उपसञ्चारो द्वारमुच्यते इति तत्र चन्द्रकान्तः ।

**उपसत्**—एकदिननिष्पाद्यो ज्योतिष्टोमः । तस्य प्राचीनेषु त्रिषु दिनेषु अङ्गत्वेनानुष्ठेया होमा उपसत् शब्दवाच्याः ॥ बौधा०—३-१०-१२

**उपसदनम्**—गुरोः पादोपसंग्रहणादिगायत्री पाठान्तः अध्ययनारम्भविधिः ।
अन्तरागमने पुनरुपसदनम्" इति गौतमः—१-१-५६
तद्यथा—"पाणिना सव्यमुपसंगृह्यानङ्गुष्ठमधीहि भो इत्यामन्त्रयेद् गुरुं तत्र चक्षुर्मनःप्राणोपस्पर्शनं दर्भैः ॥४६॥ प्राणायामास्त्रयः पञ्चदशमात्राः ॥५०॥ प्राक्कूलेष्वासनं च ॥५१॥ ओं पूर्वाः व्याहृतयः पञ्च सत्यान्ताः ॥५२॥ गुरोः पादोपसंग्रहणं प्रातः ॥५३॥ ब्रह्मानुवचने चाद्यन्तयोः ॥५४॥ अनुज्ञात उपविशेत् प्राङ्मुखो दक्षिणतः शिष्य उदङ्मुखो वा ॥५५॥ सावित्री चानुवचनम् ॥५६॥ आदितो ब्रह्मण आदाने ओंकारोऽन्यत्रापि ॥५८॥

**उपसन्नः**—उपसंग्रहणादिना भजमानः ।
"तथा उपसन्नाय पादोपसंग्रहणादिना भजमानाय इति हरिहरः । पारस्करगृ०—२-३-३
उपसन्नः शिष्टो भण्यते इति गोभिलभाष्ये—३-३-२७

**उपसन्न्यायः**—क्रमवृद्धिः क्रमक्षयो वा ।
"सोमयागे उपसन्नामकेष्टिसंनिधौ दीक्षितस्य व्रतग्रहणमाम्नातम् । तत्र कल्पद्वयम् । आराग्रा परोवरीयसीति ।

अल्पशः आरम्भः क्रमशो वृद्धिरिति आराग्रा अर्थात् आरम्भदिने पय आदिकमल्पं भक्षयेत्। प्रतिदिनं च क्रमशो वर्द्धयेत् इत्यारग्रा। तद्विपरीता प्ररोवरीयसी इति श्रौतपदार्थनिर्वचने। "उपसन्न्यायेन पयोव्रतता शाकभक्षता" इत्यादि। बौधा०—३-१०-१२

**उपसम्पन्नः**—(१) स्वगृहे स्थित इति नरसिंहवाजपेयी।

"मैत्रीप्रातिवेश्यत्वादिना सम्बद्धः शीलयुक्तो वेति विज्ञानेश्वरः।" याज्ञ०—३-२४

गृहवासादिना आश्रित इति हरदत्तः॥

गौतमः—२-५-२०

स्वगृहवासीति कुल्लूकः।

श्रोत्रिये तूपसम्पन्ने त्रिरात्रमशुचिर्भवेत्॥

मनुः—५-८१

(२) मृत इति हलायुधः।

परासुरुपसम्पन्नः प्रमीतः संस्थितो मृत इति॥

का०—३

हर्षचरितेऽपि—स बाल एव बलयता विधिवशात् उपसम्पन्नया व्ययुज्यत जनन्या इति प्रयोगात्। मृत्युरूपार्थः परम्परासिद्ध इवाभाति॥

(३) संयुक्तः।

त्रिंशदेनं सहस्राणि रथाः काञ्चनमालिनः।

सदश्वैरुपसम्पन्नाः पृष्ठतोऽनुययुस्तदा॥

महाभा० विरा—७०-१६

(४) यज्ञहतपशुः।

वाच्यलिङ्गाः प्रमीतोपसम्पन्नप्रोक्षिताहते॥

इत्यमरः—२-७-२६

उपसम्पन्नमुद्दिष्टं निहते च सुसंस्कृते॥

इति विश्वमेदिन्यौ। मेदिनी—२०-१३१

उपसम्पन्नशब्दे व्याख्याकारकोषकाराणामर्थभेदः सङ्गच्छते न वेति विवेचनीयम्। मन्मते मनूक्तात् उपसम्पन्नशब्दात् बुद्धिभेदेन अर्थभेदा आगताः।

**उपसर्गः**—(१) उपसर्गः विघ्न इति हरिहरः।

पारस्करगृ०—३-१४-१४

(२) पीडनम्, ग्रहणम्। उल्कापातभूमिचलनज्योतिषोरुपसर्गेषु॥ गोभिलः—३-३-१८

(३) ग्रहभूताद्यावेशः।

उपसर्गः ग्रहभूताद्यावेशः तेन मृत्युरुपसर्गमृत्युरिति निर्णयसिन्धुव्याख्याने।

नोपसर्गभयं चैव तस्मिन् शासति भूपतौ।

इति मार्कण्डेयपुराणे—११६-७६

पुरुषापराधान्नियतमपरज्यन्ति देवताः।

ततोऽपरागाद्देवानामुपसर्गः प्रवर्त्तते।

दिव्यान्तरिक्षे भौमं च त्रिविधं सम्प्रकीर्त्तितम्॥

ग्रहर्क्षवैकृतं दिव्यमान्तरिक्षं निबोध मे।

उल्कापातो दिशां दाहः परिवेषस्तथैव च॥

गन्धर्वनगरं चैव वृष्टिश्च विकृता तु या।

एवमादिनी लोकेऽस्मिन्नान्तरिक्षं विनिर्दिशेत्॥

चरस्थिरभवो भौमो भूकम्पश्चापि भूमिजः।

जलाशयानां वैकृत्यं भौमं तदपि कीर्त्तितम्॥

इत्यादि मत्स्यपुराणे २२८ अध्याये॥

(४) विस्फोटादिभिरुपसर्गैरिति विज्ञानेश्वरः सद्यःशौचप्रस्तावे। याज्ञ०—३-२६

(५) उपद्रवः, विप्लवः ।

कुर्याच्चेत्प्रतिभूर्यदिमृणिकार्थेऽर्थिना सह ।
सोपसर्गस्तदा दण्ड्यो विवादाद्द्विगुणं धनम् ॥

इति पितामहः । व्यवहारकाण्डे—३५६

दुर्भिक्षे राष्ट्रसम्पाते आगतायां तथापदि ।
उपसर्गमृतानां च सद्यशौचं विधीयते ॥

लघुशातातपः—६०

**उपसर्जनम्**—अप्राधान्यम् ।

उपसर्जनं प्रधानस्य धर्मतो नोपपद्यते ।

मनुः—६-१२१

**उपसालः**—गवादिवारणार्थः प्राचीरसदृशः वृत्तिविशेषः ।

समन्ततो ग्रामाद्धनुःशतापकृष्टमुपसालं कारयेत ॥

कौट०—३-१०

**उपस्मृतयः**—जाबालिर्नाचिकेतश्च स्कन्दो लौगाक्षिकाश्यपौ ।
व्यासः सनत्कुमारश्च शन्तनुर्जनकस्तथा ॥
व्याघ्रः कात्यायनश्चैव जातूकर्णः कपिञ्जलः ।
बोधायनः कणादश्च विश्वामित्रस्तथैव च ।
उपस्मृतय इत्येताः प्रवदन्ति मनीषिणः ॥

**उपसृष्टः**—(१) गृहीतः, उपसर्गयुक्तः ।

तेनोपसृष्टो लभते न राज्यं राजनन्दनः ।

याज्ञ०—१-२७५

(२) उपद्रुतः ।

न शूद्रराज्ये निवसेन्नाधार्मिकजनावृते ।
न पाषण्डिगणाक्रान्ते नोपसृष्टेऽन्त्यजैर्नृभिः ॥

मनुः—४-६१

(४) राहुग्रस्तः सूर्यः ।

नेक्षेतोद्यन्तमादित्यं नास्तं यान्तं कदाचन ।
नोपसृष्टं न वारिस्थं न मध्यं नभसो गतम् ॥

राहुग्रस्तः चन्द्रश्च । मनुः—४-३७

**उपस्करः**—(१) कुण्डकटाहादि गृहव्यवहार्यवस्तु ।

गृहोपकरणभाण्डकुण्डादि इति लक्ष्मीधरः ॥

नियतकालः—१४३

उपस्करं गृहोपयोगिभाण्डं कुण्डघटिकादि इति मेधातिथिः ।

सदाप्रहृष्टया भव्यं गृहकार्य्येषु दक्षया ।
सुसंस्कृतोपस्करया व्यये चामुक्तहस्तया ॥

मनुः—५-१४६

(२) उपस्करः उपकरणम् । यथाह योगीश्वरः । भृत्यै रक्ष्य उपस्कर इति । याज्ञ०—२-१६३

उपकरणं लाङ्गलादीनां प्रग्रहयोक्त्रादिकम् इति विज्ञानेश्वरः ।

तत्र—"शय्यां सोपस्करां दद्याद् दीपिकां दर्पणं तथा।" इति अक्षयतृतीयायां निर्णयसिन्धूद्धृतवामनपुराणवचनेऽपि उपस्करः उपकरणार्थकः ।

अत्राजगाम स तीर्थे सखौ च सुतवाञ्छया ।
उपस्करवतीर्धेनूर्द्विजेभ्यः प्रददौ शतम् ॥

पद्मपु० उत्तर०-कालिन्दी—२००-६

**उपस्तरणम्**—तूलिका, शय्या ।

उपस्तरणं तूलिका इति हरदत्तः ॥

"आवसथं दद्यादुपरिशय्यामुपस्तरणमुपधानं सावस्तरणमभ्यञ्जनं च ।" आप०—२-३-६-१५

उपस्थम्—उपवेशनप्रकारविशेषः ।

"आकुञ्चितस्य सव्यजानुन उपरि दक्षिणं पादं निक्षिप्य उपवेशनमिति बौधायनविवरणटिप्पण्यां चिन्नस्वामी ।"

बौधा०—४-७-७

"चतुष्पथं गत्वा प्राङ्मुख उपस्थं कृत्वा इति तत्र गोविन्दस्वामी ।

"वामपादाङ्गुष्ठोपरि दक्षिणपादाङ्गुष्ठं निधाय पादपार्ष्णिमेलनेन उपस्थमिति पृथ्वीचन्द्रोदये । इतरेतरपादव्यत्यासेन उपवेशनं तदितिस्मृतिमञ्जरीमदनपारिजातयोः ।

दक्षिणं चोपविश्योरुं वामगुल्फोपरि न्यसेत् ।
वामोरौ दक्षिणं गुल्फं तच्चोपस्थमुदीरितम् ॥

इति लघ्वाश्वायनः—१-८२

ब्रह्मा इति शब्दे श्रौतपदार्थनिर्वचनोक्तप्रकारोऽपि द्रष्टव्यः "वामजानूपरि दक्षिणजानुनिक्षेप इति ।"

उपस्थमुपवेशनस्थानमिति हरिहरः । नीडमितिगदाधरः ॥

"हस्तेनोपस्थमभिमृशति ।" पारस्करः—३-१४-६

एवमुक्त्वार्जुनः संख्ये रथोपस्थ उपाविशत् ।

भगवद्गीता—१-४७

उपस्थः—(१) उत्सङ्गः क्रोड इति यावत् ।

तस्याः कुमारमुपस्थ आदध्युरिति गोभिल०—२-४-७

कूर्मपित्तं चोपस्थे कृत्वा ।" पारस्करगृ०—१४-५

(२) स्त्रीपुंमोर्जननेन्द्रियम् ।

पायूपस्थं हस्तपादमिति । मनुः—२-९०

यदुपस्थकृतं पापं पद्भ्यां वा यत्कृतं भवेत् ।
बाहुभ्यां मनसा वापि वाचा वा यत्कृतं भवेत् ।
सायं सन्ध्यामुपस्थाय तेन तस्मात्प्रमुच्यते ॥

बौधा०—२-४-७-१८

उपस्थानम्—(१) पूजा सत्कारो वा ।

ऋत्विगाचार्यश्वशुरपितृव्यमातुलानामुपस्थाने मधुपर्कः ।

गौतमः—१-५-२५

अत्र उपस्थानं गृहागमनमिति कल्पतरुः ।

नियतकाल—२०६

(२) स्तुतिः । यथा सूर्योपस्थानं संध्यायाम् ।

उपस्थानं चोत्थितेनैव कर्त्तव्यं न पुनरासीनेनेति गोविन्दस्वामी । बौधा०—२-४-७-६

(३) देवतास्थानम् ।

"उपस्थानानि देवतास्थानानि इति हरिहरः आसनानि उपस्थानानि च वास्तुशास्त्रप्रसिद्धानि शालाभवान्येवेति गदाधरः ।

"आसनोपस्थानेषु प्रोक्षेत्" इति पारस्करगृ०—३-४-६

(४) विचारालयः । राजोपवेशनस्थानम् ।

आत्मबलानुकूल्येन वा निशाहर्भागान् प्रविभज्य कार्य्याणि सेवेत । उपस्थानगतकार्य्यार्थिनामद्वारासङ्गं कारयेत् । कौट०—१-१६

अत्र उपस्थानम् आस्थानमण्डप इति श्रीमूला । पुरस्तादुपस्थानं दक्षिणतः कोशशासनकार्य्यकरणानि वामतो राजोपवाह्यानां हस्त्यश्वरथानां स्थानम् ॥

कौट०—१०-२

पार्थिवैर्बहुभिः कीर्णमुपस्थानं दिदृक्षुभिः ।
अशोभत महाराज नक्षत्रैर्द्यौरिवामला ॥

महाभा०-सभा०—४६-३३

(५) अङ्गसम्बाहनम् । अङ्गमर्दनमिति यावत् ।

इच्छतःस्वामिनश्चाङ्गैरुपस्थानमथान्ततः ।
अशुभं कर्म विज्ञेयं शुभमन्यदतः परम् ॥

इति नारदः—५-७

अत्र स्वामिनः इच्छानुसारेण अङ्गैः हस्तादिभिः उपस्थानं सम्बाह तच्च अङ्गानामेवेति विवादरत्नाकरे ॥

—१४४

(६) प्रार्थना ।

प्रोष्येत्य गृहानुपतिष्ठते । पारस्करगृ०—१-१८-१

उपतिष्ठते प्रार्थयते इति हरिहरः ।

समीपे स्थित्वा मन्त्रं पठतीति गदाधरः ॥

तद्गतवाङ्मनस्त्वेन समीपेऽवस्थानमिति कल्पतरुः ।

ब्रह्म०—२६२

**उपस्पर्शः**—(१) आचमनम् ।

उपस्पृश्य द्विजो नित्यमन्नमद्यात्समाहितः ।

भुक्त्वा चोपस्पृशेत्सम्यगद्भिः खानि च संस्पृशेत् ॥

मनुः—२-५६

(२) स्नानम् ।

निरस्य तु पुमान् शुक्रमुपस्पृश्यैव शुद्ध्यति ।

मनुः—५-६३

**उपस्पर्शनम्**—(१) स्नानम् ।

उपस्पृशंस्त्रिषवणं पितॄन् देवांश्च तर्पयेत् । मनुः—६-२४

उक्तं ब्रह्मचर्यम् । अग्नीन्धनभैक्षाचरणे । सत्यवचनम् । अपामुपस्पर्शनम् ॥ गौतमः—१-२-१४

अत्र उपस्पर्शनं स्नानमिति हरदत्तः ।

उदकोपस्पर्शनं च सह वाससा इत्यापस्तम्बः ॥

२-२-३-७

न स्रवन्तीमतिक्रामेदनुपस्पृशन् ॥

इति गोभिलः—३-२-२२

(२) देहमलक्षालनमिति नरसिंहवाजपेयी गदाधरः राजगुरुश्च ।

सर्वेषां शावमाशौचं मातापित्रोस्तु सूतकम् ।

सूतकं मातुरेव स्यादुपस्पृश्य पिता शुचिः ॥

मनुः—५-६२

(३) सान्निध्यम् ।

भुक्त्वा चाग्निमुपस्पृशेत् । बौधा०—२-१-२७

(४) स्पर्शः ।

श्यावान्तपर्यन्तावोष्ठावुपस्पृश्याचामेत् ।

आप०—१-५-१६-१०

श्वचण्डालपतितोपस्पर्शने सचैलं स्नानम् ।

वसिष्ठः—२३-३३

चण्डालोपस्पर्शने सम्भाषायां दर्शने च ।

आप०—२-१-२-८

कृत्वा मूत्रं पुरीषं वा स्वान्याचान्त उपस्पृशेत् ।

मनुः—५-१३८

(५) निर्हरणम् ।

"अवरश्चेद्वर्णः पूर्ववर्णमुपस्पृशेत् पूर्वो वा अवरं तत्र तच्छवोक्तमाशौचम्" इति गौतमः—२-५-२६

अत्र उपस्पर्शनं निर्हरणमिति विज्ञानेश्वरः—३-१४

(६) मार्जनम् ।

संहत्य तिसृभिः पूर्वमास्यमेवमुपस्पृशेत् ।

ततः पादौ समभ्युक्ष्य अङ्गानि समुपस्पृशेत् ॥

दक्षः—२-१५

कमण्डलुमुपस्पृश्य प्रक्षाल्य पाणिपादौ चाचम्येशानं मनसा ध्यायेत् । इत्याह्निकप्रकाशे शङ्खलिखितौ ।
अत्र उपस्पृश्य परिमृज्य इति मित्रमिश्रः ।

(७) आचमनम् ।

ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत् ।

मनुः—२-५८

उपस्पृश्य द्विजो नित्यमन्नमद्यात् समाहितः ।

मनुः—२-५३

स्नानादनन्तरं तावदुपस्पर्शनमुच्यते ।

अनेन तु विधानेन आचान्तः शुचितामियात् ॥

दक्षः—२-१३

(८) अङ्गपरिष्वङ्गः ।

दारे प्रजायां चोपस्पर्शनभाषा विस्रम्भपूर्वाः परिवर्जयेत् ।

आप०—२-२-५-१०

उपस्पर्शनम् अङ्गपरिष्वङ्ग इति कल्पतरुः ।

नियतकालः—२०५

**उपस्वेदः**—अग्नितापः । मलनिष्कासनार्थम् आर्द्रवस्त्रस्य तापनम् ।

उपस्वेदः अग्नितापः इति गोविन्दानन्दः ।

"यथा क्षारोपस्वेदचण्डनिर्णोदनप्रक्षालनादिभिः । वासांसि शुद्ध्यन्ति" इति प्रायश्चित्तविवेके हारीतः ॥

**उपहतम्**—अशुचिस्पर्शादिना दूषितम् ।

समुच्छिष्टमुच्छिष्टोपहतं च ॥ वसिष्ठः—१४-२१

**उपहननम्**—ग्रहणम् ।

"ध्रुवाज्यात् स्रुवेणोपहत्य" इति

**उपहर्त्ता**—परिवेषकः ।

अनुमन्ता विशसिता निहन्ता क्रयविक्रयी ।

संस्कर्त्ता चोपहर्त्ता च खादकश्चेति घातकाः ॥

मनुः—५-५१

**उपहव्यम्**—प्रायश्चित्तविशेषः ।

"इन्द्रो यतीन् शालावृकेभ्यः प्रायच्छत् । तमश्लीला वागभ्यावदत् स प्रजापतिमुपाधावत्, तस्मात्तमुपहव्यं प्रायच्छत्" इति श्रुतिः प्रायश्चित्तविवेके ।

**उपहारः**—(१) उपहारः बलिकर्म ।

अथोपहारः इति काठकगृ०—४-१०-१

(२) उपढौकनम् ।

भोजनं हवनं दानमुपहारः प्रतिग्रहः ।

बहिर्जानु न कार्याणि तद्वदाचमनं स्मृतम् ॥

बौधा०—२-३-६-४०

अत्र उपहारः देवतार्थमन्नाद्युपढौकनमिति परिभाषाप्रकाशे मित्रमिश्रः ।—६३

देवताद्यर्थमन्नाद्युपढौकनमिति लक्ष्मीधरः ।

ब्रह्मचारीकाण्डे—६४

**उपहासः**—मैथुनम् ।

उपहासः मैथुनमिति हरिहरः ।

तस्मादेवंविच्छ्रोत्रियस्य दारेण नोपहासमिच्छेत् ॥

इति पारस्करगृ०—१-११-७

नागतऽोऽन्यमन्योपहासमिच्छेत् ।

इति गोभिलगृ०—३-५-३

**उपहुतादः**—पञ्चयज्ञानविधाय यो भुङ्क्ते स इति हेमाद्रिः । तत्र सुमन्तुः "तस्करकितवाजपालवृषलीपत्युपहुतादोऽस्त्यग्नि इत्यादि ॥

**उपहोमः**—इह गाव इत्यादय उपहोमा इति देवपालः ।

काठकगृ०—४-७-१३

प्राक् स्विष्टकृत उपहोम इत्यादि ॥

**उपह्वरः**—रहः अन्तिकं च ।
उपह्वरं पर्वतान्तिकमिति श्राद्धविवेके शूलपाणिः ।
कालसारे गदाधरः । हेमाद्रिलक्ष्मीधरावपि ।
रहोऽन्तिकमुपह्वरे इत्यमरः—३-३-१८३
उपह्वरे नितम्बेषु तथा पर्वतमानुषु ।
गोमयेनोपलिप्तस्तु विविक्तेषु गृहेषु च ॥
इति कालसारे यमः

उपह्वर एकान्त इति नीलकण्ठः ।
उक्तो मया वासुदेवः पुनः पुनरुपह्वरे ।
सम्बन्धिषु समां वृत्तिं वर्त्तस्व मधुसूदनः ॥

**उपांशु**—रहः ।
विद्विष्टानुपांशुदण्डेन जनपदकोपेन वा साधयेत् ।
कौट०—१-१३-२०
रहश्चोपांशु चालिंगे । अमरः—२-८-२३

**उपांशुः**—समीपस्थोऽप्यन्यो यत् न शृणोति ।
जिह्वौष्ठौचालयेत्किंचिद् देवतागतमानसः ।
निजश्रवणयोग्यः स्यादुपांशुः स जपः स्मृतः ॥
इत्यागम इति शब्दकल्पद्रुमे ॥
उपांशुर्जपभेदे स्यादुपांशु विजनेऽव्ययमितिविश्वहैम-मेदिन्यः ।
विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः ।
उपांशुः स्याच्छतगुणः साहस्रो मानसः स्मृतः ॥
मनुः—२-८५

**उपाकरणम्**—(१) वेदोपक्रमः । साग्निककर्मविशेषः ।
उपाकरणम् उपक्रम इति गदाधरः ।
उपाकरणम् अग्निमतोऽध्यापनप्रवृत्तस्यैव भवति ॥
इति हरिहरः—२-१०-१

"अथातोऽध्यायोपाकर्म ॥१॥ ओषधीनां प्रादुर्भावे श्रवणेन श्रावण्यां पौर्णमास्यां श्रावणस्य पञ्चमीं हस्तेन वा ।" पारस्करगृ०—२-१०-२
"अथातोऽध्यायानामुपाकरणमोषधीनां प्रादुर्भावे श्रवणेन श्रावण्यां पञ्चम्यां हस्तेन वा ।" आश्वलायनगृ० ।
"श्रावण्यां पौर्णमास्यामाषाढ्यां वोपाकृत्य तैष्यां माघ्यां वोत्सृजेत्" इति स्मृतिचन्द्रिकायां बौधायनः ।
संस्कारप्रकाशः—७४६
तत्कर्म श्रावणपूर्णिमायां वा श्रवणानक्षत्रे वा श्रावणशुक्लपञ्चम्यां वा हस्ता नक्षत्रे वा भाद्रपूर्णिमायां वा क्रियते । ततः प्रभृति उत्सर्गपर्यन्तं स्नातकैः वेदपाठः क्रियते । विधिश्चास्य पारस्करादिषु द्रष्टव्यः ।
उपाकरणं प्रारम्भ इति अष्टावक्र भाष्ये ।
वर्षासु श्रावणेन स्वाध्यायानुपाकुरुते । मानव-गृ०—१-४-१
(२) स्पर्शनम् ।
"परिव्ययणोपाकरणनियोजनप्रोक्षणान्यावृता कुर्याद् यच्चान्यत् ।" पारस्करः—३-११-२
अत्र उपाकरणं स्पर्शनमिति हरिहरगदाधरौ ।
(३) उपहारः ।
एवमस्त्विति स प्राह प्रह्लादो विस्मितस्तदा ।
उपाकृत्य तु विप्राय वरं दुःखान्वितोऽभवत् ॥
महाभा० भीष्म—१२४-४४

**उपाकर्म**—उपाकरणम् (साग्निककर्मविशेषः) ।
उपाकरणशब्दो द्रष्टव्यः ।

**उपाकृतः**—यज्ञे अभिमन्त्र्य हतः पशुः ।
वृथा कृसरसंयावं पायसापूपमेव च ।
अनुपाकृतमांसानि देवान्नानि हवींषि च ॥
मनुः—५-७

**उपाञ्जनम्**—लेपनम् ।
सम्मार्जनोपाञ्जनेन सेकेनोल्लेखनेन च ।
गवां च परिवासेन भूमिः शुद्ध्यति पञ्चभिः ॥
मनुः—५-१२४

**उपाध्यायः**—यः वृत्त्यर्थमध्यापयति ।
एकदेशं तु वेदस्य वेदाङ्गान्यपि वा पुनः ।
योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते ॥
मनुः—२-१४१
यस्त्वेनं मूल्येनाध्यापयेत् तमुपाध्यायमेकदेशं वा ।
विष्णुः—२९-२
भृतकाध्यापको यस्तु उपाध्याय स उच्यते । इति
तत्र केशववैजयन्त्याम् । शङ्खः—३-२

**उपायः**—(१) स्वार्थसिद्धिकौशलम् ।
निक्षेपस्यापहर्त्तारमनिक्षेप्तारमेव च ।
सर्वैरुपायैरन्विच्छेच्छपथैश्चैव वैदिकैः ॥
मनुः—८-१९०
ते चोपायाः सामदानभेददण्डभेदेन चतुर्द्धा ।
उपायाः साम दानं च भेदो दण्डस्तथैव च ॥
इति याज्ञ०—१-३४६
क्रमेण तेषामुदाहरणम्—
अधीष्व पुत्रकाधीष्व तव दास्यामि मोदकान् ।
यद्वान्यस्मै प्रयच्छामि कर्णमुत्पाटयामि ते ॥
स्कन्द० माहे०—१२-५-५९
मिताक्षरायां तु दास्यामि तवेति पाठः ॥
मात्स्ये तु उपायाः सप्तधा उक्ताः ।
साम भेदस्तथा दानं दण्डं च मनुजेश्वर ।
उपेक्षा च तथा माया इन्द्रजालं च पार्थिव ॥२॥
प्रयोगाः कथिताः सप्त तन्मे निगदतः शृणु ।
एतेषां प्रातिस्विकरूपं तत्तच्छब्दे द्रष्टव्यम् ॥—२२१-१
(२) उपायः । शास्त्रोक्तेतिकर्त्तव्यताकलापः इति विज्ञानेश्वरः ।
देशे काल उपायेन द्रव्यं श्रद्धासमन्वितम् ।
पात्रे प्रदीयते यत्तत्सकलं धर्मलक्षणम् ॥
याज्ञ०—१-६

**उपायनम्**—(१) उपनयनम् ।
अशूद्राणामदुष्टकर्मणामुपायनम् । आप०—१-१-१-६
अत्र उपायनमुपनयनमिति उज्वलाकारः ।
सप्तमे वर्षे ब्राह्मणस्योपायनमिति काठकगृ० ॥—४-१-१
उष्ट्रमानुषकेभाश्वरासभीक्षीरभोजनात् ।
उपापाय पुनः कुर्यात्तप्तकृच्छ्रं चरेन्मुहुः ॥
इति गदाधरकृतपारस्करभाष्ये शातातपः—२-५
(२) उपढौकनम् ।
उपायनमिदं देव व्रतसम्पूर्त्तिहेतवे ।
(३) करः । उपायनं सामन्तभूपालैः प्रेषितः कर इति सरस्वतीविलासे प्रतापरुद्रः । पृ०—२३
(४) इतिकर्त्तव्यता ।
अथात्र व्रतोपायनम् । काठकगृ०—१-८-१
अत्र उपायनमिति कर्त्तव्यतेति देवपालः ।
(५) ग्रहणम् ।
उक्तं व्रतोपायनविमोचनम् । काठकगृ०—४-२-४
(६) आरम्भः ।
अमावास्यायां व्रतोपायनमिति शङ्खलिखितवचनव्याख्याने उपायनमारम्भ इति शूलपाणिः ।
प्रायश्चित्तविवेकः—५१६

**उपालम्भः**—भर्त्सनम् ।

अनराधेषु चैनं सततमुपालभेत । एनं शिष्यम् ।

इति आप०—१-२-८-२८

उपालम्भो द्वेधा गुणाविष्करणेन स्तुतिपूर्वको निन्दापूर्वकश्च । तत्राद्यो स्तुतिपूर्वकः यथा महाकुलस्य तव किमिदमुचितमिति । निन्दापूर्वको यथा बन्धकीसुतस्य तवोचितमेवेदमिति अमरटीकायां व्याख्यासुधायाम्—१-६-१४

**उपावर्त्तनम्**—(१) प्रत्याहरणम् ।

"वृत्तपाणिग्रहणयोऽपि दोषमौपशायिकं दृष्ट्वा सिद्धमुपावर्त्तनम् । कोट०—३-१५-१२

(२) प्रत्यावर्त्तनम् ।

यदुपावर्त्तते सोऽवभृथः । आप०—२-३-७-१०

**उपावृत्**—देशविशेषः । बौधा०—१-१-२-१४

**उपाष्टका**—अष्टकापूर्वदिनविहितश्राद्धम् ।

**उपासङ्गः**—(१) हयगजवाह्याः स्थूणाः ।

उपसङ्गा हयगजवाह्याः स्थूणा इति नीलकण्ठः ।

सानुकर्षाः सतूणीराः सवरूथाः सतोमराः ।

सोपासङ्गाः सशक्तीकाः सविषङ्गाः सहर्ष्टयः ॥

महाभा० उद्०—१५५-३

(२) तूणीरः ।

तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः ।

इत्यमरः—२-८-८८

**उपासनम्**—समीपे उपवेशनम् । तस्य प्रयोगः अभ्युत्थानशब्दे द्रष्टव्यः ।

**उपासनः**—गृह्याग्निः ।

सुतविन्यस्तपत्नीकस्तया वानुगतो वनम् ।

वानप्रस्थो ब्रह्मचारी साग्निः सोपासनो व्रजेत् ॥

याज्ञ०—३-४५

**उपाहितः**—अग्न्युत्पात इति हेमाद्रिः । अग्निदाह इति हरदत्तः । "संकुलोपाहित-वेदसमाप्तिछर्दिश्राद्धमनुष्ययज्ञेष्वहोरात्रमिति । गौतमः—२-७-३४

**उपेक्षकः**—अनासक्तः ।

अनग्निरनिकेतः स्याद्ग्राममन्नार्थमाश्रयेत ।

उपेक्षकोऽसंकुसुको मुनिर्भावसमाहितः ॥

मनुः—६-४३

अरण्यनित्यस्य जितेन्द्रियस्य सर्वेन्द्रियप्रीतिनिवर्त्तकस्य ।

अध्यात्मचिन्तागतमानसस्य ध्रुवा ह्यनावृत्तिरुपेक्षकस्य ॥

वसिष्ठः—१०-१७

**उपेतः**—उपनीतः ।

उपेतश्चेदाहिताग्न्यावृतार्थवत् । इति याज्ञ०—३-१

उपेतः स्त्रीणामनुपेतस्य चोच्छिष्टं वर्जयेत् ।

आप०—२-४-६-७

**उपेयम्**—प्राप्तव्यं वस्तु ।

उपेतारमुपेयं च सर्वोपायांश्च कृत्स्नशः ।

एतत्त्रयं समाश्रित्य प्रयतेतार्थसिद्धये ॥

मनुः—७-१५

**उपोदकी**—पूतिका, पोइ इति प्रसिद्धा ।

द्वादश्यां पारणां कुर्याद् वर्जयित्वा ह्युपोदकीम् ।

इति कालमाधवे ॥

उप्तिः—वपनम् ।

बीजानामुप्तिविच्च: स्यात् क्षेत्रदोषगुणस्य च ।
मानयोगं च जानीयात्तुलायोगांश्च सर्वशः ॥

मनुः—६-३३०

उभयतःशस्यम् (क्षेत्रम्)—यस्मिन् क्षेत्रे प्रतिसम्वत्सरं वारद्वयं शस्यं निष्पद्यते । दोफसलि जमि इति भाषायां प्रसिद्धम् ॥

क्षेत्रादुभयतः शस्याद् गोष्ठाद् वेदितलादपि ॥

इति कन्यापरीक्षायां शौनकः ॥

उभयतोमुखी (गौः)—अर्द्धप्रसूता गौः ।

यावद्वत्सस्य पादौ द्वौ मुखं योन्यां च दृश्यते ।
तावद् गौः पृथिवी ज्ञेया यावद् गर्भं न मुञ्चति ॥

याज्ञ०—१-२०७

उमा—अतसी । पेशु इति सम्भाव्यते ।

चत्वार्युमाफलानि पाणावद्भि शय्योतयते ॥

कौशिकसू०—३३-६-१७

उरणः—मेषः ।

क्षेत्रापणगृहासक्तमन्यत्रगतमानसम् ।
वृकीवोरणमासाद्य मृत्युरादाय गच्छति ॥

इति विष्णुः—२ -४२

वृकीवारण्यमासाद्य इति विष्णुधर्मोत्तरे—२-७८-२२

आविकटे उरणो दातव्य इति व्याकरणमहाभाष्ये पतञ्जलिः ।

उरभ्रः—मेषः ।

उरभ्रः मेष इति विज्ञानेश्वरः । याज्ञ०—१-२५८

आरण्यो मेष इति श्राद्धसूक्तव्याख्याने गदाधरः ।

—८-७

उर्वरा (भूः)—सस्यवती भूमिः ।

उर्वरायामनन्तर्हितायाम् इति पारस्करः—२-७-१७

सत्यस्य च यथा सन्तो बीजानामिव चोर्वरा ।
पर्जन्य इव भूतानां प्रतिष्ठा सुहृदां भव ॥

इति कर्णं प्रति भीष्मः । महाभा० द्रोण०—४-२

उर्वारुः—कर्कटी ।

स्वादुकर्कटी इति माधवः ।

हेमाद्रिस्तु उर्वारुस्थाने एर्वारुरिति पठित्वा एर्वारुः स्वादुकर्कटी इत्याह । "याज्ञवल्क्यस्मृतावपि एर्वारुशब्दो दृश्यते । यथा—

कट्वेर्वारौ यथाऽपक्वे मधुरः सन् रसोऽपि न ॥

याज्ञ०—३-२४२

तेन उर्वारुः एर्वारुरिति शब्दद्वयं न पाठभेदः ॥

उर्वारुकम्—कर्कटी ।

उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥

शुक्लयजुः—३-६०

उलपः—तृणविशेषः ।

उलपः कुशसदृशः तृणविशेष इति लक्ष्मीधरः ॥

श्राद्ध०—११४

तथैव गदाधरः कालसारे । वीरण इति देवपालः ।

उलपराजींस्तृणात्याशयनीयात् । काठकगृ०—३-४-१

उलूकः—पेचकः ।

श्वगोधोलूककाकांश्च (हत्वा) शूद्रहत्याव्रतं चरेत् ।

मनुः—११-१३१

**उलूखलम्**—व्रीह्यादिकण्डनसाधनम्।

"पलाशकाष्ठनिर्मितं द्वादशाङ्गुलपरिमितोच्छ्रायम् उपरितनार्द्धभागे बिलयुक्तं चरुपुरोडाशसम्बन्धि-व्रीह्यादिकण्डनोपयोगि उलूखलमित्युच्यते इति श्रौतपदार्थनिर्वचने वारुणं जानुमात्रमिति नरसिंह-वाजपेयिनः नित्याचारप्रदीपे—१-१७४

मरुद्भ्य इति तु द्वारि क्षिपेदप्स्वद्भ्य इत्यपि।
वनस्पतिभ्य इत्येवं मुसलोलूखले हरेत्॥

मनुः—३-८८

**उल्का**—(१) ज्वालाकृतिः पतन्ती तारका इति हरिहरः।

पारस्करः—२-११-२

(२) ज्वलत्काष्ठम्—इति हरिहरगदाधरौ।

पारस्करः—२-१४-६

तुलासंस्थे सहस्रांशौ प्रदोषे भूतदर्शयोः।
उल्काहस्ता नरा कुर्युः पितॄणां मार्गदर्शनम्॥

इति स्कान्दे० वैष्ण० बदरिका० मा—६-६५

अलातमुल्मुकं ज्ञेयमुल्का ज्वालास्य निर्गता।

इति हलायुधः का०—१५

**उल्मुकम्**—साग्निकाष्ठम्।

भस्मना वापि संस्पृश्य संस्पृशेदुल्मुकेन वा।
सुवर्णरजताभ्यां च भोज्यं प्रातमजेन वा॥

इति अन्नशुद्धिविषये हेमाद्रौ शातातपः

अलातमुल्मुकं ज्ञेयमिति हलायुधः।

**उल्लापनम्**—बाललालनम् गेह्वा इति भाषायाम्।

सा वै मदालसा पुत्रं बालमुत्तानशायिनम्।
उल्लापनच्छलेनाह रुदमानमविक्लवम्॥

मार्कण्डेय पु०—२५-१०

**उल्लासिका**— भोज्यद्रव्यविशेषः।

कुलमाषोल्लासिकादानादग्न्याधेयफलं लभेत।

इति नित्याचारप्रदीपे। दानं विष्णवे॥

**उल्लुञ्चनम्** - झटिति आकर्षणम् इति मिताक्षरायाम्।

पादकेशांशुककरोल्लुञ्चनेषु पणान् दश।
पीडाकर्षांशुकावेष्टपादाध्यासे शतं दमः॥

याज्ञ०—२-२१७

**उल्लोचः, उल्लोचकः**—चन्द्रातपः 'चान्दुआ' इति प्रसिद्धः।

ध्वजस्तम्भपताका च विचित्रलोचकानि च।

स्कन्द० काशी० पू०—३४-१०७

**उल्लोपिका**— भोज्यद्रव्यविशेषः।

"भक्ष्यभेद" इति श्रीमूला।

"पर्वसु च वितर्दिच्छत्रोल्लोपिकाहस्तपताकाच्छागो-पहारैः चैत्यपूजाः कारयेत॥" कौट०—४-३-४१

उल्लोपिका च भूतेभ्यो जलं सूर्याय वै हर।
दद्याद् गणपतौ दिव्यान् मोदकान् त्रिपुरान्तक॥

इति भविष्ये। जपपूजाप्रकाशे पृ०—६०२

**उल्लोप्यम्**—सङ्गीतशास्त्रप्रसिद्धः गीतविशेषः।

याज्ञ०—३-११३

अपरान्तकशब्दो द्रष्टव्यः।

**उल्वम्**—जरायुवेष्टितं गर्भवेष्टनम्। फुल इति प्रसिद्धम्।

धूमेनाव्रियते वह्निर्यथादर्शो मलेन च।
यथोल्वेनावृतो गर्भस्तथा तेनेदमावृतम्॥

भ० गीता—३-३८

उल्वं जरायुरिति श्रीशङ्कराचार्याः

छान्दो० उप०—५-६

उल्वं जरायुवेष्टितं गर्भवेष्टनमिति हरिहरः।

पारस्कर गृ०—१-१६-२

**उल्वणः**—उद्धतः धर्मामनगतः पश्येद्व्यवहाराननुल्वण इति व्यवहारप्रकाशे प्रजापतिः—२६

**उल्वणवस्त्रम्**—निविड़रक्तं वस्त्रमिति हेमाद्रिः।

ब्राह्मणस्य सितं वस्त्रं नृपते रक्तमुल्वणम्।

इति तत्र भृगुः—६११

न रक्तमुल्वणमन्यधृतं च वासो बिभृयात्।

इति गौतमः—१-९-४

**उल्वलः**—मुहुर्मुहुः संलग्नवाक् इति विज्ञानेश्वरः।

याज्ञ०—३-२१६

**उशीरः**—वीरणमूलं दर्भविशेषश्च।

कुशाः काशाः यवा दूर्वा उशीराश्च सकुन्दुराः।

गोधूमा व्रीहयो मुञ्जा दशदर्भाः सवल्वजाः॥

कुन्दुरो रक्तकन्द इति प्रसिद्ध इति वीरमित्रोदये॥

**उष्ट्रग्रीवम्**—उष्ट्रग्रीवाकृतिफलम्। तच्च उत्तरापथे प्रसिद्धमिति हेमाद्रिः। तत्र "उष्ट्रग्रीवं कचारश्च तिन्दुकं मधुनाह्वयम्" इति कुर्मपुराणवचनम्।

**उष्ट्रिका**—भाण्डविशेषः।

उष्ट्रिका मृद्भाण्डविशेषः, यत्र धान्यादिस्थापनं क्रियते॥

"कुम्भी उष्ट्रिका" इति मेधातिथिः—१४-७

मृद्भाण्डेऽप्युष्ट्रिकामार्याः इति हलायुधः। का०—५

**उष्णीषम्**—(पु०, क्ली०) शिरोवेष्टनवस्त्रम् इति गदाधरः।

पारस्करः—२-६-२०

**उस्रः**—(१) अनड्वान्।

उस्रः अनड्वान् इति कल्पतरुः। श्राद्धकाण्डे—४३

छागोस्रमेषानालभ्य" इति कात्यायन श्राद्धसूत्रे—८-६

(२) देवता।

"इन्द्रादयो बाहव आहुरुस्राः कर्णौ दिशः श्रोत्रममुष्य शब्दः।" श्रीभागते—२-२-२६

## ऊ

**ऊनमासिकम्**—एकादशाहविहितश्राद्धम्।

मासिकार्थे तु संप्राप्ते कदाचिन्मृतसूतके।

वदन्ति शुद्धौ तत्कार्य्यं दर्शे वापि मनीषिणः॥

अत्र मासिकार्थे मासिकाभिधेयकर्मणि इत्यर्थः। "तथाच एकादशाहश्राद्धस्य ऊनमासिकत्वात् त्रैपक्षिकश्राद्धस्य सार्द्धमासिकत्वात्" इत्याद्यशौचप्रकरणे कालसारे॥

**ऊरूः**—वस्ति-जानुनोरन्तरालम्।

"ऊरू वस्तितोऽधस्ताज्जानुपर्यन्तौ" इति स्नानसूत्रव्याख्यायांम्। हरिहरः—१-६

सत्येन माभिरक्ष त्वं वरुणेत्यभिशाप्यकम्।

नाभिदघ्नोदकस्थस्य गृहीत्वोरूजलं विशेत्॥

याज्ञ०—२-१०८

**ऊर्क**—अन्नम्।

ऊर्क अन्नमिति महीधरः "ऊर्क च मे सूनृता च मे।"

शु० यजु०—८-६

"ऊर्जं पुष्टिं पशून् इष्टापूर्त्तमिति गृहाणामश्नाति यः पूर्वो तिथेरश्नाति" आप०—१-३-७-३

ऊर्जः—(१) कार्त्तिको मासः ।
ऊर्जाख्यः कार्त्तिकः प्रोक्तः ॥
इति विष्णुधर्मोत्तरे—३-६-५
इषश्च ऊर्जश्च शारदावृतू । शु० यजु०—१४-१६
ऊर्जे यवान्नमश्नीयादेकान्तमथवा पुनः ।
वृन्ताकं शूरणं चैव शुकशिम्बीं च वर्जयेत् ॥
इति कालसारोद्धृत-काशीखण्डे ॥

(२) वीर्यम् ।
पूजितं ह्यशनं नित्यं बलमूर्जं च यच्छति ।
अपूजितं तु तद् भुक्तमुभयं नाशयेदिदम् ॥
मनुः—२-५५
ऊर्जमन्नमिति गोविन्दस्वामी । वीर्यमिति कुल्लूकः
वीर्यमिति युक्तम् ।
"ऊर्जः कार्त्तिके बले" इति हैमः ।

ऊर्णा—मेषलोमनिर्मितवस्त्रम् ।
ऊर्णासूत्रं प्रदातव्यं कार्पासमथवा नवम् ।
दशां विवर्जयेत् प्राज्ञो यद्यप्यहतवस्त्रजाम् ॥
इति पितृमेधे शङ्खः—१४-१६-१७
कुसुम्भकुङ्कुमानां च ऊर्णाकार्पासयोस्तथा ।
प्रोक्षणात् कथिता शुद्धिरित्याह भगवान् हि सः ॥
इति विष्णुधर्मोत्तरे—२-७६-१२

ऊर्णासुकः—मेषलोमदशा इति हेमाद्रिः ।

ऊर्द्ध्वपात्रम्—उलूखलादियज्ञपात्रम् ।
सौवर्णराजताब्जानामूर्द्ध्वं पात्रग्रहाश्मनाम् ।
शाकरज्जुमूलफलवासां विदलचर्मणाम् ॥—१८२
पात्राणां चमसानां च वारिणा शुद्धिरिष्यते ।
याज्ञ०—१-१८३
ऊर्द्ध्वपात्रं यज्ञियोलूखलादिरिति विज्ञानेश्वरः ।

ऊर्द्ध्वपुण्ड्रम्—मस्तकधृतचन्दनादिचिह्नविशेषः ।
ऊर्द्ध्वपुण्ड्रम् द्विजः कुर्यात् क्षत्रियस्य त्रिपुण्ड्रकम् ।
अर्द्धचन्द्रं च वैश्यस्य वर्त्तुलं शूद्रयोनिजः ॥
इति ब्रह्माण्डपुराणे ॥

पुण्ड्रः इक्षुविशेषः ।
ऊर्द्ध्वपुण्ड्रे त्रिपुण्ड्रं स्यात् त्रिपुण्ड्रे नोर्द्ध्वपुण्ड्रकम् ॥
पादाकृति हरेः पुण्ड्रं धारयेच्छिद्रसंयुतम् ।
स याति वैष्णवं स्थानं यज्ञैरपि सुदुर्लभम् ॥
इत्याद्युक्ताकारास्तु गोदोहनवत् फलविशेषार्था एव ।
दीपशिखाद्याकारास्तु चमसवान्नित्याः ॥
नित्याचारपद्धतिः—१४६

ऊर्द्ध्वरेताः—जितेन्द्रियः ।
वानप्रस्थो जटिलश्चीराजीनवासी ॥१॥ ग्रामं च न प्रविशेत् ॥२॥ न फालकृष्टमधितिष्ठेत् ॥३॥ अकृष्टं मूलफलं सञ्चिन्वीत ॥४॥ ऊर्द्ध्वरेताः ॥
वसिष्ठः—६-५
अष्टाशीतिसहस्राणि ये प्रजां नेषिर ऋषयः ।
उत्तरेणार्यम्णः पन्थानं तेऽमृतत्वं हि कल्पते ॥४॥
इत्यूर्द्ध्वरेतासां प्रशंसा । आप०—२-६-२३-५

ऊर्द्ध्ववृतम्—
करेण दक्षिणेनोर्द्ध्वं गतेन त्रिगुणीकृतम् ।
वलितं मानवैः सूत्रं शास्त्र ऊर्द्ध्ववृतं स्मृतम् ॥
इति पराशरमाधवे संग्रहकारः ॥

"ऊर्द्ध्वगतेन दक्षिणेन करेण यद्वलितं तदूर्द्ध्ववृत-मिति माधवाचार्याः ।

संस्कारप्रकाशे मित्रमिश्रोऽपि—४१७

**ऊवध्यम्**—(१) पुरीषाधानमिति हरिहरः ।

पारस्करः—३-८-११

(२) पुरीषमित्यपरः । उवध्यं संभिनत्ति ।

कौशिकसू०—५०-१-१६

**ऊषः**—क्षारमृद्धिका इति कुल्लूकः काञ्चनमृदिति मेधातिथिः ।

कौशेयाविकयोरूषैः कुतपानामरिष्टकैः ।
श्रीफलैरंशुपट्टानां क्षौमाणां गौरसर्षपैः ॥

इति मनुः—५-१२०

# ऋ

**ऋक्**—(१) छन्दोनिबद्धा ऋक् । (२) ऋग्वेदः ।

ऋच्यन्ते स्तूयन्ते देवा अनया इति ऋक् ।
अस्य वेदस्य एकविंशतिः शाखाः ॥

(३) शिवस्तुतौ मोक्षाय प्रयोज्यो गीतविशेषः ।

आरभ्यानुष्टुभं वृत्तै र्जगत्यन्तैः पदैरपि ।
लौकिकैर्वैदिकैर्वापि गातव्यामृचमूचिरे ।
एकाक्षरः कला अष्टा चत्वारिंशदिहोदिताः ॥
कलानां पूरणं मन्त्रपदैः स्तोमाक्षरैरपि ।
तान्यत्र ब्रह्मगीतानि निर्दिश्यन्तेऽधुना यथा ॥

सङ्गीतरत्नाकरः—५-२२३-२५

(४) ईश्वरः ।

ऋच्यते स्तूयते इति ऋक् ईश्वर इति नीलकण्ठः ।

महाभा० उद्—४३-४२

द्विवेदाश्चैकवेदाश्चाप्यनृचश्च तथा परे ।
तेषां तु कतरः सस्याद् यमहं वेद वै द्विजम् ॥

**ऋक्षम्**—(१) अश्विन्यादिनक्षत्रम् ।

नर्क्षवृक्षनदीनाम्नीं नान्त्यपर्वतनामिकाम् ।
न पक्ष्य हि प्रेष्यनाम्नीं न च भीषणनामिकाम् ॥

मनुः—३-९

(२) धूलियुतं स्थानम् ।

ऋक्षं कृमियुतं क्लिन्नं सङ्कीर्णानिष्टगान्धिकम् ।
देशं त्वनिष्टशब्दं च वर्जयेत् श्राद्धकर्मणि ॥

इति कालसारे यमः

**ऋक्षः**—भल्लुः ।

वृको मृगेभं व्याघ्रोऽश्वं फलमूलं तु मर्कटः ।
स्त्रीमृक्षःस्तोकको वारियानान्युष्ट्रः पशूनजः ॥

मनुः—१२-६७

ऋक्षो भल्लुरिति हेमाद्रिः ।

**ऋक्षेष्टिः**—नक्षत्रेष्टिरिति कुल्लूकः ।

ऋक्षेष्ट्याग्रयणं चैव चातुर्मास्यानि चाहरेत् ।
तुरायणं च क्रमशो दाक्षस्यायनमेव च ॥ मनुः—६-१०

**ऋग्गाथा**—मोक्षाय प्रयुक्तो गीतिकाविशेषः ।

याज्ञ०—३-११४

प्रमाणम् अपरान्तकशब्दे द्रष्टव्यम् ।

**ऋजीषम्**—(१) पिष्टपचनम् । ताउआ इति ख्यातं पात्रम् ।

अमरः—२-९-३२

ऋचीषमित्यस्य पाठान्तारम् ।
ऋचीषम् अनग्निक उष्मा इति आचारेन्दुः—२९४
ऋजीषं पिष्टपचनभाण्डमिति हेमाद्रिः ।

श्राद्धकल्पे—६१२

(२) नरकविशेषः । नरकशब्दे द्रष्टव्यः ।

**ऋजीषपक्वम्**—भूमेरन्तरितं कृत्वा मृद्भिराच्छाद्य यत् पक्वम् इति गृहस्थरत्नाकरः । तन्मते ऋचीषमिति पाठः अनग्निक उष्णा ऋजीषम्, तेन धान्यराश्यादिगतोष्मपक्वम् ऋजीषपक्वमिति स्मृतिचन्द्रिकायामिति हेमाद्रिः । श्राद्ध०—६१३

प्रकाशितस्मृतिचन्द्रिकायां तु "ऋजीषस्थाने" ऋवीषमिति पाठो दृश्यते ।

तत्र "नर्वीषपक्वमश्नीयादित्यापस्तम्बसूत्रं व्याचक्षाणेन धूर्तस्वामिनोक्तं अनग्निक उष्मा ऋवीषं तत्पक्वस्य प्रतिषेधः क्रियते इति ग्रन्थेन" इति

स्मृतिचन्द्रिका-श्राद्ध०—२२८

ऋजीषपक्वं भौमोष्मपक्वमिति कल्पतरुः ॥

नियतकाल—२८२

गर्त्ते धूमपक्वमपि ऋजीषपक्वमुक्तमिति आचारसारे गदाधरराजगुरुः । आचारेन्दौ तु ऋचीषमितिपाठः

—२६४

**ऋजुः**—(१) अवक्रः ।

ऋजवस्ते तु सर्वे स्युरव्रणाः सौम्यदर्शनाः ।
अनुद्वेगकरा नृणां सत्वचोऽनग्निदूषिताः ॥ मनुः—२-४७

(२) ऋजुः अमायावी इति हरदत्तः ॥

आप०—१-२-५-११

स्वाध्यायधृग्धर्मरुचिस्तपस्व्यृजुर्मृदुः सिद्ध्यति ब्रह्मचारी ॥

**ऋणम्**—(१) यत्प्रत्यर्पणार्थं गृह्यते सुवर्णादि ।

पितरि प्रोषिते प्रेते व्यसनाभिप्लुतेऽपि वा ।
पुत्रपौत्रै ऋणं देयं निह्नवे साक्षिभावितम् ॥

याज्ञ०—२-५०

(२) यदवश्यं परिशोध्यम् ।

जायमानो वै ब्राह्मणस्त्रिभिर्ऋणैर्ऋणवान् जायते ।
ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः ॥

इति तैत० सं०—६-३-१०-५

**ऋणक्रयः**—त्रिभोगेनाशया क्रीत उक्तलाभो दशाब्दिकः ।
अवक्रयस्त्रिभोगेन सद्यः सिद्धश्चर्णक्रयः ॥

इति सरस्वतीविलासे भारद्वाजः ॥

**ऋणदासः**—ऋणमोचनेन दासत्वमभ्युपगतः ।

इति मिताक्षरायाम्—२-१८२

ऋणं तु सोदयं दत्त्वा ऋणी दास्यात्प्रमुच्यते ।
कृतकाल व्यपगमात् कृतकोपि विमुच्यते ॥

नारदः—५-३३

**ऋणप्रमोचनम्**—तीर्थविशेषः ।

उत्तरे यमुनातीरे प्रयागस्य च दक्षिणे ।
ऋणप्रमोचनं नाम तीर्थं तु परमं स्मृतम् ॥
एकरात्रोषितः स्नात्वा ऋणात्तत्र प्रमुच्यते ।
स्वर्गलोकमवाप्नोति अनृणश्च सदा भवेत् ॥

कूर्मपु०—१-३८

**ऋणादानम्**—व्यवहारपदविशेषः ।

तेषामाद्यमृणादानमित्यादि । मनुः—८-४
ऋणं देयमदेयं च येन यत्र यथा च यत् ।
दानग्रहणधर्माभ्यामृणादानमिति स्मृतम् ॥ नारदः—४-१

**ऋणिकः**—अधमर्णः ।

"भुक्ते चासारतां प्राप्ते मूलहानिः प्रजायते ।
बहुमूल्यं यत्र नष्टमृणिकं तत्र दापयेत् ॥

इति बृहस्पतिः । विवादरत्नाकरे—२५

ऋतम्—(१) उञ्छशिले। उञ्छशिलवृत्तिरिति यावत्।

ऋतमुञ्छशिलं ज्ञेयममृतं स्यादयाचितम्।
मृतं तु याचितं भैक्षं प्रमृतं कर्षणं स्मृतम्॥

मनुः—४-५

(२) सत्यम्।

साक्ष्येऽनृतं वदन् पाशैर्बध्यते वारुणैर्भृशम्।
विवशःशतमाजातीस्तस्मात्साक्ष्यं वदेदृतम्॥

मनुः—८-८२

"यथावाच्यमृतं च तैरिति" मनुः—८-८१

अभावे मृण्मये दद्यादनुज्ञातस्तु तैर्द्विजैः।
तेषां वचः प्रमाणं स्यादृतं चानृतमेव च॥

अत्रिसंहिता—१५६

ऋतमिति सत् भूताभिधानं भवति। नात्र ऋतमस्तीत्य-नृतम्॥ इति कृत्यकल्पतरौ हारीतः। गार्ह०—३०६

(३) परंब्रह्म।

"ऋतं च सत्यंचेति परंब्रह्मणो नाम" इति शत्रुघ्नमिश्रः मन्त्रार्थदीपिकायाम्।

ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत।

ऋक्०—१०-१९०-१

(४) सत्यं यज्ञो वेति लक्ष्मीधरः॥ नियतकाल—२२१

आयुष्यं प्राङ्मुखो भुंक्ते यशस्यं दक्षिणामुखः।
श्रियं प्रत्यङ्मुखो भुंक्ते ऋतं भुंक्ते ह्युदङ्मुखः॥

मनुः—२-५२

(५) ऋतमणुस्वरूपं सत्यं महद्रूपमिति शङ्करविजये आनन्दगिरिः।

ऋतुः—(१) वसन्तादिः।

ऋतुः ऋगतौ धातोः निष्पन्नः। इयर्त्ति गच्छति अशोकपुष्पोद्गमाद्यवस्थामिति ऋतुः। स च वसन्तः ग्रीष्मः वर्षाः शरत् हेमन्तः वसन्तश्चेति षड्विधः।

षड्तुः सम्वत्सरः षड्वा ऋतवः इति श्रुतिः॥

यत्र तु पञ्चर्त्तवः सम्वत्सर इति तत्र हेमन्त शिशिरयोः समासेन उक्तमित्यवधेयम्।

वसन्ते कपिलः सूर्यो ग्रीष्मे कांचनसन्निभः।
श्वेतो वर्षासु वर्णेन पाण्डुः शरदि भास्करः॥१२॥
हेमन्ते ताम्रवर्णाभः शिशिरे लोहितो रविः।
इति वर्णाः समाख्याताः सूर्य्यस्य ऋतुसम्भवाः॥

ब्रह्मपु०—३१-१३

(२) स्त्रीणां गर्भधारणयोग्यः कालः।

अत्र इयर्त्ति गर्भधारणयोग्यतामिति व्युत्पत्तिः। अयं च प्रतिमासं शोणितनिर्गमप्रभृति षोड़शरात्रात्मकः।

षोड़शर्त्तुनिशाः स्त्रीणां तस्मिन् युग्मासु संविशेत्।
ब्रह्मचार्य्येव पर्वाण्याद्याश्चतस्रस्तु वर्जयेत्॥

याज्ञ०—१-७९

"ऋतुर्नाम शोणितदर्शनोपलक्षितो गर्भधारणयोग्यः स्त्रीणामवस्थाविशेषः।" इति कुल्लूकः—३-४५

ब्राह्मण्यां द्वादशाहं स्याद्वेदोक्तमृतुधारणम्।
दशाष्टौ षट् च शेषाणां विधीयन्तेऽनुपूर्वशः॥

इति देवलः। पराशरमाधवे आचारकाण्डे—५०४

संस्कारप्रकाशोद्धृत स्मृतिमञ्जर्यां च।

देवतानां पुरोधास्तु त्वष्टा नाम द्विजोत्तमः।
भगिनी पूर्वदेवानां तस्य भार्य्या तयोः सुतः॥
विश्वरूप इति ख्यातः शिरोभिर्जायते त्रिभिः।
एकस्मिन् सोमपानं च सुरापानं च मध्यमे॥

वामपार्श्वेऽन्नमयाच्च स्वेच्छया चरते दिवि ।
देवताभ्यो हविर्भागानपिधाय ददात्यसौ ॥
अपिधायासुरेभ्यस्तु मातुलप्रेमया सह ।
उत्पातादि विजायन्ते ह्येतद् व्यत्ययकर्मणा ॥
तस्मात् सुरपतिर्भीतः स्वराज्यच्युतिशङ्कया ।
चिच्छेदतस्य शीर्षाणि वज्रमादाय सत्वरः ॥
यत्सोमपानवदनमभवत् स कपिञ्जलः ।
अभवद् यत् सुरापानं कलविंक सशीर्षकम् ॥
यदन्नादनमास्यं तु क्रमादासीत् सतित्तिरिः ।
ततस्तां ब्रह्महत्यां च वासवोऽञ्जलिनाग्रहीत् ॥
ब्रह्महत्यामसोपेतः प्रच्छन्नोऽब्दं चचार सः ।
स्वर्गे भूतानि चाक्रोशन् देवेन्द्र ब्रह्महन्निति ॥
स धरित्रीमुपासीदत् पृथिवीमब्रवीद् वृषा ।
ब्रह्महत्या तृतीयांशं त्वं गृहाणेति मत्कृतम् ॥
खातात् पराभवो माभूदितीन्द्रं प्रत्युवाच सा ।
सोऽब्रवीद्वत्सराद्खातागर्तः पूर्णो भविष्यति ॥
इन्द्राद्वरं प्रतिगृह्य हर्षवत्यभवद्धरा ।
तस्मात् संवत्सरादर्वाक्खातं च परिपूर्यते ॥
सेन्द्रस्य ब्रह्महत्यायास्तृतीयं भागमग्रहीत् ।
तत्पापमीरिणं भूमावभवत्स्वकृतं यतः ॥
ईरिणं न स्पृशेत्तस्माद् ब्रह्महत्या सवर्णकम् ।
ततस्तरूनुपासीदत् सोऽब्रवीद्यन्मयाकृतम् ॥
भवन्तः प्रतिगृह्णन्तु ब्रह्महत्या तृतीयकम् ।
वासवं तरवोऽप्युचुरस्माकं च्छेदनात्परम् ॥
प्रभवन्त्वङ्कुराश्चेति वरो देयस्त्वयाधुना ।
इन्द्रस्तथाकरोमीति वृक्षाणामददाद्वरम् ॥
तस्माद्वृक्षाश्च भूयांस उत्तिष्ठन्ति लुनात्परम् ।
ब्रह्महत्या तृतीयांशं प्रत्यगृह्णन् महीरुहाः ॥
सोऽभवद्रक्तनिर्यासो ब्रह्महत्यासवर्णकः ।
तस्माल्लोहितनिर्यासं न स्पृशेन्न च खादयेत् ॥
स भूयः स्त्रीसभां गत्वा ह्युपासीताब्रवीदिति ।
ब्रह्महत्यातृतीयांशं प्रतिगृह्णीत मत्कृतम् ॥
ता अब्रुवन् वरं शक्रमृत्वियाच्च प्रजोद्भवम् ।
वृणीमहै कामभोगमाप्रसूतेर्यथेप्सितम् ॥
ब्रह्महत्या तृतीयांशं प्रत्यगृह्णन् स्त्रियोऽपि च ।
तस्मात् स्त्रियः प्रजालाभमृतौ सुरतसंगमात् ॥
आप्रसूतेः प्रियैः सार्द्धं संभोगाः संभवन्ति हि ।
तथा च मलवद्वासा अभवन् योषितस्तथा ॥
नाभिमूले स्थितं पुष्पं चतुर्द्दलसमन्वितम् ।
तस्मिन् सर्वाश्च दधते गर्भसम्भवकारणम् ॥
अधोमुखं स्थितं स्त्रीणां तद्बाल्ये मुकुलीकृतम् ।
बाल्यात्परं वयः प्राप्ते मुकुलं विकसद्भवेत् ॥
उत्फुल्लं कुसुमं स्त्रीणां स्वभावेन स्रवेद्रजः ।
तदाप्रभृति सर्वासां मासि मासि ऋतुर्भवेत् ॥

इति परिभाषाप्रकाशे—१४१-१४३

ऋत्वः—ऋतुकालः ।

ऋत्वः ऋतुकाल इति हरदत्तः ।
ऋत्वे वा जायाम् ॥ इति आप०—२-२-५-१७

ऋत्विक्—यः वृतः सन् अग्न्याधानादिकर्माणि सम्पादयति ।

अग्न्याधेयं पाकयज्ञानग्निष्टोमादिकान् मखान् ।
यः करोति वृतो यस्य स तस्यर्त्विगिहोच्यते ॥

मनुः—२-१४३

स च त्रिविधः। तथाह हारीतः —

"क्षीरहोता, आहार्यवृत्तः, विशेषवृ-तश्च। यो यस्याग्नीनादत्ते स तस्य क्षीरहोता, तस्यालाभे यमन्यं नित्यार्थं वृणीते स आहार्यवृत्तः। अथ यमन्यमुत्तरोत्तरेषु क्रतुषु वृणीते स विशेषवृत्तः।

ते च षोडशविधा भवन्ति। १- होता, २- अध्वर्युः ३- ब्रह्मा, ४- उद्गाता, ५- मैत्रावरुणः ६- प्रतिप्रस्थाता, ७- ब्राह्मणाच्छंशी, ८- प्रस्थाता, ९- अच्छावाकः, १०- नेष्टा, ११- अग्नीध्रः, १२- प्रतिहर्त्ता, १३- ग्रावस्तुत, १४- उन्नेता, १५- पोता, १६-सुब्रह्मण्यः।

एषां स्वरूपं तत्तच्छब्दद्रष्टव्यम्।

**ऋनुकम्**— ऋद्धिकरम्।

"सृष्टदत्तमृध्नुकम्" इति श्राद्धमयूखे आश्वलायनः

**ऋबीसम्**— नरकविशेषः

ऋबीसं- पुटपाक इति वैजयन्त्याम् नन्दपण्डितः

विष्णुः ४३-१७

मनुना तु ऋजीषमिति नरकनाम पठितम्।

"तस्यायं पाठभेदः नामभेदो वा"

ऋजीषशब्दो द्रष्टव्यः।

**ऋश्यः**— मृदुशृङ्गो मृग इति लक्ष्मीधरः।

"तामृश्यो भूत्वा रोहितं भूतामभ्यैत॥"

ऐ० ब्रा०— ३-३३

ऋष्यः मूर्द्धन्यन्तोऽपि ऋष्यशृङ्ग इति प्रयोगोऽपि।

**ऋषभः**— अनड्वान्।

ऋषभपूजा॥१२॥

गोयज्ञेनैवाश्वयज्ञो व्याख्यातः॥

गोभिल गृ०—३-६-१३

**ऋषभाः**— रुद्रस्य त्रय ऋषभा इत्यार्षेय ब्राह्मणतृतीयप्रपाठकीयैकादशखण्डोक्ता ऋषभा इह गृह्यन्ते आज्यदोहादि साहचर्य्यात्। न तु आर्षभाणि इति गोभिलीयश्राद्धकल्पपरिशिष्टभाष्ये चन्द्रकान्तः।

**ऋषभा**— अनुपादेयकन्याविशेषः।

"दत्तां गुप्तां दयोतामृषभां शरभां विनतां विकटां मुण्डां मण्डूषिकां सांकारिकां राढ़ां पालीं मित्रां स्वनुजां वर्षकारीं च वर्जयेत्।

आप० गृ०— १-३-१२

ऋषभा ऋषभशीला इति भाष्ये।

**ऋषिः**— (१) मन्त्रद्रष्टा। ऋषिर्दर्शनात्।

"येन यदृषिणा दृष्टं सिद्धिः प्राप्ता च येन वै।

मन्त्रेण तस्य तत्प्रोक्तमृषेर्भावस्तदार्षकम्॥

इत्याचार सारे।

यन्मन्त्रस्वरूपं तस्य ऋषे स्तन्मन्त्रस्वरूपम्।

स मन्त्रस्तस्य ऋषेः भवतीत्यर्थः। भावः—सम्बन्धः।

तदार्षकं—तस्मिन् मन्त्रे तस्य ऋषेः पूर्वोक्तः सम्बन्धः एवार्षमित्यर्थः।

(२) अष्टविधः ब्राह्मणभेदेषु सप्तमः।

"मात्रश्च ब्राह्मणश्चैव श्रोत्रियश्च तपः परः।

अनुचानस्तथा भ्रूण ऋषिकल्प ऋषिर्मुनिः" ॥ तेषु
उर्द्ध्वरेता तपस्युग्रो नियताशी न संशयम् ।
शापानुग्रहयोः शक्तः सत्यसन्धो भवेदृषिः ॥
इति देवलः

स्कन्दपुराणे तु तपःपरस्थाने ततःपरमिति पाठः सतु युक्तः । "तपस्युग्रो नियताशी न संशयम्" इति स्थाने च "भवत्युग्रो नियताशी न संशयी" इति पाठः ॥
स्कन्द० माहे०—२-५-११८

अत्र द्वयोरपि पाठयोरशुद्धिमाशङ्क्य "तपस्युग्रो नियताशी न संशयीति" पाठं शुद्धं तर्कयामि

**ऋषिकः**—देशविशेषः ।
मन्मते ऋषिआ इति प्रसिद्ध देशः ।
लोहान् परमकाम्बोजानृषिकानुत्तरानपि ।
माहितांस्तान् महाराज व्यजयत् पाकशासनिः ॥२५॥
ऋषिकेष्वपि संग्रामो बभूवातिभयंकरः ।
तारकामयसंकाशः परस्त्वृषिकपार्थयोः ॥२६॥
महाभा० सभा०—२८-२६
ऋषिकः लोहप्रधानस्थानं तत्रत्यः खड्गः प्रशस्तः ।
कटीकदूरजाता ये दर्शनीयास्तु ते स्मृताः ।
कायच्छिन्नास्तु ऋषिका मर्मघ्ना गुरवस्तथा ॥
विष्णुधर्मोत्तर पु०—२-१७-२४

**ऋषिकल्पः**—अष्टविधब्राह्मणभेदेषु षष्ठः ।
वैदिकं लौकिकं चैव सर्वं ज्ञानमावाप्य यः ।
आश्रमस्थो वनी नित्यमृषिकल्प इति स्मृतः ॥
इति देवलः

स्कन्दपुराणे तु वनीस्थाने वशीतिपाठः
स्कन्द० माहे०—२-५-११७

**ऋषिकूपः**— तीर्थविशेषः श्राद्धदेशत्वेन प्रसिद्धः ।
वाराणस्यां कुरुक्षेत्रे भृगुतुङ्गे महालये ।
सप्तवेण्यृषिकूपे च तदप्यक्षयमुच्यते ॥
इति शङ्खः—१४-२८

**ऋषिचान्द्रायणम्**—
त्रींस्त्रीन् पिण्डान् समश्नीयान्नियतात्मा दृढव्रतः ।
हविष्यान्नस्य वै मासमृषिचन्द्रायणं स्मृतम् ॥
इति यमः प्रायश्चित्तविवेके—५१०

**ऋषिपञ्चमी**— भाद्रशुक्लपञ्चमी ।
अत्रापराह्णे विश्वामित्रः सन्तानवृद्धये स्त्रीभिः पूज्यते।
भाद्रे सितेऽपराह्णे तु पञ्चमी यत्र तिष्ठति ।
विश्वामित्र ऋषिः स्त्रीभिः पूज्यः सन्तानवृद्धये ॥
इति कालसारोद्धृतस्मृतिसमुच्चये ।

**ऋषिमुखम्**— ऋग्वेदस्य मण्डलारम्भः ।
"ऋषिमुखानि बह्वृचानाम्" पारस्करः—२-१०-१६

**ऋषियज्ञः**—ब्रह्मयज्ञः ।
ऋषियज्ञं देवयज्ञं भूतयज्ञं च सर्वदा ।
नृयज्ञं पितृयज्ञंच यथाशक्ति न हापयेत् ॥
मनुः—४-२१

**ऋषीकः**— ऋषिसदृशः ।
ऋषेः किञ्चिदूनगुण ऋषीक इति कीर्त्तितः ॥
इति सुमन्तुः । हेमाद्रि—परिशेष०—३६६

ऋष्टिः—आयुधविशेष इति हेमाद्रिः । परिशेष०—४६१
यावतो ग्रसते पिण्डान्हव्यकव्येष्वमन्त्रवित् ।
तावतो ग्रसते प्रेत्यदीप्तान् ऋष्टीनयोगुडान् ॥
मनुः—३-१३३

ऋष्टिर्गुरुतरः काष्ठदण्डः इति नीलकंण्ठः ।
महाभा० उद्०-१५५-३

ऋष्टयो हस्तक्षेप्याः क्षुद्रभल्ला विंध्याटव्यां
कर्काडीति प्रसिद्धा इति अन्यत्र नीलकंठः
महाभा० भीष्म०—४६-११

सम्यक् प्रणीता नागाश्च प्रभिन्नकरटामुखाः ।
ऋष्टितोमरनाराचैर्निर्विद्धा परवारणाः ॥
इति ऋष्टिः खड्ग इति अमरव्याख्यायां रभसः ॥
करवालमण्डलाग्रकालेयकासिरिष्टयः ।
ऋष्टिः खड्गस्तरवारिकौक्षेयकौ च नन्दकः ॥
। इति ।

## (ए)

**एकचरः**— सर्पादिः ।
न भक्षयेदेकचरानज्ञातांश्च मृगद्विजान् ।
भक्ष्येष्वपि समुद्दिष्टान् सर्वान्पञ्चनखांस्तथा ॥
मनुः—५-१७

**एकच्छायाश्रितः**—मिलितभावेन ऋणग्राहिण एकच्छायाश्रिताः ॥

एकच्छायाकृतं सर्वं दद्यात्तु प्रोषिते सुतः ।
मृते पितरि पित्रंशं परणं नु कदाचन ॥
इति विवादरत्नाकरे ।

बहवः स्युर्यदिस्वांशैर्दद्युः प्रतिभुवो धनम् ।
एकच्छायाश्रितेष्वेषु धनिकस्य यथारुचिः ॥
याज्ञ०—२-५५
अहमेव सर्वं दास्यामीति प्रत्येकं प्रतिज्ञा एकच्छाया
इति व्यवहारमयूखे

**एकजातिः**— शूद्रः ।
यतस्तस्य उपनयनरूपं द्वितीयजन्म नास्ति ।
एकजातिर्द्विजातींस्तु वाचा दारुणया क्षिपन् ।
जिह्वायाः प्राप्नुयाच्छेदं जघन्यप्रभवो हि सः ॥
मनुः—८-२७०

**एकतीर्थी**— एकाश्रमी इति विज्ञानेश्वरः ।
गुरुभाइ इतिभाषा ।
वानप्रस्थयतिब्रह्मचारिणां रिक्थभागिनः ।
क्रमेणाचार्य्यसच्छिष्यधर्मभ्रात्रेकतीर्थिनः ॥
याज्ञ०—२-१३७

**एकपत्नी**—(१) सपत्नी ।
अत्र एकः पतिर्यासां ताः एकपत्न्यः इतिविग्रहः
सर्वासामेकपत्नीनामेका चेत्पुत्रिणी भवेत् ।
सर्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनुः ॥
मनुः—९-१८३

(२) पतिव्रता ।
एक एव पतिर्यस्याः सा एकपत्नी इति विग्रहः
आसीतामरणात्क्षान्ता नियता ब्रह्मचारिणी ।
यो धर्म एकपत्नीनां काङ्क्षन्ती तमनुत्तमम् ॥
मनुः—५-१५८

**एकपुष्करः**—एकपुष्करः काहलः वाद्यविशेषः ॥

महाभा:० उद् ९४-२१

ततः प्रयाते दाशार्हे प्रवादान्तैकपुष्कराः ।
शङ्खश्च दध्मरे तत्र वाद्यान्यन्यानि यानि च ॥ इति

**एकभक्तम्**—मध्याह्ने नियमेन एकवारभोजनम् ।

स्वतन्त्रमन्यांगमुपवासप्रतिनिधिश्चेति त्रिधा तत् ।

तस्य कर्मकालः मध्याह्नोपरि सार्द्धमुहूर्त्तः कालः

"दिनार्द्धसमयेऽतीते भुज्यते नियमेन यत् ।
एकभक्तमिति प्रोक्तमतस्तत्स्याद् दिवैव हि ॥"

इति स्कान्दोक्तेः ।

**एकवृषणः**—"एकस्यां स्त्रियामासक्ता इति नित्याचार-पद्धतौ विद्याकरः

एकवृषणान् एकस्यां स्त्रियां प्रसक्तान् इति ॥

नित्याचारप्रदीपे १-४९२

"एकवृषणः एकाण्डः षण्डविशेष" इति गृहस्थकल्पतरौ

गार्हस्थ्य०—११०

रोगप्रवृत्तवृषण इति हेमाद्रौ श्राद्धखण्डे ।

एकस्यामेव स्त्रियां रतिमक्तान् इति परिशिष्टप्रकाशे ।

"देशान्तरस्थक्लीबैकवृषणानसहोदरान्" इत्यादि

परिविन्दन्न दुष्यति इति कात्यायनः—१-७२

जड़मूकान्धबधिरकुब्जवामनकुण्ठकान् ।
अतिवृद्धाभार्य्यांश्च कृषिसक्तान्नृपस्य च ॥७३।
धनवृद्धिप्रसक्तांश्च कामतोऽकारिणस्तथा ।
कुलटोन्मत्तचौराश्च परिविन्दन्न दुष्यति ॥

गोभिलस्मृतिः—१-७४

**एकवेणी**— भङ्गीरचनां विना केशानामेकधाबन्धनमिति ज्ञायते ।

वेणीशब्दस्य प्रवाहार्थकत्वेन प्रवाहस्य स्वच्छन्दस्थितौ लक्षणायोगाच्च केशानामसंस्कृतत्वं प्रतीयते ।

ओघः प्रवाहो वेणी च धारा स्रोतो रयः स्मृतः

इति हलायुधः का०—१

देवि नेह भयं कार्य्यं मयि विश्वसिहि प्रिये ।
प्रणयस्व च तत्वेन मैवं भूः शोकलालसा ॥७।
एकवेणी अधःशय्या ध्यानं मलिनमम्बरम् ।
अस्थानेऽप्युपवासश्च नैतान्यौपयिकानि ते ॥

रामा०सुन्द० २०-८

**एकवेदः**— "एकधैवानुद्रष्टव्यं नेह नानास्ति किंचन" इत्याद्येकमेव वेद्यं यो वेत्ति ॥

महाभा०उद्०—४३-४२

द्विवेदाश्चैकवेदाश्चाप्यनृचश्च तथापरे ।
तेषां तु कतरः स स्याद् यमहं वेद वै द्विजम् ॥इति

**एकशफः**— अश्वादिरेकखुरविशिष्टः

"पणानेकशफे दद्याच्चतुरः पंच मानुषे ।
महिषोष्ट्रगवां द्वौ द्वौ पादं पादमजाविके ॥

याज्ञ०—२-१७४

**एकसरः**— अवान्तरशाखारहितः इति देवपालः ।
पालाशमेकसरं दण्डमित्यादि ॥

काठक गृ०—४-१-२१

**एकसृकः**—एकचरः शृगाल इति नित्याचारप्रदीपे नरसिंहवाजपेयी ।

"सलावृक्यामेकसृक" इति आप०—१-३-११-३३

**एकाक्षरंब्रह्म**— ओङ्कारः।

एकाक्षरं परं ब्रह्म प्राणायामाः परं तपः।

अक्षरं दुष्करं ज्ञेयं ब्रह्म चैव प्रजापतिः॥

मनुः— २-८४

ओमित्येकाक्षरं ब्रह्म॥ भ० गीता—८-१३

**एकाग्निः**—एक एव अग्नि पैतृको यस्य अस्ति न तु वैवाहनः

काठक०-गृ—४-५-१

स्वयं वृतः स एकाग्निः गृहस्थः प्रमीतपितृक

इति देवपालः।

**एकादशरुद्राः**—वीरभद्रश्च शम्भुश्च गिरिशश्च महाहशाः।

अजैकपादहिर्बुध्न्यः पिनाकी चापराजितः॥

भुवनाधीश्वरश्चैव कपाली च विशांपतिः।

स्थाणुर्भवश्च भगवान् रुद्रास्त्वेकादश स्मृताः॥

इति मिताक्षरायाम्—याज्ञ०—२-१००

अजैकपादहिर्बुध्न्यः पिनाकी च परंतपः।

दहनोऽथेश्वरश्चैव कपाली च विशांपते॥

स्थाणुर्भगश्च भगवान् रुद्रास्तत्रावतस्थिरे॥

महाभा० आदि—१२२-३६

**एकाम्रम्**— शिवक्षेत्रविशेषः। भुवनेश्वर इति प्रसिद्धः।

संप्रति सः उत्कलप्रदेशस्य राजधानी। शैवे—

एकाम्रे चैत्रमासे यः पश्येद्रथगतं हरम्।

ब्रह्महत्यादिपापानि क्षयित्वा मोक्षमाप्नुयात॥

इति गदाधरपद्धतौ कालसारे यात्रानिरूपणप्रकरणे।

स आस्ते तत्र वरदः शूलपाणिर्वृषध्वजः।

पिनाकपाणिर्भगवान् दक्षयज्ञविनाशनः॥५॥

महादेवोऽत्र तले देशे कृत्तिवासा वृषध्वजः।

एकाम्रके मुनिश्रेष्ठाः सर्वकामप्रदो हरः॥

ब्रह्म०पु०— ३४-६

**एकायनम्**—नीतिशास्त्रमिति भगवान् शंकराचार्य्यः।

ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं

चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यं

राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां

ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्यां

सर्पदेवजनविद्यामेतद् भगवोऽध्येमि॥

छान्दो०—७-१-२

**एकारामः**— एकाकी सहायनिरपेक्ष इत्यर्थः।

सर्वभूतहितः शान्तस्त्रिदण्डी सकमण्डलुः।

एकारामः परिव्रज्य भिक्षार्थी ग्राममाश्रयेत्॥

याज्ञ०—३-५८

**एकोदकः**—समानोदकः

सब्रह्मचारिण्येकाहमतीते क्षपणं स्मृतम्।

जन्मन्येकोदकानां तु त्रिरात्राच्छुद्धिरिष्यते॥

मनुः—५-७१

**एकोद्दिष्टम्**—एकपुरुषमुद्दिस्य यत्श्राद्धं क्रियते।

याज्ञ०—१-२५१

एकोद्दिष्टं दैवहीनमेकार्घ्यैकपवित्रकम्।

आवाहनाग्नौकरणरहितं ह्यपसव्यवत्॥

उपतिष्ठतामक्षय्यस्थाने, विप्रविसर्जने अभिरम्यतामिति-

वदेद्ब्रूयुस्तेऽभिरताः स्मह॥

याज्ञ०—१-२५२

तस्य कर्मकालो मध्याह्नः सप्तमाष्टमनवममुहूर्त्तात्मकः

तच्चैकोद्दिष्टं त्रिविधम् नवं नवामिश्रं पुराणं चेति ।

नवश्राद्धानामुपरि कर्त्तव्यं मासिकं नवमिश्रं

षडुत्तरमिति आश्वलायनः ॥

मासिकानामुपरिकर्त्तव्यं प्रत्याब्दिकादि पुराणम् इति

माधवाचार्य्यः ।

चांद्रायणं नवश्राद्धे प्राजापत्यं तु मासिके ।

एकाहस्तु पुराणेषु प्रायश्चित्तं विधीयते

हा० स्मृ०—२१-१७

भ्रात्रे भगिन्यै पुत्राय स्वामिने मातुलाय च ॥६८८

मित्राय गुरुवे श्राद्धं पितुर्मातुः स्वसुस्तथा ।

श्वशुराय श्यालकाय चैकोद्दिष्टं न पार्वणम् ॥

पूर्वाङ्गिरसे—६८६

**एणः**—कृष्णमृगः "एणः कृष्णमृगो ज्ञेय" इति

मिताक्षराद्धृतायुर्वेदवाक्यम्—१-२५६

"एणः कृष्णमृगः स्मृत" इति गोभिलस्मृतौ—३-१२२

कात्यायनस्मृतावपि —२७-११

अनूचो माणवो ज्ञेय एणः कृष्णमृगः स्मृतः ।

रुरुर्गौरमृगः प्रोक्तस्तम्बलः शोण उच्यते ॥

इति धर्मशास्त्रसंग्रहपाठः

कम्बलशोण उच्यते इति पाठं साधुमन्ये ।

आपस्तम्बधर्मसूत्रे तु एणकृष्ण मृगयोर्भेदः दृश्यते ॥

**एणी**—बिन्दुमहिता मृगीति संस्कारप्रकाशे—४१२

एणः कृष्णमृग इति मिताक्षरायाम्—१-२-५-६

एणी हरिणीति हरिहरभाष्ये पारस्करः—२-५-१७

**एधः**—काष्ठम् ।

कृमिकीटवचो हत्या मद्यानुगतभोजनम् ।

फलेधः कुसुमस्तेयमधैर्य्यं च मलावहम् ॥

मनुः—११-७०

**एड्कः**—छागः ।

डलयोरैक्यात् एड्कः एलक इति भेदेन दृश्यते ।

**एनः**—पापम् । एवमेनः शमं याति बीजगर्भसमुद्भवम् ।

तुष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः ॥

याज्ञ०—१-१३

**एरका**— तृणविशेषः

चतुर्दशं नारसिंहं बिभ्रद्दैत्येन्द्रमूर्जितम् ।

ददार करजैर्वक्षस्येरकां कटकृद् यथा ॥

भागवते— १-३-१८

**एर्वारुः**—स्वादुकर्कटी इति हेमाद्रिः श्राद्धकल्पे—५५२

वैककं तं वत्सकं च एर्वारुर्वारुकानि च ।

एतानि फलजातीनि श्राद्धे देयानि यत्नतः ॥

इति हेमाद्रौ ब्राह्मे श्राद्ध०—५५२

कट्वेर्वारोर्यथाऽपक्वे मधुरः सन्नपोऽपि न ।

प्राप्यते ह्यात्मनि तथा नापक्वकरणेज्ञता ॥

याज्ञ०—३-१४२

**एलका**—अविः ।

"तैथैलकं पयः" आप०—१-५-१७-२२

एडका इत्यपिव्यवहारोऽस्ति डलयोरैक्यात् ।

# ऐ

ऐक्षवम्—(१) इक्षुभवं गुडादि ।
मासप्रकरणे कालमारोद्धृत भविष्योत्तरे ।
कदलीलवलीधात्रीफलान्यगुडमैक्षवम् ।
अतैलपक्वं मुनयो हविष्याणि प्रचक्षते ॥ इति ।
(२) मद्यविशेषोऽपि
पानसं द्राक्षं माधूकं खार्जुरं तालमैक्षवम् ।
मध्वृत्थं सैरमारिष्टं मैरेयं नालिकेरजम् ॥
समानानि विजानीयात् मद्यान्येकादशानि तु ।
द्वादशं तु सुरामद्यं सर्वेषामधमं स्मृतम् ॥
इति मिताक्षरायां पुलस्त्यः । मिता०—३-२५३

ऐडादधः—इष्टिविशेषः ।
इडादधस्येयमैडादध इति व्युत्पत्तिः ।
बौधा०—१-१३-३०

ऐन्द्रवायवम्—यज्ञपात्रविशेषः ।
तत्पात्रं तु रास्नाचिह्नितम् ॥

ऐरावतीवीथी— "पुष्याश्लेषा तथादित्यावीथी चैरावती स्मृता" । देवीभागवते—८-१५

ऐषीकम्—काशमयमिति परिशिष्टप्रकाशे मित्रमिश्राः

ऐषीकतुलम्—काशतृणतूलम् ।

# ओ

ओम्—एकाक्षरब्रह्म ।
ओमित्येकाक्षरंब्रह्म व्याहरन् मामनुस्मरन् ।
यः प्रयाति त्यजन्देहं स याति परमां गतिम् ॥
भगवद्गीता—८-१३

ओंकारः—ओम् ।
ओंकारपूर्विकास्तिस्रो महाव्याहृतयोऽव्ययाः ।
त्रिपदा चैव सावित्री विज्ञेयं ब्रह्मणोमुखम् ॥
मनुः—२-८१
"ओंकारो वैवाचः पुत्र" इति यजुः प्रातिशाख्ये ।
"ओंकारः स्वर्गद्वारं तस्मात् सर्वेष्वेव कर्मस्वादौ प्रयुञ्जीत" इति परिभाषाप्रकाशे ।
व्यासः—७६
ब्रह्मणः प्रणवं कुर्य्यादादावन्ते च सर्वदा ।
स्रवत्यनोंकृतं पूर्वं पुरस्ताच्च विशीर्यति ॥
मनुः—२-७४

ओघः—जलप्रवाहः ।
ओघवाताहृतं बीजं यस्य क्षेत्रे प्ररोहति ।
क्षेत्रकस्यैव तद्बीजं न वप्ता लभते फलम् ॥
मनुः—९-५४
"ओघो वृन्देऽम्भसांरये" इत्यमरः—३-३-२७
"ओघोवेगे जलस्यच । २ ।
वृंदे परम्परायां च द्रुतनृत्योपदेशयोः ॥"
इति मेदिनी—४-३

ओजः—(१) सामर्थ्यम् ।
सतैः पृष्टस्तथासम्यगमितौजा महात्मभिः ।
प्रत्युवाचार्च्च्य तान् सर्वान् महर्षींच्छ्रूयतामिति ॥
मनुः—१-४
(२) ओजः कथनगुणविशेष इति विज्ञानेश्वरः ।
पुनर्धात्रीं पुनर्गर्भमोजस्तस्य प्रधावति
अष्टमे मास्यतो गर्भो जातः प्राणैर्वियुज्यते ॥
याज्ञ०—३-८२

ओजः स्वरूपं च मिताक्षरायां स्मृत्यन्तरवचनेन दर्शितम् ।

"हृदि तिष्ठति यत् शुद्धमीषदूष्णं सपीतकम् ।
ओजः शरीरे संख्यातं तन्नाशान्नाशमृच्छति ॥"

(३) ओजः आत्मशक्त्यतिशयः इति स्मृतिचन्द्रिका श्राद्धकाण्डे—१३३

स्वर्गं ह्यपत्यमोजश्च शौर्यं क्षेत्रं बलं तथा ।
पुत्रं श्रैष्ठ्यं च सौभाग्यं समृद्धिं मुख्यतां शुभम् ।
इत्यादि याज्ञ०—१-२७५

(४) ओजः- विषमः ।
वप्रस्योपरि प्राकारं विष्कम्भद्विगुणोत्सेधमैष्टकं द्वादशहस्तादूर्द्ध्वम् ओजं युग्मं वा आचतुर्विंशतिहस्तात् इति कारयेत् ॥ कौट०—२-३-७

ओड्रः—क्रियालोपात् शूद्रत्वं गतः क्षत्रियजातिविशेषः
"शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः ।
वृषलत्वं गता लोके ब्राह्मणादर्शनेन च ।
पौण्ड्रकाश्चौड्रद्राविडाः काम्बोजा यवनाः शकाः
पारदाः पह्लवाश्चीनाः किराता दरदाः खशाः ॥"
मनुः—१०-४३-४४

ओड्रपुष्पम्—जवापुष्पमिति नरसिंहवाजपेयी-१-५४२

ओदनः—(१) भक्तम् भात इति प्रसिद्धम् ।
अन्येषां चैवमादीनामशानामोदनस्य च ।
पक्वान्नानां च सर्वेषां तन्मूल्यादद्विगुणोदमः ॥
मनुः—८-३२७

सिद्धान्तमितियावत् ओदनमस्त्रीत्यमरः —२-६-४८

(२) दन्तस्वाद्यमन्नं च ।
"दन्तस्वाद्यं भवेद्यस्तु तदोदनमितिस्मृतम्"
इति कालदीपोद्धृतभविष्यवचनम् ।

(३) ओदनः कूर इति असहायभाष्यम्—४६

ओविली—अग्निमन्थनयन्त्रस्य अवयवविशेषः ।
अष्टाङ्गुलः प्रमन्थः स्यात्पात्रं स्याद्द्वादशाङ्गुलम् ।
ओविली द्वादशैव स्यादेतत्मन्थनयन्त्रकम् ॥

ओवेणकम्—गीतविशेषः ।
औवेणकमित्यस्य पाठेऽपि याज्ञ०—३-११३
आरान्तकशब्दो द्रष्टव्यः ॥

ओषधिः—फलपाकान्तवृक्षः धान्यादिः मूलादयश्च ।
"ओषधयः समवदन्त सोमेन सह राज्ञा ।
यस्मै कृणोति ब्राह्मणस्तꣳ राजन् पारयामसि ॥
शु०यजुः—१२-९६

ओषधी—ओषध्यः फलपाकान्ताः शणसप्तदशाः स्मृताः
व्रीहयश्च यवाश्चैव गोधूमा कङ्गुसर्षपाः ।
प्रियङ्गवः कोविदाराः कोरदुषाः सचीतकाः ॥
माषा मुद्गा मसुराश्च निष्पवाः सकुलत्थकाः ।
आढक्यश्चणकाश्चैव ग्राम्यारण्याश्च षोडश इति ॥
व्रीहयश्च यवाश्चैवा गोधूमाः कङ्गुसर्षपाः ।
माषा मुद्गा सप्तमाश्च अष्टमाश्च कुलत्थकाः ॥
श्यामाकाश्चैव नीवारा जर्त्तिलाः सगवेधुकाः
कोविदारसमायुक्ता तथा वेणुयवाश्च ये ॥

ग्राम्यारण्याः स्मृता ह्येते ओषध्यश्च चतुर्दश ॥
इति परिभाषाप्रकाशोद्धृतमार्कण्डेयपुराणे ॥
परिभाषा—११६

मनसुखरायप्रकाशिते तु तस्मिन् पुराणे—
व्रीहयश्च यवाश्चैव गोधुमाअणवस्तिलाः ॥७१॥
प्रियङ्गुषष्ठा ह्येते(स्यु) सप्तमास्तु कुलत्थकाः ।
श्यामाकास्त्वथ नीवारा जर्त्तिलाः सगवेधुकाः ॥७०॥
कुरुविन्दा मर्कटकास्तथा वेणुयवाश्च ये ।
ग्रामारण्या स्मृता ह्येताओषध्यश्च चतुर्दश ॥
मार्कण्डेय पु०—४६

विष्णुपुराणे तु—१-६-२१-२६
व्रीहयश्च यवाश्चैव गोधुमाश्चाणवस्तिलाः ।
प्रियङ्गवो ह्युदाराश्च कोरदुषाः सतीनकाः ॥२१॥
माषा मुद्गा मसूराश्च निष्पावाः सकुलत्थका ः
आढक्यश्चणकाश्चैव शणाः सप्तदश स्मृताः ॥२२॥
इत्येता ओषधीनां तु ग्राम्यानां जातयो मुने ।
ओषध्यो यज्ञियाश्चैव ग्राम्यारण्याश्चतुर्दश ॥२३॥
व्रीहयमयवा माषा गोधूमाश्चाणवस्तिलाः ।
प्रियङ्गुसप्तमा ह्येते अष्टमास्तु कुलत्थकाः ॥२४॥
श्यामाकास्त्वथ नीवारा जर्त्तिलाः सगवेधूकाः ।
तथा वेणुयवाः प्रोक्तास्तथामर्कटका मुने ॥२५॥
ग्राम्यारण्याः स्मृता ह्येते ओषध्यस्तु चतुर्दश ।
यज्ञनिष्पत्तये यज्ञस्तथासां हेतुरुत्तमः ॥२७॥

# औ

**औड्रः**— ओड्रशब्दो द्रष्टव्यः ।

**औदुम्बरम्**— ताम्रम् ।

**औदुम्बरपात्रम्**— ताम्रपात्रम् ।
गृहीत्वौदुम्बरं पात्रं वारिपूर्णमुदङ्मुखः ।
उपवासं तु गृह्णीयाद् यद्वा वाप्येव धारयेत् ॥
इति कालदीपे ।
यद्वासं कल्पयेद् बुध इति समयप्रदीपोद्धृत
महाभारते ।

**औदुम्बरायणः**—कृतविवाहः अकृतस्त्रीसंगम ।
परिणीय तु षड्मासान् वत्सरं वा न संविशेत् ।
औदुम्बरायणो नाम ब्रह्मचारी गृहे गृहे ॥
लघुविष्णुः—१-२७

**औद्वाहिकम्**—उद्वाहकाले लब्धं धनम् ।
विद्याधनं तु यद्यस्य तत्तस्यैव धनं भवेत् ।
मैत्र्यमौद्वाहिकं चैव माधुपर्किकमेव च ॥
मनुः—९-२०६

**औपधिकः**—राष्ट्रकण्टकविशेषः ।
उत्कोचकाश्चौपधिका वञ्चकाः कितवास्तथा ।
मङ्गलादेशवृत्ताश्च भद्राश्चेक्षणिकैः सह ॥
मनुः—९-२५८

**औपपत्तिः**—हैतुकः ।
"औपपत्तिः हैतुक" इति लक्ष्मीधरः ।
"औपपत्तिस्तथा शाक्यो नास्तिको वेदनिन्दकः ॥"
इति वायुपुराणे ।

**औपपत्तिकः**—हैतुकः ।
औपपत्तिकः उपपत्तिमात्रव्यवहारी हैतुक इत्यर्थः
इतिकल्पतरौ लक्ष्मीधरः श्राद्ध०—९३

उपपत्तिस्तर्कस्तन्मात्रव्यवहारी हैतुक इति यावत्
इति श्राद्धप्रकाशे—६८

शुष्कतर्कैः उपपत्तिवादी इति हेमाद्रिः।

**औपयिकम्**—युक्तम्, न्याय्यम्।

युक्तमौपयिकं लभ्यं भजमानाभिनीतवत्॥
न्याय्यं च त्रिषु षट् वे इति अमरः

एकवेणी अधःशय्या ध्यानं मलिनमम्बरम्।
अस्थानेऽप्युपवासश्च नैतान्यौपयिकानि ते॥
रामायणे॰ सु॰का॰—२०-८

अहमौपयिकी भार्या तस्यैव च धरापतेः।
व्रतस्नातस्य विद्येव विप्रस्य विदितात्मनः॥
रामा॰ सु॰ का॰—२१-१७

**औपवसथिकम्**—यागपूर्वदिवसविहितम्।

**औपवसथ्याहः**—यागपूर्वदिनम्।

यस्मिन्नहनि देवता यजमानस्य समीपे निवसति।
तदहरुपवसथीयमिति सायणः॥
तै॰ ब्रा॰—१-५-६-७

उपास्मिमन् श्वो यक्ष्यमाणे देवता वसन्ति इत्याम्नायते। एतेनथ्यागाद्धोपवासादिकर्मपूर्वदिनमपि लक्षणया औपवसथ्याहरिति।

**औपवस्तम्**— (१) हविष्यभोजनम्।

औपवस्तममाषममांसं बहुसर्पिष्कमिति कल्पतरुः
"औपवस्तं तूपवास" इति निघण्टुः।
तदपि दिवा न रात्राविति हरदत्तः॥
आप॰—२-१-१-५

(२) उपवास इति हेमचन्द्रः इति शब्दकल्पद्रुमे॥

**औपवस्त्रम्**—उपवासकर्त्तुरशनम्।

"उपवस्तुरशनमौपवस्त्रम्।
तत्पुनरल्पम् हविष्यान्नं शाकमाषलवणमांसवर्जम्॥"
इति देवपालः

"औपवस्त्रं भुक्त्वा" इति काठक—गृ॰—४-६-२

**औपसदः**—गृह्याग्निः।

औपसदः गृह्याग्निरिति श्राद्धमयूखे।
उपसीदन्ति अस्मिन्निति उपसत् आवसथः।
तत्र भवः औपसदः सम्व्यवहारार्थमौपसदसंज्ञा।
इति देवपालः।

"एष औपसदोऽग्निर्वैवाहनो वा"
काठक—गृ॰—४-७-१

**औपासनः**— आवसथ्याग्निः।

"उपयमनप्रभृत्यौपासनस्य परिचरणम्"
पारस्कर—गृ॰—१-२-१

**औरभ्रम्**—आविकम्।

द्वौ मासौ मत्स्यमांसेन त्रीन्मासान् हारिणेन तु।
औरभ्रेणाथ चतुरः शाकुनेनाथ पञ्च वै॥
मनुः—८३-२६

**औरभ्रः**—कम्बलमृग इति वैद्यकशब्दसिन्धौ॥

**औरभ्रिकः**—मेषजीवनः।

उरभ्रा मेषाः पण्यं यस्य स औरभ्रिकः।
औरभ्रिको माहिषिकः परपूर्वापतिस्तथा।
प्रेतनिर्यातकश्चैव वर्जनीयाः प्रयत्नतः॥
मनुः—३-१६६

औरसः—संस्कृतायां भार्यायां स्वेनोत्पादितः पुत्रः ।
स्वक्षेत्रे संस्कृतायां तु स्वयमुत्पादयेद्धि यम् ।
तमौरसं विजानीयात् पुत्रं प्रथमकल्पितम् ॥
मनुः—९-१६६

"औरसो धर्मपत्नीज" इति याज्ञ०—२-१३१

लिङ्गस्य अनुपादेयत्वेन धर्मपत्न्यां स्वेनोत्पादिता दुहिता अपि औरसमध्ये अन्तर्भवति । अतः मनुना पुत्रिका द्वादशपुत्रेभ्यः पृथक्तया नोक्ता ।

उक्तं च—
यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा ।
तस्यामात्मनि तिष्ठन्त्यां कथमन्यो धनं हरेत् ॥
मनुः—९-१३०

**और्ध्वदेहिकम्**—मरणोत्तरभाविकृत्यम् ।
"दासीर्दासांश्च यानानि वेश्मानि सुमहान्ति च ।
ब्राह्मणेभ्यो ददौ पुत्रो राज्ञस्तस्यौर्ध्वदेहिकम् ।
इति रामायणे—२-७७-३

**औवेणकम्**—गीतविशेषः ।
अपरान्तकमुल्लोप्यं मद्रकं प्रकरीं तथा ।
औवेणकं सरोविन्दुमुत्तरं गीतकानि च ।
इत्यादि याज्ञ०—३-११३

संगीतशास्त्रे रोविन्दुस्थाने रोविन्द इति पाठः ॥

**औषधम्**—भेषजम् ।
नौषधानि न मन्त्राश्च न होमा न पुनर्जपाः ।
त्रायन्ते मृत्युनोपेतं जरयावापि मानवम् ॥
विष्णुधर्म पु०—२-७८-२५

अष्टैतान्यव्रतघ्नानि आपो मूलं फलंपयः ।
हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम् ॥
इति कालसारे ।

ये च न्यायविदः शान्ता धर्मशास्त्रार्थवेदिनः ।
स्वकर्मनिरता दान्तास्तेषां वचनमौषधम् ॥
इति हेमाद्रौ देवीपुराणवचनम् ।

वेदवेदार्थतत्त्वज्ञा धर्मशास्त्रार्थचिन्तकाः ।
सदाचारपरा ये वै तेषां वचनमौषधम् ॥
इति तत्रैव व्यासः ।

धर्मेषु निरता ये च धर्मशास्त्रार्थचिन्तकाः ।
वेदशास्त्रविदो ये च तेषां वचनमौषधम् ॥
इति तत्र पुलस्त्यसत्यव्रतौ ।

**औसजम्**—श्राद्धदेशविशेषः ।
" औसजं शूर्पारकं दक्षिणदेशस्थं तीर्थमिति वैजयन्त्यां नन्दपण्डितः ॥" विष्णुः—८५-५६

# क

**कम्**— (१) स्वर्गः ।
इत्येषा नन्दजननी नन्दा ख्याता मया द्विजा ।
यामुपोष्य नरः श्रुत्वा नन्दते कमवाप्य वै ॥
कृत्यरत्नाकरे—४५८

(१) शिरः ।
कपुष्णिका शब्दोऽस्य उदाहरणम् ॥
कं शिरः पुष्णाति शीतातपादितो रक्षणेनेतिणेकं
पुष्णिका शिरसः पार्श्वद्वयस्था केशघुटिका ॥
इति चन्द्रकान्तभाष्ये

दक्षिणेन पाणिनाऽप आदाय दक्षिणां कपुष्णिका-
मुन्दत्याप उन्दन्तु जीवस इति ॥

गोभिल-गृ०—२-६-१२

(३) जलम् ।

सत्येन माभिरक्ष त्वं वरुणेत्यभिशाप्यकम् ।
नाभिदघ्नोदकस्थस्य गृहीत्वाऽऽ जलं विशेत् ॥

याज्ञ०—२-१०८

**कंसम्**— (१) ताम्रत्रपुण्योरुपधातुः ।

(२) आढ़क परिमाणमिति वैद्यकशब्दसिन्धौ ।

(३) कांस्यपात्रम् । कंसं कांस्यपात्रमिति
वीरमित्रोदयपरिभाषाप्रकाशे ॥ ११२

तत्र छान्दोग्यपरिशिष्टे—
पाण्याहुतिर्द्वादशपर्वपूरिका
कंसादिना चेत् स्रुवपूरमात्रिका ॥

गोभिलस्मृतिः—१-१२२

उत्कलेषु प्रक्षालितान्नभोजनपात्रविशेषः कांस्यमयः
कंसाशब्देन प्रसिद्ध लक्ष्यते ।

कंसोऽस्त्री पानभाजनमित्यमरः । प्रयोगस्तु—
उष्णोदककंस इति

गोभिल- गृ०—२-६-४

**कंसकारः**— जातिविशेषः ।

कंसारि इति प्रसिद्धः यः कंसमयं पात्रादिकं करोति ।
वैश्यायां ब्राह्मणाज्जातः अम्बष्ठो गान्धिको वणिक् ।
कंसकारशङ्खकारौ ब्राह्मणात् संबभूवतुः ॥

इति वृ० धर्मपुराणे ।

" विश्वकर्मा च शूद्रायां वीर्याधानं चकार सः ।
ततो बभूवुः पुत्राश्च षडेते शिल्पकारिणः ।
मालाकारः कर्मकारः शङ्खकारः कुविन्दकः ।
कुम्भकारः कंसकारः षड़ेते शिल्पिनो नराः ॥
इति शब्दकल्पद्रुमोद्धृतब्रह्मवैवर्त्ते ।

**कंसारम्**— महाराष्ट्रभाषायां सांजा इति गोधूमपिष्टगुड़-
निर्मितं वस्तु ।

उड्रभाषायां तत् खलि इत्युच्यते ।

**कः**— प्रजापतिः ।

" कायमङ्गुलिमूले" मनुः—२-५९

"कस्मै देवाय हविषा विधेम"

शु० यजुः—२५-१०

को ब्रह्मणि समीरात्मयमदक्षेषु भास्करे ।
मयूरेऽग्नौ च पुंसि स्यात् सुखशीर्षजलेषु कम् ॥

इति विश्वः ।

**ककुत्**—वृषचिह्नविशेषः ।

यः वृषस्य गलपृष्ठयोर्मध्ये उपरि समुन्नतो मांसपिण्डो
दृश्यते ॥ प्रयोगः कम्बलशब्दे द्रष्टव्यः ।

**ककुन्दरे**— जघनकूपकद्वयम् । पृष्ठवंशाधोगर्तौ इति
यावत् ।

" ककुन्दरे जघनकूपकौ" इति मिताक्षरा—३-९६
अमरकोषे तु कुकुन्दरे इति पाठः—२-६-७५

ककुभः—अर्जुनवृक्षः । तस्य काष्ठं दन्तघर्षणे प्रशस्तमित्याह विष्णुः । करञ्जशब्दो द्रष्टव्यः ।

कक्कोलः—वृक्षविशेषः । यत्काष्ठं दन्तकाष्ठाय प्रशस्तमिति शेलुशब्दे द्रष्टव्यम् ।

कक्षः— (१) तृणम् ।

यथोद्धरति निर्दाता कक्षं धान्यं च रक्षति ।
तथा रक्षेन्नृपो राष्ट्रं हन्याच्च परिपन्थिनः ॥

मनुः—७-११०

(२) क्षुद्रमरण्यम् ।

कक्षावनदहनात् खद्योतः ॥ इति मिताक्षरायां

गौतमः—३-२१६

(३) शुष्कतृणम्- इति श्राद्धमयूखे नीलकण्ठः।
निर्णयसिन्धुव्याख्याने च आर्द्रं तृणं तु यवसमिति "अलिआ" इति ख्यातः अवकरविशेष इति मन्मतम् अयं हि अर्थः, पूर्वात् सर्वत्र समन्वेति ।

(४) शिक्यतलम् ।

कक्षच्छेदे तुलाभङ्गे घटकर्कटयोस्तथा ॥
रज्जुच्छेदेऽक्षभङ्गे वा तथैवाशुद्धिमादिशेत् ॥

प्रकाशितनारदस्मृतौ तु कक्षच्छेदे इति पाठः ।

नारदः—४-२८४

(५) बाहुमूलम् ।

बाहुमूले उभे कक्षौ—इत्यमरः— २-६-७८
सर्वत्र वपनं कुर्यान्त कक्षोपस्थशिखा विना ॥

(६) पार्श्वम् ।

तस्य वानरसिंहस्य क्रममाणस्य सागरम् ।
कक्षान्तरगतो वायुर्जीमूत इव गर्जति ॥

रामायणे—५-५-२५

कक्षा—(१) परिधानवस्त्रग्रन्थिः ।

सा च परिधानवस्त्रादुपरिवेष्टनादिना बहिः न कार्य्येति केचित् ।

(२) पश्चात् अञ्चलम् ।

(३) वस्त्रोभयप्रान्त इत्यन्ये ।

शिष्टवाक्यात्ति्रतयं कक्षापदवाच्यमिति परिभाषाप्रकाशे मित्रमिश्राः—८२

परिधानाद् बहिः कक्षाः निबद्धा ह्यासुरी भवेत् ।
वामे पृष्ठे तथा नाभौ कक्षात्रयमुदाहृतम् ॥
एभिः कच्छैः परीधत्ते यो विप्रः स शुचिः स्मृतः

इति योगियाज्ञवल्क्यः तत्रैव—८२

(४) बाहुमूलम् काख इति प्रसिद्धम् ।

कक्षं बाहुमूले इति लक्षणप्रकाशे ।

कक्षागुह्यशिरःश्मश्रुभ्रूलोमपरिकृन्तनम् ।
प्राहृत्य पाणिपादानां नखलोम ततः शुचिः ॥

देवलः—५६

(५) प्रकोष्ठः ।

गत्वा कक्षान्तरं त्वन्यत् समनुज्ञाप्य तं जनम् ।
प्रविशेद् भोजनार्थं च स्त्रीवृतोऽन्तः पुरं पुनः ॥

मनुः—७-२२४

**कक्ष्या**—शाला

तस्य कक्ष्या व्यतिक्रम्य तिस्रो द्वास्थैरवारितः ॥

महाभा० उद्—६१-३

ततोभ्रघनसंकाशं गिरिकूटमिवोच्छ्रितम् ॥

**कङ्कः**— लोहितपत्रपक्षिविशेष इति लक्ष्मीधरः ।

**कङ्कटः**—(१) वृक्षावरणः ।

खदिरबुर्बुरौ गौरकाण्डो सूक्ष्मपर्णो कङ्कटवान् खदिर

इति पाञ्जलमहाभाष्ये—१-१-७

(२) वर्म ।

उभौ तौ बद्धनिस्त्रिंशावुभौ चावद्धकङ्कटौ ।

कृतवैरावुभौ वीरौ यमावपि यमोपमौ ॥

महाभ० शल्य०—५-२५

**कङ्कणम्**— सिन्दूरम् ।

तस्मात्सा तत्र संपूज्या सर्वसौभाग्यवर्द्धिनी ।

अर्घ्यैः पुष्पैश्च दीपैश्च धूपैर्माल्यैश्च कङ्कणैः ॥

इति ब्रह्म०पु० कृत्यरत्नाकरे—३४८

**कङ्कतः**— केशविन्यासस्राधनम् सम्प्रति पानिआ इति प्रसिद्धम् ।

वैङ्ककतः प्रादेशमात्रः एकतोदतः कंकतः इति हरिहरः

पारस्करः—२-१४-११

इन्द्राणी चक्रे कङ्कतं सीमन्तं विसर्पतु इति शालल्या शमीशाखया सपलाशया एकीकृत्य कङ्कतेन ॥

इति वाराह गृ०—१६-६

कङ्कतस्य प्रदानेन विरोगस्त्वभिजायते ।

रूपवांश्च सुवेशश्च सुभगः सर्वभागपि ॥

विष्णुधर्मोत्तरे—३-३४१-१८१

**कङ्कतिका**—केशसंस्कारसाधनम् ।

प्रभासखण्डे—

केशप्रसाधनीं रम्यां दद्यात् कङ्कतिकां तु यः ॥

इति हेमाद्रिपरिशेषखण्डे—७११

**कङ्कमुखम्**—संदशः ।

शल्यं प्रगृह्योद्धरते च यस्मात् ।

यन्त्रेष्वतः कंकमुखं प्रधानम् ॥

**कङ्करः**—अश्मखण्डः ।

अनुषरामसिकतामनार्द्रां स्नेहवर्जिताम् ।

सकङ्करां सवल्मीकां दुर्दान्त जलगामिनीम् ॥

अनातपामनुतकीर्णां तथा वै कृष्णवर्णिकाम् ।

परशौचावशिष्टां च त्यजेयुर्दशमृत्तिकाः ॥

लाघुहारीतस्मृतिः—७३

**कङ्गुः**—हविष्यद्रव्यविशेषः ।

कलायकङ्गुनीवारा इत्यादि कालसारे ।

काङ्ग इति प्रियङ्गुर्वा इत्याचारेन्दौ ॥

तृणधान्य इति वैद्यकशब्दसिन्धौ ।

स्त्रियां कङ्गुप्रियङ्गु द्वे ॥ अमरः—२-९-२०

**कचः**— केशः ।

एकीकृत्यकचान् सर्वांच्छेदयेदङ्गुलद्वयम् ॥

अङ्गिरःस्मृतिः—१६१

**कचुः**— मूलशाकविशेष इति शब्दकल्पद्रुमे ।

कदली दाड़िमी धान्यं हरिद्रा माणकं कचुः ।
बिल्वोऽशोको जयन्ती च विज्ञेया नवपत्रिका ।
इति दुर्गोत्सवतत्त्वे ॥

स च उत्कलेषु सारु इति प्रसिद्धः मूलविशेषः

**कचोरः**— पिण्डालु सदृशः चोरितपर्णः सोधि इति लाटदेशे प्रसिद्धः कन्दविशेषः ।

**कचोलः**— भोजनपात्रविशेषः कटरा इति ख्यातः ।

रम्यं तु देवकीदत्तं पात्रं वै काञ्चने शुभे ।
कचोलानां चतुःषष्ठिन्यस्ते सुघटिते हरिः ॥
जैमि० अश्व०—६-३४

काञ्चने तु कचोले वै स्थितं काञ्चनसन्निभम् ।
घृतं सुवासितं प्रीत्या दत्तं देव्या यशोदया ॥
जैमि०—६-४२

**कचूरः**— कचुनाम कन्दशाक इति वैद्यकशब्दसिन्धौ ।

**कचोरकः**— गन्धशटी इती वैद्यकशब्दसिन्धौ ।

**कच्छः**— (१) परिधानवस्त्रग्रन्थिः ।

वामे पृष्ठे तथा नाभौ कक्षात्रयमुदाहृतम् ।
एभिः कच्छै परिधत्ते यो विप्रः स शुचिः स्मृतः ॥
इति परिभाषाप्रकाशे—८२

कच्छो द्रुभेदे नौकाङ्गेऽनूपप्राये तटेऽपि च ।
कच्छस्तु देशे कच्छा स्यात् परिधानापराञ्चले ॥
चीर्य्यां वाराह्यामिति हैमः

(२) जलप्रायदेशः

"जलप्रायमनूपं स्यात् पुंसि कच्छस्तथाविधः ॥
इत्यमरः—२-१-१०

**कज्जलीतृतीया**— भाद्रकृष्णतृतीया ।
इति निर्णयसिन्धौ —६५

**कञ्चुकम्**— अङ्गावरकवस्त्रविशेषः ।

"स कञ्चुकरतिं कृत्वा सचेलं स्नानमाचरेत् ।"
इति रतिप्रकाशे इति आचारेन्दौ—३६५

**कञ्चुकः**— कञ्चनार इति निर्णयसिन्धौ—२८६

मासं प्रीयन्त इत्यनुवृत्तौ पृथ्वीचन्द्रोदये मार्कण्डेयः—
विदार्या च भरुण्डैश्च तिलैः शृङ्गाटकैस्तथा ।
"कञ्चुकैश्च तथा कन्दः कर्कन्धुबदरैरपि" ॥ इत्यादि ।

**कटः**— (१) तृणनिर्मितास्तरणविशेषः ।

पश्चादग्नेस्तेजनीं कटं वा दक्षिणपादेन प्रवृत्योपविशति ॥ पारस्करः—१-५-२

(२) प्रेतवहनसाधनं कटशब्देनोच्यते इति विज्ञानेश्वरः ।

तत्र "ब्रह्मदण्डहतानां च न कुर्यात्कटधारणम् ॥"
इति यमः अत्रिस्मृतौ च—२१५

(६) तृणविशेषः ।

उभावपि तु तावेव ब्राह्मण्या गुप्तया सह ।
विप्लुतौ शूद्रवद्दण्ड्यौ दग्धव्यौ वा कटाग्निना ॥
मनुः —८-३७७

(४) शूद्रधान्यविशेषः।
कङ्गुश्चतुर्विधः प्रोक्तः श्यामाकश्चीनकः कटः॥
इति धान्यशब्दे द्रष्टव्यम्।

कटः श्रोणौ क्रियाकारे कलिंजेऽतिशये शवे।
समये गजगण्डेऽपि पिप्पल्यां च कटी मता॥
इति विश्वः।

**कटकारः**— जातिविशेषः।
शूद्रयां वैश्यतश्चौर्यात् कटकारः इतिस्मृतः ॥४४॥
कटकारास्ततः पश्चान्नारायणगणाः स्मृताः।
शाखावैखानसेनोक्ता तन्त्रमार्गविधिक्रियाः॥
निषेकाद्याः श्मशानान्ताः क्रियाः पूजाङ्गसूत्रधृक्।
पञ्चरात्रेण वा कश्चित् तन्त्रोक्तं धर्ममाचरेत् ॥४८॥
औशनसस्मृतिः।

**कटधूमः**— शवदाहधूमः।
मैथुने कटधूमे च सद्यःस्नानं विधीयते॥
इति वृहस्पतिः मिताक्षरायाम्—१-३०

शवस्पृशं तथा स्पृष्ट्वा कटधूमे समैथुने।
स्नानमेतेषु कर्त्तव्यमश्रुपाते च दुःस्वजे॥
विष्णुधर्मोत्तर पु०—२३२-१३

**कटभूमिः**—श्मशानम्।
क्षुरकर्मणि वान्ते च स्त्रीसम्भोगे च भो द्विजाः।
स्नायीत चैलवान् प्राज्ञः कटभूमिमुपेत्य च॥
ब्रह्म० पु०—२२१-७६

**कटारकः**— कटारि इति ख्यातः शस्त्रविशेषः।

**कटाहः**— कटाहः कूर्मकर्पर इति वैद्यकशब्दसिन्धौ।
कराई इति प्रसिद्धः पात्रविशेषः।
नष्टो विकृतिं गतः ताम्रकटाहादिश्छिद्रभेदनादिना
पूर्ववत् कृत्वा देयः॥
इति मिताक्षरायां विज्ञानेश्वरः—२-६६

**कटिः**— कटिः नाभेः पृष्ठवंशस्य च समन्तात्
इति कात्यायनस्नानसूत्रव्याखाने
"कटिं वस्त्यूरू जङ्घे चरणौ करौ मृदात्रिभिः प्रक्षाल्य"
हरिहरः—६

**कटिदानम्**— (१) अङ्गपरिवर्त्तनम्।
प्राप्ते भाद्रपदे मासि एकादश्यां दिने सिते।
कटिदानं भवेद्विष्णोर्महापातकनाशनम्॥
इति निर्णयसिन्धुव्याख्याने।

प्राप्ते भाद्रपदे मासि एकादश्यां सितेऽहनि।
कटदानं भवेद्विष्णोर्महापूजाप्रवर्त्तते॥

(२) पार्श्वपरिवर्त्तनमिति कृत्यतत्त्वार्णमि
श्रीनाथाचार्य्यः—१६२

**कट्फलम्**— काफड् इति प्रसिद्धं फलम्।
कट्फलं किङ्किणी द्राक्षा लकुचं मोचमेव च।
इत्यादिश्राद्धदेये वायुपुराणवचनम्।
कल्पतरु श्राद्धकाण्डम्-४७

**कठिनम्**—पात्रविशेषः।
अथ भार्य्यासहायः स फलान्यादाय वीर्यवान्।
कठिनं पुरयामास ततः काष्ठान्यपाटयत्॥
इति सावित्र्युपाख्याने महाभा० वन०—२६७-१

कणः— तण्डुलावयवः ।

कणः गुग्गुलुविशेष इति पूजापङ्कजभास्करे --४१

"कणपिण्याकयावकदधिपयोव्रतत्त्वं चेति" ।

बौधायनः—२-१०-१८-१८

कणोऽतसूक्ष्मे धान्यांशे इत्यमरः ।

तच्च खुद इत्युच्यते ॥

(२) गुग्गुलुः इति मित्रमिश्राः पूजाप्रकाशे —७२

रहिकाख्यं कणो दाह् सिरुलकं चागुरुसितम् ॥

शङ्खो जातीफलं श्रीशे धूपानि स्युः प्रियाणि वै ।

इति वामनपुराणे ।

(३) कणः अस्पष्टवाक् खना इति भाषायां प्रसिद्धः ।

"मात्राणुभवात् कणः" इति निरुक्ते ।

(४) शूक्ष्ममुहूर्त्त विशेषः ।

मुहूर्त्तस्य अष्टमभागस्य नाम । कालमाधव ।-२

कणपः— मुद्गरः ।

परिस्तोमान् विचित्रांश्च कक्ष्याश्च कनकोज्ज्वलाः ।

ग्रैवेयाण्यथ शक्तीश्च पताकाः कणपांस्तथा ॥

पश्याम इति शेषः ॥ महाभा० भीष्म० —५४-५४

कणिका— (१) शुष्कगोधूमचूर्णम् सुजि इति ख्यातम् ।

शुष्कगोधूमचूर्णं तु कणिका समुदाहृता ।

इत्यायुर्वेदराजनिघण्टौ ।

(२) सूक्ष्मवस्तु ।

कणिशम्— धान्यस्तम्बः ।

तत्रैकैकं कणिशमुच्छयित्वा इत्यादि बौधा० ३-२-४

कणिशं धान्यशीर्षकमिति हलायुधः । का०—२

सस्यमञ्जरीति तद्भाष्ये।

कण्टः— कण्टकः ।

कण्टेषु दत्तपादाश्च भुजङ्गाभोगवेष्टिताः

इति विष्णुः–४३-४३

तत्र कण्टाः कण्टकाः इति वैजयन्तीः ।

कण्टकः— चौरसाहसिकादिः ।

कण्टकशब्दः पीड़ाहेतुसामान्यात् तस्करादिषु प्रयुक्त

इति मेधातिथिः ।

सम्यङ् निविष्टदेशस्तु कृतदुर्गश्च शास्त्रतः ।

कण्टकोद्धरणे नित्यमातिष्ठेद्यत्नमुत्तमम् ॥

मनुः—९-२५२

द्वाविमौ कण्टकौ तीक्ष्णौ शरीरपरिशोषणौ ।

यश्चाधनः कामयते यश्च कुप्यत्यनीश्वरः ॥

विष्णुधर्म—१-२८-१६

(२) वृक्षवल्कलस्थः सूचीसदृशः ।

यः कण्टकैर्वितुदति चन्दनैर्यश्च लिम्पति ।

अक्रुद्धोऽपरितुष्टश्च समस्तस्य च तस्य च ॥

याज्ञ०—३-५३

कण्टकारिका—सिंही, रिङ्गिणी कण्टकारिका

इति पर्यायशब्दाः ।

सा यदि गर्भं न दधीत सिंह्याः श्वेतपुष्प्या उपोष्य

मूलमुत्थाप्य" इति पारस्कर गृ०—१-१-३१

अत्र सिंह्याः कण्टकारिकाया इति हरिहरः ॥
कण्टकारिका डोर्लि इति आचारेन्दुः—१४८
कण्टकारिकयाशोकं कुटजैर्दुःखसंगमः ।
शाल्मलीकुसुमारोपे स्वपापैरनुलिप्यते ॥
इति केशववैजयन्त्यां पुष्पसारवचनम्—६६-७

**कण्डनम्**— पुनर्निस्तुषीकरणम् ।
असिद्धस्यान्नस्य यन्मात्रमुपहतं तन्मात्रं परित्यज्य
शेषस्य कण्डनप्रक्षालने कुर्यात् ॥
विष्णुः—२३-३५

**कण्डनी**— उलुखलमुसले इति कुल्लूकः । मनुः—३-६८
पञ्चसूना गृहस्थस्य चुल्ली पेषण्युपस्करः ।
कण्डनी चोदकुम्भश्च वाध्यते यास्तु वाहयन् ॥
मनुः—३-६८
तण्डुलकरणसाधनमात्रं कण्डनीशब्दवाच्यं
भवितुमर्हति ।

**कण्डुरः**— कारवेल्ललता इति वैद्यकशब्दसिन्धौ ।
कलराफलमिति भाषायाम्
वस्तुतस्तु तत्र कण्डूरितिर्नास्ति ।

**कण्डूरम्**—प्रावृषेण्यफलमिति श्राद्धमयूखे ।
वाइढ़ङ्क इति उत्कलेषु प्रसिद्धम् ॥
कण्डूरं कण्डूरायाः प्रावृषेण्या परनामधेयायाः फलम् ।
तच्चात्यन्तकण्डूतिजनकं बहुरोमयुक्तम् ।
तत्र देवलः ।
"कण्डूरं श्वेतवृन्ताकं कुम्भाण्डं च विवर्जयेदिति"
हेमा० परि०—५६६

**कण्डूरा**—शुकशिम्बिलता इति वैद्यकशब्दसिन्धौ
कपिकच्छूरिति निर्णयसिन्धौ—२६४
कण्डूरां श्वेतवृन्ताकं कुष्माण्डं च विवर्जयेत् ।
इति तत्र देवलः ।
सा तु वाडढ़ङ्कलता इत्युच्यते उत्कलेषु

**कतम्**— कतंभोङ्कर इत्याचारेन्दु --२१० । तत्र विष्णुः
"वार्त्ताककतकालिङ्गबिल्वौदुम्बरभिस्सट्टः
एतांस्तु सेवते यस्तु तस्य दूरतराः श्रियः ॥ इति

**कतकः**— वृक्षविशेषः
फलं कतकवृक्षस्य प्रसादकम् ।
न नामग्रहणादेव तस्य वारि प्रसीदति ॥ मनुः—६-६७

**कथकः**— विरजनरञ्जनाय बृहत्कथादिकथानां कथयिता ॥
इति हेमाद्रिः ॥ परि०—४८०
"स्वस्त्या अपि न तद्ग्राह्यं धनं कथककूटयोः"
प्रजापतिस्मृतिः—१०

**कथानकम्**— कथानकं कथा इति परिभाषा प्रकाशे-१५
"यत्तु साम्बं पुरस्कृत्य भविष्येऽपि कथानकम् ।
प्रोच्यते तत् पुनर्लोके साम्बमेव मुनिव्रताः ।"
इति मात्स्ये ।

**कथिका**— खाद्यद्रव्यविशेषः कढ़ि इति ख्यातः ।
मृद्वीका शिंशुपाचूतकरमर्दकृताः शुभाः ।
मरीचपिप्पलीयुक्ता एलाचन्द्रकसंयुताः"
कथिताः कथिका यस्मिन् भोजने भूरिशो हरेः ।
जैमिनीयाश्वमेधेन्य—४०

कदर्यः— लुब्धः ।
आत्मानं धर्मकृत्यं च पुत्रदारांश्च पीडयेत् ।
लोभाद्यः पितरौ भृत्यान् स कदर्य इतिस्मृतः ॥
इति मिताक्षरायाम्—१-१६१

स्मृतिरत्नाकरे मनुश्च—
तत्र "पितरौ मोहात्"इति पाठः
सत्यपि द्रव्ये द्रव्यार्जनस्वभाव इति गोविन्दस्वामी
बौधा०—१-१०-२६

कनखलम्—श्राद्धदेशत्वेन प्रसिद्धः तीर्थविशेष ।
"कनखलम् उत्तर पर्वतस्थं त्र्यम्बकस्थं वा"
इति केशववैजयन्ती ॥ विष्णुः —८५-१४

कनीनीका—(१) प्राणायतनविशेषः ।
कनीनिके चाक्षिकूटे शष्कुली कर्णपत्रकौ ।
कर्णौ शङ्खौ भ्रुवौ दन्तवेष्टावोष्ठौ ककुन्दरे ॥
याज्ञ०—३-९६

कनीनिके अक्षितारके इति मिताक्षरायाम्—३-९६

(२) कनिष्ठाङ्गुलिः । अङ्गुष्ठेन प्रदेशिन्या नासिके संस्पृशेत् । अङ्गुष्ठानामिकाभ्यां च नेत्रे । कनीनिकाङ्गुष्ठाभ्यां श्रोत्रे ॥ मध्यमिकया मुखं, अङ्गुष्ठेन नाभि, सर्वाभिः शिरः, प्रदेशिनी वायुः, अनामिका सूर्यः ॥ कनीनिका मघवा मध्यमिका प्रजापतिः, अग्निरङ्गुष्ठ । इति आह्निकप्रकाशे
पैठीनसिः—८७

कन्दम्— कन्दम् ।
आमोपयोग्यं मूलमिति गोविन्दस्वामी ॥
आमोपयोग्यं यत् पाकं विनापि भोजनार्हमिति ।
"कन्दऽस्त्री सूरणे सस्यमूले जलधरे पुमान्"
इति मेदिनी—१८-३

कन्दशाला— पाकशाला, कोष्ठागारं वा ।
कन्दुशाला इति पाठान्तरम् ।
गोकुले कन्दशालायां तैलयन्त्रेक्षुयन्त्रयोः ।
अमीमांस्यानि शौचानि स्त्रीषु बालान्तरेषु च ॥
इति शातातपः ।

हेमाद्रौ "गोकुले कन्दुशालायामिति पाठः"
संस्कृतिसंस्थान प्रकाशित—
अत्रिस्मृतौ तु कन्दुशालायामिति पाठः,
चतुर्लपादेषु स्त्रीणां च व्याधितस्यचेति विशेषः
अत्रिस्मृतिः—१६१

कन्दुशालेति पाठः समीचीना इति मन्ये ।

कन्दुः—(१) कराइ ताओआ इति शब्दकल्पद्रुमे ।
भ्राष्ट्रमित्याचारेन्दौ ।
लोहमयन्युब्जपात्रमिति वैद्यकशब्दसिन्धौ ।
ना कन्दुर्वा स्वेदनी स्त्रियामित्यमरः—२-९-३०

(२) कन्दुः कोष्ठः कुसूल इति एकस्य द्रव्यस्य बहः संज्ञाः भवन्ति इति पातञ्जलमहाभाष्ये—१-४-१

**कन्दुपक्वम्**—बाह्यजलनिरपेक्षमग्निपक्वम् ।

कन्दुपक्वानि तैलेन पायसं दधिसक्तवः ।
एतानि शूद्रान्नभुजो भोज्यानि मनुरब्रवीत् ॥

इति हेमाद्रौ हारीतः ।

कन्दुपदेनाग्निस्थानवाचिना अग्निर्लक्ष्यते । तेन बाह्यजलनिरपेक्षतया अग्निमात्रेण पक्वं लाजादि कन्दुपक्वमुच्यते ॥ एवं बाह्यजलनिरपेक्षतया केवलघृतादिपक्वं स्नेहपक्वमुच्यते, इत्याचारसारे गदाधरः ।

पृ०—४१७

**कन्दुशाला**— कन्दशाला इति शब्दस्य पाठभेदः ।

**कन्धरा**— ग्रीवा ।

चेष्टाभोजनवाग्रोधे नेत्रादिप्रतिभेदने ।
कन्धरा बाहुसक्थ्नां च भङ्गे मध्यमसाहसम् ।

याज्ञ०—२-२२०

**कन्यकाच्छलम्**—कन्याप्रतारणा इति मित्रमिश्राः ।

आसुरो द्रविणादानाद्गान्धर्वः समयान्मिथः ।
राक्षसो युद्धहरणात् पैशाचः कन्यकाच्छलात् ॥

याज्ञ०—१-६१

**कन्या**—(१) अविवाहिता, याविवाह्या ।

पाणिग्रहणिका मन्त्राः कन्यास्वेव प्रतिष्ठिताः ॥
नाकन्यासु क्वचिन्नृणां लुप्तधर्मक्रिया हि ताः ।

मनुः—८-२२६

(२) कन्याविशेषः ।

अष्टवर्षा भवेत् कन्या नववर्षा च रोहिणी ।
दशवर्षा भवेत् कन्या अतऊर्ध्वं रजस्वला ॥

सम्वर्त्तः—६३

अतः परं कन्यादानफलं नास्तीति अस्य वचनस्य तात्पर्यम् ॥

**कन्यागतम्**—कन्याप्रतिग्रहकाले श्वशुरादिभ्यो लब्धं धनम् ।

यल्लब्धं दानकालेतु स्वजात्या कन्यया सह ॥
कन्यागतं तु तद्वित्तं शुद्धं वृद्धिकरं स्मृतम् ॥

इति कात्यायनः ।

**कपर्दकः**— मुद्रारूपेण व्यवह्रियमाणः सामुद्रजीवविशेषस्य अंस्थि ।

कपर्दकान्वेषणाय प्रवृत्तश्चिन्तामणिमलभत ॥

इति कालमाधवे ।

**कपालम्**—(१) मृण्मयभाण्डखण्डम् ।

कपालं वृक्षमूलानि कुचेलमसहायता ।
समता चैव सर्वस्मिन्नेतन्मुक्तस्य लक्षणम् ॥

मनुः—३-४४

(२) यज्ञपात्रविशेषः ।

"पुरोडाशभर्जनार्थं मृत्तिकया निर्मितानि वह्नौ परिपक्वानि द्व्यङ्गुलोच्छ्रयाणि यस्मिन् पुरोडाशे यावन्ति विहितानि तानि कपालानि" इति याज्ञिकाः । गोभिलगृह्यभाष्ये च—१-७-७

कपालं मृण्मयं पात्रं चक्राघटितमुच्यते ।
आसुरं चक्रघटितं दैवे पैत्रे च वर्जयेत् ॥ इति

(३) मनुष्यशिरसः अस्थिखण्डः।
भाषायां खपुरि, खापरा इत्यादि॥
"खट्वाङ्गकपालपाणिर्वा द्वादशसंवत्सरान् ब्रह्मचारी
भैक्षाय ग्रामं प्रविशेत् कर्माऽऽचक्षाणः"
गौतम :—३-४-४

द्वौ शङ्खकौ कपालानि चत्वारि शिरसस्तथा।
उरः सप्तदशास्थीनि पुरुषस्यास्थि संग्रहः॥
याज्ञ०—३-९०

(४) अलाबूफलम् इति नीलकण्ठभट्टः।
कपालः अलाबू इति पूजाप्रकाशे—१५५
शिरः कपालमन्त्राणि नखचर्म तिलास्तथा।
एतानि क्रमशो नित्यमष्टम्यादिषु वर्जयेत्।
इति समयमयूखोद्धृतस्कान्दे । समय—१७७
कपालं नारिकेलमिति निर्णयसागरप्रकाशित-
निर्णयसिन्धौ —२९४

तत्र हेमाद्रौ ब्राह्मे—
वृन्ताकं पञ्चशिम्बं च लोमशानि फलानि च।
कलिङ्गरक्तचारं च वीणाकं धूतचारकम्।
कपालं काचमारीचं करञ्जं पिण्डमूलकम्।
गृञ्जनं चुक्रिकां चैव गाजरं जीवकं तथा॥इति

**कपालवेधः**— अर्द्धरात्रिवेधः।
एकादस्युपवासनिर्णये व्यासः।
कपालवेध इत्याहुराचार्या ये हरिप्रियाः।
न तन्मम मतं यस्मात्त्रियामा रात्रिरिष्यते।
इति कालमाधवे

**कपिः**— वानरः।
विड्वराह श्वरोष्ट्राणां गोमायोः कपिकाकयोः।
प्राश्य मूत्रपुरीषाणि द्विजश्चान्द्रायणं चरेत्॥
मनुः—११-१५४

**कपिञ्जलः**—कपिञ्जलो गौरतित्तिरिरिति बालम्भट्टी
याज्ञ०—१-१७५
शरुः वभ्रुवर्णः पक्षी इति हेमाद्रिः परिशेषे—५७७
कपिञ्जलः कारण्डवो भैरिर्वा मयूरो वा केचित्।
तित्तिरो वेति हरिहरः
"कपिञ्जलमांसेनान्नाद्यकामस्य" पारस्करः—१-१९-७
कपिञ्जलो गौरतित्तिरिरिति कल्पतरौ।
ब्रह्मचारिकाण्डे।—९३

**कपित्थः**— वृक्षविशेषः।
यस्यफलं विल्वाकारमम्लरसविशिष्टं च।
विष्णुरहस्ये—
केशातक्यर्कधत्तूरशाल्मली गिरिकर्णिका।
कपित्थं लाङ्गली शिग्रुकोविदारो शिरीषकम्।
अज्ञानाद् पूजयेद् विष्णुं नरो नरकमाप्नुयात्।
इति केशववैजयन्त्याम्—९३-३ पूजाप्रकाशे च—९९

**कपिला**—(१) कपिलवर्णागौरिति कल्पतरुः।
अग्निचित् कपिला सत्री राजा भिक्षुर्महोदधिः।
दृष्टमात्राः पुनन्त्येते तस्मात्पश्येत् नित्यशः॥
इति यमच्छागलेयौ। स्मृतिचन्द्रिकायां मनुश्च॥

(२) कपिला रक्ततण्डूलवर्णा इति माधवाचार्यः—२-१६

नोदवहेत्कपिलां कन्यां नाधिकाङ्गीं न रोगिणीम् ।
नालोमिकां नातिलोमां न वाचाटां न पिङ्गलाम् ॥

मनुः—३-८

कपिला कपिलकेशा स्त्रीति कुल्लूकः ।

कहरा इति उड्रभाषायाम् ।

दश वै कपिलाः प्रोक्ताः स्वयमेव स्वयंभुवा ।
प्रथमा स्वर्णकपिला द्वितीया गौरपिङ्गला ॥
तृतीया रक्तपिङ्गाक्षी चतुर्थी गलपिङ्गला ।
पञ्चमी वभ्रुवर्णाभा षष्ठी च श्वेतपिङ्गला: ॥
सप्तमी रक्तपिङ्गाक्षी त्वष्टमी खुरपिङ्गला: ।
नवमी पाटला ज्ञेया दशमी पुच्छपिङ्गला ॥
दशैताः कपिलाः प्रोक्तास्तारयन्ति नरान् सदा ।
मङ्गल्याश्च पवित्राश्च सर्वपापप्रणाशनाः ॥

इति महाभा० आश्व० वैष्ण० दाक्षिणात्यपाठे ॥

(३) भाद्रकृष्णाष्टमी योगविशेषेण कपिलासंज्ञां लभते

नभस्यकृष्णपक्षे तु रोहिणीपातभूसुतैः ।
युक्ता षष्ठी पुराणज्ञैः कपिला परिकीर्त्तिता ॥

इति निर्णयसिन्धौ वाराहे ।

पुराणसमुच्चये तु—

भाद्रमास्यसिते पक्षे भानौ चैव करे स्थिते ।
पाते कुजे च रोहिण्यां सा षष्ठी कपिला भवेत् ॥

इति निर्णयसिन्धौ—११४

(४) कपिलवर्णः ।

सितपीतहरिद्रक्तः कडारस्तृणवह्निवत् ।
अयं त्रिद्रिकृतपीताङ्गः कपिलो गोविभूषणः ॥

इति शब्दार्णवे ।

**कपीतनः**— वृक्षविशेषः ।

न्यग्रोधोदुम्बरप्लक्षसपिप्पलकपितनैः ।
कोविदारैश्च तत्पत्रैर्नैव विष्णुं प्रपूजयेत् ॥

इति पूजाप्रकाशोद्धृतविष्णुरहस्ये—६१

कपीतन आम्रातक इत्ति पराशरमाधवे ॥

श्राद्ध—७०१

**कपुच्छलम्**—शिरसः पश्चाद्भागे लम्बमानः केशपाशः।

के शिरसि पश्चाद्भागे पुच्छवत् लम्बते यः केशपाशः स कपुच्छल इति चन्द्रकान्तः ।

गोभिल गृ०—२-९-१८

कपुष्णिकाभितः केशान् मूर्ध्नि पश्चात् कपुच्छलम्।

कात्यायनः—२५-७

भवदेवभट्टस्तु कपुच्छलशब्देन पश्चिमतः शिखास्थानात् अधः शिरसो नापितक्रोड़ाभिमुखोच्चदेशोऽभिधीयते,

इति चूड़ाकरणशब्दे शब्दकल्पद्रुमे।

“मूर्ध्नि पश्चात् कपुच्छलम्”

इति गोभिलस्मृतिः—३-८२

अवटस्योपरि उन्नतशिरोवयवः कपुच्छलम् ।

इति रघुनन्दनभट्टाचार्य्यः ॥ संस्कारतत्त्वे-६२

**कपुष्णिका**— शिरसः पार्श्वस्थितकेशपाशः ।

कं शिरः पुष्णाति शीतातपादितो रक्षणेनेतिकपुष्णिका शिरसः पार्श्वद्वयावस्थिता केशजुटिका ।

इति चन्द्रकान्तभाष्ये गोभिल गृ०—२-९-१२

तथा चोक्तम्—

कपुष्णिकाभितः केशान् मूर्ध्निपश्चात् कपुच्छलम् ।

इति गोभिलस्मृतिः—३-८२

कपूयः— कुत्सितः ।

कपूयचरणः—कुत्सितकर्मा ।

कपूयचरणाः कपूयां योनिमापद्येरन् ॥

छा० उ० ५-१०-७

कपेलुः—आरण्यशाकविशेषः ।

कपेलुः आरण्यशाकविशेषः काश्मीरेषु प्रसिद्ध इति हारीतभाष्यकार इति लक्ष्मीधरः ।

कपोतः— पारावतसदृशः पक्षिविशेषः ।

दैवात् स यदि गृहं प्रविशेत् शान्तिं कुर्यात् ।

अयूथिके भयार्त्ते कपोते गृहान् प्रविष्टे तस्याग्नौ पदं दृश्येत दधति सक्तुषु घृते वा देवाः कपोत इति प्रत्यृचं जपेत् जुहुयाद्वा ।

शाङ्खायन गृ०—२-१८-१

सम्पूर्णसूक्तपाठः ऋग् —१०-१६५

नैर्ऋतः कपोत ऋषिः । विश्वे देवा देवताः । त्रिष्टुप् छन्दः । देवाः कपोत इषितो यदिच्छन् दूतो निर्ऋत्या इदमाजगाम । तस्मा अर्चाम कृणवाम निष्कृतिं शं नो अस्तु द्विपदे शं चतुष्पदे । ॥१॥ शिवः कपोत इषितो नो । अस्त्वनागा देवाः शकुनो गृहेषु । अग्निर्हि विप्रो जुषतां हविर्नः परिहेतिः पक्षिणी नो वृणक्तु ॥ २ ॥ हेतिः पक्षिणी न दभात्यस्मा नाष्ट्र्यां पदं कृणुते- अग्निधाने ॥ शं नो गोभ्यश्च पुरुषेभ्यश्चास्तु मानो हिंसीदिह देवाः कपोत ॥३॥ यदुलूको वदति मोघमेतद्यत्कपोतः पदमग्नौ कृणोति । यस्य दूतः प्रहित एष एतत् तस्मै यमाय नमो अस्तु मृत्यवे ॥४॥ ऋचा कपोतं नुदत प्रणोदमिषं मदन्तः परिगां नयध्वम् । संयोपयन्तो दुरितानि विश्वा हित्वा न ऊर्जं प्रपतात् पतिष्ठः ॥५॥

कपोलः— गल्लः इति मिताक्षरा ।

द्वे द्वे जानुकपोलोरुफलकांससमुद्भवे ।

अक्षतालूषके श्रोणि फलके च विनिर्दिशेत् ।

इति याज्ञ०—३-८७

कफेलुः—शाकविशेषः ।

जलप्रभवखदिरशाक इति श्राद्धदीपे ।

भूस्तृणकफेलू ग्राम्यारण्यौ शाकविशेषौ इति हारीतभाष्यकारः ॥

हेमाद्रिस्तु कफेल्ल इति पठति मन्ये समुद्रणदोष इति ।

कमण्डलुः— व्रतिजलपात्रम् ।

अस्त्री कमण्डलुरित्यमरः—२-७-४६

मेखलामजिनं दण्डमुपवीतं कमण्डलुम् ।

अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रवत् ॥

मनुः - २-६४ ।

कमुञ्जाः—चूडा, शिरःस्थशिखा इति यावत् ।

दक्षिणतः कमुञ्जा वसिष्ठानाम् इति लौगाक्षिः ।

प्रकाशितकाठकगृह्यसूत्रे तु कपुजा इति पाठः,

काठक गृ०-३-१६-२

कमुञ्जा चूड़ा इति लक्ष्मीधरः। कल्पतरु ब्रह्मचारीकाण्ड —८५।

**कम्बलः**— (१) मेषादिलोमनिर्मितं शीतवस्त्रम्।

(२) कम्बलनाम्ना प्रसिद्धः मृगविशेषः।

कम्बलस्ताम्रइति कात्यायनस्मृतौ। एणः कृष्णमृगः स्मृतः
रुरुर्गौरमृगः प्रोक्तः कम्बलः शोण उच्यते॥
इति—२७-११

(३) सास्ना।

तस्या सुतं परीक्षेत वृषभं लक्षणान्वितम्।
उन्नतस्कन्धककुदं मृदुलाङ्गूलकम्बलम्॥
इति लक्षणप्रकाशोद्धृतविष्णुधर्मोत्तरे॥

**कम्बुकम्**— वृत्तालाबु इति माधवाचार्यः।
पाराशरव्याख्याने श्राद्धः- ०८
कुम्भीकम्बुकवृन्ताककोविदारांश्च वर्जयेत् इति उशनाः

**कम्बूकः**— तण्डुलकणः।
वृत्त्यविच्छित्तिकामः कम्बूकान् सायंप्रातर्जुहुयात्॥
गोभिलः ४-६-१५

फलीकरणं कम्बूका इति देवपालः।
काठक गृ०—६-११-२

**करः**— (१) राजभागः कृषीवलादिभ्यो नियतरूपेण यो गृह्यते।

यथा फलेन युज्येत राजा कर्त्ता च कर्मणाम्।
तथावेक्ष्य नृपो राष्ट्रे कल्पयेत् सततं करान्॥
मनुः- ७-१२८

यथाल्पाल्पमदन्त्याद्यं वार्योको वत्सषट्पदाः।
तथाल्पाल्पो ग्रहितव्यो राष्ट्राद्राज्ञाब्दिकः करः॥
७-१२९

बलिप्रभृतीनि राजग्राह्यकरनामानि देशभेदेषु प्रसिद्धानि इति मेधातिथिः। करो द्रव्यादानमेवेति स एव। धान्यादेः षड्भागादिकः कर इति गोविन्दराजः॥

(२) सूर्यस्य चन्द्रस्य च किरणः करः

यो माघमास्युषसि सूर्यकराभिताम्रे
स्नानं समाचरति चारुनदीप्रवाहे।
उद्धृत्य सप्तपुरुषान् पितृमातृवंश्यान्
प्रेत्यप्रयात्यमरदेहधरो नरोऽसौ।
इति कालदीपे।

(३) हस्तानक्षत्रं च।

यदेन्दुः पितृदैवत्ये हंसश्चैव करे स्थितः।
याम्यातिथिर्भवेत्साहि गजच्छाया प्रकीर्त्तिता॥

(४) गजस्य शुण्डादण्डः।

दद्यात् कृष्णाजिनं पृष्ठे गां पुच्छे करिणं करे।
केसरेषु तथैवाश्वं दर्सीं शिरसि दापयेत्॥
इति मिताक्षरायाम्। २-२७

**करकः**— कमण्डलुःइति मेधातिथिः।
कुल्लूको ऽपि उपानहौ च वासश्च धृतमन्यैर्न धारयेत्।
उपवीतमलंकारं स्रजं करकमेव च॥
मनुः ४-६६।

**करकचतुर्थी**— कार्त्तिककृष्णचतुर्थी।
सा चन्द्रोदयव्यापिनी ग्राह्या।
इति निर्णयसिन्धौ—१४६

करञ्जम्— रक्तलशुनमिति उज्ज्वलावृत्तिकारः।
अभक्ष प्रकरणे आपस्तम्बः
करंजपलाण्डुपरारीका ॥ इति १-५-१७-२६।
करंजं खादिरं वापि" इत्यादि हारीतः —४-६
दन्तकाष्ठयोग्य इत्याह विष्णुः- ६१-१४।
वटासनार्कखदिरकरंजवदरसर्जनिम्बारिमेदापामा-
र्गमालतीककुभविल्वानामन्यतमम्।

करटिः— गजः।
शुण्डादण्डेन करटिः सिंहं कण्डुयतेऽभयः।
अष्टापदाङ्के स्वपिति केसरी केसरोद्भटः।
स्कान्दे काशी अगस्त्या ३-२४

करणम्—(१) ऋणपत्रादि।
ऋणं दातुमशक्तो यः कर्त्तुमिच्छेत् पुनः क्रियाम्।
स दत्त्वा निर्जितां वृद्धिं करणं परिवर्त्तयेत् ॥
मनुः ८-१५४।

(२) इन्द्रियम्।
कट्वेवारो यथाऽपक्वे मधुरः सन् रसोऽपि न।
प्राप्यते ह्यात्मनि तथानापक्वकरणेज्ञता ॥
याज्ञ० ३-१४२

(३) सभा इति व्यवहारमयूखे नीलकण्ठः।
ये चारण्यचरास्तेषामरण्ये करणं भवेत् ॥
इति बृहस्पतिः

करणः—(१) शूद्रायां वैश्येनोत्पादितः जातिविशेषः।
विप्रास्वेष विधिः स्मृतः ॥
वैश्यात्तु करणः शूद्रयाम् -याज्ञ०- १-८२
शूद्रायामनूढायां वैश्याज्जात इति हरदत्तः
गौतम० ध० २-८-१७।

(२) व्रात्यक्षत्रियात् सवर्णायां जातः।
झल्लो मल्लश्च राजन्याद् व्रात्यान्निच्छिविरेव च।
नटश्च करणश्चैव खसो द्रविड़ एव च ॥
मनुः—१०-२२

(३) राजकार्यालयस्थलिपिकरः।
(४) ज्योतिःशास्त्रप्रसिद्धो ववाद्येकादशविधः करणश्च।

करण्डः—(१) मानविशेषः, आढ़कः।
"करण्डो मधुकोषासिकारण्डवदलाढ़के" इति
मेदिनी—१३-२७
(२) पात्रविशेषः।
"निक्षेपद्रव्यस्याधारभूतं द्रव्यान्तरं वामनं करण्डादि"
इति मिताक्षरा याज्ञ०—२-६५
अत्र करण्डकः क्षुद्रः करण्ड महान् इति प्रतीयते ॥

करण्डकम्— पात्रविशेषः।
अस्यैव कराट इत्यपभ्रंश इति ज्ञायते।
मुद्गः पिधानं, मुद्गेन सह वर्त्तते इति समुद्गकरण्डकम्
इति मिताक्षरा—२-१४७

करतोया—(१) अल्पतोया नदी।
यावन्नोदेति भगवान् दक्षिणाशाविभूषणः।
तावद्रजो महानद्यः करतोयाः प्रकीर्त्तिताः ॥
इति मात्स्ये

अत्र करतोया अल्पतोया इति निर्णयसिन्धौ ॥
मन्मते करग्राह्यतोया अर्थात् पङ्किलतोया ।
(२) करतोया इति नदीविशेषस्य नाम ।
कर्मनाशाजलस्पर्शात् करतोयाविलङ्घनात
गण्डकीबाहुतरणात् पुनः संस्कारमर्हति ॥
इति आदिपुराणे संस्कारप्रकाशः - ५४६

**करपत्रम्**— करत इति भाषायां प्रसिद्धः एकस्मिम् पार्श्वे दन्तुरः काष्ठपाटनयन्त्रविशेषः ।
"असिपत्रवनं तस्मात् करपत्रेण पाटनम्"
इति मार्कण्डेये—१४-८८

**करपत्रिका**— जलपात्रविशेषः इति श्राद्धप्रकाशे-१६७
मणिकानम्भसा पूर्णान् प्रपद्याद्वा गलन्तिकाम् ।
प्रदद्यात् करका वापि यदि वा करपत्रिकाम् ॥
इति तत्र स्कान्दे ।

**करभः**— हस्तः ।
करभं हस्त इति श्राद्धमयूखे । उदाहरणं पाशाभिधानायां द्रष्टव्यम् ।
करभो मणिबन्धादि कनिष्ठान्तोप्रतस्तुते ॥
इति मेदिनी—१४-१४

**करमध्यः**—कर्पासपर्य्याय इति भावप्रकाशे (खारीशब्दो द्रष्टव्यः)

**करमर्दः**— श्राद्धवर्ज्यफलविशेषः ।
करन्दाकोलि इति उडूभाषायाम् ।
करमर्दः सुषेण इति पराशरव्याख्याने माधवाचार्यः । तत्र
पिण्डालकं च तुण्डीरं करमर्दंच नालिकाम् ।
कूष्माण्डबहुबीजानि श्राद्धे दत्वा व्रजत्यधः ॥
इति शङ्खः
करमर्दं करवन्दमिति प्रसिद्धमिति निर्णयसिन्धौ-२६२
प्राचीनामलकं करमर्द इति पूजाप्रकाशे मित्रमिश्रः।७६
किन्तु तत्र वाराहे प्राचीनामलककरमर्दयोर्द्वयोरुल्लेखात् तयोः पार्थक्यमेव वाराहे ।
उभयानि पटोलानि कुमुदस्य फलं तथा ॥
मूलकं माफलं चैव करमर्दफलं तथा ।
कर्मण्यं च फलं ह्येतत् प्रतिगृह्णामि माधवि ।
मोचकं पनसं जम्बू तथान्यल्लवलीफलम् ॥
प्राचीनामलकं श्रेष्ठं मधुकोदुम्बरं तथा ।
फलं पक्कमपि ग्राह्यं कदलीफलमुत्तमम् ॥ इति
वस्तुतस्तु करमर्द्दं करन्दाकोलि इत्युच्यते ।
प्राचीनामलकं पाणिआँलाकोलि इत्युच्यते ॥
यद्यपि प्राचीनामलकं कराभ्यां मर्द्दयित्वा भुज्यते तथापि तस्यकरमर्द्दसंज्ञा प्रसिद्धा नास्ति ।

**करम्भः**— (१) दधिमिश्रितसक्थुः ।
"करम्भः दधिसक्थुसमाहार इति हरदत्तः"
आप०—१-५-१-७१६
भक्ष्याण्येभ्यः करम्भं च इष्टका घृतपूरकाः ।
कृसरं मधुसर्पिश्च पयः पायसमेव च ॥
इति वायुपुराणे
अत्र करम्भो दधिमिश्रा सक्तव इति कल्पतरुः
श्राद्ध—४१
दधिमिश्रसक्थुरिति आचारसारे गदाधरः ॥

(२) करम्भः कर्दम इति मेधातिथिः
विविधाश्चैव संपीड़ाः काकोलूकैश्च भक्षणम् ।
करम्भवालुकातापान् कुम्भीपाकांश्च दारूणान् ॥
मनुः—१२-७६

(३) श्राद्धवर्ज्यकन्दविशेषः
लशुनं गृञ्जनं चैव पलाण्डुं पिण्डमूलकम् ।
करम्भं यानि चान्यानि हीनानि रसवर्णतः ॥
इति मार्कण्डेय पु० ३२-१२

**करवादिः**— उलूकः ।

**करवीरः**— विष्णुदेयपुष्पवृक्षविशेषः ।
करवीरे नृपैकस्मिन्नर्काय विनिवेदिते ।
दत्त्वा दशसुवर्णस्य निष्कस्य लभते फलम् ॥
भविष्ये पूजाप्रकाशोद्धृते -२५५
करवीरैः पूज्यमानः शङ्करो वरदो भवेत् ।
स्कन्द०माहे०— ५-८६

**करालः**— भयानकः ।
करालेरथनिर्मांसे रुक्षेरथ शिराततैः ।
दारिद्र्यं दुर्भगत्वं च प्राप्नुवन्ति न संशयः ॥
इति आश्वलायनः । कल्पतरो गार्ह०—१२

**करीषम्**— (अग्नौ) शुष्कगोमयम् ।
" न भस्मकरीषकृष्ठछाया पथिकामेषु "
गौतमः—१—६-४०

**करुत्**— फलविशेषः ।
पितॄणां पनसः श्रीमान् वल्लभः परमो महान् ।
कारश्च कारवल्लीकः कारुकः कालिकेः करुत् ॥
पूर्वाङ्गिरसस्मृतिः—५६८

**कर्कटः**— तुलाधारान्तकीलकः ।
कर्कटौ तुलान्तयोः शिक्याधारौ ईषद्वक्रावायसकीलकौ
कर्कटशृङ्गसन्निभौ " इति मिताक्षरायाम्—२-१०३
तत्र—
कक्षाच्छेदे तुलाभङ्गे घटकर्कटयोस्तथा ।
रज्जुच्छेदेऽक्षभङ्गे वा तथैवाशुद्धिमादिशेत् ॥
नारदः—४-२८४

**कर्कन्धूः**— बदरीविशेषः ।
कर्कन्धूर्बदरीफलमिति मिताक्षरायाम् ।
एवं प्रदक्षिणावृत्कौ वृद्धौ नान्दीमुखान् पितॄन् ।
यजेत दधिकर्कन्धूमिश्रान् पिण्डान् यवैः क्रिया ॥
याज्ञ०—१-२५०

वन्यं सूक्ष्मं बदरमिति निर्णयसिन्धौ ।
स्थूलबदरमिति नरसिंहवाजपेयी । नित्याचारप्रदीपे
६६२

**कर्करी**— जलपात्रम् (घटी)
विप्रेभ्यः पादुके छत्रं पितृभ्यो विषुवे पुमान् ।
सक्तूंश्च शर्करामिश्रान् दद्यात् सजलकर्करीम् ।
इति कालसारे सुमन्तुः

**कर्कारु**— कखारु इति उत्कलेषु प्रसिद्धं फलम् ।

आम्रमाम्रातकं बिल्वं दाड़िमं बीजपुरकम् ।
प्राचीनामलकं क्षीरं नारिकेलं परूषकम् ॥१५६
नारङ्गं च सखर्जुरं द्राक्षानीलकपित्थकम् ।
पटोलं च प्रियाकं च कर्कन्धूषदराणि च ॥१५७
विकङ्कतं वत्सकं च कर्कारुर्वारुकानि च ।
एतानि फलजातानि श्राद्धे देयानि यत्नतः ॥
ब्रह्म०पु०—२२०-१५८

वस्तुतस्तु वहित्रकर्कारु श्राद्धे न दीयते ॥

**कर्कोटकम्**— फलविशेषः ।

क्षुद्रकारवेल्लसदृशं यत्फलं कांकड इति नाम्ना व्यवहरन्ति तदेव भवेत् ।

कर्कोटकं कारवेल्लं सुरागं मृष्टपिण्डिकाः । इति ।
श्राद्धदेये प्रजापतिस्मृतिः—१२३

कर्कारुकफलं चैव तथा शिम्बफलानि च
अर्कं कर्कोटकं चैव तथा तालफलानि च ॥
इति नित्याचारप्रदीपोद्धृत वाराहे—नित्या-१-६७२

पूजाप्रकाशे तु—
उर्वारुकफलं चैव तथा निम्बफलानि च ।
सर्जं कर्कोटकं चैव तथा तालफलानि च ॥
इति पाठः—७६

**कर्णकीलम्**—कर्णेषु कोटिषु, कीलाः निखाताः स्थूणाः कर्णकीलाः ” कौट०—३-८-३

**कर्णपत्रकः**— प्राणायतनविशेषः ।

कर्णपत्रको कर्णपाल्यौ इति मिताक्षरा— ३-९७
प्रमाणं चास्य कनिनीकाशब्दे द्रष्टव्यम् ।

**कर्णिकारः**— पुष्पवृक्षविशेषः ।

किङ्किराशब्दः कुब्जकशब्दश्च द्रष्टव्यः ।

**कर्त्तपत्यम्**— नरकपतनहेतुभूतम् ।

कर्त्तशब्देन श्वभ्राभिधायिना नरको लक्ष्यत इति हरदत्तः

“कर्त्तपत्यमनायुष्यं च” आप०—१-२-४-३
कर्त्तं नरकं, तस्मिन् निपातः कर्त्तपत्यमिति बौधायनविवरणे
“ अतोऽन्यथा कर्त्तपत्यम् ” बौधा०—१-१०-३६

**कर्दमः**—जलमिश्रिता तरलप्रायामृत । कादुअ इति उत्कलभाषायाम् । याज्ञ०— १-१९७

रथ्या कर्दमतोयानि स्पृष्टान्यन्त्यश्ववायसैः ।
मारुतेनैव शुद्ध्यन्ति पक्वेष्टकचितानि च ॥ इति

**कर्पटकः**— वस्त्रखण्डम् ।

“ करे कर्पटके चैव शिलायां ताम्रभाजने ।
वटार्काश्वत्थपत्रेषु गृही भुक्त्वैन्दवं चरेत् ॥”
इति अग्निसंस्कारप्रकाशे—८४

**कर्पटीवेशः**— खनित्रधारणादियात्रोचितवेशः ।

पूजाप्रकाशे स च वेशः ताम्रमुद्रा ताम्रकङ्कण कषायवस्त्रधारणमिति । तत्र कार्पटीवेश इति पाठः । उत्कलीयनिबन्धेषु तु कर्पटीवेश इति पाठः ।

कर्परम्— मृत्पात्रखण्डम् ।
मृण्मयकर्परादिभिक्षापात्रमिति कुल्लूकः ।
मनुः—६-४४

धानाश्च कर्परे भवन्ति इति धानार्थं कर्परं चरुस्थाल्यनन्तरमासादनीयमिति संस्कारप्रकाशे
मित्रमिश्राः—६३३

खपरा इति उत्कलेषु अस्य सम्प्रति प्रसिद्धिः ।

कर्म—(१) विधेयकर्म ।
सन्ध्यास्नानं जपो होमः स्वाध्यायो देवतार्चनम् ।
वैश्वदेवं तथातिथ्यमुद्धृतं चापि शक्तितः ॥
पितृदेवमनुष्याणां दीनानाथतपस्विनाम् ।
मातापितृगुरुणां च संविभागो यथार्हतः ॥६॥
एतानि नव कर्माणि" इति दक्षः—३-१२

(२) दासकर्म ।
कर्मापि द्विविधं ज्ञेयमशुभं शुभमेव च ।
अशुभं दासकर्मोक्तं शुभं कर्मकृतां स्मृतम् ॥
गृहद्वाराशुचिस्थानरथ्यावस्करशोधनम् ।
गुह्याङ्गस्पर्शनोच्छिष्टविड्मूत्रग्रहणोज्झनम् ॥
इच्छतः स्वामिनश्चाङ्गैरुपस्थानमथान्ततः ।
अशुभं कर्म विज्ञेयं शुभमन्यदतः परम् ॥
इति नारदः—५५-७

(३) कृषिकर्मणः यथाविधिसम्पादनम् ।
यथौषधिवनस्पतीनां वीजस्यक्षेत्रकर्मविशेषे फलपरिवृद्धिः" आप०—२-२-४
उत्कलभाषायां तत् कमण इत्युच्यते ।

(४) चित्रादिरचना । उत्कलभाषायां कम इत्युच्यते ।
कार्मिके रोमबद्धे च त्रिंशद्भागः क्षयो मतः ।
न क्षयो न च वृद्धिश्च कौशेये वाल्कलेषु च ॥
याज्ञ०—२-२८०

अत्र "कार्मिकं कर्मणा चित्रेण निर्मितम्" इति विज्ञानेश्वरः ।

(५) पूर्वकृतं सुकृतदुष्कृतात्मकम् ।
यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ।
तथा पूर्वकृतं कर्म कर्त्तारं विन्दते ध्रुवम् ।
विष्णुधर्मोत्तरे—२-७८-२७

धनानि भूमौ पशवश्च गोष्ठे भार्य्या गृहद्वारि जनाः श्मशाने ।
देहश्चितायां परलोकमार्गे कर्मानुगो गच्छति जीव एकः ॥

माभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ।
अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ॥
वृहन्नारदीय पु०—२६-२७

कर्मकरः— "शिष्यान्तेवासिभृतकाधिकर्मकृत् ।
एते कर्मकराः" नारद०—५-३

कर्मकारः— जातिविशेषः ।
शूद्रायां जात इति कंसकारःशब्दे प्रमाणं मृग्यम् ॥

कर्मचाण्डालः— (१) दुष्कर्मणा चण्डालतुल्यः ।
नास्तिकः पिशुनश्चैव कृतघ्नो दीर्घरोषकः ।
चत्वारः कर्मचाण्डालाः जन्मतश्चापि पञ्चमः ॥
वसिष्ठः—६-२५

(२) जातिविशेषः।

सौनिकं कर्मचण्डालात् सूते दारावधूः सुतम्।
स कुर्यादजमेषाणां वधं तन्मांसविक्रयम्॥

कर्मचण्डालः वड़ार इति आचारेन्दुः—२४८

**कर्मदुष्टः**— शास्त्रविरुद्धकारी।

मातापितृगुरुत्यागी कुण्डाशी वृषलात्मजः।
परपूर्वापतिः स्तेनः कर्मदुष्टाश्च निन्दिताः॥ १-२२४

"कर्मदुष्टाः शास्त्रविरुद्धकारिण" इति विज्ञानेश्वरः-१-२२४

**कर्मनाशा**— नदीविशेषः (करतोया शब्दो द्रष्टव्यः)

**कर्मनिष्ठः**— विहितानुष्ठानतत्परः।

"कर्मनिष्ठाः विहितानुष्ठानतत्पराः" इति विज्ञानेश्वरः

कर्मनिष्ठास्तपोनिष्ठाः पञ्चाग्निब्रह्मचारिणः।
पितृमातृपराश्चैव ब्राह्मणाः श्राद्धसम्पदः॥ याज्ञ-१-२२१

कर्मनिष्ठः गृहस्थ इति हेमाद्रिः श्राद्धकल्पे—४१७
तत्र बार्हस्पत्यसंहितायाम्-

ज्ञाननिष्ठा हि यतयोस्तपोनिष्ठा वनाश्रमाः।
कर्मनिष्ठा हि गृहिण आद्या स्वाध्यायनिष्ठिताः॥

**कर्मन्यासः**— कर्मत्यागः।

उद्वमतः कीनाशस्य कर्मन्यासे दण्डताडनम्।
आप०—२-११-२८-२

**कर्मभूमिः**—भारतवर्षम्।

विष्णुपुराणे अंशः—२-३-११-१२

उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम्।
वर्षं तद्भारतं नाम भारती यत्र सन्ततिः॥
नवयोजनसाहस्रो विस्तारोऽस्य महामुने।
कर्मभूमिरियं स्वर्गमपवर्गं च गच्छताम्॥११२

जाम्बवे भारतं वर्षं तीर्थं त्रैलोक्यविश्रुतम्।
कर्मभूमिर्यतः पुत्र तस्मात्तीर्थं तदुच्यते॥
ब्रह्म०पु०—७०-२१

अभिसम्पूजितं यस्माद् भारतं बहुपुण्यदम्।
कर्मभूमिरतो देवैर्वर्षं तस्मात् प्रकीर्त्तितम्
ब्रह्म पु०—७०-२४

**कर्मसचिवः**— कर्मसहायकः अमात्यः।

अन्यानपि प्रकुर्वीत शुचीन् प्राज्ञानवस्थितान्।
सम्यगर्थसमाहर्तॄनमात्यान् सुपरीक्षितान्॥
मनुः—७-६०

अन्यानपि कर्मसचिवान् कुर्य्यादिति कुल्लूकः। मन्त्रिभिः मन्त्रयेत्। अमात्यैः कर्मसचिवैः कर्म साधयेत् इति मन्त्र्यमात्ययोर्भेदः। दृश्यन्ते हि सम्प्रति मन्त्रिणामधस्तनाः सेक्रेटरिपदवाच्याः त एव कर्मसचिवा इति बोद्धव्याः।

**कर्मान्तः**— कर्मस्थानम्।

कर्मान्तः कर्मनिष्पत्तिरिति कुल्लूकः।
कृषिशुल्कस्थानानि इति मेधातिथिः।
धान्यादिसंग्रहस्थानमिति नीतिमयूखे।
स च सम्प्रति खमार इति उड्भाषायां प्रसिद्धः।

अहन्यहन्यवेक्षेत कर्मान्तान् वाहनानि च।
आयव्ययौ च नियतावाकरान् कोशमेव च ॥

मनुः—८-४१९

कर्मेति विज्ञानेश्वरः।

तत्र तत्र च निष्णातानध्यक्षान् कुशलान् शुचीन्।
प्रकुर्यादायकर्मान्तव्ययकर्मसु चोद्यतान् ॥

याज्ञ०—१-३२२

"कर्मस्थानमिति" श्रीमूला

"खनिसारकर्मान्तेभ्यः सारं रत्नं वापहरतः शुद्धवधः" कौटल्यः—४-९-२

(२) कारखाना इति लोकाः।

कृषिस्थानं खमार इति यन्त्रस्थानं कारखाना इति लोके उच्यते संप्रति।

तद्द्वयमपि कर्मान्तशब्दवाच्यमवधेयम्।

**कर्मारः**— लोहकारः।

कर्मारः लोहकारस्तक्षादिश्चेति विज्ञानेश्वरः।

"शास्त्रविक्रयिकर्मारतन्तुवायश्च वृत्तीनाम्"

याज्ञ०—१-१६३

"कर्मारस्य निषादस्येति" मनुः—४-२१५

**कर्मिकः**— मत्स्यविशेषः।

स्वल्पसर्पसदृशः मत्स्य इति गदाधरराजगुरुः।

ककारवकारयोरुत्कललिप्यां भूयः सामञ्जस्याद्वर्मिक इति स्थाने कर्मिक इति पाठः सञ्जात इति तर्क्यते, वमि, वमितोड़ि इतिसंज्ञया स्वल्पसर्पाकृतिमत्स्यानां लोकव्यवहारात्। अतएव कर्मिकस्थाने वर्मिक इति पाठो ग्रहणीयः।

**कर्मेन्द्रियम्**—कर्मसाधनमिन्द्रियम्। तच्च पाय्वादिपञ्चकम्।

"कर्मेन्द्रियाणि पञ्चैषां पाय्वादीनि प्रचक्षते ॥"

मनुः—२-९२

विशेषस्तु इन्द्रियशब्दे द्रष्टव्यः।

**कर्वटम्**— पुरस्य चतुर्थो भागः।

कर्वटशब्दोऽयं खर्वटशब्दस्य पाठभेदो भवितुमर्हति।

मार्कण्डेयपुराणे पुरलक्षणानन्तरं —

तदर्द्धेन तथा खेटं तत्पादेन च कर्वटम्।
न्यूनं द्रोणीमुखं तस्मादन्तभागेन चोच्यते ॥ ४९-४५

**कर्षः**— (१) पलस्य चतुर्थो भागः, टङ्कचतुष्टयात्मकः अक्ष-पिचुपाणिपाणितलादिपर्य्यायः खारी शब्दे द्रष्टव्यः।

पलस्य चतुर्थोऽशः कर्ष इति लोकप्रसिद्ध इति

विज्ञानेश्वरः—१-३६५

षोडशमाषाः कर्ष इति लीलावत्याम्।

दशार्द्धगुञ्जं प्रवदन्ति माषं माषाह्वयैः षोड़शभिश्चकर्षम्।
कर्षैश्चतुर्भिश्चफलं तुलाज्ञाः कर्षं सुवर्णस्य सुवर्णसंज्ञम् ॥

(२) कृषिः।

"सप्तमे कर्षे राद्धिः" इत्यापस्तम्वः—२-७-१६-१४

**कर्षकः**— कृषिकर्मकृत्।

**कर्षूः**— (स्त्री०) गर्त्तम्।

कर्षूः अवटम् इति हेमाद्रिः।

कर्षूःखनि रुच्यते इति देवपालः।

"स्त्रीभ्यश्चोपसेचनं च कर्षूषु"

इति पारस्कर गृ०—३-३-११

"चतुरङ्गुलपृथ्वीः तावदन्तराः तावदधःखाताः वितस्त्यायताः तिस्रः कर्षूः कुर्यात्" विष्णुः—२१-४

कर्षूवार्त्ता करीषाग्निः कर्षूः कुल्याभिधायिनी"

इत्यमरः— ३-३-२२२

करीषाग्निः पुमान् कर्षूः कुल्यामामपि च स्त्रियाम्

इति रभसः।

कर्षूसमन्वितं मुक्त्वा तथाद्यं श्राद्धषोडशम्।
मत्याब्दिकं च शेषेषु पिण्डास्तु षडिति स्थितिः॥

कात्यायनस्मृतिः—२४-१४

**कर्षूसमन्वितम्**—सपिण्डीकरणश्राद्धम्।

कर्षूसमन्वितं मुक्त्वा तथाद्यश्राद्धषोडशम्।

कर्षूसमन्वितमिति कर्षूपलक्षितमन्वष्टकाश्राद्धमिति श्राद्धविवेकव्याख्याने श्रीकृष्णः।

**कलञ्जम्**— विषदिग्धं मांसम् इति केचित्।

मरुदेशे लम्बायमानं फलमिति कश्चित्।

लशुनविशेष इति लक्ष्मीधरः॥ नियतकाल— २८०

कलञ्ज-सुरालेपनं कृत्वा उन्मादजनको वटविशेष इति हेमाद्रौ— प्रायश्चित्त—१९२

**कलञ्जः**— उन्मानविशेषः।

पञ्चगुञ्जलको माषः प्राणस्तेषु चतुर्गुणैः।
कलञ्जं धरणं प्राहुर्मणिमानविशारदाः॥

इति सरस्वतीविलासे विष्णुगुप्तः।

**कलत्रम्**— भार्या।

आनुकूल्यं कलत्रं चेत्त्रिदिवेनापि किं ततः।
प्रातिकूल्यं कलत्रं चेन्नरकेणापि किं ततः॥

स्कन्द० काशी०—३६-८३

गुरोर्ज्येष्ठकलत्रस्य भ्रातुर्ज्येष्ठस्य चात्मनः।
आयुष्कामो न गृह्णीयान्नामातिकृपणस्य च॥

इति संस्कारप्रकाशे नारदः—५८३

**कलम्बः**— शाकविशेषः।

**कलम्बा**— } वेणुपत्राकृतिपल्लवा जलजेव कलम्बेति
**कलम्बिका**— } प्रसिद्धा।

**कललम्**— गर्भपिण्ड इति संस्कारप्रकाशे—१८१

उल्वं च कललोऽस्त्रियाम्।

इति अग्निपुराणे —३६४-६

गर्भे स्त्रीणां तथान्यस्तु कललाशी सुदारुणः।
तस्य रक्षा सदा कार्या नित्यं शौचनिषेवणात्॥

इति मार्कण्डेयपुराणे।

**कलविङ्कः**— चटक इति कुल्लूकः।

कलविङ्कं प्लवं हंसं चक्राह्वं ग्रामकुक्कुटम्।
सारसं रज्जुवालं च दात्यूहं शुकसारिके॥

मनुः— ५-१२

ग्रामचटक इति लक्ष्मीधरविज्ञानेश्वरौ याज्ञ०—१-१७४

**कलशः**—(१) घटः।

(२) परिमाणविशेषः द्रोणपर्यायः खारीशब्दे द्रष्टव्यः।

**कला**—(१) वृद्धिः सम्प्रति सुध इति प्रसिद्धा।

कलोपजीविनश्चैव ब्रह्मविक्रयिणस्तथा॥

इति हेमाद्रौ यमः।

कलया सुवर्णवृद्ध्या जीवतीति कलोपजीवी इति हेमाद्रि, परिशेष—४६०

कृत्वोद्धारमदत्वा यो याचितस्तु दिशं व्रजेत् ।
इत्यस्य व्याख्याने उद्धारोऽत्र कलामव्यवस्थाप्य
गृहीतं धनमिति विवादरत्नाकरे —१५
(२) चन्द्रस्य षोडशभागैकभागः ।
अमादिपौर्णमास्यान्ता या एव शशिनः कला ।
तिथयस्ताः समाख्याता षोडशैव वरानने ॥
इति कालदीपे ।

(३) मुहूर्तस्य त्रिंशत्तमो भागः ।
निमेषा दश चाष्टौ च काष्ठा त्रिंशत्तु ताः कलाः ।
त्रिंशत्कला मुहूर्तः स्यादहोरात्रं तु तावतः ॥
मनुः—१-६४

कलायः— कलायः हविष्यद्रव्यत्वेन भविष्योत्तरे प्रदर्शितः ।
हैमन्तिकं सितास्विन्नं धाना मुद्गा यवास्तिलाः ।
कलाय कङ्गुनीवारा वास्तुकं हिडमोचिका ॥ इत्यादिना
कलायः चणकः खुड़िआचणा इति गदाधरराजगुरुः ।
कुलित्थइति पुरुषार्थचिन्तामणौ—२००
कलाया मटार इति प्रसिद्धा कुलित्थो इति केचित
इति आचारेन्दौ
कलायस्तु सतीनकः हरेणुखण्डिकौ चास्मिन् ।
इत्यमरः—२-६-१६
कलायस्त्रिकटः प्रोक्तः सतीनो वर्तुलो मत इति
व्याख्यासुधायां व्याडिः —२५२

कलिः—(१) चतुर्थं युगम् ।
तच्च नरमानेन द्वात्रिंशत्महस्राधिकलक्षचतुष्टयवर्षात्मकम् ।
मनुः— १-७०

यस्मिन् दिने हरिर्यातो दिवं संत्यज्य मेदिनीम् ।
तस्मिन् दिने ऽवतीर्णोऽयंकालकायः कलिः किल ॥
ब्रह्म पु०—२१२-८
माघस्य पूर्णिमायां तु घोरं कलियुगं स्मृतम् ॥
इति कालसारोद्धृतब्राह्मे ।
(२) प्रमादी राजा ।
राज्ञः प्रमाददोषेण दस्युभिः परिमुष्यताम् ।
अशरण्यः प्रजानां यः स राजा कलिरुच्यते ॥
महाभा० राजधर्म—१२-२६
(३) कलहः ।
दुःखासिका कलिर्भेदश्छिद्रपीड़ा परस्परम् ।
प्रतिकूल कलत्रस्य द्विदारस्य न संशय ॥
इति स्मृतिचन्द्रिका । व्यवहार—५८४

**कलिङ्गम्**—चलणाफलमितिगदाधरराजगुरुः ।
कलिङ्गं श्राद्धे वर्जयेत् । तत् प्रमाणं कपालशब्दे
द्रष्टव्यम् ।

**कलिलम्**– (१) कालुष्यमिति शंकराचार्याः ।
यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।
तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥
भगवद्गीता—२-५२

पैठीनसिश्च—
भुक्त्वा क्षुत्वा च सुप्त्वा च वासोविपरिधाय कलिल-
काशश्वासागमे च रथ्याध्वत्वरश्मशानाक्रान्तेष्वाचान्तः
पुनराचामेत् । अत्र कलिलं कठिनः श्लेष्मा
इत्याह्निकप्रकाशे मित्रमिश्रः—१०८

कठिनं श्लेष्मेति नित्याचारप्रदीपे—२७५

(२) गहनमिति हलायुधः ।

"कलिलं गहनं प्रोक्तमिति"। का०—४

कलिलं गहनं समे इत्यमरः—३-१-८५

**कलोपजीवी**—कुसीदी ।

कलया सुवर्णवृद्ध्या जीवति इति कलोपजीवी

इति हेमाद्रिः—४६०

"कलोपजीविनश्चैव ब्रह्मविक्रयिणश्च ये"। इति यमः

श्राद्धप्रकाशे तु कनोपजीवीति पाठः ।

**कल्कः**— (१) पिष्टद्रव्यम् ।

द्रव्यमात्रं शिलापिष्टं शुष्कं वा जलमिश्रितम् ।
तदेव सूरिभिः पूर्वैः कल्क इत्यभिधीयते ॥

इति श्राद्धकल्पद्रुमे ।

स्नपनं तस्य कर्त्तव्यं पुण्येऽह्नि विधिपूर्वकम् ।
गौरसर्षपकल्केन साज्येनोत्सादितस्य च ॥

याज्ञ०—१-२७७

(२) दम्भः ।

"कल्कोऽस्त्री शमलैनसोः । दम्भेऽपि" अमरः-३-३-१३

अकल्कको निरारम्भो लघ्वाहारो जितेन्द्रियः ।
विमुक्तः सर्वसङ्गैर्यः स तीर्थफलमश्नुते ॥

इति कालसारोद्धृतमहाभारते ।

(३) पापम् ।

तपो न कल्कोऽध्ययनं न कल्कः
स्वाभाविको वेदविधिर्न कल्कः ।
प्रसह्य वित्ताहरणं न कल्कः
तान्येव भावोपहतानि कल्कः ॥

महाभा० आदि० अनु—१-२७५

पद्यमिदं कल्पतरौ यमस्मृतेरिति पठितम् । तत्र कल्कः पापमिति लक्ष्मीधरः ॥

कल्प० गार्ह०—३३१

(४) दाम्भिकः ।

न कल्को न कुहको भवेत् ॥ वसिष्ठः—६-४०

**कल्पः**—(१) वेदाङ्गविशेषः ।

स च प्रत्यक्षवेदमूलकोऽनुष्ठानप्रतिपादको ग्रन्थविशेषः।

(२) कल्पो विधिः ।

नास्याचमनकल्पो विद्यते । गौतम०—१-२-५

एष वै प्रथमः कल्पः प्रदाने हव्यकव्ययोः ।

मनुः—३-१४७

अथातो ध्रुवाश्वकल्पं व्याख्यास्यामः ।

मानव-गृ०—२-६-१

(३) सृष्टिकालः ब्रह्मणः दिवसभागः ।

चतुर्युगसहस्रं च कल्पः ॥ विष्णुः—२०-१२

कल्पते जगदस्मिन् काले इति तत्र वैजयन्त्यां नन्दपण्डितः।

चतुर्दश विनश्यन्ति कल्पे कल्पे सुरेश्वराः ।
सर्वलोकप्रधानाश्चमनवश्च चतुर्दश ॥

विष्णुधर्मोत्तर पु०—२-७८-४

(४) कल्पः आधिव्याधिरहित इति विज्ञानेश्वरः

याज्ञ०—१-२८

नीरोग इति मयूखे ।

(५) ग्रन्थः ।

"न कल्पमात्रे" इति पारस्कर- गृ०—२-६-७

कल्पमात्रे ग्रन्थमात्रे मन्त्रे वा ब्राह्मणे वा

इति हरिहरगदाधरौ॥

कल्पकः— नापितः ।

कल्पक प्रसाधकाः स्नानशुद्धवस्त्रहस्ताः समुद्रमुपकरण-
मन्तर्वंशिकहस्तादादाय परिचरेयुः ॥

कौट०—१-२१-१२

कल्पनम्—छेदनम् ।

क्लृप्तकेशनखश्मश्रुर्दान्तः शुक्लाम्बरः शुचिः
स्वाध्याये चैव युक्तः स्यान्नित्यमात्महितेषु च ॥

मनुः—४-३५

कल्पादिः—कल्पारम्भदिवसः । नागरखण्डे—

अथ कल्पादयो राजन् कथ्यन्ते तिथयः शुभाः ।
यासु श्राद्धे कृते तृप्तः पितृणामक्षया भवेत् ॥
चैत्रशुक्लप्रतिपदि श्वेतकल्पः पुराभवत् ।
तस्य शुक्लत्रयोदश्यामुदानः समजायत ॥
कल्पस्तु नारसिंहाख्यःकृष्णायां प्रतिपद्यभूत् ।
अथकृष्णत्रयोदश्यां गौरीकल्पोऽप्यकल्पत ।
वैशाखस्य तृतीयायां शुक्लायां नीललोहितः ।
चतुर्दश्यां तु शुक्लायां प्रवृत्तो गरुडाभिधः ॥
समानस्तु द्वितीयायां कृष्णायामुदपद्यत ।
माहेश्वरं चतुर्दश्यां कृष्णपक्षे समागमत् ॥
ज्येष्ठशुक्लतृतीयायां वामदेवस्य सम्भवः ।
पौर्णमास्यां तु तस्यैव कौर्मः प्रववृते नृप ॥
कृष्णपक्षे तृतीयायामाग्नेयः समजायत ।
पितृकल्पस्त्वमावास्यां तस्यैवाश्रित्य पप्रथे ॥
शुचौ शुक्लचतुर्थ्यां तु कल्पो राथन्तरोऽभवत् ।
तस्यां तस्यैव कृष्णायां सोमकल्पः समापतत् ।
श्रावणे शुक्लपञ्चम्यां रौरवः समवर्त्तत ॥
तस्यैव कृष्णपञ्चम्यां मानवः समपद्यत ॥
षष्ठीं प्रोष्ठपदे शुक्ले प्राप्यप्राणाभिधोऽभवत् ।
सितेतरायां षष्ठ्यां तु तथासीत्पुष्कराह्वयः ॥
बृहत्कल्पस्तु सप्तम्यां नभसः प्रत्यपद्यत ।
षष्ठ्यां प्रोष्ठपदेऽष्टम्यां शुक्लायामाश्विनस्य तु ॥
कृष्णायामपि वैकुण्ठः प्रविवेश विशांपते ॥
कार्त्तिकस्य सिताष्टम्यां कल्प कन्दर्पसंज्ञकः ।
असितायां पुनर्जज्ञे लक्ष्मीकल्पस्य कल्पना ॥
मार्गशुक्लनवम्यां च कल्पः सद्योऽन्वपद्यत ।
असितायां च सावित्रीकल्पः प्रारम्भमभ्यगात् ॥
पुष्ये दशम्यां शुक्लायामीशानः प्रादुरास ह ।
असितायामघोरस्य कल्पस्योपक्रमोऽभवत् ॥
एकादश्यां तु शुक्लायां माघे व्यानः प्रजज्ञिवान् ॥
तस्यामेव तमिस्रायां वराहः प्राप भूपते ॥
सारस्वतस्तु द्वादश्यां शुक्लायां फाल्गुनस्य तु ।
कृष्णायामपि वैराजो विरराज महामते ॥
इति त्रिंशदमी कल्पास्तिथयः परमेष्ठिनः ।
आरम्भस्तिथयस्तेषां मुक्ताः पुण्यातमा मया ॥

मत्स्यपुराणे तु अन्यास्तिथयः कल्पादित्वेनोक्ताः यथा-

ब्रह्मणो हि दिनादिर्यः कल्पस्यादिः प्रकीर्त्तितः ।
वैशाखस्य तृतीयायां कृष्णायां फाल्गुनस्य च ।
पञ्चमी चैत्रमासस्य तस्यैवान्त्या तथा परा ।
शुक्लात्रयोदशी माघे कार्त्तिकस्य तु सप्तमी ।
नवमी मार्गशीर्षस्य सप्तैवेताः स्मराम्यहम् ॥
कल्पानामादयो ह्येता दत्तस्याक्षयकारका ।

इति वीरमित्रोदय—समयप्रकाश—१८३

कल्मम्— अपरिसमाप्तं कर्म ।

विपरीतं तु यत्कर्म तत्कल्मं कवयो विदुः ।

इति पातञ्जलमहाभाष्ये—१-४-३

**कल्माषः**—(१) सुगन्धशालिधान्यम् ।

इति राजनिघण्टुः व०—१६

(२) दर्भविशेषः ॥ कल्माषाः चित्रा इति मित्रमिश्रः ।
हरिता यज्ञियादर्भाः पीतकाः पाकयज्ञियाः ।
समूलाः पितृदैवत्याः कल्माषा वैश्वदेविकाः

इति कात्यायनः । परिभाषाप्रकाशे-६३

**कल्यम्**—(१) प्रभातकालः ।
प्रत्युषोऽहर्मुखं कल्यमुषः प्रत्युषसी अपि ।

इत्यमरः—१-४-७

ततः कल्यं समुत्थाय कुर्यान्मैत्रं नरेश्वर ।
नैऋत्यामिषुनिक्षेपमतीत्याभ्यधिकं भुवः ॥
इति विष्णुपुराणे, आह्निकप्रकाशे—२२
प्रकाशितविष्णुपुराणे तु श्लोकोऽयं न दृश्यते ।
प्रयतः कल्यमुत्थाय स्नातो हुतहुताशनः ।
कुर्वीत प्रणतो भक्त्या गुरूणामभिवादनम् ॥

इति शङ्खः—१५२

कल्यं प्रभातं क्लीवं स्यात् कल्यो वाक्श्रुतिवर्जिते ।
सज्जनीरोगदक्षेषु कल्याणवचनेऽपि च ।
उपायवचनेऽपि स्यात् त्रिषु मद्ये तु योषिति ॥

इति व्याख्यासुधायाम् ॥

**कल्यः**—(१) सज्जः ।
"कथयस्व कथामेतां कल्याः स्म श्रवणे तव" इति
(२) कल्यः आधिव्याधि रहितइति विज्ञानेश्वरः
कृतज्ञाद्रोहिमेधाविशुचिकल्यानसूयकाः ।
अध्याप्या धर्मतः साधुशक्ताप्तज्ञानवित्तदाः ॥

याज्ञ०—१-२८

(३) अहर्मुखम् ।
कल्यमुत्थाय यो गव्यघृते मुखमथात्मनः ।
पश्यते सजहात्येव कृत्वा पापमहर्निशम् ॥
अलक्ष्मीर्नश्यते चास्य क्षिप्रमेषा करीषिणी ॥

विष्णुधर्मोत्तरे—३-३०७-७१-७२

**कल्याणम्**—(१) प्रायश्चित्तम् ।
उद्गच्छन् यद्वदादित्यस्तमः सर्वं व्यपोहति ।
तद्वत्कल्याणमातिष्ठन् सर्वं पापं व्यपोहति ॥
इति प्रायश्चित्तविवेके अङ्गिराः ।
पापं चेत् पुरुषः कृत्वा कल्याणमभिपद्यते ।
मुच्यते पातकैः सर्वैर्महाभ्रैरिव चन्द्रमाः ॥
(२) विवाहादुत्सव इति मेधातिथिः ।
उत्सव इति मन्वर्थविवृतिः ॥
प्रातिवेश्यानुवेश्यौ च कल्याणे विंशति द्विजे ।
अर्हावभोजयन् विप्रो दण्डमर्हति माषकम् ॥

मनुः—८-३९२

(३) कृष्णपक्षचतुर्थीदिनभागः ॥ कालमाधवः —२
प्रस्तुतं विष्टुतं संस्तुतं कल्याणं विश्वरूपं शुक्रममृतं तेजस्वि तेजः समिद्धं अरुणं भानुमत् । मरीचिमत अभितपत तपस्वत एतानिकृष्णपक्षदिवस नामानि इति सावित्रचयने तैत्तिरीयैः पठितानि ॥

**कल्याणः**—(१) भद्रः ।
एकोऽहमस्मीत्यात्मानं यत्त्वं कल्याण मन्यसे ।
नित्यं स्थितस्ते हृद्येषः पुण्यपापेक्षिता मुनिः ॥

मनुः—८-९१

(२) शुक्लपक्षदिवाभागस्य पञ्चदशो मुहूर्त्तः ।

कालमाधवः—२

कवकम्—(१) छत्राकम् ।

चैत्यवृक्षस्थितं पिण्डोपमं कुमुदकलिकाकृति छत्राकसदृशं शुक्लं शिथिलावयवमित्याचारसारे गदाधरराजगुरुः।भूमौ छत्राद्याकारेण उत्पन्नं शिलीन्ध्रशब्दवाच्यं कवकमितिमाधवाचार्याः ॥

परा०—११—६

छत्राकसदृशं कुमुदकलिकाकृति इति लक्ष्मीधरः

नियत—२७७

छत्राकमिति कुल्लुकः । मनुः—५-५

शुष्काणि भुक्त्वा मांसानि भौमानि कवकानि च ॥

इति मनुः—२१-१५५

मनुवचनात् कवकं छत्राकमिति प्रतीमः ।

(२) कवकं राजसर्षपाख्यं शाकमिति विज्ञानेश्वरः ।

याज्ञ०—३-२८६

अत्र कवकपदेन शाकसाधर्म्यात् कोविवाच्यानां ग्रहणं युज्यते न वेति सुधीभिर्विभाव्यम् ।

कवरः— केशपाशः इति देवीभागवतव्याख्याने ।

कवलग्रहः— कवलग्रहः कर्षापरपर्यायः खारीशब्दे द्रष्टव्यः ।

कवातिर्यङ्— नात्यन्तमभिमुखता नात्यन्तपराङ्मुखता इति गोविन्दस्वामी ।

हुत्वा प्रयताञ्जलिः कवातिर्यङ्ङग्निमुपतिष्ठेत ॥

बौधा०—२—१—३४

कविः—(१) मेधावी ।

अध्यापयामास पितॄन् शिशुराङ्गिरसः कविः ।

मनुः—२—५१

आत्मन् पश्यन् सर्वभूतानि न मुह्येच्चिन्तयन् कविः ॥

आप०—१-२३-१

(२) कान्तदर्शी ।

त्वमग्ने सर्वभूतानामन्तश्चरसि पावक ।

साक्षिवत् पुण्यपापेभ्यो ब्रूहि सत्यं कवे मम ॥

याज्ञ०—२-१०४

(३) वृक्षविशेषः ।

कवौ कालिकां बिल्वे शिवाम् अशोके शोकरहितां इत्यादि निर्णयसिन्धौ ।

कव्यम्— पितॄणामन्नम् ।

ज्ञानोत्कृष्टाय देयानि कव्यानि च हवींषि च ॥

नहि हस्तावसृग्दिग्धौ रुधिरेणैव शुद्ध्यतः ॥

मनुः—३—१३२

कशा— अश्वादिताडनी, प्रतोद इति यावत् ॥

अमरः—२-१०-३१

कशिपुः— (अस्त्रियाम्)—कार्पासपूर्णमासनं मृदुतरं कशिपुपदवाच्यम् इति श्रौतपदार्थनिर्वचने । पुंसि च पाठः ।

सत्यां क्षितौ किं कशिपोः प्रयासैः ।

श्रीमद्भागवते—२-२-४

कशिपु त्वन्नमाच्छादनं द्वयम् ॥ अमरः—३-३-१३०

कशेरुः— जलकन्दविशेषः ।

भद्रमुस्ताख्यः इति स्मृतिचन्द्रिका श्राद्धकाण्डे—२०४

कशेरु भद्रमुस्ता इति पराशरमाधवे—श्राद्ध-७०४

कश्मलम्—(१) मलः ।चतुर्विधामेध्यपरिगणने देवलः ।

मानुषास्थिशिरा विष्ठा रेतोमूत्रार्त्तवानि च ।

कुणपः पूयमित्येतत् कश्मलं समुदाहृतम् ॥

इति नित्याचारप्रदीपे

(२) मूर्च्छाः ।

कश्मलं मूर्च्छा इति नीलकण्ठः ॥

महाभा० विरा०—१२-१७

उपाशाम्यद् रजो भौमं रुधिरेण प्रसर्पता —१६

कश्मलं चाविशद्घोरं निर्मर्यादमवर्तत —१७

भगवद्गीतायां च—

अनार्यजुष्टमस्वर्ग्यमकीर्त्तिकरमर्जुन ॥

**कषायः**—(१) सुराव्यतिरिक्तं मद्यमिति हरदत्तः ।

अनार्य्या शयने विभृद् ददद्वृद्धिं कषायपः ।

अब्राह्मण इव वन्दित्वा तृणेष्वासीत पृष्ठतप इति ।

आप०—१-६-२७-१०

(२) कषायाः मलाः कामादय इति श्रीधरस्वामी ।

श्रीमद्भागवते—१-६—२२

अविपक्वकषायाणां दुर्दर्शोऽहं कुयोगिनाम् ॥

(३) बिभीतकादिः ।

शुक्तानि च कषायांश्च पीत्वा मेध्यान्यपि द्विजः ।

तावद् भवत्यप्रयतो यावत्तन्न व्रजत्यधः ।

मनुः—११-१५३

**कपेरुः**— पल्वलेषु रोमशः कन्दः सेरुनाम्ना प्रसिद्ध

इति हेमाद्रिः स च कसेरुरिति पठति ।

केशूर इति भाषा इति शब्दकल्पद्रुमे ।

**कसेरुः**—खर्जूरी तालकन्दश्च मृणालं पद्मकेशरम् ।

नारिकेलं कसेरुं च नोच्छिष्टं मनुरब्रवीत ॥

इति विद्याकरवाजपेयिधृतवचनमिति मित्रमिश्रः ॥

अत्र कपेरु इति पाठोऽपि अस्ति। विशेषस्तत्र द्रष्टव्यः ॥

**कांस्यम्**— सङ्करधातुविशेषः वङ्गताम्रभवः ।

वङ्गताम्रभवं कांस्यं पित्तलं ताम्ररङ्गजम् ॥

इति शुक्रनीतिसारे—४-८७

मणिमुक्ताप्रवालानां ताम्रस्य रजतस्य च ।

अयः कांस्योपलानां च द्वादशाहं कणान्नता ॥

इति चौर्यप्रायश्चित्ते मनुः—११-१६७

**कांस्यपात्रम्**— परिमाणविशेषः ।

आढकपर्यायः (खारीं पश्यन्तु)

**काकः**— काकवत् क्षतोद्वर्त्तनेन दुःखितस्यापि दुःखप्रदः

भ्रूणहा गुरुतल्पी च यश्च स्यात्पानपो द्विजः ।

अतितीक्ष्णश्च काकश्च नास्तिको वेदनिन्दकः ॥

स्रुवप्रग्रहणो व्रात्यः कीनाशश्चात्मवानपि ।

रक्षेत्युक्तश्च यो हि स्यात्सर्वे ब्रह्महरिः समाः ॥

महाभा० उद् – ३५-४७-४८

**काकचिकिकिष्कुः**— परिमाणविशेषः ।

**काकजंघा**—लताविशेषः । चिञ्चाशब्दो द्रष्टव्यः ।

**काकणी**— कपर्द इति श्रीमूला कौट०—३-२०-८

**काकपदम्**—यच्च काकपदाकीर्णं तल्लेख्यं कूटतामियात्

विन्दुमात्राविहीनं यत्सहितं महितं च तत् ॥

इति पराशरमाधवः व्यवहारकाण्डे– ९१

**काकवन्ध्या**—सकृद्गृहीतगर्भा स्त्री ।

गर्भस्तम्भकरी नारी काकवन्ध्या प्रजायते ॥

शङ्खस्मृतिः—३-९८

**काकमाची**—लताविशेषः ।

केशवृद्धिकरणे काकमाचीफलमणिं बध्नाति इति

कौशिक गृ० सू० टीकायाम्—३१-२८

**काकयाक्**— जातिविशेषः ।
चौर्य्यात् काकवचो ज्ञेयश्चाश्वानां तृणवाहकः ।
शूद्राच शूद्रायां चौर्येण ॥ औशनसस्मृतिः—४८

**काकातकः**— कृष्णगुंजा इति संस्कारप्रकाशे—१८५
काकादन्यामेचकशतन्याः कोशातक्याः बृहत्याः
काकातकस्य मूलानि पेषयित्वा उपलेपयेद्देशं
यस्मिन् जायेत रक्षगामपहत्यै इति सांख्यायनगृह्ये

**काकादनी**— काकजङ्घा इति मित्रमिश्रः ।
लताविशेषः संस्कार प्रकाशे—१८४
श्वेतखुंजा इति राजनिर्घण्टुः ।
गुंजा इति शब्दरत्नावली । कालिआकड़ा इति
शब्दकल्पद्रुमे । काकादन्या मेचकशतन्या इत्यादि
काकातकशब्दे द्रष्टव्यम् ॥

**काकिणी**— वराटकानां दशकद्वयं यत् सा काकिणी इति
लीलावत्याम् व्यवहारमयूखे नीलकण्ठश्च ।
तस्मात्पणं काकिणीं वा फलपुष्पमथापि वा ।
प्रदद्यात् दक्षिणां यज्ञे यथा स सफलो भवेत् ॥
इति शुद्धितत्त्वे बृहस्पतिः ।

**काकोलः**—(१)द्रोणकाकः इति विज्ञानेश्वरः याज्ञ०-१-१७४
कृष्णकाकः इति हेमाद्रिः ॥
द्रोणकाकस्तु काकल इत्यमरः—२-५-२१
बकं चैव बलाकां च काकोलं खंजरीटकम् ।
मत्स्यादान् विड्वराहांश्च मत्स्यानेव च सर्वशः ॥
इति अभक्ष्यप्रकरणे मनुः—५-१४

(२) नरक विशेषः ।
संघातं च सकाकोलं कुड्मलं पूतिमृत्तिकम् ।
मनुः ४-८९
काकोलः यत्र काकैः भक्ष्यते इति प्रायश्चित्त–विवेके
शूलपाणिः ।

**काचम्**— काचं कचुवृक्षफलमिति निर्णयसिन्धौ—२६४
प्रमाणं कपालशब्दे द्रष्टव्यम् ॥

**काचः**— काच इति प्रसिद्धं वस्तु येन आदर्शादयो
निर्मीयन्ते ।
ताम्रवृत्तकंसकाचदन्तभाण्डादीनां स्थूलकद्रव्याणा-
मष्टचत्वारिंशत्पणावरः षण्णवतिपरः पूर्वः साहसदण्डः
कौट०—३-१७-८

**काजम्**— वास्यादिवदुपकरणविशेषो दारुमय इति
हरदत्तः । तस्य द्वन्द्वं द्रव्याणामेक उपदिशन्ति
पाकार्थ-भोजनार्थं वासि परशुदात्र-काजानाम् ।
आप०—२-६-२२-१५

**कांचनारः**— कञ्चनवृक्ष इति प्रसिद्धः ।
अपटा इति आचारेंदु परिशिष्टे—२
कोविदार वृक्ष इति राजनिर्घण्टुः । कचनार इति
हिन्दीभाषा इति शब्दकल्पद्रुमे ।

**कांजिकम्**— आरनालम् । कांजी इति प्रसिद्धम् ।
वर्जयेद्गंजनं श्राद्धे कांजिकं पिण्डमूलकमिति शङ्खः

**काञ्जिका**— काञ्जी इति प्रसिद्धा ।

कुण्डिका सफला येषु गृहेषु स्थापिता भवेत् ।
तस्यास्तु काञ्जिका ग्राह्या नेतरस्याः कदाचन ॥

इति मिताक्षरा १-२८६

**काणः**— एकचक्षुविकलः । एकाक्ष इति यावत् ।

स श्राद्धे वर्ज्यः ।

खञ्जो वा यदि वा काणो दातुः प्रेष्योऽपि वा भवेत् ।
हीनातिरिक्तगात्रो वा तमप्यपनयेत् पुनः ॥

मनुः ३-२४२

श्रुतिः स्मृतिश्च विप्राणां नयने द्वे प्रकीर्तिते ।
काणः स्यादेकहीनोऽपि द्वाभ्यामन्धः प्रकीर्तितः ॥
इति कुलोचितधर्मशिक्षायामत्रिः १-३४६ ।

**काण्डम्**— (१) कुलम् ।

स्वकुलं पृष्टतः कृत्वा यो वै परकुलं व्रजेत् ।
तेन दुश्चरितेनासौ काण्डपृष्ठो न संशयः ॥
इति यमहारितौ व्यवहारकल्पतरौ —७१८

(२) बाणः । (३) वर्गः (एकजातीयसमवायः)

बर्हिषत्सु महाभागो हविर्धानिः प्रजापतिः ।
क्रियाकाण्डेषु निष्णातो योगेषु च कुरूद्वह ॥

श्रीमद्भागवते—४-२४-८

(४) दण्डः ।

पृषतांवरत्राकाण्डेना हन्ति इति कात्यायनश्रौतसूत्रे ८-७-२७

वरत्राकाण्डेन परांदण्डेन इति कर्कः ।

(५) वृक्षाणां शाखा ।

उद्भिज्जाः स्थावराः सर्वे बीजकाण्डप्ररोहिणः ।
ओषध्यः फलपाकान्ता बहुपुष्पफलोपगाः ।

मनुः— १-४६

काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु ।

इत्यमरः ३-३-४१

काण्डः स्तम्बे तरुस्कन्धे बाणेवसरनीरयोः ।
कुत्सिते वृक्षभिन्नाडीवृन्दे रहसि न स्त्रियाम् ॥

इति मेदिनी १३-३

**काण्डपृष्ठः**—(१) कुलत्यागी ।

स्वकुलं पृष्ठतः कृत्वा यो वै परकुलं व्रजेत् ।
तेन दुश्चरितेनासौ काण्डपृष्ठो न संशयः ॥
कुलं काण्डमिति ख्यातम् इति यमहारीतौ व्यवहार कल्पतरौ—७१८

(२) काण्डपृष्ठः शस्त्रोपजीवी इति हेमाद्रिः ।

(३) यः ब्राह्मणः आपदि क्षत्रियवृत्तिमाचर्य गतायामप्यापदि तां वृत्तिं न त्यजति स काण्डपृष्ठः ।

तस्यामेव तु यो वृत्तौ ब्राह्मणो रमते सदा ।
काण्डपृष्ठश्च्युतोमार्गादपांक्तेयः प्रकीर्तितः ॥
स्त्री-पूर्वा काण्डपृष्ठाश्च यावन्तो भरतर्षभ ।
अजपा ब्राह्मणाश्चैव श्राद्धे नाहन्ति केतनम् ॥

महाभा०— १३-२३-२२

(४) शूद्रापुत्रः ।

आपद्गतोऽभ्युपगतो यश्च स्याद् वैष्णवीसुतः ।

एवं ते मनुना प्रोक्ताः काण्डपृष्ठास्त्रयस्तथा ॥

व्यवहारकल्पतरुः-६१८

कादम्बः— कृष्णवर्णहंसविशेषः वतक इति प्रसिद्धः ।

कानीनः—अपरिणीतायाः दुहितुः पुत्रः ।

स तु मातामहस्य पुत्रो भवतीति याज्ञवल्क्यः-२-१२६

कानीनः कन्यकाजातो मातामहसुतोमतः ।

वोढुः पुत्र । इति मनुः ६-१७२

पितृवेश्मनि कन्या तु यं पुत्रं जनयेद्रहः ।

तं कानीनं वदेन्नाम्ना वोढुः कन्या समुद्भवम् इति

विष्णुरपि स च पाणिग्राहस्य इति १५-१२

तत्र यदि कन्या जातविवाहा तर्हि कानीनः ।

वोढुः पुत्रः अनाथा मातामहस्य इति व्यवस्था ।

मातामहपुत्रत्वं तस्य मातामहधनाज्जीवनार्थमिति

बोद्धव्यम् ।

कान्ता— कृष्णैकादशीरात्रि ॥ कालमाधवः—२

कान्तारम्— अरण्यम् इति मिताक्षरा याज्ञ० २-३८

दुर्गमवर्त्म इति नित्याचारे नरसिंहवाजपेयो

कान्तारे दुर्गममार्गे महारण्ये चेति मह।भारत-

व्याख्यायाम्, विरा० पा०-६-३२

अटव्यां दुर्गकान्तारे सागरे गहने गिरौ ।

ये स्मरिष्यन्ति मां राजन् यथाहं भवता स्मृता ॥ इति

कान्तारगाः-ये वाणिज्याद्यर्थम् अतिगहनमरण्यं प्रविशन्ति ।

कान्तारगास्तु दशकं सामुद्रा विंशकं शतम् ।

दद्यु र्वा स्वकृतां वृद्धिं सर्वे सर्वासु जातिषु ॥

याज्ञ० २-३८

कापटिकः— गुप्तचरविशेषः । परमर्मज्ञः प्रगल्भच्छात्रः

कपटव्यवहारित्वात्कापटिक इति कुल्लूकः ।

मनुः ७-१५४

परमर्मज्ञः प्रगल्भश्छात्रः कापटिकः । कौट० १-११-२

कापालम्— अवैदिकशास्त्रविशेषः ।

कापालं पञ्चरात्रं च यामलं वाममार्हतम् ।

एवंविधानि चान्यनि मोहनार्थानि तानि तु ॥

इति परिभाषाप्रकाशोद्धृते कौर्मे परिभा०—२३

कापिलस्नानम्— अशिरस्कं भवेत्स्नानं स्नानाशक्तौ

तु कर्मिणाम् ।

आर्द्रेण वाससा वापि मार्जनं दैहिकं विदुः ॥

इति जवालः हेमाद्रि-श्राद्ध०—८५५

आर्द्रेण कर्पटेनाङ्गशोधनं कापिलं स्मृतम् ।

इति बृहस्पतिः हेमाद्रिश्राद्धकल्पे—८-५५

**कापोतवारि**— तीर्थजलम् कपोतवारितीर्थजलमिति

पूजाप्रकाशे मित्रमिश्रः ।

व्यक्ताव्यक्ताकृतिं कृत्वा हेमरूप्यमयीं शिवाम् ।

त्रिशूले पूजयेद्वत्स स्नाप्यकापोतवारिणा ॥

इति तत्र देवीपुराणे ।

**कापोता**— वृत्तिविशेषः ।

अवारितस्थानेषु पथिषु वा क्षेत्रेषु वा अप्रतिहता-वकाशेषु वा यत्र यत्रौषधयो विद्यन्ते तत्र तत्राङ्गुलिभ्या मेकैकामोषधिमुंछयित्वा संदर्शनात् । कपोतवदिति कापोता ॥ इति बौधा०ः—३-२-१२

**कामः**— (१) भोगः ।

अर्थकामेष्वसक्तानां धर्मज्ञानं विधीयते ।

धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः ॥

मनुः—२-१३

(२) तृष्णा ।

ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते ।

संगात्संजायते कामः कामात्क्रोधोऽभिजायते ॥

भ० गीता २-६२

न जातु कामः कामानामुपभोगेन शाम्यति ।

हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते ॥

मनुः—२-९४ महाभा० आदि—७५-५०

(३) स्त्रीविषयकोऽभिलाषः ।

**कामकुलम्**— कामप्रधानं कुलम् सदाकामकुलं वर्ज्यमिति यमः

**कामचतुर्दशी**— चैत्रशुक्लचतुर्दशी ।

**कामचारिणी**— भर्त्तृशासनोल्लंघिनि स्त्री ।

भर्त्तृशासनोल्लंघिनी कामचारिणी इति प्रायश्चित्तेन्दुशेखरे ॥

भर्त्तुः शयनमुल्लंघ्य या चान्येषु प्रवर्त्तते ।

तस्या अन्नं न भोक्तव्यं विज्ञेया कामचारिणी ॥

अङ्गिरःस्मृतिः—११३

एतेन कामचारिणी व्यभिचारिणी ।

**कामत्रयोदशी**—चैत्रशुक्लत्रयोदशी ।

**कामदाता**—कृष्णत्रयोदशी रात्रिः ॥ कालमाधवः—२

**कामदुघा**— कृष्णाद्वादशी रात्रिः ॥ कालमाधव—२

**कामावसायिता**— ऐश्वर्यविशेषः । सा तु सत्यसंकल्पता इति शब्दकल्पद्रुमे ।

**काम्पिल्लः**— कम्पिला नाम नदी तस्याऽदूरे भवः देशविशेषः स च पांचालस्य दक्षिणांशे इत्यादि शब्दकल्पद्रुमे ॥ शङ्खलिखितवचनात् स देशो भारतस्य पूर्वभागे इति ज्ञायते । प्राक् सिन्धुसौवीरा-द्दक्षिणेन हिमवतः पश्चा'त् काम्पिल्यात् उदक् पारियात्रादनवद्यं ब्रह्मवर्चसमित्यादि परिभाषाप्रकाशे ५७

अम्बे अम्बिके अम्बालिके न मानयति कश्चन ।

ससस्त्यश्वकः सुभद्रिकां काम्पिल्लवासिनीम् ॥

काम्बोजः—(१) देशविशेषः । काबुल् इति ख्यातः ।
(२) व्रात्य क्षत्रियविशेषश्च मनुः —१०-४४
औड्रशब्दो द्रष्टव्यः

काम्या—कृष्णपक्षद्वादशीरात्रिः ॥ कालमाधवः—२

कायतीर्थम्— प्रजापतितीर्थम् । कनिष्ठाङ्गुलिमूलदेशः ।
अङ्गुष्ठमूलस्य तले ब्राह्मं तीर्थं प्रचक्षते ।
कायमङ्गुलिमूलेऽग्रे दैवं पित्र्यं तयोरधः ॥
मनुः—२-५६

कायदण्डः— अनीहता इति पराशर माधवेदक्षः ।
वाग्दण्डो मौनता प्रोक्ता कर्मदण्डस्त्वनीहता ।
मानसस्य तु दण्डस्य प्राणायामो विधीयते ॥
वाग्दण्डोऽथ मनोदण्डः कायदण्डस्तथैव च ।
यस्यैतेनिहिता बुद्धौ त्रिदण्डीति स उच्यते ॥
मनुः—१२-१०

कायसुन्दरप्रतिपत्—कार्तिकशुक्लप्रतिपत ।

कायस्थः—करणः यः राज्ञः लेखनादि कार्यं करोति ।
"कायस्थाः लेखकाः गणकाश्च" इति विज्ञानेश्वरः
चाटतस्करदुर्वृत्तमहासाहसिकादिभिः ।
पीड्यमानाः प्रजाः रक्षेत्कायस्थैश्च विशेषतः ॥
याज्ञ०— १-३३६

कायिकं पापम्— शरीरावयवैः कृतं पापम् ।
अदत्तानामुपादानं हिंसा चैवाविधानतः ।
परदारोपसेवा च शारीरं त्रिविधं स्मृतम् ॥
मनुः—१२-७

कायिका—वृद्धिविशेषः ।
(१) यत्र दोह्यवाह्यादिकायकर्मणा वृद्धिः शोध्यते सा कायिकेति कुल्लूकाभिप्रायः—८-१५३
दोह्य-वाह्यकर्मयुता कायिका समुदाहृता ॥
इति विवाद रत्नाकरे व्यासः ।
कालिका कायिका चैव कारिता च तथापरे ।
चक्रवृद्धिश्च शास्त्रेषु तस्य वृद्धिश्चतुर्विधा ॥२६
(२) कायाविरोधिनी शश्वत्पणपादादिकायिका
प्रतिमासं स्रवन्ती या वृद्धिः सा कालिका स्मृता-३०
नारदस्मृतिः—४-३०

काय मूलधनशरीरम् । शश्वत् पणतदर्द्धादिक्रमेण नित्यमुभाभ्यां व्यवस्थापिता सा नारद मतेनकायिका इति विवाद रत्नाकरे चण्डेश्वर । हलायुधस्तु "पणवाह्यातु कायिका" इति पाठं गृहीत्वा, पणस्य यावदवस्थानं तावत् शश्वत् वर्षसहस्रमपि उत्तमर्णेन वाह्यते प्राप्यते सा कायिकेति उक्तवान् । सकल निबन्धान्तरेषु पणार्द्धाद्येति पाठदर्शनात् मदुपेक्षितमिति तत्रैव चण्डेश्वरः—१०

कायोढा—प्राजापत्यविवाहेन विवाहिता स्त्री।
दैवोढाजः सुतश्चैव सप्त सप्त परावरान् ।
आर्षोढाजः सुतस्त्रींस्त्रीन् षट् षट् कायोढजः सुतः ॥
मनुः—३-३८

कारः—(१) प्रजाभ्यः करः इति नित्याचारप्रदीपे ।
त्रिविधं क्षत्रियस्यैव प्राहुर्वैशेषिकं धनम् ॥
युद्धोपलब्धं काराच्च दंडाच्च व्यवहारतः ॥
इति नारदः

(२) कण्टकयुक्तः अम्लरसविशिष्टः फलविशेषः

यस्मादत्यम्लवचनं मत्पुरः प्रोक्तवानसि।
देवानां शृण्वतां चापि तस्मात्त्वं श्राद्धकर्मसु ॥५७६
नित्याम्लयुक्तो वर्त्तस्व कार रेरेकृतीभव ॥

इति पूर्वाङ्गिरसे—५७७

किमेतत् फलं लिचु वा लेखन कोलि वा न ज्ञायते ॥

**कारणम्**—प्रत्यवस्कन्दनम् (उत्तरविशेषः) यथा सुवर्णशताभियोगे सत्यं गृहीतं प्रतिदत्तं चेति स्वरूपम्।

प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत् क्रियाम्।
मिथ्योक्तौ पूर्ववादी तु प्रतिपत्तौ न सा भवेत्॥

इति मिताक्षरायां हारीतः ॥ याज्ञ०—२-७

**कारयिता**— नापितः इति हेमाद्रिः-परिशेष—७८७

पशुपालक्षेत्रिककुलसंगतकारयितृपरिचारकाःभोज्यान्नाः

गौतमः— २-८-६

ऊर्ध्वं नापितः श्मश्रूणि कारयति इति हि दृश्यते। स च विप्राद् वैश्यायामनूढायां जात इति वृत्तौ हरदत्तः ॥

**कारवल्लीकः**-कारवल्ली क्षुद्रकलरा इति वैद्यकशब्दसिन्धुः।

पितॄणां पनसः श्रीमान् वल्लभः परमो महान्।
कारश्च कारवल्लीकः कलभः परमो महान्॥

**कारवेल्लः**—करला इति ख्यातः फलविशेषः।

कर्कोटशब्दो द्रष्टव्यः।

**कारस्करः**—देशविशेषः।

आरट्टान् कारस्करान् सौवीरान् वङ्गान् कलिङ्गान् प्रानूनानिति च गत्वा पुनस्तोमेन यजेत सर्वपृष्ठया वा

इति बोधायनः—१-१-२-१२

**कारा**—बन्धनगृहमिति विवादरत्नाकरे—पृ-६३४

सर्वत्र त्रयाणां वर्णानां धनहार-कारा-वधबंधाः

इति शङ्खलिखितौ

काराबन्धनमुच्यते इति हलायुधकोषे-का-३

**कारावरः**—चर्मकारः।

कारावरो निषादात्तु चर्मकारः प्रसूयते ॥

मनुः—१०-३६

**कारिता**—वृद्धिविशेषः, या वृद्धिः ऋणिना कृता।

वृद्धेर्वृद्धिश्चक्रवृद्धिः कारिता ऋणिना कृता।

इति मन्वर्थमुक्तावल्यां बृहस्पतिः। मनुः—८-१५३

वृद्धिः सा कारितानामाधमर्णेन स्वयं कृता ॥

नारदस्मृतिः—४-३१

ऋणिकेन तु या वृद्धिरधिका सम्प्रकीर्त्तिता।
आपत्कालकृता नित्यं दातव्या सा तु कारिता ॥

इति विवादार्णवसेतौ कात्यायनः।

**कारीरी**—वृष्ट्यर्थयागः।

कारीर्यां वृष्टिकामो यजेतेति च विहितेष्टिर्न कालविलम्बं सहते ॥ कालमाधवः— प्र-२

**कारुः**—(१) सूपकारादिः।

भिक्षुका वन्दिनश्चैव दीक्षिताः कारवस्तथा।
सम्भाषणं सहस्त्रीभिः कुर्य्युरप्रतिवारिताः॥

मनुः—५८-३६०

(२) कर्मरङ्गा इति वैद्यकशब्दसिन्धौः ।
ह्यः उत्कलेषु करमङ्गा इत्युच्यते ॥
पितृणां पनसः श्रीमान् वल्लभः परमो महान् ।
कारश्च कारवल्लीकः कारुकः कालिकः करत् ॥
इति पूर्वाङ्गिरसे—५६८
अत्रोक्तं कारुक एव शब्दसिन्धुस्थकारुः इति ज्ञायते ॥

कारुकः—शिल्पी ।
न साक्षी नृपतिः कार्य्यो न कारुककुशीलवौ ।
न श्रोत्रियो न लिङ्गस्थो न सङ्गेभ्यो विनिर्गतः ॥
इति मनुः—८-६५

कारुषः—व्रात्यात् वैश्यात् सवर्णायां जातः ।
वैश्यात्तु जायते व्रात्यात् सुधन्वाचार्य्य एव च ॥
कारुषश्च विजन्मा च मैत्रः सात्वत एव च ॥ इति
मनुः—१०-२३

कारूषः—करुपदेशवासी ।
तथापरान्ताः सौराष्ट्रा शूराभीरास्तथार्बुदाः ।
कारूषा मालवाश्चैव पारिपात्रनिवासिनः ॥
विष्णुपुराणे—२-३-१६

कारोतरः—सुरापावनचालनी इति महीधरः ।
द्रवद्रव्यपावनीचालनी इति वक्तुं शक्यते ।
अन्तर उत्तरवेद्या रूपं कारोतरो भिषक् ॥
शुक्ल-यजुः—१९-१६

कार्त्तान्तिकः—सामुद्रिकः ।
कार्त्तान्तिकः स्त्रीपुरुषादेर्लक्षणदर्शनेन अतीतानागतादेष्टा इति श्रीमूला ।
कार्त्तान्तिकनैमित्तिकमौहूर्तिकपौराणिकसूतमागधाः
पुरोहित पुरुषाः सर्वाध्यक्षाश्च साहस्राः ॥
कौट०—५-३-१३

कार्दमीषष्ठी— आषाढ़शुक्लषष्ठी ।
आरण्यषष्ठी द्रष्टव्या ॥

कार्पटीवेषः—ताम्रमुद्रा ताम्रकङ्कण काषायवस्त्रधारणमिति
पूजाप्रकाशे मित्रमिश्रः ।
विधाय कार्पटीवेषं ग्रामं कृत्वा प्रदक्षिणम् ॥
इत्यादि वायुपुराणे ।

कार्मान्तिकः— आकरादिकर्माधिकृतः पुरुषः ।
कुमार-कुमारमातृनायक-पौरव्यावहारिक-कार्मान्तिक-मन्त्रिपरिषद्राष्ट्रान्तपालाश्च द्वादश साहस्राः ”
कौट०—५-३-७

कार्मान्तिकः कृषिद्रव्यवनादिकर्मणि नियुक्त
इति श्रीमूला ।
सम्प्रति अपि जनाः कृषिकर्मद्रष्टारं कमारी
इति वदन्ति ॥

कार्मिकम्—कर्मणा चित्रेण निर्मितम् । यत्र निष्पन्ने पटे चक्रस्वस्तिकादिचित्रं सूत्रैः क्रियते तत् ॥
इति विज्ञानेश्वरः

कार्मिके रोमवद्धे च त्रिंशद् भागः क्षयो मतः ।
न क्षयो न च वृद्धिश्च कौशेये वाल्कलेषु च ॥
याज्ञ०—२-१८०

**कार्मिकः**— कर्मोपजीवी इति व्यवहारप्रकाशे ।

नौकामश्वं च धेनुं च लाङ्गलं कार्मिकस्य च ।
बलात्कारेण यो भुङ्क्ते दाप्यश्चाष्टगुणं दिने ॥

इति नारदः ।

**कार्यम्**— साध्यम् ।

कार्य्यं हि साध्यमित्युक्तं साधनं तु क्रियोच्यते ॥

इति व्यासः व्यवहारप्रकाशे—८२

**कायिकः**— कार्यार्थी अर्थी प्रत्यर्थी च ।

ये कार्यिकेभ्योऽर्थमेव गृह्णीयुः पापचेतसः ॥
तेषां सर्वस्वमादाय राजा कुर्य्यात् प्रवासनम् ॥

मनुः—७-१२४

**कार्यी**— अर्थी प्रत्यर्थी च ।

यस्य व्यवहाररूपं कार्यमस्ति ॥

तत्रासीनः स्थितो वापि पाणिमुद्यम्य दक्षिणम् ।
विनीतवेषाभरणः पश्येत कार्य्याणि कार्यिणाम् ॥

मनुः—८-२

**कार्षापणः**—ताम्रमयः कार्षिकः पणः, पलस्य चतुर्थो भागः

कार्षापणस्तु विज्ञेयस्ताम्रिकः कार्षिकः पणः ॥

मनुः—८-१३६

ताम्रकर्षकृता मुद्रा विज्ञेयः कार्षिकः पणः ।

इति स्मृतिचन्द्रिकायां बृहस्पतिः ।

नारदस्तु—

कार्षापणो दक्षिणस्यां दिशि रौप्यः प्रवर्त्तते ।
पणैर्निबन्धः पूर्वस्यां षोड़शैव पणाः स तु ॥
माषो विंशतिभागस्तु पणस्य परिकीर्त्तितः ।
पणस्तु षोड़शो भागो ज्ञेयः कार्षापणस्य तु ॥
काकिणी तु चतुर्भागो माषस्य च पणस्य च ।
पञ्चनद्याः प्रदेशे तु संज्ञेयं व्यावहारिकी ॥
कार्षापण प्रमाणं तु निबद्धमिह वै तया ।

अत्र कार्षापणो दक्षिणस्यां दिशि द्रविड़विषयादौ रूढ़ एक एव लौहैः कृतः रूपमान गणनायां यथेह दीनारकेण व्यवहारः प्रवर्त्तते । तत्र पणैः निबद्धः पूर्वस्यां प्राक् षोड़शभिः षोड़शपणं कार्षापणः कार्षापणसंव्यवहारे इति नारदभाष्ये—१६-११६

भाष्ये तु रूप्यस्थाने रूढ इति गृहीतः ।

पणो विंशतिमाषस्तु दिव्यादन्यत्र कीर्त्तितः ।
माषो विंशतिभागस्तु ज्ञेयः कार्षापणस्य तु ॥
काकिणी तु चतुर्भागो माषकस्य पणस्य च ।
पञ्चनद्याः प्रदेशे तु संज्ञेयं व्यावहारिकी ॥
कार्षापणोऽण्डिका ज्ञेया नाश्चतस्रस्तु धानकः ।
ते द्वादश सुवर्णास्तु दीनारश्चित्रकः स्मृतः ॥

इति सरस्वतीविलासे कात्यायनः

**कालः**— समयः तद्विभागश्च वर्षमासादिः ।

चिरक्षिपोपाधिना कलयति जगदिति कालः इति विग्रहः अतीतादिव्यवहारहेतुः काल इति नैयायिकाः। ते च कालस्य नित्यत्वं विग्रहराहित्यं च मन्यन्ते ॥ वैदिकास्तु कालस्य जन्यत्वं च स्वीकुर्वन्ति । तथा च वाजसनेयिनः समामनन्ति । सोकामयत, द्वितीयो मे आत्मा जायेतेति । स मनसा वाचा मिथुनं समभवत् ॥ तद्यद्रेत आसीत् सम्वत्सरोऽभवदिति ॥ नानाविधशक्तिमयी सा जनयति कालतत्वमेवादौ ॥

कालमाधवः प्र०—१

भाविभवद्भूतमयं कलयति जगदेष कालोऽत्त
इति माधवाचार्य्याः।
मनुरपि-कालं कालविभक्ताश्च नक्षत्राणि ग्रहं स्तथाः
१-२४
अयमेव कालः सम्वत्सरायनादिभेदभिन्न जन्यकाल एव ॥ अस्य कालस्य इतरस्य सकलस्यापि जगत्प्रपञ्चस्य सृष्टिस्थितिप्रलयकृत कालकालरुपी कालविशेषः परमेश्वर एव ॥ तथा च श्रुतिः।

श्वेताश्वेतर—६-१६
स विश्वकृद् विश्वविदात्मयोनि—
ज्ञःकालकालो गुणी सर्वविद्यः।
प्रधानक्षेत्रज्ञपति र्गुणेज्ञः
संसारमोक्ष स्थितिवन्धहेतुः ॥ इति

विष्णुधर्मेऽपि —
अनादिनिधनः कालो रुद्रः संकर्पणः स्मृतः।
कलनात् सर्वभूतानां स कालः परिकीर्त्तितः ॥
कर्षणात् सर्वभूतानां स तु संकर्पणः स्मृतः।
सर्वभूतशमित्वाच्च स रुद्रः परिकीर्त्तितः।
अनादिनिधनत्वेन स महान् परमेश्वरः ॥
इति कालमाधवे

**कालकर्णी**—दुःसहनाम्नो रक्षसः दुहिता, बालविधवा
इति नरसिंहवाजपेयी
अलक्ष्मीः कालकर्णी च दुःस्वप्नं दुर्विचिन्तितम्।
अस्मात्रेणाभिषिक्तस्य नश्यन्तीति च धारणा ॥
इति विष्णुः—६४-४१
वाचा कृतं कर्मकृतं मनसा दुर्विचिन्तितम्।
अलक्ष्मी कालकर्णी च नाशयध्वं यवा मम ॥
विष्णुस्मृतिः—४८-१६

सर्वं पुनत मे यवा इति औशनसे विशेषः ॥

**कालकवनम्**— वनस्थानविशेषः।
प्रागदर्शात् प्रत्यक्कालकवनाद् दक्षिणेन हिमवन्तमुदक् पारियात्रमेतदार्यावर्त्तमिति बौधायनः—१-२-१०
आर्यावर्त्तः प्रागादर्शात प्रत्यक्कालकवनादित्यादि वसिष्ठः—१-८

**कालकालः**—परमेश्वरः।
स विश्वकृद् विश्वविदात्मयोनिज्ञः कालकारो गुणी-
सर्वविद्यः।
प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिवन्धहेतुः ॥
श्वेताश्वतरे—६-१६
कालमाधवादौ तु कालकारस्थाने कालकाल इति पाठो गृहीतः ॥

**कालञ्जरः**—पार्वतीयस्थानविशेषः। सम्प्रति बुन्देलखण्डे कालिञ्जर नाम्ना प्रसिद्धः तद्देशस्य प्राचीनराजधानी पार्वतीयदुर्गविशेषः ॥ इति काणे- इतिहासे—१४१६
"सप्तव्याधा दशारण्ये मृगाः कालञ्जरे गिरौ" इति

**कालदुष्टम्**— कालदोषेण दुष्टं भोज्यम्।
यथा पर्युषितं शुक्तं नवश्राद्धान्नं नवोदकं ग्रहणे भोजनं रात्रौ धानादिभक्षणम् अनिर्दशगोक्षीरादिभक्षणं च ॥

**कालपक्वाशी**—वानप्रस्थविशेषः।
कालेनैव पक्वं नीवारवेणुश्यामाकादिबदरेङ्गुदादि फलं च। तदशनशीलः कालपक्वाशी
इति मिताक्षरायाम्—३-४६

दन्तोलूखलिकः कालपक्काशी वाश्मकुट्टकः।
श्रौतं स्मार्त्तं फलस्नेहैः कर्म कुर्यात्तथा क्रियाः॥
याज्ञ०—३—४६

**कालभम्**—द्विजानक्षत्रम् इति निर्णयसिन्धौ।

**कालरात्री**—कृत्या, इति बौधायनीये गोविन्दस्वामी—
३-६-६

मूलग्रन्थेषु कालकर्णीति पाठः।

**कालशाकः**— कालशाखाख्यं शाकमिति कुल्लूकः।
कालशाकं कालिकाशाकमिति हेमाद्रिः॥
पर्वतदेशे प्रसिद्धः शाक इति आचारेन्दुः—२५२
हविष्यद्रव्यमिति कालसारे।
कृष्णवास्तुकभेद इत्यपरे॥
नरचा इति हिन्दीभाषा इति शब्दकल्पद्रुमे।

**कालसूक्तम्**—कालोऽश्वो वहतु सप्तरश्मिः इत्यादि कालसूक्तमिति मित्रमिश्रः श्राद्धप्रकाशे—१३०

**कालसूत्रम्**—नरकविशेषः।
तामिस्रमन्धतामिस्रं महारौरवरौरवौ।
नरकं कालसूत्रं च महानरकमेव च॥
मनुः—४-८८

कालसूत्रे तथाछेदमनेकाश्चैव यातनाः।
प्राप्य दुष्कृतिमेतस्मान् न वेद्मि कथमेष्यति॥
मार्कण्डेय पु०—१४-८६

कालसूत्रं कुलालचक्रसूत्रच्छेदनरूपमिति प्रायश्चित्तविवेके शूलपाणिः।

**कालायसम्**— लोहमिति हेमाद्रिः।

**कालालकः**— असवर्णस्य प्रेतकर्मकर्त्ता।
यो लोभादन्यवर्णानामाद्यश्राद्धान्यनुक्रमात्।
स षोड़शवृषोत्सर्गं कुर्य्यात् कालालकः स्मृतः॥
प्रजापतिस्मृतिः—६१

**कालाष्टमीव्रतम्**—नभोमासे कृष्णाष्टम्यां विहितं व्रतमिति कालमाधवे—४

**कालिकः**—कण्टकयुक्तः फलविशेषः।
पितॄणां पनसः श्रीमान् वल्लभः परमो महान्।
कारश्च कारवल्लीकः कारुकः कालिकः करुत्॥
पूर्वाङ्गिरसः—५६८

**कालिका**—वृद्धिविशेषः या वृद्धिः प्रतिमासं गृह्यते।
कायिका कायसंयुक्ता मासग्राह्या च कालिका
इति मन्वर्थमुक्तावल्यां बृहस्पतिः॥
मनुः—८-१५३

कायाविरोधिनी शश्वत्पणपादादिकायिका।
प्रतिमासं स्रवन्ती या वृद्धिः सा कालिका स्मृता॥
नारदस्मृतिः—४-१०

**कालिङ्गम्**— फलविशेषः तरभुज इति ख्यातः।

**कालेयः**—(१) तिक्तशाकविशेष इति गदाधरराजगुरुः।
कालेयं करालाख्यं शाकमिति गोविन्दराज इति
कल्पतरुः। श्राद्ध०—४७

(२) कालेयं पीतचन्दनमिति मित्रमिश्रः।
चन्दनागुरुकालेयैस्त्रिसारपरिकीर्त्तितः इति पूजाप्रकाशे।

**कालेयकम्**— दारुहरिद्रा इति पराशरमाधवे
श्राद्ध०—७४

**कालोदकम्**— यामुनः तीर्थविशेषः। स च विशिष्टश्राद्ध-
देशः इति विष्णुः—८५-३६
देवीविरहसन्तप्तो महादेवो जगद्गुरुः।
ततः पपात देवेशः कालिन्दीसरितं मुने ॥
निमग्ने शंकरे त्वापो दग्धाः कृष्णत्वमागताः।
ततः प्रभृति कालिन्द्यां ह्रदः कालोदकाभिधः।
इति वामनपुराणे इति केशववैजयन्ती।

**काशिपुष्पम्**— हरगौरीपुष्पमिति उत्कलेषु प्रसिद्धम् ॥
तत् पुष्पं काशिपुष्पमिति काञ्चिशङ्कराचार्याः।

**काश्मरी**— वृक्षविशेषः गम्भारी इति प्रसिद्धः।
श्रीपर्णी इति संज्ञान्तरम्।
शमी च काश्मरी शालः प्लक्षो वा वरणस्तथा।
पद्मासनानि शस्तानि श्राद्धे देवार्चने तथा ॥
इति पूजाप्रकाशोद्धृतनारदीये—८६

**काष्ठा**—(१) अष्टादशनिमेषाः।
निमेषा दश चाष्टौ च काष्ठा त्रिंशत्तु ता कला।
त्रिंशत्कला मुहूर्त्तः स्यादहोरात्रं तु तावतः।
मनुः—१-६४

(२) दिक्। विष्णुधर्मोत्तरे—१-७३-८
दक्षिणां च यदा काष्ठां क्रमादाक्रमते रविः।
दिवसस्य तदा हानिर्ज्ञातव्या तावदेव तु ॥
क्षीयन्ते तस्य हानौ च तन्मुहूर्त्तास्तथैव च ॥
इति कालमाधवे ॥
उपस्थाय रवेः काष्ठां पूजयित्वा च देवताः।
ब्रह्मागीन्द्रौषधीजीवविष्णुनामहतांहसाम् ॥
इत्यादि व्यासः—३-२५

(३) उत्कर्षः।
इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः।
मनसस्तु परा बुद्धिः बुद्धेरात्मा महान् परः ॥
महतः परमव्यक्तमव्यक्तात् पुरुषः परः।
पुरुषान्न परं किंचित् सा काष्ठा सा परागतिः ॥
इति कठश्रुतौ शङ्कः—७-३३
स सर्वं परमा काष्ठा स वैषुवतं स वै वैभाजनं पुरम्
इति आप० ध०—१-८-२२-७

**कासक्तिकः**- शिरोवेष्टनयुक्तः पुरुषः, कञ्चुकपरिहितश्च ॥
के शिरसि आसक्तिका आवेष्टिका कृता येन सोऽयं
कासक्तिकः कृतोशिरोवेष्टन
इति गोभिलीयभाष्ये—१-२-२५
अन्ये तु प्रयुक्तकञ्चुकं कासक्तिकं मन्यन्ते।
एतदयुक्तमिति आह्निकप्रकाशे मित्रमिश्रः।

**कासारः**—कंसार इति प्रसिद्धं पक्वान्नमिति कृत्यरत्नाकरे ४५६

नैवेद्यं चापि कासारं सुगन्धि तीक्ष्णमेव च ॥

इति तत्रत्यभविष्ये ।

कासारः गोधूमचूर्णैर्यवघृतैर्भृष्टा निर्मितो लोकप्रसिद्ध इति कल्पतरौ व्रतकाण्डे—१२५ ।

**काहुतिः**— अप्रसिद्धमार्गः ।

**काहलः**— वाद्यविशेषः ।

काहला भ्रामणप्राण्यश्चक्रस्योलूखलस्य च ।
एतेषां निनदं यावत्तावत्कालमभोजनम् ॥

इति पराशरमाधवे गौतमः । आचार—३७६

**किङ्किणी**—(१) अम्लरसा द्राक्षा इति दिव्यसिंहमहापात्रः । कंकणीति पाठान्तरं क्वचित् ।

हेमाद्रिस्तु कौंकणी द्राक्षा इति पठित्वा सा कुङ्कणदेश प्रभवा । उपलक्षणं चैतत् स्वादुरसा या द्राक्षा इत्याह ।

(२) नृपावलङ्कारविशेषघर्घरिका इति प्रसिद्धः । सम्प्रति घागुड़ि इति उत्कलेषु ख्यातः ।

**किङ्किरातः**— वृक्षविशेषः ।

पीनायक इत्याचारेन्दौ—१५५

वड़र इति प्रसिद्ध इत्यपि तत्रैव—१५६

श्वकः कर्णिकारस्तु किङ्किरातो हरेत्तथा ॥

इति भविष्यपुराणे ।

किंकिरातः कुरण्टपुष्पम् इति मित्रमिश्रः पूजाप्रकाशे- २१२

रक्ताशोक वृक्ष इति कोषविशेषे ।

**किञ्चित्**— अष्टमुष्ट्यात्मकं धान्यादिद्रव्यम् ।

अष्टमुष्टिर्भवेत् किंचित् ।

कुंचिरितिपाठान्तरं नरसिंहपुराणे ।

अष्टमुष्टिर्भवेत् कुञ्चिः कुञ्चयोऽष्टौ च पुष्कलम् इति ।

कर्षापरपर्याय इति भावप्रकाशे खारीशब्दे द्रष्टव्यः ।

**किञ्चुलुकः**-कृमिविशेषः केंचुअ इति जिआ इति च प्रसिद्धः ।

किंचुलुकी इति पाठोऽपि ।

बाह्या यूकाः प्रसिद्धाः स्युः किंचुलुकास्तथान्तगाः ।

इति हारीते चिकित्सितस्थाने पञ्चमाध्याये ।

**किण्वम्**— सुराबीजमिति कुल्लूकः । मनुः—८-३२६

"सूत्रकार्पासकिण्वानां गोमयस्य गुड़स्य च" इति किण्वं सुराबीजभूते द्रव्ये क्वाथ इति प्रसिद्धमिति विवादरत्नाकरे चण्डेश्वरः ।

**कितवः**—(१) धूर्तः द्यूतसमाह्वयदेवी ।

जटिलं चानधीयानं दुर्बलं कितवं तथा ।
याजयन्ति च ये पूगांस्तांश्च श्राद्धे न भोजयेत् ।

मनुः—३-१५१

(२) कितवः कलितप्रेक्षी अध्यर्धदृष्टिः । कातर इत्यन्ये स एव शुकपक्षसदृश तारक इति ।

"पित्रा विवदमानश्च कितवो मद्यपस्तथा" इति मनूक्त (३-१५९) कितवशब्दव्याख्याने हेमाद्रिः ।

**किम्पाकम्**— महाकालफलमिति नीलकण्ठः ।

श्रुत्वा यः सुहृदां शास्त्रं मर्त्यो न प्रतिपद्यते ।
विपाकान्ते दहत्येनं किंपाकमिव भक्षितम् ॥

महाभा० उद्०—१२४-२२

**किम्भविष्यत्**— किं भविष्यतीति चिन्तापरः।
नास्तिकं किं भविष्यन्तमृणिनं त्यक्तवेदकम्।
त्यक्तस्नानं त्यक्तसन्ध्यं निवृत्तक्षौरकर्मकम्॥
इति पूर्वाङ्गिरसे—७५२
श्राद्धे न भोजयेत्॥

**किमिच्छकम्**-किम् इच्छसि इति पृष्ट्वा ग्रहीतुरिच्छया दत्तं किमिच्छकम्।
तृप्तिमाप्नोति च तथा यत्र यत्राभिजायते।
किमिच्छकेन संयोज्य चाश्वमेधफलं लभेत्॥
विष्णुधर्मोत्तर पु०—२-६२-५३

**किरटः**— घृतादिविक्रयी इति नित्याचारप्रदीपे—२-३२७
तत्र वणिक्किरटकवार्द्धुषिकौ-इत्यादि हारीतः।

**किराटी वृत्तिः**— घृततैलादिविक्रयेण जीवनम्।

**किरातः**— क्रियालोपात् शूद्रत्वं गतः क्षत्रियः।
औड्रशब्दो द्रष्टव्यः मनुः—१०-४४

**किरिः**— घाताद्युपद्रवः।
विकिरिद्र विलोहित नमस्ते अस्तु भगवः।
यास्तेसहस्रं हेतयोऽन्यमस्मन्निवपन्तु ताः॥
शुक्ल-यजुः १६-५२
अत्र किरिः घाताद्युपद्रव इति महीधरः।

**किलाटः—, किलाटकः—, किलाटकम्**— दधिसम्भवः खाद्यविशेषः शुक्तमपि तद्ग्राह्यमिति हेमाद्रिः। आचारेन्दौ कीलाट इति पाठः। कूर्चिका क्षीरशाकयोः
घनभागः पृथग्भूतः किलाट इति वाग्भट्टे।
नष्टदुग्धस्य पक्वस्य पिण्डः प्रोक्तः किलाटकः।
अपक्वमेव यन्नष्टं क्षीरशाकं हि तत्पयः॥ इति
भावप्रकाशे तु
पक्वं दध्ना समं क्षीरं विज्ञेया दधिकूर्चिका।
तक्रेण तक्रकूर्चा स्यात्तयोः पिण्ड किलाटकः॥
गुरुः किलाटोऽनिलहा पुंस्त्वनिद्राप्रदः स्मृतः॥
इति छना इति वैद्यकशब्दसिन्धौ। उत्कलेषु छेना
इति उच्यते। किलाटकं दुग्धमलयंति भक्ष्या
इति देवीभागवतटीकायाम्—८-२४-२५
देवपालस्तु काठकगृह्ये तुण्डिलशब्दव्याख्याने
मध्योन्नतः पुरोडाशाकृतिः तण्डुलपिष्टादिपक्वः
किलाटलोपिकादिर्वा इति लिखति—३-१६-४

**किलाटिका**—दुग्धपर्याटिका इति नित्याचारप्रदीपे-६६६
स्वस्तिका लोपिका दुग्धग्रीवेष्टककिलाटिका॥
इति देवदेये भविष्ये॥

**किलासः**— त्वग्दोषः कलंकीति द्राविडानां प्रसिद्ध इति हरदत्तः गौतमध०—२६-१८
श्वितकुष्टमिति कश्चित्। तत्पक्षे किलेनश्वैत्येन असति इति विग्रहः॥"किलाससिध्मे" इत्यमरः—२६-५३

**किलासी**— सिध्मल इति कल्पतरुः। श्राद्धकाण्डे—७७
कुष्ठी भूमिहर्त्तावेिति मस्करी। त्वग्दोषयुक्त इति हरदत्तः॥
गौतम० ध०—२-६-१८

**किलिनम्**— सजलम् आर्द्रमित्यर्थः।
किलिनं प्रत्यासन्नोदकत्वादुदकक्लिन्नमुच्यते॥
अकिलिने ब्रह्मवर्चसकामस्य पारस्कर०—३-४-२

द्वीपमुन्नतमाख्यातं शादा चैवेष्टकाः स्मृता ।

कीलिनं सजलं प्रोक्तं दूरखातोदकोमरुः

इति कात्यायनः—२६-७

पारस्करोक्तह्रस्वायस्य कात्यायनोक्तदीर्घायस्य च

लिपिभेदेन भेद इति तर्कयामि ।

**किलीतकः**— गवादि स्तनादिषु यो भवति रक्तपः

कीटविशेषः इति कल्पतरौ । गार्हस्थ्य०—१६५

उत्कलेषु टिङ्क इति प्रसिद्धः ।

**किष्कुः**— द्विचत्वारिंशदङ्गुलयः ।

किष्कुः स्मृतो द्विरत्निस्तु द्विचत्वारिंशदंगुलिः ॥

इति नित्याचारप्रदीपोद्धृतादित्यपुराणे ।

षष्ठाङ्गुलहस्तमानमिति श्रीमूला । कौट०—३-८

किष्कुर्हस्ते वितस्तौ च इत्यमरः—३-३-७

किष्कुर्द्वयोर्वितस्तौ च प्रकोष्ठेऽपि करेऽपि च

इति मेदिनी १-२३

वितस्तैर्द्विगुणोऽरत्निस्तस्मात् किष्कुस्ततो धनुः ।

धनुः सहस्रे द्वे क्रोशश्चतुः क्रोशं तु योजनम् ॥

इति पराशरमाधवे स्मृत्यन्तरम् ।

कफोणेरधो मणिबन्धपर्यन्तमित्यपि शब्दकल्पद्रुमे ।

त्रिवलिमांस्त्यवनतश्चतुर्व्यङ्गस्त्रिशीर्षवान् ।

चतुष्कलश्चतुर्लेखश्चतुष्किष्कुश्चतुः समः ॥

इति रामायणे रामशरीरवर्णने सुन्दर का०—३५-१८

**कीकटः**— मगध इति श्राद्धविवेके शूलपाणिः ।

चरणाद्रिं समारभ्य गृध्रकूटान्तगं शिवे ।

तावत् कीकटदेशः स्यात् तदन्तर्मागधो भवेत् ॥

इति शक्तिसङ्गमतन्त्रे-७ पटले ।

कीकटः मगध इति हेमाद्रिः । परिशेष—१६२

कीकटशब्दार्थं प्रसिद्धमपि देशविशेषं विहाय किं

कृतेन इति ये वदन्ति ते कीकटाः, नास्तिकाः इति

कल्प्यते इति वीरमित्रोदयसंस्कारप्रकाशे ।

कीकटो मगध इति तीर्थप्रकाशे—१६४

कीकटो नाम देशः अनार्यनिवास इति निरुक्ते

६-६-३२

किं ते कृण्वन्ति कीकटेषु गावो नाशिरं दुह्रे न तपन्ति

घर्मम् । आनो भर प्रमगन्दस्य वेदो नैचाशाखं मघवन्

रन्धया न ॥ ऋक्—३-५३-१४

आदिपुराणे-

कीकटेषु गया पुण्या नदी पुण्या पुनः पुनः ।

च्यवनस्याश्रमः पुण्यः पुण्यं राजगृहं वनम् ॥

इति परिभाषाप्रकाशे—५६

**कीकसम्**— अस्थि ।

ब्रह्मनाले पतेद् येषामपि कीकसमात्रकम् ।

ब्रह्माण्डमण्डपान्तस्ते न विशन्ति कदाचन ॥

इति तीर्थप्रकाशोद्धृतब्रह्मवैवर्त्ते ।

**कीनाशः**— (१) कृषिदासः ।

अवशिनः कीनाशस्य कर्मन्यासे दण्डताडनम् ।

इत्यापस्तम्बः—२-११-२८-२

उद्वसतः कीनाशस्य दण्डेन ताडनमिति विवाद-रत्नाकरधृतपाठः ।

अत्र कीनाशः हलवाहक इति चण्डेश्वरः । विवाद-१५८

कीनाशो गोवृषो यानमलङ्कारश्च वेश्म च ।
विप्रस्यौद्धारिकं देयमेकांशश्च प्रधानतः ॥

मनुः—९-१५०

अत्र कीनाशः कर्षक इति कुल्लूकः ॥ कृषिदास इत्यहम् ।

(२) कृषिजीवी ।

अनाहिताग्निः शतगुरयज्वा च सहस्रगुः ।
समृद्धो यश्च कीनाशो नार्घ्यमर्हन्ति ते त्रयः ।

इति महाभारते अनु, दानधर्म० श्लो०—१२

अत्र कीनाशशब्दः कृषिकर्त्तृपरः न तु हलवाहदासपरः "एष धर्मः समाख्यातः कीनाशानां पुरातनः" इति बृहस्पतिवचने कीनाशः कृषीवल इति विवादरत्नाकरे-१२४

**कीराः**— ब्राह्मणविशेषाः ।

ज्योतिर्विदो ह्यथर्वाणः कीराः पौराणपाठकाः ।
श्राद्धे यज्ञे महादाने वरणीयाः कदाचन ॥

अत्रिसंहिता—३८५

**कीर्त्तिः**— स्वदेशे गुणख्यातिः यशः, देशान्तरे कीर्त्तिः । जीवितो वा अर्वाक्कालिकं यशः, उत्तरकालिकी कीर्त्तिः । निर्दोषगुणवतो वा कीर्त्तिर्यशसी इति मेधातिथिः ।

अधर्मदण्डनं लोके यशोघ्नं कीर्त्तिनाशनम् ।
अस्वर्ग्यं च परत्रापि तस्मात्तत् परिवर्जयेत् ॥

जीवतः ख्यातिर्यशः, मृतस्य ख्यातिः कीर्त्तिरित्यत्र कुल्लूकः ॥

**कीलः**— स्थूणा, शंकुः । वर्णकीलशब्दो द्रष्टव्यः ।

कील आहन्यमानः प्रतिकीलं निर्हन्ति

इति पातञ्जलमहाभाष्ये—२-२-१

**कीलकः**—(१) नपुंसक भेदः ।

षण्डको वातजः षण्डः षण्डक्लीबो नपुंसकः ।
कीलकश्चेति षट्कोऽयं षण्डभेदो विभावितः ॥

इति कल्पतरौ देवलः ।

स कीलक इति प्रोक्तो यः क्लैव्यादात्मनः स्त्रियम् ।
अन्येन सह संयोज्य पश्चात्तामेव सेवते ॥

इति कर्मविपाकसंग्रहे ।

(२) षष्टिसम्वत्सरेषु सम्वत्सरविशेषस्य नाम संम्वत्सरशब्दो द्रष्टव्यः ।

**कीला**— निखाता स्थूणा ॥ कौट०—३-८-३

कर्णकीलायससम्बन्धोऽनुग्रहं सेतुः ॥ इति ।

**कीलाटः**— बहुतकोऽल्पदुग्धो यः पाकेन घनतां गतः ।
कीलाटः स तु विज्ञेयः पुंस्त्वनिद्राबलप्रदः ॥

इति पूजाप्रकाशे—१५६

हेमाद्रौ तु किलाट इति पाठः ।
दहि छेना इति प्रसिद्धं वस्तु ।

**कीलालम्**—(१) जलम् ।

(२) सुरा इति लक्ष्मीधरः नियतकाल—२८०

तथा कीलालौषधीनां च ॥ आप०—१-५-१७-२५

(३) मांसमिति वैदिकाः ।

ऊर्जं वहन्तिरमृतं घृतं पयः कीलालं परिस्रुतम् ।

स्वधा स्थ । तर्पयत मे पितॄन् ॥

**कीलालौषधिः**— सुरार्थां ओषधयः कीलालौषधय इति हरदत्तः ।

"तथा कीलालौषधीनां च" आप०—१-५-१७-२५

**कीलिका**— अभी ।

वृक्षमूलादुत्पाटनसमर्थः खनित्रविशेषः कीलिका इति गोविन्दानन्दः अभ्री इत्यस्या नामान्तरम् ॥

**कीलिनम्**— आर्द्र भूमिः ।

द्वीपमुन्नतमाख्यातं शादा चैवेष्टका स्मृता ।

कीलिनं सजलं प्रोक्तं दूरखातोदको मरुः ॥

इति कात्यायनः—२६-७

**कुकुन्दरे**— जघनकूपकौ । अमरः—२-६-७५

मिताक्षरायां तु ककुन्दरे इति पाठः—३-९६

**कुकूलम्**— शंकुपूर्णो गर्त्तः ।

कुकूलं शङ्कुभिः कीर्णे श्वभ्रे ना तु तुषानले

इति अमरः—३-३-२०३

मणीनां माणकलक्षापहारे हस्तच्छेदो वधः कुकूलारोहणम् ।

इति विष्णुः सरस्वती विलासे पृ०—४५७

**कुकूलः**— तुषानलः ।

कुकूलशब्दो द्रष्टव्यः ॥

**कुक्कुटः**—(१) पक्षपाकर्त्ता ।

समागतानां यः सभ्यः पक्षपातं समाचरेत् ।

तमाहुः कुक्कुटं देवास्तस्याप्यन्नं विवर्जयेत ॥

इति स्मृतिमुक्तावल्याम् ।

(२) शूद्रात् निषाद्यां जातो जातिविशेषः ।

शूद्रान्निषाद्यां कुक्कुटः । बौधा०—१-१३-१४

(३) ग्रामारण्यपक्षिविशेषः ।

स च अभक्ष्यत्वेन आपस्तम्बेन पठितः ॥

कुक्कुटो विकिराणाम् इति आप०—१-५-१७-३२

**कुक्कुटकः**— शूद्रात् निषाद्यां जातः ।

शूद्राज्जातो निषाद्यां तु स वै कुक्कुटकः स्मृतः ॥

मनुः—१०-१८

अयमेव कुक्कुट इत्युच्यते ।

उग्रान्नैषाद्यां कुक्कुटकः इति कौटल्यः—३-७

निषादकन्यका शूद्रसंयोगाज्जनयेत्सुतम् ।

कुक्कुटः क्रोधकश्चैव इति प्रोक्तो द्विसंज्ञकः ॥

टङ्कशालासु सर्वत्र नाणकानां विधायक इति जातिभास्करे ।

शूद्रायां मागधात् जातः जातिविशेष इति व्यवहार कल्पतरौ —८१९

तत्र शूद्रायां निषादेन पुल्कसः मागधेन कुक्कुटकः इति शङ्खलिखितौ ॥

**कुक्कुटीव्रतम्**— भाद्रशुक्लसप्तमी विहितं व्रतम् ।

**कुक्कुण्डकम्**— छत्राकविशेषः ।

कुक्कुण्डकं पिण्डोपमं कवकं छत्राकसमानप्रकृतिद्रव्यम् ।

कुक्कुण्डकान्यलाबूनि कृष्णलवणमेव च ।

इत्यादि महाभारते इति लक्ष्मीधरः ॥ श्राद्धकाण्डे—५२

वर्त्तुलं छत्राकमिति निर्णयसिन्धौ—२९४

कुचरः— कुत्सिताचार इति हरदत्तः।

"न भोजयेत्···मद्यपकुचरकूटसाक्षिप्रातिहारिकान्"

गौतम-ध०—२-६-१५

कुचर्या— कुत्सिताचरणम्।

शय्यासनमलंकारं कामं क्रोधमनार्जवम्।

द्रोहभावं कुचर्यां च स्त्रीभ्यो मनुरकल्पयत्।

मनुः—६-१७

कुञ्चिका— कुञ्चिका कंची, कुंची इति भाषायाम्।

गवाक्षकुञ्चिकाविवरप्रविष्टे सूर्ये इति मेधातिथिः

मनुः—८-१३३

कुञ्चिः— परिमाणविशेषः, मानविशेषश्च।

अष्टमुष्टिर्भवेत्कुञ्चिः इति वराहपुराणे।

किञ्चित् इति शास्त्रान्तर पाठः। कुञ्चा इति

मानविशेषोऽपि उत्कलेषु प्रसिद्धोऽस्ति।

कुटी— कुटीरम्। पर्णादिनिर्मितम् एकस्थूणम् अस्थूणं वा क्षुद्रगृहम्।

"न कुट्यां नोदके सङ्गो न चैले न त्रिपुष्करे॥"

वसिष्ठः—१०-२३

कुटी एकस्थूणम् अस्थूणं वा वेश्म।

मठो वहुस्थूणम् इति गोविन्दस्वामी।

तत्र कुटीं मठं वा करोतीति बौधा०—३-१-१-१४

कुटीचकः— संन्यासिविशेषः।

कुटीचको नाम स्वगृहे वर्त्तमानः शुचिरकलुष आहिताग्निस्तु भिक्षां भुञ्जान उपगतकामक्रोधलोभमोहाहंकारवर्जित आत्मानुग्रहं कुरुते। इति पराशरमाधवे प्रजापतिः— स्कान्देऽपि।

कुटीचकस्तु संन्यस्य स्वे च सद्मनि नित्यशः।

भिक्षामादाय भुञ्जीत स्वबन्धूनां गृहेऽथवा॥ इति

भिक्षाटनादिकेऽशक्तो यतः पुत्रेषु संन्यसेत्।

कुटीचक इति ज्ञेयः परिव्राड् त्यक्तबान्धवः॥

लघुविष्णुः—४-१५

कुटीचकस्तु संन्यासिविशेषः।

कुटीचकं तु प्रदहेत् पुरयुत्तु बहूदकम्।

हंसो जले तु निक्षेप्यः परहंसं प्रपूरयेत्॥ इति

कुटीचर इत्यस्य संज्ञान्तरम् निर्णयसिन्धौ—३-३

कुटीचरः— सन्यासिविशेषः।

यः स्वगृहे संन्यासिधर्ममनुतिष्ठति॥

तथा च मनुः—६-९५

संन्यस्य सर्वकर्माणि कर्मदोषानपानुदन्।

नियतो वेदमभ्यस्य पुत्रैश्वर्ये सुखं वसेत्॥ इति।

कुटीचरबहूदकहंस परमहंसभेदेन सन्यासिनश्चतुर्द्धा भिद्यन्ते। तदुक्तंमन्वर्थमुक्तावल्युद्धृतभारते-

चतुर्द्धा भिक्षवस्तु स्युः कुटीचरबहूदकौ।

हंसः परमहंसश्च यो यः पश्चात् स उत्तमः॥ इति

कुटुम्बः— पोष्यवर्गः।

ग्रहीता यदि नष्टः स्यात कुटुम्बार्थे कृतो व्ययः।

दातव्यं बान्धवैस्तत् स्यात् प्रविभक्तैरपि स्वतः।

मनुः—८-१६६

कुटुम्बी- गृहस्थः। "स्वधर्मसंयुक्तं कुटुम्बिनमभ्यागच्छति"

आप०—२-३-६-५

कुठेरकः— कुठेरकः कृष्णतुलसीवृक्ष इति कृत्यरत्नाकरे।
कुठेरकस्य मञ्जर्या मालत्या लवणेन च।
हृद्याभ्यां श्वेतरक्ताभ्यां चन्दनाभ्यां च सर्वदा॥
इति कृत्यकल्पतरौ कार्त्तिकशुक्लैकादशीकृत्ये ग्राह्य।
अर्जकः श्वेतपर्णासो गन्धपुत्रः कुठेरकः॥
इति वैद्यकरत्नमालायाम्।
कुठेरकः श्वेततुलसी वावुइ तुलसी इति ख्यातः।
इति शब्दकल्पद्रुमे।

कुडवः— पलचतुष्टयात्मकः मानविशेषः।
चतुर्भिः कुडवैः प्रस्थः प्रस्थैश्चतुर्भिराढकः।
चतुराढको भवेद् द्रोण इत्येतन्मानलक्षणम्॥
इति बालम्भट्याम्।
कुडवाद्या वेदगुणाः प्रस्थाढद्रोणमानकाः खार्यः
कुम्भो विंशतिखार्या दृष्टो लोके यथाक्रमशः
इति दण्डविवेके भारद्वाजः।
श्रीजगन्नाथमन्दिरे पाकार्थे व्यवह्रियमाणमृत्पात्र-विशेषाणां "कुडुआ" इति संज्ञा अस्य कुडवशब्द-स्यापभ्रंश इत्यनुमीयते कुडवपरिमिततण्डुलपाकाधार-त्वेन तत्र तेषां कुडवसंज्ञा लाक्षणिकी।

कुड्यम्— भित्तिः।
कुड्यलग्नां वसोर्धारां सप्तधारां घृतेन तु।
कारयेत् पञ्चधारां वा नाति नीचां न चोच्छ्रिताम्॥
गोभिलस्मृतिः—१-१५
परकुड्यमुदकेनोपघ्नतो द्वादशपणो दण्डः।
कौटल्यः—३-८-२२

कुणपः— शवशरीरमिति मेधातिथिः।
वान्ताश्युल्कामुखः प्रेतो विप्रो धर्मात् स्वकाच्च्युतः।
अमेध्य कुणपाशी च क्षत्रियः कटपूतनः॥ मनु-१२-७१
"कुणपः शवमस्त्रियाम्" इत्यमरः—२-८॥११८

कुणिः— कुत्सितहस्तः।
हस्तविकल इति विज्ञानेश्वरः—३-२८६
कुणिः एककर इति स्मृतिचन्द्रिकायाम्॥
श्राद्धकाण्डे—२०७

कुण्ठः— कुण्ठः पादरहितः पङ्गुरिति बालम्भट्टी।
कुण्ठो मन्दः क्रियासु च-इत्यमरः—३-१-१७
कुण्ठोऽकर्मण्यमूर्खयोरिति मेदिनी।
कुण्ठः सर्वक्रियास्वलस इति शूलपाणिः प्रायश्चित्त-विवेके—३८४
जड़मूकान्धवधिरकुब्जवामनकुण्ठकान्।
अतिवृद्धान् कदर्य्यांश्च कृषिसक्तान् नृपस्य च।
न दोषः परिवेदेन—इति शेषकात्यायनः।

कुण्ठकः— अकर्मण्यः।
पाणिरहित इति कल्पतरौ गार्हस्थ्य—१११

कुण्ठितः— आच्छादितः।
पुररेणुकुण्ठितशरीरस्तत्परिपूर्णनेत्रवदनश्च नगरे वसन् सुनियतात्मा सिद्धिमवाप्स्यतीति न तदस्ति॥ बौधा०—२-३-६-३३

कुण्डः—(१) जीवत्पतिकाया जारजः पुत्रः।
परदारेषु जायेते द्वौ सुतौ कुण्डगोलकौ।
पत्यौ जीवति कुण्डः स्यान्मृते भर्तरि गोलकः॥
मनुः—३-१७४

(२) चङ्क्रमणाक्षामचरण इति हेमाद्रि ॥ परिशेष-४६०
काणाः कुण्डाश्च मण्डाश्चाप्यचर्माणः कचैर्विना ।
सर्वे श्राद्धे नियोक्तव्या मिश्रिता वेदपारगैः ॥
इति तत्र सुमन्तुः ।

कुण्डाशी—(१) यः कुण्डस्य अन्नमश्नाति सः ।
(२) बहुभोजी । तदुक्तं ब्रह्मपुराणे—
चतुषष्टिपलैः शुद्धैः कुण्डं प्रस्थचतुष्टयम् ।
भवेत् तद्यस्तु निगिरेत् स कुण्डाशी पतत्यधः ॥
इति ब्रह्माण्डपुराणे—इति कल्पतरौ श्राद्धकाण्डे—६७
कुण्डम् आढ़कः तत्परिमाणान्नभोक्ता वा ।
इति हेमाद्रिः

कुण्डिका—कमण्डलुः जलपात्रविशेषो वा ।
दक्षिणे तु करे कुर्यादक्षसूत्रेण मालिकाम् ॥
कुण्डिकां वामहस्ते तु यथावद् विधिना शुभम् ।
कुण्डिका-कमण्डलुः इति कृत्यरत्नाकरे—१११

कुतपः—(१) कम्बलविशेषः ।
पार्वतीयच्छागरोमनिर्मितकम्बल इति
हेमाद्रिविज्ञानेश्वरौ ।

अजलोमनिर्मितकम्बल इति मेधातिथिः ।
विज्ञानेश्वरश्च—३-३७
नेपालकम्बल इति लक्ष्मीधरः । नियतकाल—८३
(२) दिवसस्याष्टममुहूर्त्तोऽपि कुतपः ।
दिवसस्याष्टमे भागे मन्दीभवति भास्करः ।
स कालः कुतपो ज्ञेयः पितॄणां दत्तमक्षयम् ।
इति कालसारे वायुपुराणवचनम् ।

लघुहारीतस्मृतिः—६६
अह्नो मुहूर्त्ता विज्ञेया दशपञ्च च सर्वदा ।
तत्राष्टमो मुहूर्त्तो यः सः कालः कुतपः स्मृतः ॥
इति विज्ञानेश्वरः याज्ञ०—१-२२६
कुं यत्र गोपतिर्गोभिः कार्त्स्न्येन तपति क्षणे ।
स कालः कुतपो ज्ञेयस्तत्र दत्तं महाफलम्
कुः पृथ्वी गोपतिः सूर्यः । गोभिः सूर्यकरैः ॥
इति हेमाद्रिः ।
(३) आकस्मिकतया श्राद्धकाले उपस्थितो ब्राह्मणः ।
कुतोऽपि श्राद्धवेलायां श्रोत्रियो यदि दृश्यते ॥
श्राद्धं पुनाति वै यस्मात् कुतपस्तेन संज्ञितः ।
इति कालसारे पैठीनसिः
(४) पुनश्च कुतपस्य अष्टौ अर्थाः ।
मध्याह्नः खड्गपात्रं च तथा नेपालकम्बलः ।
रौप्यं दर्भास्तिला गावो दौहित्रश्चाष्टमः स्मृतः
पापं कुत्सितमित्याहुस्तस्य सन्तापकारिणः ।
अष्टावेते यतस्तस्मात् कुतपा इति विश्रुताः ॥
इतिकालसारोद्धृतमात्स्ये ।
कुतपस्य श्राद्धे विशेषेण समादरः ।
ब्राह्मणा कम्बला गावः सूर्योऽग्निरतिथिर्गुरुः ।
तिला दर्भाश्च कालश्च दशैते कुतपाः स्मृताः ॥
लघुहारीतस्मृतिः—६८

कुदृष्टिः—वेदविरुद्धदर्शनम् । नास्तिक्यमिति यावत् ॥
या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः ।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ॥
कूर्मपुराणे २।३१ श्लोकपाठस्तु इत्थमेव ।
मनुः—१२—९५

**कुतस्वी**—यस्य नखाः कुत्सिताः।

कुनखी श्यावदन्तस्तु कृच्छ्रं द्वादशरात्रं चरेत् ॥

वसिष्ठः—२०-६

**कुन्तः**—भल्लास्त्रम्।

भाला इति भाषा इति शब्दकल्पद्रुमे।

उत्कलेषु भालि इत्युच्यते ॥

**कुन्द**—पुष्पविशेषः विष्णुदेयः शेफालीशब्दे द्रष्टव्यः।

**कुन्दुरम्**—शल्लकी।

देवदारुसमेतं च सर्जग्रीवासकुन्दुरम्।

श्रीफलं चाज्यसम्मिश्रं दग्ध्वाप्नोति परां गतिम्।

इति भविष्ये।

अत्र कुन्दुरं शल्लकी इति मित्रमिश्रः पूजाप्रकाशे-२१७

**कुन्दचतुर्थी**—माघशुक्लचतुर्थी।

माघमासे तु संप्राप्य चतुर्थी कुन्दसंज्ञिता।

सा उपोष्या सुरश्रेष्ठ ततो राज्यं भविष्यति।

इति समयप्रदीपे— १३२

**कुन्दुरः**— दर्भविशेषः।

कुन्द इति नाम्ना प्रसिद्धः तृणविशेष।

इति हेमाद्रिः श्राद्धकल्पे—६४२

रक्तकन्द इति नाम्ना प्रसिद्धतृणविशेषः इति वीरमित्रोदये परिभाषाप्रकाशे—६६

कुशाः काशा यवा दूर्वा उशीराश्च सकुन्दुराः।

गोधूमा व्रीहयो मुञ्जा दश दर्भाः सवल्वजाः ॥ इति

**कुन्दुरुकः**—सल्लकीनिर्यास इति शान्तिमयूखे नीलकण्ठः

रवेः कुन्दुरुकं धूपं शशिनस्तु घृताक्षताः।

इति तत्र स्कान्दे

**कुप्यम्**—सुवर्णरजतव्यतिरिक्तं त्रपुसीसादि।

सीदद्भिः कुप्यमिच्छद्भिर्धनं वा पृथिवीपतिः।

याच्यः स्यात्स्नातकैर्विप्रैरदित्संस्त्यागमर्हति।

इति मनुः—१०-११३

रेवतीषु तथा कुप्यमश्विनीषु तुरङ्गमान् ॥

श्राद्धं कुर्वन् तथाप्नोति भरणीष्वायुरुत्तमम् ॥

इति मार्कण्डेय पु०—३३-१६

**कुबन्धः**— अश्लीलचित्रम्।

कुबन्धेन कुत्सितबन्धेन भगाकारेण इति विज्ञानेश्वरः।

अन्त्याभिगमने त्वङ्क्यः कुबन्धेन प्रवासयेत् ॥

याज्ञ०—२-२९४

विश्वरूपापरार्कमित्रमिश्रैः कवन्ध इति पाठो गृहीतः।

**कुबरम्**— धणिआ इति प्रसिद्धम्, कुम्बरशब्दो द्रष्टव्यः।

**कुब्जकः**—विष्णुदेयपुष्पविशेषः। कुब्जं सीमान्तग्रामः।

कुब्जं सीमान्तवासतः।

इति लक्षणप्रकाशे सिधान्तशेखरे।

पुष्पैस्तु पूजनाद्विष्णुः सर्वकार्येषु सिद्धिदः।

मालतीमल्लिकायूथी पाटला करवीरकम् ॥१॥

पावन्तिरतिमुक्तश्च कर्णिकारः कुरण्टकः।

कुब्जकस्तगरो नीपो बाणोवर्वरमल्लिका ॥२

अशोकस्तिलकः कुन्दः पूजायै स्यात्तमालजम् ॥

इति अग्नि० पु०—२४८-१

शतपत्रिकया पूजा कार्त्तिके सर्वकामिकी ।
मार्गे नीलोत्पलैः पूजा पौषे कुब्जकजा शुभा ॥
इति देवीपुराणे कृत्यरत्नाकरोद्धृते—१४६

**कुब्जाम्रम्**— क्षेत्रविशेषः ।
कुब्जाम्रम् उत्कलदेशस्थं क्षेत्रं गङ्गाद्वारस्थं वेति वैजयन्ती ॥ विष्णुः—८५-१५
कुब्जाम्रके हृशीकेशं गङ्गाद्वारे पयोधर इत्यादि नित्याचारपद्धतौ ।
जटाधरं हरिर्दृष्ट्वा क्रोधादारक्तलोचनम् ।
तस्मात् स्थानादपाक्रम्य कुब्जाम्रेऽन्तर्हितं स्थितः ॥
वामनपुराणे—५-१

**कुमारः**— अनुपनीतो बालः ।
"कुमारस्तु स विज्ञेयो यावन्न मौञ्जिबन्धनम्"
इति पारस्कर गृ०-हरिहरभाष्ये शातातपः—२-१-२३

**कुमारधारा**— काश्मीरदेशे क्रौञ्चपर्वते कुमारशक्तिप्रभवा जलधारा । कुमारधारा प्रसिद्धश्राद्धदेशरूपेण विष्णुना उक्ता ॥ विष्णुः—८५-२५

**कुमारपूर्णिमा**— आश्विनपूर्णिमा । तत्र कुमारोत्सवः रात्रौ द्यूतक्रीड़ा निशीथे लक्ष्मीपूजा च क्रियते ।

**कुमारी**—(१) अवद्धसास्ना गौरिति नरसिंहवाजपेयिनः पुरुषवशाकुमारी वेहतश्च इति नित्याचारे शङ्खलिखितौ ।
अल्पवयस्का गौरिति गार्हस्थ्यकाण्डे कल्पतरुः—२०२
(२) द्वादशवर्षीया कन्या ।
प्राप्ते तु द्वादशे वर्षे कुमारीत्यभिधीयते ।
इति कालसारे काश्यपः ।

**कुमारीपूजा**— देवीप्रीतये द्विवर्षादिदशवर्षपर्यन्तानां कुमारीणां पूजा । हेमाद्रुद्धृतस्कान्दे, तदनुसृतनिर्णयसिन्धौ च विधिर्द्रष्टव्यः । द्विवर्षामारभ्य दशवर्षापर्यन्ता एव कुमार्यः पूज्याः ।
नत्वन्याः । तासां च क्रमेण कुमारीका, त्रिमूर्त्तिः, कल्याणी, रोहिणी, काली, चण्डिका, शाम्भवी, दुर्गा, सुभद्रेति नामभिः पूजा कार्या ।
एवमभ्यर्च्चनं कुर्यात् कुमारीणां प्रयत्नतः ।
कञ्चुकैश्चैव वस्त्रैश्च गन्धपुष्पाक्षतादिभिः ॥
नानाविधैर्भक्ष्यभोज्यैर्भोजयेत् पायसादिभिः ॥
इति निर्णयसिन्धुः—१२६

**कुम्बरम्**— कुस्तुम्बरमिति हेमाद्रिः ।
दाडिमं मागधीं चैव नागराद्रकतिन्तिडीः ।
आम्रातकं जीरकं च कुम्बरं च नियोजयेत् ॥
श्राद्धे इति ब्राह्मे ।
कुम्बरं-कुस्तुम्बरं, धणिआ इति प्रसिद्धमिति निर्णयसिन्धौ—२९२

**कुम्भः**—(१) कुम्भः विंशतिद्रोणपरिमितधान्यादिमानम्
इति मिताक्षरा० याज्ञ०—२-२७५
द्विपलशतं द्रोणः विंशतिद्रोणश्च कुम्भ इति कुल्लूकः ।
कुम्भः पलशतद्वयमिति मन्वर्थविवृतौ ।
कुम्भः खारपर्याय इति स्मृतिचन्द्रिकायाम् ।
कुम्भः विंशतिप्रस्थ इति रत्नाकरमयूखकारौ ।

घृतद्रोणेन कुम्भ इति गोपथब्राह्मणम् ।
तद्द्रवद्रव्यविषयमिति दण्डविवेके ।
द्रोणः षोड़शभिःखारी विंशत्या कुम्भ उच्यते ।
द्रोणद्वयं कुम्भः॥ सूर्पचतुः षष्टिशरावकौ तस्य
पर्यायशब्दौ इति आयुर्वेदीयभावप्रकाशे उक्तं
खारीशब्दे द्रष्टव्यम् ।
(२) प्रासादविशेषः मत्स्य-० पु० अ०—२६८

**कुम्भकारः**— जातिविशेषः । कंसकारं पश्यन्तु ।
एतज्जातिविषये ग्रन्थभेदेन मतभेदो दृश्यते ।
धर्मशास्त्रसंग्रहोद्धृतायामौशनसस्मृतौ तु-
वैश्यायां विप्रतश्चौर्यात् कुम्भकारः स उच्यते ॥
कुलालवृत्त्या जीवेत्तु नापिता वा भवन्त्यतः ॥ ३३
प्रकाशनान्तरे तु भवन्त्युत इति पाठः ।

**कुम्भाण्डः**—(१) दाड़िमसदृशः फलविशेषः इति गदाधर-
राजगुरुः । दाड़िमसदृशः फलविशेषः कुम्भालु इति
प्रसिद्ध इति कल्पतरुः । नियतकाल—२७९
कुम्भवृक्षवद् वर्त्तुलं वृन्तालावुसदृशं कुम्भाण्डम्
इति माधवाचार्यः ।
कुम्भाण्डं वृत्तालावुरिति निर्णयसिन्धौ—२६४
अस्य प्रयोगः कपालशब्दे द्रष्टव्यः ।
कुष्माण्ड इति वैद्यकशब्दसिन्धौ ।
कुम्भवद् वर्त्तुलमदीर्घालावृसदृसं फलमिति हेमाद्रिः
परिशेष—५६६
कण्डूरं श्वेतवृन्ताकं कुम्माण्डं च विवर्जयेत् ॥
इति निर्णयसिन्धौ
(२) वाणस्य मन्त्री कुम्भाण्डः
इति विष्णु पु०—५-३२-१७

**कुम्भी**—(१) पाटलापुष्पमिति आचारेन्दौ—१६५
(२) उष्ट्रिका इति मेधातिथिः । मनुः—४-७
(३) मृद्भाण्डविशेष इति नरसिंहवाजपेयी ।
नित्याचारप्रदीपः—२-३५८
(४) श्रीपर्णिका—वृक्ष इति माधवाचार्य्यः ।
(५) कुम्भि हस्तिनी गुग्गुलुवृक्षे सविषपतङ्गभेदे
कुम्भीरके मत्स्यभेदे बालग्रहविशेषे कुम्भीरे
पृश्निपर्ण्यां पाटलायां कट्फले वारिपर्ण्यां दन्तीवृक्षे
कोङ्कणदेशप्रसिद्धपुष्पवृक्षविशेषे चेति वैद्यकशब्दसिन्धौ

**कुम्भीकः**— जलजातोभ्दिज्जविशेषः ।
"वारिपर्णी तु कुम्भिका" इत्यमरः—१-१०-३८
कुम्भीको वारिपर्णे स्यादिति एके पठन्ति इति
व्याख्यासुधा ।
लशुनपलाण्डुगृञ्जनविड्वराहग्रामकुक्कुटकुम्भीक-
भक्षणे द्वादशरात्रं पयः पिबेत् इति मिताक्षरायां
शङ्खः—१-१७६
कुम्भिका श्वमूली इति शब्दरत्नावलीति शब्दकल्पद्रुमे।

**कुम्भीधान्यकः**— गृहस्थविशेषः ।
कुम्भी उष्ट्रिका तत्परिमितं धान्यं यस्यास्ति सः।
कुम्भी मृद्भाण्डविशेषः तत्परिमितधान्यवान् इति
नरसिंहवाजपेयी ।

**कुरण्टकः**—दासकेरण्डा इति ख्यातः पुष्पवृक्षविशेषः।
कुरण्टको विष्णुदेयपुष्पविशेष इति कुब्जकशब्दे
द्रष्टव्यः ।

कुरण्टकोऽपीते स्याद्रक्ते कुरवकः स्मृतः ।
नीले बाणाह्वय उक्तो दासे आर्त्तगलश्च सः ॥
इति भावप्रकाशपूर्वखण्डे ।
जपादि कुसुमं झिण्टी रूपिका सकुरण्टिका ।
पुष्पाणि वर्जनीयानि श्राद्धकर्मणि नित्यशः ॥
इति निर्णयसिन्धौ वृद्धपराशरः पृ०—३०६

**कुररः**— उत्क्रोशकाख्यपक्षिविशेषः ।
शब्दानुकारी करञ्जक इति विश्वरूपः ।
योऽन्तरिक्षे चरन् जलान्तवर्त्तिकं मत्स्यादिकं श्येन इव निपत्यादत्ते स कुरर इति स्मृतिचन्द्रिका ॥
श्राद्धकाण्डे—२४८
कलविङ्कं सकाकोलं कुररं रज्जुदालकम्
इत्याद्यभक्ष्यवर्गे याज्ञवल्क्यः—१-१७४

**कुरुक्षेत्रम्**— तीर्थविशेषः ।
कुरुणा कृष्टं क्षेत्रं कुरुक्षेत्रम् । तदुक्तम्-
आदौ ब्रह्मसरः पुण्यं ततो रामह्रदः स्मृतः ।
कुरुणा कृषिणा कृष्टं कुरुक्षेत्रं ततः स्मृतम् ॥
प्रथमं ब्रह्मसरःसंज्ञा ततो रामह्रदसंज्ञा, ततः कुरुक्षेत्रसंज्ञेति । एवमुत्तरवेदिसंज्ञा, विनशनसंज्ञा प्रयागसंज्ञा संनिहितसंज्ञा संनिहत्यादिसंज्ञाप्यस्यैव ॥
विनशनपदेन यद्यपि यत्र नष्टा सरस्वती स देश उच्यते तथापि सम्पूर्णे कुरुक्षेत्रेऽपि तत्र प्रयोगात् तदपि तथा।
इति तीर्थप्रकाशे मित्रमिश्राः—४३६
कुरुक्षेत्रं च मत्स्याश्च पञ्चालाः शूरसेनकाः ।
एष ब्रह्मर्षिदेशो वै ब्रह्मावर्त्तादनन्तरः ॥
मनुः – २-१६

वेदी प्रजापतेरेषा समन्तात्पञ्चयोजना ।
कुरोर्वै यज्ञशीलस्य क्षेत्रमेतन्महात्मनः ॥
महाभा० वन—१२६-२२

**कुरण्टकः**— दासकेरेण्डा इति ख्यातः पुष्पविशेषः
पीतझिण्टी इति दिव्यसिंहः ।
जवादिकुसुमं भाण्डी ऋषिकां सकुरण्टकान् ।
पुष्पाणि वर्जनीयानि श्राद्धकर्मणि नित्यशः ॥
इति श्राद्धदीपे ।
कुरुण्टकं विष्णुप्रियपुष्पवर्गे वृद्धहारीतेन पठितम् ।
उशीरं जातिकुसुमं कुन्दं चैव कुरुण्टकम् इत्यादि-७-५४
कुरण्टक इति कुरुण्टक इति पाठभेदः ॥
कुरण्टकः पीताम्लातकपुष्पमिति श्राद्धकल्पतरौ—१५६

**कुरुबकः**– पुष्पविशेषः । रक्तझिण्टीति वैद्यकशब्दसिन्धौ ।
प्रमाणं कुरण्टकशब्दे मृग्यम् ।
कुरुवकपुष्पं विष्णुप्रियमिति शेफालीशब्दे द्रष्टव्यम् ।

**कुरुविन्दः**— व्रीहिविशेष इति हेमाद्रिः ।
कुरुविन्दा मर्कटकास्तथा वेणुयवाश्च ये ॥
इति मार्कण्डेये ।

**कुलम्**—(१) क्षेत्रपरिमाणविशेषः ।
अष्टागवं धर्महलं षड्गवं जीवितार्थिनाम् ।
चतुर्गवं गृहस्थानां त्रिगवं ब्रह्मघातिनाम् ।
इति मन्वर्थमुक्तावल्यां हारीतः ।
षड्गवं मध्यमं हलम् इति तथाविधहलद्वयेन यावती भूमिर्वाह्यते तत्कुलमिति कुल्लूकः ।

दशी कुलं तु भुञ्जीत विंशी पञ्चकुलानि च ।
ग्रामं ग्रामशताध्यक्षः सहस्राधिपतिः पुरम् ॥

मनुः—७-११६

विष्णुधर्मोत्तरे तु चतुर्गवं नृशंसानामिति पाठः ।

विष्णुधर्मे—२-८२-३१

(२) वंशः ।
कुले मुख्येऽपि जातस्य यस्य स्याद्योनिसंकरः ।
संश्रयत्येव तच्छीलं नरोऽल्पमपि वा बहु ॥

मनुः—१०-६०

अश्वं पित्रा परीक्षेत मात्रा कन्यां परीक्षयेत् ।
तृणाद् भूमिं परीक्षेत आचारेण कुलं तथा ॥

इति विष्णुः संस्कारप्रकाशे—५८६

स्थितिरविच्छिन्नवेदवेदिताऽयोनिसङ्करित्वमार्षेयत्वं चेति कुलगुणाः । इति हारीतः ।
अत्र स्थितिः- अविच्छिन्नसन्तानता अविच्छिन्नवेदवेदिता अविच्छिन्नवेदयज्ञता इति माधवाचार्याणामभिप्रायः ।
कुलं दहति राजाग्निः । मनुः—७६
उभयत्र, दशाहानि कुलस्यान्नं न भुज्यते ।

दक्षः—६-१४

(३) ज्ञातिसम्बन्धिबन्धूनां समूहः कुलमिति मिताक्षरा ।
नृपेणाधिकृताः पूगाः श्रेणयोऽथ कुलानि च ।
पूर्वं पूर्वं गुरुज्ञेयं व्यवहारविधौ नृणाम् ॥

याज्ञ०—२-३०

(४) धर्मार्थव्यवहारद्रष्टार इति कुल्लूकः ।
त्रयः परार्थे क्लिश्यन्ति साक्षिणः प्रतिभूः कुलम् ।
चत्वारस्तूपचीयन्ते विप्र आढ्यो वणिक् नृपः ॥

मनुः—८-१६६

ग्रामीयककुलानां च समक्षं सीम्नि साक्षिणः ।

मनुः—८-२५४

(५) व्यवहर्तृसमूहः ।
विक्रयाद्यो धनं किंचिद् गृह्णीयाद् कुलसन्निधौ ।

मनुः—८-२०१

अत्र कुलं व्यवहर्तृ समूह इति कुल्लूकः ।
(६) साक्षी ।
निक्षेपो यः कृतो येन यावांश्च कुलसन्निधौ ।
तावानेव स विज्ञेयो विब्रुवन् दण्डमर्हति ॥

मनुः—८-१९४

इत्यत्र कुलसन्निधौ साक्षिसमक्षमिति कुल्लूकः ।
साम्प्रतिकाः भद्रशब्देन पञ्चायतशब्देन च यान् व्यवहरन्ति त एवं वस्तुतः कुलशब्दस्य अर्थं इति मन्ये ।
कुलं जनपदे गोत्रे सजातीयगणेऽपि च ।
भवने च तनौ क्लीवम्—इति मेदिनी—२८-६
"सजातीयैः कुलम्" इत्यमर—२-३-४१

**कुलंकुलः**—वृथा गृहाद् गृहं गमनशीलः इति नरसिंहवाजपेयी । न कुलंकुलः स्यात्—वसिष्ठः—१२-८

**कुलटा**— व्यभिचारिणी स्त्री ।
कुलात् कुलमटति इति कुलटा इति विज्ञानेश्वरः
अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्मणः ।
अन्यत्र कुलटाषण्ढपतितेभ्यस्तथा द्विषः ॥

याज्ञ० —१-२१५

**कुलपर्वतः**— महेन्द्रो मलयः सह्यः शुक्तिमान् क्षपर्वतः ।

विन्ध्यश्च परियात्रश्च सप्तात्र कुलपर्वताः ॥
अत्र—भारतवर्षे । विष्णु० पु०—२-३-३

**कुलपालिका**— कुलधर्मपालनकारिणी स्त्री ।
मृते भर्त्तरि भर्त्रंशं लभेत कुलपालिका ॥
इति कात्यायनः ।

**कुलमित्रम्**— कुलक्रमेण येन सह मैत्री अस्ति ॥
आर्द्धिकः कुलमित्रं च गोपालो दासनापितौ ।
एते शूद्रेषु भोज्यान्ना यश्चात्मानं निवेदयेत ॥
मनुः—४-२५३

**कुलायनम्**—कुलीनस्य आनयनमिति विवादरत्नाकरे-१८१
दुर्गतस्य कुलीनस्य कुले संरक्षणं साहाय्यदानेन
इति सारः ।
कुलायनं दुर्भिक्षादिपीडितसमूहपरिपालनम् इति
नन्दपण्डितः—विष्णुः—५-१६६
सभा प्रपादेवगृहतडागारामसंस्कृतिः ।
तथानाथदरिद्राणां संस्कारो यजनक्रिया ।
कुलायनं निरोधश्च कार्यमस्माभिरंशतः ।
यत्रैतल्लिखितं सम्यग् धर्म्या सा समयक्रिया ।
इति तत्र वृहस्पतिः ॥

**कुलालः**— कुम्भकारः ।
कुलालस्य घटनिर्माणमित्यादि कुल्लूकः—१-२१

**कुलिकः**—(१) परिच्छेदकत्वेन नियुक्त इति व्यवहार
कल्पतरुः—४६ तथा नारदीयभाष्ये ॥
राज्ञां व्यवहारपरिच्छेदकतया नियुक्त इति
व्यवहार प्रकाशे—११६

कुलं ब्राह्मणादिगणस्तदधिकारी कुलिक इति मदनरत्ने ॥
च्युतः स्वधर्मात् कुलिकः सूचको हीनसेवकः ।
पित्रा विवदमानश्च भेदकृच्चैल्यमाक्षिणः ॥
नारदसंहिता—२-१६६
(२) कुलिकः—स्वकुलोद्भव इति विज्ञानेश्वरः ।
सामन्तकुलिकादीनामपकारस्य कारकः
पञ्चाशतपणिको दण्ड एषामिति विनिश्चयः ॥
याज्ञ०—२-२३३
कुलिको नागभेदे स्याद्द्रुभेदे कुलसत्तमे
इति मेदिनी—१-७१
(३) कालविशेषः निर्णयसिन्धुव्याख्यायाम्—
कुलिकः कालवेला च यमघण्टश्च कण्टकः ।
वारादद्विघ्ने क्रमान्मन्दे घट्यूनः कुलिको निशि ॥
भौमभार्गवसूर्यज्ञसौरीन्द्वाङ्गिरसक्रमात् ।
वासरेषु द्वितियाद्या अर्धयामा बुधैः स्मृता ॥
इति चार्द्धयामाः ।
मुहूर्त्तचिन्तामणौ च—
कुलिकः कालवेला च यमघण्टश्च कण्टकः ॥
वाराद्द्विघ्ने क्रमान्मन्दे बुधे जीवे कुजे क्षणः ॥ १-३५

**कुलिशम्**— हीरकम् ।
कनकं कुलिशं नीलं पद्मरागं च मौक्तिकम् ।
एतानि पञ्च रत्नानि विन्यसेल्लिङ्गमूर्द्धनि ॥
इति कालिकापुराणे इति कृत्यरत्नाकरे—४६३

**कुलीनः**—(१) सत्कुलजः सज्जनः ।
सत्कुलेजाता विद्यादिगुणयोगिनः कुलिना इति
मेधातिथिः ।

पुरुषाणां कुलीनानां नारीणां च विशेषतः ।
मुख्यानां चैव रत्नानां हरणे वधमर्हति ॥
मनुः—८-३२३

(२) स्वकुलजातः ।
न खलु कुलिने विद्यमाने परगामिनी स्यात
वसिष्ठः—१७-८०

कुलीरः—कर्कटः । स च अभक्ष्य इत्यादि वसिष्ठः ।
मत्स्यानां वा चेटगवयशिशुमारनक्रकुलिराः ॥
वसिष्ठः—१४-४१

कुलुत्थम्— द्विदलविशेषः कोलथ इति उत्कलेषु प्रसिद्धः ।

कुल्मापः—(१) कुलमाषः किंचिदुत्स्विन्नमाष इति
नित्याचारप्रदीपे ॥ २-२५१
कुल्मापोल्लासिकादानदन्याधेयफलं लभेत
(२) अर्धस्विन्नास्तु गोधूमा अन्येऽपि चणकादयः ।
कुल्माष इति कथ्यन्ते ।
(३) कीटदष्टमाषः ॥ (४) कुलुत्थे (५) गन्धशाली
(६) वंशे (७) धान्यविशेषे वोरोधान इति वैद्यक-
शब्दसिन्धौ ॥
(७) कुल्मापाराजमाषा इति प्रयोगपरिजातकारः ।
स्विन्नमाषा इति कश्चित इति पूजाप्रकाशे—१५७
कुलमाषा वेल्लकाश्चैव कोमला वालुकाः शुभाः ।
(८) कुल्मापः पश्चिमदेशे कुलथ इति प्रसिद्धो
व्रीहिविशेष इति सागरः इति कृत्यरत्नाकरे—५९२
(९) कुलमाष ईषत्स्विन्नमाषः ॥
यवपिष्टक इत्यन्ये इति कृत्यरत्नाकरे—१९८

कुल्या— कुत्रिमा सरित ।
ऋचः पठन् मधुपयः कुल्याभिस्तर्पयेत सुरान्
गोभिलस्मृतिः—२-५३

कुविन्दः— तन्तुवायः ।
ताम्बूलिक कुविन्द चर्मकारादीनां चेति
मिताक्षरा याज्ञ०—२-३०
कुविन्दस्य पटनिर्माणमिति कल्लूकः—१-२१

कुविन्दकः— जातिविशेषः कंसकारशब्दे द्रष्टव्यः ।

कुविन्दा— घोण्टाका ।
कुविन्दां स्वेतवार्ताकीं कुष्माण्डं च न भक्षयेत ॥
इति प्रायश्चित्तविवेके देवलः । अत्र कुविन्दा घोण्टाका
इति शूलपाणिः—२४६

कुशः— तृण विशेषः ।
वीरमित्रोदये परिभाषप्रकाशे कौशिकः ।
सप्तपत्रा शुभा दर्भास्तिलक्षेत्रसमुद्भवाः ।
ते प्रशस्ता द्विजातीनां दैवे पित्र्ये च कर्मणि ॥
अप्रसूता स्मृता दर्भाः पुष्पितास्तु कुशाः स्मृताः ।
समूलाः कुतपाः प्रोक्ताश्छिन्नग्रास्तृणसंज्ञिताः ॥
अप्रसूताः अपुष्पिता इति मित्रमिश्राः—९८
कुशप्रतिनिधयो यथा—
कुशाः काशा यवा दूर्वा उशीराश्च सकुन्दुराः ।
गोधूमा व्रीहयो मुञ्जा दश दर्भा सवल्वजाः ॥ —९९

कुशकण्टकः- कुशमूलमिति हरिहर ॥ पारस्करः-१-१४-३

कुशकण्डिका— परिसमूहनादिपर्युक्षणान्तं कर्म ।

तत्र कुशानां प्रथमासादनीयत्वेन कुशकण्डिका संज्ञा इति मन्मतम् ॥

कुशली— स्वर्णपुष्पा इति शान्तिमयूखे ।

कुशावर्त्तः—त्र्यम्बकगिरिस्थितो गोदावरीप्रभवः श्राद्ध-देशत्वेन विष्णुना उक्तः । स च नासिकसमीपस्थः ॥

विष्णुः—८५-११

गङ्गाद्वारे प्रभासे तु विल्वके नीलपर्वते ।
कुरुक्षेत्रे च कुब्जाम्रे भृगुतुङ्गे महालये ॥
केदारे फल्गुतीर्थे च नैमिषारण्य एव च ।
सरस्वत्यां विशेषेण पुष्करे तु विशेषतः ॥
नर्मदायां कुशावर्त्ते श्रीशैले कर्णभद्रके ।
वेत्रवत्यां विशाखायां गोदावर्यां विशेषतः ॥
एवमाद्येषु चान्येषु तीर्थेषु पुलिनेषु च ।
नदानां चैव तीर्थेषु तुष्यन्ति पितरः सदा ॥

कूर्म पु०—२-२०

कुशी— अयोविकारदण्डविशेषः

अखनस्तत्र वल्मीकं कुशीभिः पर्वतोपमम् ।
अथ ते ददृशुस्तत्र विशाखं मुनिसत्तमाः ।
जपन्तमसकृन्मन्त्रं तमेव चतुरक्षरम् ॥

स्कन्द-पु०—प्रभास—२७८-५०

कुशीलवः—(१) चारण नटनर्त्तकगायनादय इति मेधातिथिः ।

न साक्षी नृपतिः कार्यो न कारुककुशीलवौ ॥
न श्रोत्रियो न लिङ्गस्थो न सङ्गेभ्यो विनिर्गतः ॥

मनुः—८-६५

(२) कीनाशः ।

भिक्षुकांश्चाक्रिकांश्चैव क्लीबोन्मत्तान् कुशीलवान् ।
वाह्यान् कुर्यान्नरश्रेष्ठ दोषाय स्युर्हितेऽन्यथा ॥

महाभा०शान्ति—६६-५१

अत्र कुशीलवान्-फाललेखान् कीनाशान् इति यावत् इति नीलकण्ठः ॥

कुशेण्डूवम्— कुण्डलाकारकुशपत्रम् ।

कुशानाम् इण्डूवानि कुण्डलाकाराणि पत्राणि इति हरिहरः ।

घृताक्तानि कुशेण्ड्वानि जुहुयात्

पारस्कर गृ०—३-७-३

कुसिन्धः— कबन्धः इति बौधायनविवरणे ।

"कुसिन्धभगशृगालसुराध्वजान्"

इति बौधा०—१-१०-१६

कबन्धशब्दस्यायं प्रामादिकपाठो भवेन्न वेति विचार्यम् ॥

कुसीदम्— वार्द्धुष्यम् । वृद्ध्यर्थं धनप्रयोगः इति मित्रमिश्रः परिभाषाप्रकाशे—४६

कुत्सितात् सीदतश्चैव निर्विशङ्कैः प्रगृह्यते ।
चतुर्गुणं वाष्टगुणं कुसीदाख्यमृणं ततः ॥

इति बृहस्पतिः विवादरत्नाकरे—५

स्थानलाभनिमित्तं यद्दानग्रहणमिष्यते ।
तत् कुसीदमिति प्रोक्तं तेन वृत्तिः कुसीदिनाम् ॥

इति तत्रैव नारदः पृ०—५

कुसीदी— वृद्धिजीवी ।

**कुसुम्भम्**—(१) शाकविशेषः ।
कुसुम्भं ललिताशाकं वृन्ताकं पूतिकां तथा ।
भक्षयन् पतितः स स्यादपि वेदान्तगो द्विजः ॥
इति तिथितत्त्वे उशनाः ।
कुसुम्भं कुरडु इति महाराष्ट्रे प्रसिद्धमिति कमलाकरः ।
कुसुम्भं कण्टकरहितं स्मृत्यन्तरे विशेषितत्वात
इति देवस्वामी इति हेमाद्रिः ॥ परिशेष—५६६
(२) कुसुम्भं तैलसाधनधान्यमिति माधवाचार्याः ॥
पराशरः—६-४०

**कुसुम्भः**—(१) कमण्डलुः ।
क्लृप्तकेशनखश्मश्रु पात्री दण्डी कुसुम्भवान् ।
विचरेन्नियतो नित्यं सर्वभूतान्यपीड़यन् ॥
मनुः—६-५२
(२) कुसुम्भः कुरडु इति महाराष्ट्रे प्रसिद्धम् इति
निर्णयसिन्धौ—२६१ (निर्णयसागर प्रकाशने)
कुसुम्भः करडि इति लोके इत्याचारेन्दौ—२८६
पूतिकरञ्ज इति वैद्यकशब्दसिन्धौ ।
(३) कुसुम्भः पुष्पविशेषः कुसुमफुल इति भाषाः इति
पद्मोत्तमविकाशः स्यात कुसुम्भः शरदस्तथा
इति वैद्यकरत्नमालायाम् ।
तस्यगुणाः सुश्रुते सूत्रस्थाने—४६
कटुर्विपाके कटुकः कफघ्नो विदाहिभावादहितः
कुसुम्भ इति शब्दकल्पद्रुमे ॥
वृन्ताकनालिकापोतकुसुम्भाश्मन्तकानि च वर्जयेत
इति पैठीनसिः ।

**कुसूलः**— धान्यादिकोष्ठः ।
कन्दुः कोष्ठः कुसूल इति पर्यायत्वेन दर्शिता इति
पातञ्जलमहाभाष्ये—१-२-२
कुसूलो व्रीह्यगारं स्यादित्याभिधानिका
इति कुल्लूकः मनुः—४-७
कुशूलमिति मिताक्षराधृतपाठः याज्ञ०—१-१२८

**कुसूलधान्यकः**— कुसूलः कोष्ठः तत्परिमितं धान्यं
यस्यास्ति सः वर्षत्रयपर्याप्तधान्य इति कुल्लूकः—४-७
कोष्ठिकापरिमित धान्यवान् इति
नित्याचारप्रदीपे—२-२५६
कुशूलं धान्यकोशकमिति हलायुधः ।

**कुसृतिः**— अप्रधानमार्गः ।
कुमार्ग इति नरसिंहवाजपेयी ।
"न कुसृत्या ग्रामं प्रविशेत" इत्यापस्तम्बः—१-३१-२१

**कुस्तुम्बरम्**-- धन्याकम्, धनिआ इति प्रसिद्धम् ।
धणिआ इति प्रसिद्धमिति निर्णयसिन्धौ ॥ —२६२

**कुहकः**—(१) इन्द्रजालम् कुहुक इति प्रसिद्धम् ।
(२) कपटी दाम्भिक इति हेमाद्रिः—५६६
कुहकः—प्रकाशे शुचिरेकान्ते यथेच्छाचारी इति
हरदत्तः आप०—१-६-२०-५
कुहकः वशीकरणादिनिष्ठः इति संस्कारप्रकाशे-५७६
नोद्धतकुहकैः सहैकत्र वसेत् इति तत्र शङ्खलिखितौ ।
(३) कुहकं कपटमिति लक्षणप्रकाशे
न कल्को न कुहको भवेदिति वसिष्ठः—६-४०

**कुहूः**— प्रतिपन्मिश्रा अमावास्या ।

...य पूर्वामावास्या सिनीवाली या उत्तरा सा कुहूरिति
कौशिकसूत्रे—१-१३०

**कुकुदः**— सालङ्कारकन्यादाता, इति प्रयोगपारिजात-
संस्कारमयूखयोः ॥

कुकुदश्चाश्वमेधी च प्राणदाता भयेषु च ।
सम यान्ति रथा एषां त्रयो वै नात्र संशयः ॥
इति सम्बर्त्तः ।

सत्कृत्यालंकृतां कन्यां यो ददाति स कुकुद इति कोशः

**कूटम्**— ललाटोर्ध्वभागः ।

**कूटः**—(१) शृङ्गहीनः बलीवर्दादिः
कूटः शृङ्गहीन इति गौतमव्याख्याने हरदत्तः ।
काणखोरकूटवण्ठाः मध्यमस्यानेकाश्चेत
गौतम० ध०—३-१०-७

"कूटो वामनाकृतिरिति" जीमूतवाहनः दायभागः—२

(२) कपटव्यवहारी ।
कूटः वाच्यन्यत् मनस्यन्यत् इत्यादिकरूपेण कपट-
व्यवहारीति शूलपाणिः ।

अजाविके माहिषिके कूटे च वृषलीपतौ ।
एतेषां भोजनं कृत्वा द्वादशाहं पयः पिबेत् ॥
इति प्रायश्चित्तविवेके यमः ।

(३) मिथ्यावादी ।
उक्तेऽपि साक्षिभिः सान्ध्ये यदन्ये गुणवत्तमाः ।
द्विगुणा वान्यथा ब्रूयुः कूटाः स्युः पूर्वसाक्षिणः ॥
याज्ञ० —२-८०

अत्र कूटा मिथ्यावादिन इति विज्ञानेश्वरः ।

(४) लोहकारादयो यस्य लोहस्योपरि साध्यं लोहादिकं
संस्थाप्य शिल्पसाधनं कुर्वन्ति स कूट इत्युच्यते ।
तेन कूटवत् तिष्ठति इति कूटस्थ उदासीन इत्यर्थः ।
"कूटस्थो विजितेन्द्रियः" भगवद्गीता—६-८

(५) कैतवम् "न कूटैरायुधैर्हन्यात्" मनुः—७-९०

(६) पर्वतशृङ्गम् ।
अद्रीणामिवकूटानि धातुरक्तानि शेरते ॥
इति महाभा० अनु ।

(७) राशिः ।
कूटो राशिः राशिरिव स्थित इति शङ्कराचार्याः
द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।
भगवद्गीता—१५-१६

अन्नकूटाश्च दृश्यन्ते बहवः पर्वतोपमाः ।
दिवसे दिवसे तत्र सिद्धस्य विधिवत्तदा ॥
—रामा०—१-१४-१५

**कूटस्थः**— कूटस्थो मूलपुरुषः यतः सन्तानभेद इति गदाधरः
पारस्कर गृ०—१-८

वध्वा वरस्य वा तातः कूटस्थाद्यदि सप्तमः ।
पञ्चमी चेत्तयोर्माता तत् सपिण्ड्यं निवर्त्तते ॥

**कूटावपातः**— अज्ञातगर्त्तपतनम् ।
कूटावपातः तृणादिछन्नो मृगपातनार्थे गर्त्त इति
श्रीमूला ॥ कौट०—४-१०

कपटेन पातनं वा ।

**कूपः**— कूपो नाम दुःखेनादायोदकं पातुं योग्यः ।
यः करेणोदकं गृहीत्वा पातुं योग्यः स गर्त्त इति
गोविन्दस्वामी बौधा० ध०—२-३-६-२८

कूपलक्षणमाह गर्गः—
कुर्य्यात् पञ्चकरादूर्ध्वं पञ्चविंशकरावधि ।
कूपं वृत्तायतं प्राज्ञः सर्वभूतहितावहम् ॥ इति
स एव पञ्चकरादर्वाक् अवट इत्युच्यते ।
अवटोऽर्वाक् स पञ्चभ्य इति स्मरणात्
इति केशववैजयन्त्याम् ॥ विष्णुः—६१-१

**कूपखातः**— अगाधकूप इति माधवाचार्य्याः
पराशरः—६-३६
कूपखाते तटीवन्धे नदीवन्धे प्रपासु च ।
पानीयेषु विपन्नानां प्रायश्चित्तं न विद्यते ॥
पराशरः—६-३६

**कूपसङ्कटम्**— कूपसंकटं नाम सम्पूर्णतृणत्वं जलपूर्णत्वं चेति माधवाचार्य्याः । पराशरः—६-३७
आराधितस्तु यः कश्चिद्भिन्नकक्षो यदा भवेत् ॥
श्रवणं हृदयं भिन्नं मग्नो वा कूपसंकटे ॥
पराशरः—६-३७

**कूवरः**— रथयुगन्धरः युगवन्धनस्थानम् ।
कूवरः युगन्धर इति चन्द्रकान्तः रथिकस्थानमिति केचित् ॥ गोयुक्तं रथमुपसंक्रम्य पक्षसी कूवरबाहू वाभिमृशेत् । गोभिलः—३-४-३१
नपीडितो महाबाहुर्गृहीत्वा रथकूवरम् ।
गाङ्गेयोयुद्धदुर्द्धर्षस्तस्थौ दीर्घमिवान्तरम् ॥
महाभा० विरा०—६४-४८

**कूवरी**— ईषादण्डाग्रमिति हरिहरः ।
युगन्धर इति गदाधरः
वामदेव्यमसीति कूवरीम् इति पारस्करः—३-१४-७

**कूर्चः**—(१) कूर्चं तृणादि इति हरदत्तः ।
जीर्णान्युपानच्छत्रवासःकूर्चादीनि गौतम० ध०-२-१-६०
तृणमयमासनम् ।
कुरुचि इति लोके प्रसिद्धमेवेति मन्मतम् ।
(२) कूर्चः दाढ़िका
ततो विप्रमुखादग्निज्वालामालीविनिर्गतः ।
कूर्चं हि सचिवस्यापि ददाह कुपितस्तदा ॥
जैमि० अश्व—१५-६४
(३) कूर्चः कुशासनमिति गदाधरः पारस्कर-गृ०—३-८-१०
(४) मलापकर्षणार्थे केशादिमुष्टिः । कुच्चीति भाषा इति शब्दकल्पद्रुमे ।
ततः समर्पयेत् कूर्चमुशीरादि विनिर्मितम्
इति नरसिंहपुराणे ।

**कूर्चिका**—(१) खाद्यद्रव्यविशेषः दधिक्षीरपाकरूपः ।
कूर्चिका क्षीरविकृतः इत्यग्निपुराणे—३६६-३६
दध्ना सह पक्वं क्षीरं कूर्चिका भवति ।
कूर्चकमिति पाठोऽपि ।
पक्वं दध्ना समं क्षीरं विज्ञेया दधिकूर्चिका ।
तक्रेण तक्रकूर्चा स्यात्तयोः पिण्डः किलाटकः ॥
इति वैद्यकशब्दसिन्धौ ।
दध्ना तक्रेण वा पाकात् क्षीरं भिन्नघनद्रवम् ।
कूर्चिका सा द्विधा प्रोक्ता दधितक्रोपसर्जनात् ॥
इत्याचारेन्दौ ।
जलासंस्पृष्टं वस्त्रक्षालितं दधि कूर्चिकेति बालम्भट्टी याज्ञ०—१-१६६

(२) वृश् इति भाषायाम् ।
वराहरोमरचितां श्मश्रुवैशद्यकारिणीम् ।
पितृभ्य कूर्चिकां दत्वा सुरूपः सुभगो भवेत् ॥

**कूर्परः**— कफोणिः । कहुणि इति भाषायां प्रसिद्धः
काशीद्विजाशीर्भिरहो यदाप्ता
कस्तां मुमुक्षुर्यदिवामुमुक्षुः ।
ग्राहं करस्थं स विसृज्य हृद्यं
स्वकूर्परं लेढ़ि विमुढ़चेताः । स्कन्द० काशी—५-१२

**कूर्पासकः**—कञ्चुलिका (स्त्रियाः)
हरिद्रां कुङ्कुमं चैव सिन्दूरं कज्जलं तथा ।
कूर्पासकं च ताम्बूलं माङ्गल्याभरणं शुभम् ॥
केशसंस्कारकवरी कण्ठकर्णविभूषणम् ।
भर्तुरायुष्यमिच्छन्ती दूरयेद् गर्भिणी नहि ॥
इति गदाधरकृत पारस्करगृह्यभाष्योद्धृतमदनरत्ने ।

**कूर्मपित्तम्**— जलपूर्णशरावः ।
"कूर्मपित्तं चोपस्थे कृत्वा"
पारस्कर० गृ०—१-१४-५

**कूष्माण्डम्**— कर्कारु इति हेमाद्रिः श्राद्धकल्पे—१५८
कूष्माण्डः चेल्लाक इति प्रायश्चित्तविवेके शूलपाणिः ।
दीपप्रलोपनं पुंसां कुष्माण्डं च्छेदनं स्त्रियाः ।
अचिरेणैव कालेन वंशच्छेदो भवेद्ध्रुवम् ॥
इति आचारभूषणे—३३२

**कूष्माण्डनवमी**— कार्त्तिकशुक्लनवमी ।
स्कन्द० कार्त्तिकमाहा- अ—३१

**कूष्माण्डाः**— मन्त्रविशेषाः ।
कूष्माण्डाः कूष्माण्ड्यः कूष्माण्डानि इति लिङ्गत्रये एषां निर्देशोऽस्ति । "अग्निवामिमुपसमाधाय कूष्माण्डैर्जुहुयाद् घृतम्" वसिष्ठः—२-३-२१
अग्निवायुसूर्यदेवत्यास्तिस्रोऽनुष्टुभः कूष्माण्डीसंज्ञा इति महीधरः ।
यद्देवा देवहेडनं देवासश्च कृमा वयम् ।
अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः ॥
यदि दिवा यदि नक्तमेनाङ्सि चकृमा वयम् ।
वायुर्मा तस्मादेनसो विश्वान्मुञ्चत्वङ्हसः ।
यदि जाग्रद् यदि स्वप्न एनाङ्सि च कृमा वयम् ।
सूर्यो मा तस्मादेनसो विश्वान्मुञ्चत्वङ् हसः ।
यजुः—२०-१४-१६
तैत्तिरीयके स्वाध्यायब्राह्मणे "यद्देवा देव हेडनम्" "यददीव्य नृणाम्, आयुष्टविश्वतो दधादिति त्रयोनुवाकाः"
इति हरदत्तः गौत० ध०—३-१-१२

**कृकवाकुः**— कुक्कुटः इति नरसिंहवाजपेयी ।
"न श्मश्रुकरकाकारिकृकवाकुसमागमे" इति नित्याचारप्रदीपोद्धृतदेवीपुराणे ।
अयं च विषसूचक जीवविशेषः "कृकवाकुर्विरौति च" इति मात्स्यवचनात् (२१८-१६) सम्पूर्णपाठः कोकिलशब्दे द्रष्टव्य ।

**कृकषा**— गृहगोधिका झिटिपिटि इति प्रसिद्धा ।
कृकषा कङ्कणहारिका इति गदाधरभाष्ये ।
कृकषाया •आयुष्कामस्य इति पारस्करः—१-१६-८

**कृच्छ्रः**—(१) प्राजापत्यव्रतम् ।
त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम् ।
त्र्यहं परं च नाश्नीयात् प्राजापत्यं चरन् द्विजः ॥
मनुः—११-२११

त्र्यहं प्रातस्तथा सायमयाचितं पराक इति कृच्छ्रः
वसिष्ठः—२४-२

(२) कष्टम् । नदीकूलं यथा वृक्षो वृक्षं वा शकुनिर्यथा ।
तथा त्यजन्निमं देहं कृच्छ्राद् ग्राहाद् विमुच्यते ॥
मनुः—६-७८

**कृच्छ्रातिकृच्छ्रः**— याज्ञवल्क्यमते एकविंशतिरात्रं पयसा वर्त्तनं कृच्छ्रातिकृच्छ्रः गौतमेन तु अब्भक्षस्तृतीय इति द्वादशदिनानि उदकेन वर्त्तनं कृच्छ्रातिकृच्छ्रमित्युक्तम् ।

**कृच्छ्रार्द्धः**— सायं प्रातस्तथैकैकं दिनद्वयमयाचितम् ।
दिनद्वयं च नाश्नीयात् कृच्छ्रार्द्धः सोऽभिधीयते ॥
इति प्रायश्चित्तविवेके आपस्तम्बः

**कृतम्**—(१) सत्ययुगम् ।
चत्वार्याहुः सहस्राणि वर्षाणां तत्कृतं युगम् ।
तस्य तावच्छती सन्ध्यासन्ध्यांशश्च तथाविधः ॥
मनुः—१-६९

(२) सिद्धान्नम् ।
कृतमोदनसक्त्वादितण्डुलादिकृताकृतम्
इति कात्यायनः—२४-३

**कृतः**—(१) जातिविशेषः
(२) दासविशेषः यः निर्दिष्टकालार्थं दासत्वमङ्गीकृतवान् ॥
नारदसंहिता—६-२३

कृतः एतावत्कालं त्वद्दास इत्यभ्युपगमित
इति विज्ञानेश्वरः—२-१८२

**कृतकालः**—(१) कृतकालः आधिविशेषः
काले कालकृतो नश्येत् फलभोग्यो न नश्यति ।
(२) दासविशेषः यः निर्दिष्टकालार्थं दासत्वमङ्गीकृतवान् । "तवाहमित्युपगतः प्रव्रज्यावासितः कृतः"
इति नारदः—६-२३

**कृतघ्नः**— यः कृतमुपकारं हन्ति स्वयमपकारकरणेन व्यथयति सः । यथा अभोज्यान्नप्रकरणे
कृतघ्नस्यान्नमेव च ।
इति मनुः—४-२१४

बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्मतः ।
शरणागतहन्तॄंश्च स्त्रीहन्तॄंश्च न सम्वसेत् ।
मनुः—११-१९०

कृतघ्न उपकृतस्य हन्ता । इति विज्ञानेश्वरः—१-१६४

**कृतज्ञः**— कृतमुपकारं जानाति न विस्मरति इति कृतज्ञः
धर्मज्ञं च कृतज्ञं च तुष्टप्रकृतिमेव च ।
अनुरक्तं स्थिरारम्भं लघुमित्रं प्रशस्यते ॥
मनुः—७-२०९

**कृतदासः**— दासविशेषः कृतशब्दो द्रष्टव्यः ।

**कृतबुद्धिः**— अनागतेऽपि कृतं मयेति बुद्धिर्येषाम् शास्त्रोक्तानुष्ठानेषु उत्पन्नकर्त्तव्यताबुद्धयः इत्यर्थ इति कुल्लूकः । विद्वत्सु कृतबुद्धयः—१-९७

कृतमालः— आरग्वधः कर्णिकार इति कश्चित् ।

कृताकृतम्} तण्डुलाः
कृताकृताः} कृताकृताः सकृदवहतास्तण्डुला इति विज्ञानेश्वरः—१-२८७

कृतमोदनमकृत्वादि तण्डुलादिकृताकृतम् ।
व्रीह्यादि चाकृतं प्रोक्तमिति हव्यं त्रिधा बुधैः ॥

कात्यायनः—२०-१-३

कृताञ्जलिः— बद्धाञ्जलिः

अन्यत्र व्यश्वसारथ्यायुधकृताञ्जलिप्रकीर्णकेश पराङ्मुखोपविष्टस्थलवृक्षाधिरूढदूतगोब्राह्मणवादिभ्यः

गौतमः—२-१-१८

कृताञ्जली— अञ्जलिनी (लताविशेषः)

कृतान्तः—(१) सिद्धान्तः शास्त्रमित्यर्थः ।

सांख्यं योगं पञ्चरात्रं वेदाः पाशुपतं तथा ।
कृतान्तपञ्चकं विद्धि ब्रह्मणः परिमार्गणे ॥

इति परिभाषाप्रकाशोद्धृत विष्णुधर्मोत्तरे । परि—८८

यथा लौकिकेषु वैदिकेषु च कृतान्तेषु इति पातञ्जलमहाभाष्ये ।

पञ्चैमानि महाबाहो कारणानि निबोध मे ।
सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥

भगवद्गीता—१८-१३

(२) यमः ।

व्यापारान् सकलांस्त्यक्त्वा पूजयध्वं जनार्दनम् ।
विकटा इव दृश्यन्ते कृतान्तनगरद्रुमाः ॥

बृहन्नारदीय—पु०—२८-१०६

कृतान्नम्— तण्डुलमोदकादि ।

वस्त्रं पत्रमलङ्कारं कृतान्नमुदकं स्त्रियः ।
योगक्षेमं प्रचारं च नाविभाज्यं प्रचक्षते ॥

मनुः—९-२१९

अत्र कृतान्नं तण्डुलमोदकादि इति विज्ञानेश्वरः ।

कृतमोदनमकृत्वादि तण्डुलादि कृताकृतम् ।
व्रीह्यादि चाकृतं प्रोक्तमिति हव्यं त्रिधा बुधः ॥

कात्यायनः—२०-१-३

पक्वान्नात् तस्य भेदः यथा—

पक्वान्नानां कृतान्नानां मत्स्यानामामिषस्य च ।
सर्वेषां मूल्यभूतानां मूल्यात् पञ्चगुणो दमः ॥

इति मिताक्षरायां चौर्यप्रकरणे नारदः ।

कृतावसक्थिकः— वस्त्रादिना कृतपृष्ठजानुजङ्घाबन्धः ।

कृतावस्थः— राज्ञा कृताह्वानः ॥

पृष्टोऽपव्ययमानस्तु कृतावस्थो धनैषिणा ।
त्र्यवरैः साक्षिभिर्भाव्यो नृपब्राह्मणसंनिधौ ॥

मनुः—८-६०

कृत्या— कृत्या अभिचारप्रकारा एवं मन्त्रादिशक्त्य उच्चाटनसुहृदबन्धुकुलद्वेषविचित्तीकरणादिहेतवो भूतविद्यादिषु प्रसिद्धाः इति मेधातिथिः ।

अभिचारेषु सर्वेषु कर्त्तव्यो द्विशतो दमः ।
मूलकर्मणि चानाप्तैः कृत्यासु विविधासु च ॥

मनुः—९-२९०

कृत्रिमः—(पुत्रविशेषः) धनक्षेत्रस्नेहादिलोभेन स्वयं

सदृशं तु प्रकुर्याद् यं गुणदोषविचक्षणम् ।
पुत्त्रं पुत्रगुणैर्युक्तं स विज्ञेयश्च कृत्रिमः ॥

मनुः—९-१६९

**कृपणम्**— कृपापात्रम् ।
छायास्त्वोदासवर्गश्च दुहिता कृपणं परम् ॥
तस्मादेतैरधिक्षिप्तः सहेतासंज्वरः सदा ॥
मनुः—४-१८५

**कृषीवलः**— कृषिकृत् । कर्षकः
भूमावप्येककेदारे कालोप्तानि कृषिबलैः ।
ननारूपाणि जायन्ते बीजानीह स्वभावतः ॥
मनुः—६-३८

**कृष्णम्**—(धनम्) उत्कोचद्यूतादिना अर्जितं धनम् ।
पार्श्विकद्यूतचौर्यादि प्रतिरूपकसाहसैः ।
व्याजेनोपार्जितं यत्तत् सर्वेषां कृष्णमुच्यते ॥

**कृष्णः**— विष्णुः ।
कृषिर्भूवाचकः शब्दो णश्च निर्वृत्तिवाचकः ।
विष्णुस्तद्भावयोगाच्च कृष्णो भवति शाश्वतः ॥
इति व्यासः ।
कर्षतीति कृष्ण इति वा ।
कृषामि पृथिवीं पार्थ भूत्वा कार्ष्णायसो हलः ।
कृष्णो वर्णश्च मे यस्मात् तस्मात् कृष्णं विदुर्जनाः ॥
इति वैजयन्त्याम् ॥ विष्णुस्मृतिः—६८-६६

**कृष्णजन्माष्टमी**— दर्शान्त-श्रावणकृष्णाष्टमी ।
पूर्णिमान्तभाद्रकृष्णाष्टमी । तत्र निशीथो जन्म कालः
श्रावणे बहुले पक्षे कृष्णजन्माष्टमीव्रतम् ।
न करोति नरो यस्तु व्याली भवति कानने ॥

**कृष्णत्रयम्**— कस्तूरिकाकर्पूरकुङ्कुमानि
इति नरसिंहवाजपेयी
कृष्णत्रयेणानुलिप्य संपूज्य कुसुमैः सितैः ।
इति विष्णुधर्मोत्तरे ।

**कृष्णधान्यम्**— तिलमाषादि इति हरदत्तः ।
विलयनं मथितं पिण्याकं मधुमांसं वर्जयेत् ।
कृष्णधान्यं शूद्रान्नं ये चान्ये नाश्यसम्मताः ॥ २ ॥
अहविष्यमनृतं क्रोधं येन च क्रोधयेत् ।
स्मृतिमिच्छन् यशो मेधां स्वर्गं पुष्टिं द्वादशैतानि
वर्जयेत् ॥ ३ ॥ आप० ध०—२-८-१८-२

**कृष्णपृष्ठः**— वैश्यापतिः ब्राह्मणः ।
यः सगोत्रां समारूढो ब्राह्मणो गोत्रभिद् भवेत् ।
वैश्यापतिः कृष्णपृष्ठः काण्डपृष्ठो नरो भवेत् ॥
इति यमः कल्पतरौ श्राद्धकल्पे—१००

**कृष्णबन्धुः**— शूद्रः इति नरसिंहवाजपेयिनः
एककूपोदके ग्रामे ब्राह्मणो वृषलीपतिः ।
अब्देन शूद्रो भवति कृष्णबन्धुमुपाश्रितः ॥

**कृष्णब्रह्मचर्यम्**— परदारवर्जनं नित्यं, नित्यं स्वदारसेवनं
कृष्णम् (ब्रह्मचर्यम्) इति हारीतः ।

**कृष्णलः**—(१) गुञ्जा ।
कृष्णलं गुञ्जा इति आचारेन्दौ—१५८
तत्र कृष्णलोन्मत्तकं काञ्ची तथा च गिरिकर्णिका ।
न कण्टकारिका पुष्पं तथान्यद्गन्धवर्जितम् ॥
मुद्राविशेषः । यवत्रयपरिमितसुवर्णादिः ।
"त्रियवस्त्वेककृष्णल" इति मनुः—८-१३४

कृष्णलं रक्तिकेति प्रसिद्धमिति मन्वर्थमुक्तावली ।
शूलपाणिरपि एवमेव ।
कृष्णं लातीति कृष्णलं गुञ्जा इति वैजयन्त्यां
नन्दपण्डितः—विष्णुः—४-६
कृष्णलं गुञ्जाबीजप्रमाणम् ।
माषो विंशतिभागस्तु ज्ञेयः कार्षापणस्य हि ।
कृष्णलस्तु चतुर्थांशो माषस्यैव प्रकीर्त्तितः ॥
इति नपुंसकपाठोऽप्यस्ति ।

**कृष्णलाः**—सुवर्णशलकानि यवत्रयपरिमितानि
इति माधवाचार्य्याः
यो मृत्योर्बिभीयात् तस्मा एतां प्रजापत्यां
शतकृष्णलांनिर्वपेत् कालमाधव—पृ०—४७

**कृष्णवर्णः**— शूद्रः ।
यदेकरात्रेण करोति पापं
कृष्णं वर्णं ब्राह्मणः सेवमानः ।
चतुर्थकाल उदकाभ्यवायी
त्रिभिर्वर्षैस्तदपहन्ति पापम् ॥
आप०—१-९-२७-११
ब्रह्माननं क्षत्रभुजो महात्मा विड्रूरंघ्रिश्रित
कृष्णवर्णः इति श्रीमद्भागवते—२-२-३७

**कृष्णवाजी**— कृष्णजीरकमिति श्राद्धवर्ज्यें कालसारे
गदाधरः ।

**कृष्णशकुनिः**— काक इति हरदत्तः ।
रजस्वला कृष्णशकुनिपदोपहतम् ॥
गौतमः—२-८-१०

पारस्करगृह्यसूत्रभाष्ये हरिहरश्चैत्यमेव ॥ —२-८-३

**कृष्णसारः**— मृगविशेषः ।
कृष्णसारस्तु चरति मृगो यत्र स्वभावतः ।
स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्त्वतः परः ॥
मनुः—२-२३

**कृसरः**— तिलमुद्गाभ्यां सह सिद्धमन्नम् ।
तिलतण्डुलसंपक्वः कृसरः सोऽभिधीयते ॥
गोभिलस्मृतिः—३-८३
कात्यायनश्च प्रायश्चित्तविवेके ।
तिलैः सह सिद्ध ओदन इति हेमाद्रिः ।
कृसरं तिलमुद्गसिद्ध ओदन इति विज्ञानेश्वरः ।

तण्डुलार्द्धं मुद्गभिन्नं वारिणा सह संपचेत् ।
युक्तं मरीचचूर्णेन तिलचूर्णं विनिक्षिपेत् ॥
इदं कृसरनामान्नमित्याख्यातं सुरेश्वर ।
पूर्वोक्तपायसे युञ्ज्याद् दुग्धार्द्धं गुड़खण्डकम् ॥
पूर्वोक्तपायसवत् तण्डुलत्रिगुणदुग्धार्द्ध-
जलयोगे दुग्धार्द्धं गुडं योजयित्वा पचेदित्यर्थ
इति आचारेन्दुः ॥ १६८ ॥ अत्रापि लवणयोग।
कोयष्टिप्लवचक्राह्व बलाकाबकविष्किरान् ।
वृथा कृसरसंयावपायसापूपशष्कुली ॥
वर्जयेदिति । याज्ञ०—१-१७३

**कृष्णपक्षः**— येषु दिवसेषु चन्द्रकलानां क्षयो भवति ॥
अभिसुयमाणकल्याणशब्दौ द्रष्टव्यौ ॥

**क्लृप्तम्**— शुक्लदशमीदिनभागः ॥ कालमाधवः—२

**क्लृप्तः**— विहितः ।

इष्टिं वैश्वानरीं नित्यं निर्वपेदब्दपर्यये ।

क्लृप्तानां पशुसोमानां निष्कृत्यर्थमसम्भवे ॥ —११-२७

अत्र कृप्तानामावश्यकत्वेन वोधितानामिति लक्ष्मीधरः ।

कल्पतरु—गार्हस्थ्य—१३४

**केकरः**— अध्यर्द्धदृष्टिः । "टेरा' इति उत्कलभाषायां प्रसिद्धः"॥

वरमन्धो न काणः स्यात् काणः स्यान्न तु केकरः ।

वरमन्धश्च काणश्च केकरो न तु पिङ्गलः ॥

एष दुर्योधनो राजा कर्कशो मधुपिङ्गलः ।

न केवलं कुलस्यान्तं क्षत्रस्यान्तं करिष्यति ॥

इति महाभारते ।

केकरः अध्यर्द्धदृष्टिरिति स्मृतिचन्द्रिका ॥ श्राद्ध–१८३

**केकरेक्षणा**— वक्रेकनयना इति लक्ष्मीधरः गार्हस्थ्य-३० टेरी इति भाषायां प्रसिद्धा ।

**केचुकः**— कचूराख्यशाकमिति पराशरमाधवे ।

"केचुकैश्च तथा कन्दैः कर्कन्धुवदरैरपि"

इति श्राद्धदेये मार्कण्डेये ॥

**केतनम्**— निमन्त्रणम् ।

प्रतिगृह्य द्विजो विद्वानेकोद्दिष्टस्य केतनम् ।

त्र्यहं न कीर्त्तयेद् ब्रह्म राज्ञो राहोश्च सूतके ॥

इति मनुः—४-११०

**केतुः**—(१) उत्पातविशेषः ।

केतवः शिखावन्ति ज्योतींषि उत्पातरूपाणि

इति कुल्लूकः मनुः—१-३८

विद्युतोऽशनिमेघांश्च रोहितेन्द्र धनूंषि च ।

उल्कानिर्घातकेतूंश्च ज्योतींष्युच्चावचानि च ॥

मनुः—१-३८

(२) पताका ।

(३) शुक्लपक्षदिवसस्य द्वितीयमुहूर्त्तस्य नाम ।

चित्रः केतुरित्यादि तैत्तिरीयश्रुतिः कालमाधवे ।

**केदारः**— कृषिक्षेत्रम् ।

भूमावप्येककेदारे कालोप्तानि कृषीवलैः ।

नानारूपाणि जायन्ते बीजानीह स्वभावतः ॥

मनुः—९-३८

**केन्द्रः**— मण्डलनेमिमध्यं केन्द्र इति निर्णयसिन्धोः मासनिरूपणव्याख्याने कृष्णभट्टः ।

**केरः**—केराः परस्त्रीपुरुषसङ्केतकारिण इति चण्डेश्वरः ।

कितवान् कुशीलवान् केरान् पाषण्डस्थांश्च मानवान् ।

विकर्मस्थाने शौण्डिकांश्च क्षिप्रं निर्वासयेत् पुरात् ॥

इति विवदरत्नाकरे मनुः ।

मनुस्मृतौ तु नायं श्लोको लभ्यते ॥

**केरी**— पुष्पविशेषः सूर्ये वर्जनीयः ॥

कुट्टलोन्मत्तकं केरी तथा च गिरिकर्णिका इति नित्याचारप्रदीपोद्धृतभविष्ये ॥

**केलिः**—(१) कदलीतरुः इति नरसिंहवाजपेयी ।

रतिप्रदा तथा केलि रिति तदुद्धृतपाद्मे ॥

(२) केलिः परिहासलिङ्गनादिः

उपचारक्रिया केलिः स्पर्शो भूषणवाससम् ।

सहखट्वासनं चैव सर्वं संग्रहणं स्मृतम् ॥

मनुः—८-३५७

केवु— केवुकमिति गदाधरराजगुरुः ।

"कुष्माण्ड केवुवृन्ताक कोविदारांश्च वर्जयेत्" इति ।

केवुकः— केवुकः जलप्रभवः कन्दविशेष इति दिव्यसिंहः ॥

धानालाजे मधुयुते सक्थूंछर्करया सह ।

दद्याछ्राद्धे प्रयत्नेन शृङ्गाटविसकेवुकान् ॥

इति शंखस्मृतिः—१४-२३

हेमाद्रिस्तु केवुकमार्द्रकसदृशः कन्दः महाराष्ट्रदेश-प्रसिद्धः । केवुकस्य श्राद्धे निषेधस्तु आरण्यक केवुकविषयो वर्णनीय इत्याह ।

गौडेषु केंवु इति प्रसिद्धं मूलमित्याचारेन्दुः ॥

आरण्यशाक इति कश्चित् । केवुकम् आर्द्रक सदृशः कन्दविशेष इति श्राद्धकल्पतरौ—४६

केशः— भगः । अट्टमन्नं शिवो वेद केशो भग उदीरित इति केशशूलिनी शब्दो द्रष्टव्यः ।

केशपक्षः— सीमन्तरेखायाः पार्श्वम् ।

"अथास्याः पृथक् केशपक्षौ संनह्यति"

काठक गृ०—३-७-४

केशवापः— नापितः ।

"पक्ष्मगुणं तिलपेशलं नापिताय प्रयच्छति"

काठक गृ०—३-१६-१८

केशशूला—, केशशूलिनी— वेश्या भगविक्रयकारिणी ।

अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः

प्रमदाः केशशूलिन्यो भविष्यन्ति कलौ युगे ॥

स्कान्दे० माहे० कौमा०—४०-२३५

प्रमदाः केशशूलाश्चेति कौर्मे पाठः कूर्म पु०—१-३०

अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः ।

केशशूलास्त्रिय श्चापि भविष्यन्ति युगक्षये ॥

महाभा० वन०—१९०-५२

केशशेपकरणम्— शिखास्थापनम् ।

इति पारस्करभाष्ये हरिहरः—२१-१६

केशान्तः— गोदानाख्यसंस्कारकर्मविशेषः यत्र श्मश्रुकर्त्तनं भवति ।

केशान्तः षोड़शे वर्षे ब्राह्मणस्य विधीयते ।

राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्वयधिके ततः ॥

मनुः—२-६५

केशाम्बु— स्नानानन्तरं केशेभ्यः पतितं जलम् ।

शूर्पवातनखाग्राम्बुस्नानवस्त्रपदोदकम् ॥

मार्जनीरेणुकेशाम्बु हन्ति पुण्यं दिवाकृतम् ॥

इत्यत्रिः—३१६

केशी— चमरी इति कृत्यकल्पतरुकाराः

कैकसम्— अस्थिमयं पात्रम् सूरिसर्वस्वम्—२२-५

कैटम्— कीटभवं वस्त्रादि ।

मणिमुक्ताप्रवालानां सुवर्णरजतस्य च ।

तिष्ठति द्विगुणा वृद्धिः फालकैटाविकस्य च ॥

इति कात्यायनः ।

**कैलासप्रासादाः**— वृत्ताः प्रासादाः कैलाससंज्ञकाः नव ।
वलयः प्रथमो नाम द्वितीयो दुन्दुभिः स्मृतः ।
तथा पद्ममहापद्मे मुष्टिकस्वस्तिको तथा ॥
शङ्खश्च कलशश्चैव श्रीवृक्षश्च तथापरः ।
वृत्ता नवैते कैलाससम्भवाः परिकीर्त्तिताः ॥
इति मत्स्य पु०—२६८

**कैवर्त्तः**— निषादादायोगव्यां जातो जातिविशेषः ।
निषादो भार्गवं सूते दासं नौकर्म जीविनम् ।
कैवर्त्तमिति यं प्राहुरार्यावर्त्त निवासिन ॥
मनुः —१०-३४

**कोकरसकम्**— खर्जूरीरसः इति देवीभागवतटीकायाम्
८-२४-२६

**कोकामुखम्**— क्षेत्रविशेषः कोकानदीसमीपस्थः ॥
"कोकामुखे च वाराहं मन्दरे मधुसूदनम्"
इति नित्याचारपद्धतौ ।
कोकानदीति विख्याता गिरिराजसमाश्रिता ।
तीर्थकोटिमहापुण्या मद्रूपपरिपालिता ॥ —१०६
अस्यामद्यप्रभृति वै निवत्स्याम्यघनाशकृत् ।
वराहदर्शनं पुण्यं पूजनं भुक्तिमुक्तिदम् ॥ —१०७
कोकासलिलपानं च महापातकनाशनम् ।
तीर्थेष्वाप्लवनं पुण्यमुपवासश्च स्वर्गदः ॥ १०८ ॥
इत्यादि ब्रह्म० पु० अ०—२१६
तद् वराहक्षेत्रम् पूर्णियामण्डले नाथपुरस्य उपरिभागे त्रिवेणीसमीपे इति काणे-इतिहासे ।

**कोकिलः**— परपुष्टः "कोइलि' इति प्रसिद्धः ।
स न विषज्ञापक पक्षी तदुक्तं मात्स्ये ।
सविषेऽन्ने विलीयन्ते न च पार्थिवमक्षिकाः ।
निलीनाश्च विपद्यन्ते संस्पृष्टे सविषे तथा ॥
विरज्यति चकोरस्य दृष्टिः पार्थिवसत्तम ।
विकृतिं च खरो याति कोकिलस्य तथा नृप ।
गतिः स्खलति हंसस्य भृङ्गराजश्च कूजति ।
क्रौञ्चो मदमथाभ्येति कृकवाकुर्विरौति च ॥
विक्रोशति शुको राजन् सारिका वमते ततः ।
चामीकरोऽन्यतो याति मृत्युं कारण्डवस्तथा ॥
मेहते वाजरो राजन् ग्लायते जीवजीवकः ।
हृष्टरोमा भवेद् बभ्रुः पृषतश्चैव रोदिति ॥
हर्षमायाति च शिखी विषसंदर्शनान्नृप ।
अन्नं च सविषं राजंश्चिरेण च विपद्यते ।
मत्स्य० पु०—२१८-१७-२२

**कोकिलाक्षः**—कोइलेखा इति प्रसिद्धः कण्टकमयः शाकः दशक्षारशब्देऽस्य व्यवहारो द्रष्टव्यः ।

**कोजागरः**— आश्विनपूर्णिमायां कोजागरकृत्यम् ।
"को जागर्त्ति वचोऽभिधाय पुरुषं लक्ष्मीस्त्यजेत् सुप्तकं शुक्ले पञ्चदशी निशीथसमये लोकस्ततो जागृयात्"
इति कालीदीपे ।

**कोटरी**— असुरविद्याविशेषः ।
मुञ्चतो बाणनाशाय ततश्चक्रं मधुद्विषः ।
नग्ना दैतेयविद्याऽभूत् कोटरी पुरतो हरेः ॥
इति विष्णु० पु० —५-३३-३६

**कोणः**— शनैश्चरग्रह इति शान्तिमयूखे—५

कोद्रवः— कोदुअ इति ख्यातः शस्यविशेषः ।
हविष्येषु यवा मुख्यास्तदनु व्रीहयः स्मृताः ।
माषकोद्रवगौरांश्च सर्वालाभेऽपि वर्जयेत् ॥
इति कात्यायनस्मृतौ—६-१०

कोयष्टिः— पक्षिविशेषः ।
कोयष्टिः क्रौञ्च इति विज्ञानेश्वरः ।
वर्जयेदित्यनुवृत्तौ "कोयष्टिं श्च क्व चक्राह्वबलाकाबक-
विष्किरान्" इति याज्ञ०—१-१७२

कोरदूषकः— वनकोद्रवः इति श्राद्धदीपकारः,
श्राद्धकल्पे लक्ष्मीधरोऽपि कल्प०—५२
राजमाषान् मसूरांश्च कोद्रवान् कोरदूषकान् ।
लोहितान् वृक्षनिर्यासान् श्राद्धकर्मणि वर्जयेत् ॥
शङ्खस्मृतिः—१४-२१

कोलः—(१) वराहः (२) परिमाणविशेषः,
टङ्कद्वयपरिमितः (खारीशब्दे) द्रष्टव्यः ।
क्षुद्रकवटकद्रं क्षणापरपर्यायः ।

कोलाहलः— शब्दसमष्टिः ।
इन्द्रप्रयाणं सुरतं घनसंघातनिस्वनम् ।
वाद्यकोलाहलं युद्धमनध्यायान् विवर्जयेत् ॥
शङ्खस्मृतिः—३-८

कोल्वणः— श्राद्धार्थमयोग्यदेशः ।
त्र्यम्बकगिरिमध्यदेशः कोल्वण इति प्रसिद्ध इति
मित्रमिश्रः ॥ परिभाषा—५६

कोविदारः— (१) श्वेतपुष्पः काञ्चनारसदृश इति
नियतकालकाण्डे कल्पतरुः ।
(२) पुण्यक्षेत्रविशेषः कोविदारे युगाध्यक्षः स्त्रीराज्ये च
सुरप्रियः । स्कन्द० पु० प्रभास—१०७-१००

कोशः—(१) जीवविशेषस्यावरणविशेषः ।
हेममात्रमुपादाय रूपं वा हेमकारकः ।
निजलालासमायोगात् कोशं वा कोशकारकः ॥
याज्ञ०—३-१४०
षान्तौऽपि । (२) अर्थनिचयः ।
अमात्ये दण्डआयत्तो दण्डे वैनयिकी क्रिया ।
नृपतौ कोषराष्ट्रे च दूते सन्धि विपर्ययौ ॥
मनुः—७-६५
(३) दिव्यविशेषः ।
"तुलाग्न्यापो विषं कोशो दिव्यानीह विशुद्धये"
याज्ञ०—२-९५
तत्स्वरूपम्—
देवानुग्रान् समभ्यर्च्य तत्स्नानोदकमाहरेत् ।
संश्राव्य पाययेत्तस्माज् जलात्तु प्रसृतित्रयम् ॥
(४) कोशो गोपनगृहम् इति हरिहरभाष्ये
पारस्करः—३-१६-१
(५) कोशः प्रसृतिरिति वीरमित्रदयपूजाप्रकाशे
उपस्पृश्य यथान्यायं तिस्रो वै गृह्यमृत्तिकाः ।
ततः प्रक्षालयेद्धस्तौ जलेन तदनन्तरम् ।
सप्तकोशं ततः कृत्वा मुखं प्रक्षालयेत्ततः ॥
इति वाराहे (६) शवपेटिका ।
कोशशवदर्शने चाहोरात्रम् इति स्मृत्यन्तरे ।
कोशः शवपेटिका इति वैजयन्ती विष्णुः—३०-१०

कोशातकी— जहि इति प्रसिद्धं फलम् ।ज्योत्स्निका

इति समयमयूखे। पटोली घोषकः इति मेदिनी ।
फलशाकविशेषः सिंगा इति भाषा इति शब्दकल्पद्रुमे
मूर्द्धन्यमध्याऽप्ययं शब्दः ।
महाकोशातक्यादि प्रभेदोऽप्यस्या अस्ति ।
महाकोशातकी प्रोक्ता हस्तिघोषा महाफला ।
धामार्गवो घोषकश्च हस्तिपर्णश्च स स्मृतः ।।
इत्याद्यायुर्वेदे
वस्तुतस्तु तरड़ा, शचीन्द्रा, पटोल (हस्तप्रमाणं तदधिक प्रमाणं) नअरजहि इत्यादिप्रकारा अनुभूयन्ते काकादन्या मेचकरातन्याः कोशातक्या इति काकातकशब्दे द्रष्टव्यम् । कोशातकी पुष्पं विष्णवे न देयमिति कपित्थशब्दे अनुसन्धेयम् ।

**कोशी**—अल्पा प्रसृतिः कोश्य इति अल्पार्थे स्त्रीत्वम् । तेन हृद्गामित्वोपयुक्तत्वं सूचितमिति पूजाप्रकाशे मित्रमिश्राः। तिस्रः कोश्यः पिबेत्तत्र सर्वकायविशोधना इति वाराहे आचमनविषये ।

**कोषः**—(१) जीवविशेषस्यावरणम् ।
(२) अर्थनिचयः (३) दिव्यविशेषः । एतेषां त्रयाणां प्रयोगः कोशशब्दे द्रष्टव्यः । (४) चर्मपुटः
प्रपामरण्ये घटकंच कूपे द्रोण्यां जलं कोपगतास्तथापः ।
इत्याचारसारे यमः

**कोषातकी**— ज्योत्स्निका । जहि इति प्रसिद्धः फलशाकविशेषः कोशातकीशब्दो द्रष्टव्यः ।
तालव्यमध्योऽप्ययम् ।

**कोष्ठागारम्**— धनागारमिति कुल्लूकः ।
राजगृहम् इति मन्वर्थ विवृतिकारः
कोष्ठागारायुधागारदेवतागारभेदकान्
हस्त्यश्वरथहर्त्तृंश्च हन्यादेवविचारयन् ॥
मनुः—९-२८०
कुल्लूकमतं तु समीचीनम् ।

**कौटुम्बिकः**— कुटुम्बस्य उपरि अधिष्ठातृत्वेन कृतः ।
सर्वेष्वधिकृतो यः स्यात् कुटुम्बस्य तथोपरि ।
सोऽधिकर्मकृतो ज्ञेयः स च कुटुम्बिकः स्मृतः ॥
इति व्यवहारपराशरे बृहस्पतिः—५-२४
नारदश्च—५-२४

**कौत्तिकः**— कुत्तोपजीवी इति सरस्वतीविलासे ।
"पादमात्रोपचये कौत्तिकस्य स्वाम्यम्" इति तत्र विष्णुः
"फलासेधः कौत्तिकवत्" इति तत्र गौतमः ।

**कौद्दाली**— गृहस्थवृत्तिविशेषः ।
तल्लक्षणम्—बोधायनधर्मसू०—३-२-३
जलाभ्यासे कुद्दालेन वा फालेन वा तीक्ष्णकाष्ठेन वा खनति बीजान्यावपति कन्दमूलफलशाकौषधी र्निष्पादयति । कुद्दालेन करोतीति कौद्दाली ॥ इति

**कौपीनम्**—(१) कौपीनं गुह्यप्रदेशस्य नामेति हरदत्तः
कौपीनाच्छादनार्थं तु वासोऽपि बिभृयात्तथा ।
योगसम्भारभेदांश्च गृह्णीयात् पादुके तथा ॥
मिताक्षरायाम् याज्ञ०—२-१३७
(२) कौपीनाच्छादनशाटी च ।

**कौमुदः**— कार्त्तिकमासः ।

एतैश्चान्यैश्च राजन्यैः पुरा मांसं न भक्षितम् ।
शारदं कौमुदं मासं ततस्ते स्वर्गमाप्नुवन् ॥
इति समयप्रदीपे—१८७

**कौमुदी**— आश्विनपूर्णिमा ।
आश्विने पौर्णमास्यां तु चरेद्जागरणं निशि ।
कौमुदी सा समाख्याता कार्य्या लोकैर्विभूतये ॥
इति लैङ्गे निर्णयसिन्धुः—१४२
कौमुद्यां पूजयेल्लक्ष्मीमिन्द्रमैरावते स्थितम् ।
इति निर्णयनिन्धौ कालसारे च ।
नित्याचारपद्धतौ च—
पूर्णिमाऽश्वयुजे मासि कौमुदी परिकीर्त्तिता ।
कौमुद्यां पूजयेल्लक्ष्मीमिन्द्रं च निशि जागृयात् ॥
आश्विने पौर्णमास्यां तु अन्धेर्जागरणं निशि ।
नारिकेलरसं पीत्वा तस्मै ऋद्धिं ददाम्यहम् ॥

**कौलम्**— मद्यविशेषः ।
"कोलं बदरं तज्जातं कौलमिति वैजयन्त्याम्"
विष्णुः—२२-८२

**कौशिकी**— दुर्गा-इति आचारादर्शे—५०

**कौषी**—ताम्रमयीति हेमाद्रिः मालाविषये शिवधर्मोत्तरे
हेमराजतकौषीं वा ननारत्नोपशोभिताम् ।

**क्याकु**— अहिच्छत्रकम् ।
क्याकुछत्राकमिति गौतमीये आस्तम्वीये च हरदत्तः ।
"क्याकूभोज्यमिति हि ब्राह्मणम्"
आप०—१-५-१७-२८

**क्रकचः**—(१) करवीर इत्याचारेन्दौ—१५६
ककचस्य च पुष्पाणि तथाधस्तूरकस्य च ।
कृष्णं च कुटजं चार्कं न च देयं जनार्दने ॥
इति महोदध्युद्धृत विष्णुधर्मोत्तरे ।
क्रकचः अहिछत्रक इति कल्पतरुः । नियत—२८०
(२) काष्ठकर्त्तनयन्त्रम् करत इति प्रसिद्धम् ।
पाषाणं यन्त्रपीडां च मरुत्प्रपतनं तथा ।
पुरीषलेपनं चैव तथा क्रकचदारणम् ॥
इति स्कान्दे० ब्रह्म-सेतुबन्धस्नानप्रकरणे—३-३६
(३) वाद्यविशेषः ।
ततो भेर्यश्च पेश्यश्च क्रकचा गोविषाणिकाः ।
सहसैवाभ्यहन्यन्त ततः शब्दो महानभूत् ।
महाभा० भीष्म—४३-८
अत्र क्रकचा जयमङ्गला इति नीलकण्ठः

**क्रकरः**— कृकलास इति लक्ष्मीधरः । कल्प-नियत—३०१
"विधृतवायसकुक्कुटसारङ्गक्रकरमद्गुमन्थान"
इत्यादि तत्र वसिष्ठः ।
कशार इति करकरा इति च भाषा इति शब्दकल्पद्रुमे
पत्रोर्णं चोरयित्वा तु क्रकरत्वं नियच्छति ।
महाभा०—१३-१११ १०३

**क्रतुः**—(१) अश्वमेधादिः यज्ञः ।
अश्वमेधादयः पुण्डरीकान्ताः क्रतव इति हेमाद्रिः ।
परिशेष—४०८
यजेत राजा क्रतुभिर्विविधैराप्तदक्षिणैः ।
धर्मार्थं चैव विप्रेभ्यो दद्याद् भोगान् धनानि च ॥
मनुः—७-७९
(२) ज्ञानम् ।

**क्रमः** — पादविक्षेपः। पाहुण्ड इति भाषायाम्।

ततः प्रातः समुत्थाय कुर्याद् विड्मूत्रमेव च।
नैऋत्यामिषुविक्षेपमतीत्याऽभ्यधिकं बुधः॥
ग्रामात् क्रमशतं गच्छेन् नगराच्च चतुर्गुणम्।
इति मदनरत्ने पराशरः॥ क्रमशतमित्यत्र क्रमु पादविक्षेपे इति धात्वनुसारात् पादविक्षेपशतमिति आह्निकप्रकाशे मित्रमिश्रः।

**क्रमुकः**— गुवाकवृक्षः।

**क्रमेलकः**— उष्ट्रः।

रासभं महिषं मेषं बलीवर्दं क्रमेलकम्॥
आरुह्य ब्राह्मणो मोहात्पुनः संस्कारमर्हति॥
इति वैजयन्त्यां यमहारितौ विष्णुः ५४-२३

संस्कारप्रकाशे च—५४६

**क्रयः**— मूल्येन वस्तुस्वीकार इति हरदत्तः।

"स्वामी रिक्थक्रयसम्विभागपरिग्रहाधिगमेषु।"

गौतम ध०—२-१-३६

**क्रयपत्रम्**— यस्मिन् पत्रे क्रयस्योल्लेखो भवति।

क्रीते क्रयप्रकाशार्थं द्रव्ये यत् क्रियते क्वचित्।
विक्रेत्रनुमतं क्रेतुर्ज्ञेयं तत् क्रयपत्रकम्॥
इति सरस्वतिविलासे वसिष्ठः
क्रयलेख्यमित्यस्य संज्ञान्तरम्।

**क्रयलेख्यम्**— क्रयपत्रम्।

गृहक्षेत्रादिकं क्रीत्वा तुल्यमूल्याक्षरान्वितम्।
पत्रं वा कारयेद् यत्तु क्रयलेख्यं तदुच्यते॥

इति बृहस्पतिः।

**क्रव्यम्**— आममांसम्।

**क्रव्यात्**— आममांसभक्षणशीलः पशुः पक्षी इतरो वा

श्वभिर्हतस्य यन्मांसं शुचितन्मनुरब्रवीत्।
क्रव्याद्भिश्च हतस्यान्यैश्चण्डालाद्यैश्च दस्युभिः॥

मनुः—५-१३१

**क्रान्तः**— पादः।

मनसीन्दुं दिशः श्रोत्रे क्रान्ते विष्णुं बले हरम्।
वाच्यग्निं मूत्रमुत्सर्गे प्रजने च प्रजापतिम्॥

मनुः—१२-१२१

**क्रिया**—(१) प्रेतक्रिया।

सा च प्रेतक्रिया पूर्वमध्यमोत्तरभेदेन त्रिधा।
आदाहाद् वार्यायुधादिस्पर्शाद्यन्त्याश्च याः क्रियाः।
ताः पूर्वा, मध्यमा मासि मास्येकोद्दिष्टसंज्ञकाः॥ ३५
प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु।
क्रियन्त याः क्रियाः पित्र्याः प्रोच्यन्ते ता नृपोत्तराः॥
श्राद्धदीपापेक्षया मूलपुराणे नातीव विसम्वादः

विष्णु-पु०—३-१३-३६

(२) व्यवहारे साक्षिलेख्यादिप्रमाणप्रदर्शनं क्रियाशब्देनाभिधीयते।

"तस्याश्च साक्षिणश्चैव क्रिया ज्ञेया मनीषिभिः"
इति सरस्वतीविलासे कात्यायनः॥

(३) व्यवहारतृतीयपादस्य नामापि क्रियापाद इति।

पूर्वपक्षः स्मृतः पादो द्वितीयश्चोत्तरः स्मृतः।
क्रियापादस्तथा चान्यश्चतुर्थो निर्णयः स्मृत॥

इति बृहस्पतिः।

(४) साक्षिलेख्यादिसाधनं क्रिया ।
"कार्यं हि साध्यमित्युक्तं साधनं तु क्रियोच्यते"
इति व्यवहारप्रकाशे व्यासः—८२

**क्रियादुष्टम्**— क्रियया दुष्टम् ।
"न भक्षयेत् क्रियादुष्टं यद्दुष्टं पतितैः पृथक्"

**क्रियाद्वेषी**— यः क्रियां व्यवहाराङ्गसाधनं साक्षिलेख्यादिकं द्वेष्टि ।
लेख्यं च साक्षिणं चैव क्रिया ज्ञेया मनीषिभिः ।
तां क्रियां द्वेष्टि यो मोहात् क्रियाद्वेषी स उच्यते ॥
इति कात्यायनः ।
सम्यश्च साक्षिणश्चैवेति सरस्वतीविलासे पाठः ।

**क्रियायोगः**-देवाराधनतदालयादिकरणरूपपुण्यकर्माचरणम्।
ज्ञानयोगस्तु योगस्य यस्तु साधनमात्मना ।
यस्तु बाह्यार्थसंयोगः क्रियायोगः स उच्यते ॥
इत्याग्निपुराणे ।
तपः स्वाध्यायेश्वरप्रणिधानानि क्रियायोगा
इति पातञ्जले ।

**क्रियावादी**— प्रदातव्यं यद्भवति न्यायतस्तद्ददाम्यहम् ।
एवं यत्रार्णिको ब्रूते क्रियावादी स उच्यते ॥
इति व्यवहारमयूखे बृहस्पतिः ।

**क्रीडनकम्**— क्रीडासाधनम् ।
तेषां क्रीडनकं दत्त्वा मोदते नन्दने चिरम् ।
आह्लादं यान्ति सततं यस्मिन् दृष्ट्वा तु बालकाः ।
विष्णुधर्मोत्तरे—२-६३-७
क्रीडनकं क्रीडोचितं कन्दुकादि इति चण्डेश्वरः

कृत्यरत्नाकरे—५६४

**क्रीडा**— सुखार्था प्रवृत्तिः क्रीडा इति कुल्लूकः ॥
मनुः—१-८०
क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनम् ।
हास्यं परगृहे यानं त्यजेत् प्रोषितभर्तृका ॥
याज्ञ०—१-८४

**क्रीतकः**— पुत्रविशेषः ।
क्रीणीयाद् यस्त्वपत्यार्थं मातापित्रोर्यमन्तिकात् ।
स क्रीतकः सुतस्तस्य सदृशोऽसदृशोऽपिवा ।
मनुः—८-१७४

**क्रीतदासः**— मूल्येन क्रीतो दासः ।
(दासशब्दो द्रष्टव्यः)

**क्रीतानुशयः**— यत्र क्रेता क्रीतं नेच्छति ।
क्रीत्वा मूल्येन यः पण्यं क्रेता न बहुमन्यते ।
क्रीतानुशय इत्येतद् विवादपदमुच्यते ॥
नारदः—९-१

**क्रुञ्चाः**— वृन्दचराः पक्षिणः इति हरदत्तः ।
बकविशेषा इति विद्वांसः ।
"क्रुञ्चं क्रौञ्चं वाध्रीणसलक्ष्मणवर्जनम्" इति
आप०—१-५-१७-३६

**क्रूरः**- दृढाभ्यन्तरकोप इति विज्ञानेश्वरः याज्ञ०—१-१७२
चिकित्सकातुरक्रुद्ध पुंश्चलीमत्तविद्विषाम् ।
क्रूरोग्रपतितव्रात्य दाम्भिकोच्छिष्टभोजिनाम् ॥
अन्नं वर्जयेत इति शेषः ॥ याज्ञ०—१-१६२

**क्रोड़म्**— वक्षः भुजान्तरमित्यर्थः ।

**क्रोधः**— गुरुदेवब्राह्मणनृपादिहिंसाबुद्धिः क्रोधः स्वशिरस्ताड़नं च इति ।

बार्हस्पत्यार्थशास्त्रे—अ०—१-२८-२६

न तथासिस्त तीक्ष्णः सर्पो वा दुरधिष्ठितः ।
यथा क्रोधो हि जन्तूनां शरीरस्थो विनाशकः ॥

आपस्तम्बस्मृतिः—१०-४

**क्रोधकः**—कुक्कुटाख्यजातिविशेषः कुक्कुटशब्दे द्रष्टव्यः ।

**क्रोशः**— भूमिमानविशेषः ।

हस्तो वितस्तिद्वितयं दण्डो हस्तचतुष्टयम् ।
तद् सहस्रद्वयं क्रोशो योजनं तच्चतुष्टयम् ॥

इति मिताक्षरायाम् याज्ञ०—२-१०६

"सर्वतो योजनं नगरं तस्करेभ्यो रक्ष्यम्" ॥
क्रोशो ग्रामेभ्यः ॥ आप०—२-१०-२६

**क्रोष्टा**— शृगालः ।

श्वक्रोष्टृगर्दभोलूकसामबाणार्त्त निःस्वने ।
अमेध्यशवशूद्रान्त्यश्मशानपतितान्तिके ॥

याज्ञ०—१-१८४

**क्रौञ्च**— पक्षिविशेषः ।

क्रौञ्चा मिथुनचरा पक्षिण इति हरदत्तः

आप०—१-५-१७-३६

अयं विपत्सूचक इति मात्स्ये (२१८-२०)

क्रौञ्चो मदमथाप्येति इति कोकिलशब्दे द्रष्टव्यः ।

**क्लमः**— ग्लानिः ।

तत्र भुक्त्वा पुनः किंचित् तूर्यघोषै प्रहर्षितः
संविशेत्तु यथाकालमुत्तिष्ठेच्च गतक्लमः ॥

मनुः—७-२२५

क्लमलक्षणं सुश्रुते—

योनायासः श्रमो देहे प्रवृद्धः श्वासवर्जितः ।
क्लमः स इति विज्ञेय इन्द्रियार्थप्रबाधकः ॥

इति शारीरस्थाने—४

**क्लीवः**— (१) नपुंसकः ।

न मूत्रं फेनिलं यस्य विष्ठा चाप्सु निमज्जति ।
मेढ्रश्चोन्मादशुक्राभ्यां हीनः क्लीवः स उच्यते ।

इति दायभागे कात्यायनः ।

यस्याप्सु प्लवते बीजं ह्लादिमूत्रं च फेनिलम् ।
पुमान् स्याल्लक्षणैरेतैर्विपरीतस्तु षण्ढकः ॥

इति मिताक्षरायां नारदः याज्ञ०—१-५५

षण्ढभेदा षण्ढशब्दे द्रष्टव्याः ।

(२) नपुंसकविशेषश्च

"अमेध्याशी पुमान् क्लीवो नष्टरेता नपुंमक"
इति कर्मविपाके संस्कारप्रकाशः ७५७

षण्ढकश्चातकः षण्ढः पण्ड क्लीवो नपुंसकः ।
मकोलश्चेति सप्तैवं क्लीवभेदा विभाविताः ॥
तेषां स्त्रीतुल्यवाक्चेष्टः स्त्रीधर्मा षण्ढको भवेत् ।
पुमान् भूत्वा स्वलिङ्गानि पश्चाच्छिन्द्यात्तथैव च ॥
स्त्री च पुंभावमास्थाय पुरुषाचारवद्गुणा ।
चातको नाम षण्ढः स्यात् स्त्रीषण्ढो वापि नामतः ॥
असल्लिङ्गोऽपि षण्ढः स्यात्षण्डस्तु म्लानमेहनः ।
अमेध्यासी पुमान् क्लीवो नष्टरेता नपुंसकः ॥
स कीलक इति ज्ञेयो यः क्लैव्यादात्मनः स्त्रियम् ।

अन्येन सह संयोज्य पश्चात्तामेव सेवते ॥
इति कर्मविपाकसंग्रहे तत्रैव ।
नारदस्तु—
चतुर्दशविधः षण्ढः शास्त्रदृष्टो मनीषिभिः ।
चिकित्स्यश्चाचिकित्स्य श्च तेषामुक्तो विधिः क्रमात् ॥
१२-११

निसर्गषण्ढो वध्रश्च पक्षषण्ढस्तथैव च ।
अभिशापाद् गुरो रोगाद्देव क्रोधात्तथैव च ॥ १२-१२
ईर्ष्याषण्ढश्च सेव्यश्च वातरेता मुखे भगः ।
आक्षिप्तो मोघवीजश्च शालीनोन्यापतिस्तथा ॥ १२-१३
एषां प्रत्येकमर्थः स्वस्वशब्दे द्रष्टव्यः ।

**क्लेदपुत्रः**— बुधग्रह इति शान्तिमयूखे—५

**क्लेशाः**— अविद्याऽस्मितारागद्वेषाऽभिनिवेशाः ।
(क) अविद्या— अनित्याशुचिदुःखानात्मसु
नित्यशुचिसुखात्मख्यातिरविद्या ।
(ख) अस्मिता—
शरीराद्यतिरिक्त आत्मा नास्ति इति प्रत्ययः ।
(ग) रागः— विषयेष्वासक्तिः ।
(घ) द्वेषः— दुःखेषु अप्रीतिः ।
(ङ) अभिनिवेशः—
अननुभूतेभ्योऽपि मरणादिभ्यस्त्रासः ।
धर्माधर्मौ तद्विपाकास्त्रयोपि
क्लेशाः पञ्च प्राणिनामायतन्ते ।
यस्मिन्नैतैर्नो परामृष्ट ईशो
यस्तं वन्दे विष्णुमोंकार वाच्यम् ॥
इति मिताक्षरामङ्गलाचरणम् ॥

**क्लोम**—मांसपिण्डः दक्षिणकुक्षिगत इति मिताक्षरा—३-९४
अधस्तु दक्षिणे भागे हृदयात्क्लोम तिष्ठति ।
जलवाहिशिरामूलं तृष्णाच्छादनकृन्मतम् ॥
इति वैद्यकशब्दसिन्धुः ॥
उदर्यजलाशय इति व्याख्यासुधा ॥

# क्ष

**क्षणः**—(१) अवसरः (२) उत्सवः क्षणोति दुःखं नाशयति
इति क्षणः । (३) स्वीकारः "श्राद्धे क्षणः क्रियताम्
इति पूर्वेद्यु र्निमन्त्रयेत इति मिताक्षरायाम्"—१-२५५
"समागतं हनिष्यामि त्वं भीरु कुरु मे क्षणम्"
इति महाभा॰ विरा॰—१-२१-२५
(४) निर्व्यापारः ।
निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः
इत्यमरः—३-३-४७

(५) मुहूर्तस्य द्वादशो भागः ।
दशभिः पञ्चभिश्चैव निमेषैः परिकीर्त्तिता ।
काष्ठा, तत्त्रिंशताज्ञेया कलापञ्चशनन्दन ॥
तत्त्रिंशता क्षणो ज्ञेयस्तैः षड्भिर्घटिका स्मृता ।
तद् द्वयेन मुहूर्त्तं स्याद्दिनं तत्त्रिंशता भवेत ॥
बृहन्नारदीय पु॰—५-१०
(६) आमन्त्रणम् ।
आमन्त्रितस्तु यः श्राद्धे अन्यस्य कुरुते क्षणम् ।
क्षणम् आमन्त्रणम् इति कालसारे गदाधरः ॥

**क्षणिकः**— क्षणमात्रं निरुद्यम इति आचारसारे गदाधर-
राजगुरुः-उदयास्तमयं यावन्न विप्रः क्षणिको भवेत् ।
नित्यनैमित्तिकैर्मुक्तः काम्यैश्चान्यैरगर्हितैः ॥

इति दक्षः — २-२

क्षणिकोऽत्र शास्त्रानुमतव्यापाररहित इति कल्पतरुः नियतकालकाण्डे—५

उपगायन् गृणन् नृत्यन् कर्माण्यभिनयन् मम ।
मत्कथां श्रावयन् शृण्वन् मुहूर्त्तं क्षणिको भवेत् ॥

अत्र क्षणिकः वैराग्यं परित्यज्य लब्धावसर इति पूजाप्रकाशे मित्रमिश्रः ।

"निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षण"
इति अमरः—३-३-४७

**क्षतयोनिः**— संस्पृष्टमैथुना ।

सा चेदक्षतयोनिः स्यादगतप्रत्यागतापि वा ।
पौनर्भवेन भर्त्रा सा पुनः संस्कारमर्हति ।
मनुः—९-१७६

ऋतुमतीति मन्वर्थचन्द्रिका ।
तत्र क्षता क्षतजयुक्ता योनिर्यस्या इतिविग्रहः ।

**क्षत्ता**— (१) जातिविशेषः ।

शूद्रात् क्षत्रियायां जातो जातिविशेषः ।
शूद्रादायोगवः क्षत्ता चण्डालश्चाधमो नृणाम् ।
वैश्यराजन्यविप्रासु जायन्ते वर्णसंकराः ॥
मनुः—१०-१२

पैठीनसिः—"ब्राह्मणेन कृष्णायां पारशवः पारशव्यां क्षत्ता" इति व्यवहारकल्पतरौ ८१९
क्षत्ता निषाद इति आचारेन्दुः—२४७
(२) प्रतीहारः ।
क्षत्ता प्रतिहार इति प्रदिष्टस्तद्धस्तदण्डः कथितं तु वेत्रम् विष्णुधर्मोत्तरे—३-१०-२२

**क्षत्रम्**— क्षत्रियः—ब्रह्मप्रसूतं हि क्षत्रमृध्यते न व्यथत इति च विज्ञायते ॥ गौतम० ध०—२-२-४

**क्षत्रबन्धुः**— (१) क्षत्रियः ।

आषोडशाद् ब्राह्मणस्य सावित्री नातिवर्त्तते ।
आद्वाविंशात् क्षत्रबन्धोराचतुर्विंशतेर्विशः ॥
मनुः—२-३८

(२) निन्दितक्षत्रियः ।
क्षत्रान् क्षत्रियान् बन्धुत्वेन निर्दिशति इति विग्रहः ।

**क्षत्रियः**— द्वितीयो वर्णः ।

"चत्वार वर्णा ब्राह्मणक्षत्रियवैश्यशूद्राः" वसिष्ठः—२-१

**क्षपणम्**— (१) भोजनत्यागः ।

"भुक्त्वातोऽन्यतमस्यान्नममत्या क्षपणं त्र्यहम्"
मनुः—४-२२२

(२) अनध्ययनम् ।
"उपाकर्मणि चोत्सर्गे त्रिरात्रं क्षपणं स्मृतम्"
मनुः—४-११९

क्षपणं प्रवचनं च पूर्ववत् । अत्र क्षपणम् अनध्ययनमिति हरिहरः । पारस्करः—२-१२-४
(३) अशौचम् ।
सब्रह्मचारिण्येकाहमतीते क्षपणं स्मृतम् । मनुः—५-७१
पुनश्चोनद्विवार्षिकप्रेतविषये "अरण्ये काष्ठवत्त्यक्त्वा क्षपेयुस्त्र्यहमेव च"
मनुः—५-६९

**क्षमा**— (१) परदोषमर्षणम् ।

बाह्ये आभ्यन्तरे वा परेण दुःखे उत्पादितेऽपि तस्मिन् कोपाभावः क्षमा इति संस्काररत्नमाला ।

बाह्ये चाध्यात्मिके चैव दुःखे चोत्पादिते क्वचित् ।
न कुप्यति न वा हन्ति साक्षमापरिकीर्त्तिता ॥
इति बृहस्पतिः कृत्यरत्नाकरे—१५
बाह्याभ्यन्तर द्वन्द्वसहिष्णुता क्षान्तिरिति मस्करिः
आकारेऽपि चित्तस्य अविकारः क्षान्तिरिति-
विज्ञानेश्वरः—१-१२२
महाभारते—
सन्तोषो विषयत्यागो ह्रीरकार्य्यनिवर्त्तनम् ।
क्षमाद्वन्द्व सहिष्णुत्वमार्जवं समचित्तता ॥
इति परिभाषाप्रकाशे—३४
विगर्हाति क्रमाक्षेपहिंसाबन्धबधारमनाम् ।
अन्यमन्युसमुत्थानां दोषाणां मर्षणं क्षमा ॥
इति देवलः मात्स्येऽपि—१२०-५०
कूर्मपुराणे २-१५ अध्याये च ॥
आक्रुष्टोऽभिहितो वापि न क्रोशेन्नतु ताड़येत ।
अदुष्टो वाङमनःकायैर्या तितिक्षा क्षमा स्मृता ।
इति गौतमविवृतौ—१-८-२४
क्षमागुणो हि जन्तूनामिहामुत्र सुखप्रदः इति
आपस्तम्बस्मृतिः—१०
(२) पृथिवी क्षमाशय, वसिष्ठः—६-६
स्कान्दे —
क्षमां प्रदक्षिणीकृत्य यत्फलं समवाप्यते ।
प्रदोषे तत्फलं काश्यां दृष्ट्वा देवं त्रिलोचनम् ॥
पुरुषार्थचिन्तामणिः—२३०

**क्षयः**— (१) निवासः ।
अवेक्षेत गतीर्न्नृणां कर्मदोषसमुद्भवाः ।
निरयं चैव पतनं यातनाश्च यमक्षये ॥
मनुः—६-६१
(२) मूलहानिः । लाभहानीः क्षयः मूलहानिः इति
चण्डेश्वरः विवादरत्नाकरे—११६
(३) षष्ठिसम्वत्सरेषु अन्तिमः संवत्सरः ॥

**क्षयमासः**— द्विसंक्रान्तिमासः ।
तत्रेयं मत्कृता व्यवस्था । सूर्याचन्द्रमसोः
स्वस्वगतिविभेदवशादसंक्रान्तमासो द्विसंक्रान्तमास-
श्चोत्पद्यते । तत्राधिमासापरनामाऽसंक्रान्त मासः
प्रायशो वर्षत्रयेणापतति । स चोत्तरमास्यन्तर्भवति
तदाह ज्योतिषपितामहः-
षष्ट्या तु दिवसैर्मासः कथितो बादरायणैः ।
पूर्वार्द्धं तु परित्यज्य कर्त्तव्या चोत्तरे क्रिया ॥
तया क्षयमासापरनामा द्विसंक्रान्तमासोऽपि कादाचि-
त्कतया जायते, तदुक्तं ज्योतिः सिद्धान्ते—
"असंक्रान्तमासोऽधिमासः स्फुटं स्याद्
द्विसंक्रान्तमासः क्षयाख्यः कदाचित् ।
क्षयः कार्त्तिकादित्रये नान्यदा स्यात
तदा वर्षमध्येऽधिमासद्वयं स्यात्" ॥
एतादृशो द्विसंक्रान्तमासो भाविनि १९६३ खीष्टाब्दे
१८८५ शाकवर्षे पिङ्गलनामसम्वत्सरे आगच्छति ।
तत्र दर्शान्त-कार्त्तिक मासानन्तरं पौषमासो भविष्यति ।
तत्र क्षयमासमृतजातानां वर्षान्तरे वर्षान्तर मार्गशीर्ष
मृतजातानां च तत्र श्राद्धस्वनक्षत्रादि कथमनुष्ठेयमिति
जिज्ञासायां व्यवस्थाप्यते— द्विसंक्रान्तमासस्य
माधवगदाधरादिसकलस्मृतिनिबन्धकृद्भिर्मासद्वयत्वेन
परिगणनात् ।
तिथ्यर्धे प्रथमे पूर्वो द्वितीयेर्द्धे तदुत्तरः ।

मासाविति बुधैश्चिन्त्यौ क्षयमासस्य मध्यगौ ॥
इति वचनाच्च आगामिक्षयमासतिथेः प्रथमभागे
मृतस्य जातस्य च वर्षान्तरे मार्गशीर्षे मासि,
क्षयमासतिथेः द्वितीयार्द्धे मृतस्य जातस्य च
पौषमासि श्राद्धस्वनक्षत्रादिकं विधेयम् ।
तेन क्षयमास शुक्लप्रतिपत्पूर्वार्द्धे मृतस्य वर्षान्तरे
मार्गशीर्षशुक्लप्रतिपदि श्राद्धम् ।
क्षयमासशुक्लप्रतिपद उत्तरभागे मृतस्य वर्षान्तरे
पौषशुक्लप्रतिपदि श्राद्धं विधेयमिति निष्कर्षः ।
एवं स्वनक्षत्रादि ।
पूर्ववर्षेषु मार्गशीर्षपौषमासयोर्मृतानां जातानां
च श्राद्धस्वनक्षत्रादि अस्मिन् एकस्मिन्
द्विसंक्रान्तमासे एव विधेयम्, द्विसंक्रान्तमासस्य
चान्द्रमासद्वयरूपेण ग्रहणात् ।
न चात्र पूर्ववत्तिथित्रिभागशङ्का कार्या ।
मासयोरेकत्वेन तदङ्गतिथियुगलस्यापि एकत्वसिद्धेः ।
एतेन पूर्ववर्षेषु मार्गशीर्षशुक्लप्रतिपदि-पौषशुक्लप्रतिपदि
च मृतानां श्राद्धं क्षयमासशुक्लप्रतिपदि एकस्मिन्
दिवसे एव विधेयम् । स्वनक्षत्रादिषु चायमेव न्यायः ।
व्रतोपवासादिकं च द्वयोरेवमासयोरुक्तन्यायेन
क्षयमासे विधेयमिति स्पष्टम् ।
वारव्रतानां तु पूर्णिमान्तमासमाश्रित्यप्रवृत्तानां
समुपलब्धतत्तन्मासार्द्धके विधेयत्वम्, यथा—
मार्गशीर्षबृहस्पतिवासरमाश्रित्यप्रवृत्तस्य धान्यमाणिका
व्रतस्य उत्कलदेशप्रसिद्ध-पूर्णिमान्त मासानुसारेण
मार्गशीर्षदर्शपक्षे क्षयमासशुक्लपक्षे च विधेयत्वम् ।
तथा पौषरविवासरव्रतमपि क्षयमासशुक्लपक्ष एव
कार्यम् पौषशुक्लत्वेनापि तत्पक्षस्य ख्यातत्वात् ॥

सावनमानमाश्रित्य प्रवृत्तेषु कर्मसु न कश्चित् शङ्कावसरः
क्षयमासपूर्वपतिताधिमासे काम्यमपि कर्त्तुं शक्यते
तस्य संसर्प इत्यभिधानात् । सम्यक्सर्पति कर्मणे
इति संसर्पनामकत्वं इति गदाधरव्याख्यानात् ।
एकस्मिन्नेव वर्षे तु द्वौ मासावधिमासकौ ।
प्राकृतस्तत्र पूर्वः स्यादुत्तरस्तु मलिम्लुचः ॥
इति जाबालिवचनाच्च ।
क्षयमासोत्तरपतिताधिमासस्तु मलमास एव ।
तत्र इतराधिमासवद्व्यवस्था ।
एषु द्विसंक्रान्तमासेषु त्रिष्वेव विवाहादिकर्म न
विधेयम् । त्रयस्त्याज्या विवाहादौ इति
माधवोक्तेरित्यलमतिविस्तरेण ॥
२०-१०-६२ दिवसे वाराणसेयसंस्कृतविश्वविद्यालय-
धर्मशास्त्रविभागाध्यक्षेण श्री प्रेमवल्लभत्रिपाठि
महोदयेन इयं व्यवस्था स्वीकृता
व्यवस्थाभिर्मासम्मनुते इति मन्तव्यप्रकाशेन
संसर्पनिर्णयस्तु संसर्पशब्दे वक्ष्यते ।

**क्षयाधिः**-सवृद्धिकमृणापाकरणार्थ आधिः मिताक्षरा-२६४

**क्षयाहः**— मृततिथिः ।

मासपक्षतिथिस्पृष्टे यो यस्मिन् म्रियतेऽहनि ।
प्रत्यब्दं तु तथाभूतं क्षयाहं तस्य तद्विदुः ॥
इति श्राद्धदीपे ।
अन्वष्टकाकासु वृद्धौ च गयायां च क्षयेऽहनि ।
अत्र मातुः पृथक् श्राद्धमन्यत्र पतिना सह ॥

**क्षरः** — ब्रह्मादिस्थावरान्तानि शरीराणि ।

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।
भगवद्गीता—१५-१६

**क्षवथुः**— छिक्का इति कल्पतरुः । नित्यकाल—१५३
क्षुतमिति हेमाद्रिः हरदत्तश्च कासस्तु क्षवथु पुमान्
इति अग्निपुराणे ३६४-१०
"भाषां कासं क्षवथुमित्यभिमुखोन्नं वर्जयेत्"
आप०—२-२-३-२

**क्षात्रः**— विवाहविशेषः ।
"यां बलेन सहसा प्रमथ्य हरन्ति स क्षात्र"
इति वसिष्ठः—१-३४
मन्वादिभिरयं राक्षसविवाह इत्युच्यते ।
राक्षस-विवाहशब्दो द्रष्टव्यः ।

**क्षान्तिः**— आत्मगुणविशेषः क्षमापरपर्यायः
लक्षणं क्षमाशब्दे द्रष्टव्यम् ।

**क्षापवित्रम्**— मन्त्रविशेषाः ।
क्षापवित्रं क्षाशब्दवत् पवित्रं च, तच्च तैत्तिरियाणां
सूक्तपाठे अग्ने नय इत्यादि षड्ऋचमिति गोविन्दस्वामी।
बौधायन० ध०—४-७-५
क्षापवित्रं सहस्राक्षो मृगारोऽहो मुचौ गणौ ।
पारमात्यश्च कूष्माण्डौ वैश्वानर्य ऋचश्च याः
इति गणहोमे ।

**क्षामवती**— गृहदाहं निमित्तीकृत्य क्रियमाणा इष्टिः ।
यत्र अग्नये क्षामवते अष्टाकपालः पुरोडाशः ॥

**क्षारः**— तिलमुद्गादते शौम्यं शस्ये गोधूमकोद्रवौ ।
धान्यकं देवधान्यं च शमीधान्यं तथैक्षवम् ।
स्विन्नधान्यं तथा पण्यं मूलं क्षारगणः स्मृतः ॥
इति निर्णयसिन्धूद्धृताग्निपुराणे ।
"गव्यमस्विन्नमन्नं च तिलमुद्गौ च मागधी ।
आमतण्डुलमुद्गाश्च दधि सद्योघृतं पयः ॥
अक्षाराः कथिता ह्येते त्वन्ये क्षाराः प्रकीर्त्तिताः ।
दन्तकाष्ठं तथैवापस्त्रीकटु त्रिफला तथा ।
भोज्यपात्रं तथैवैतदक्षारं परिचक्षते ॥"
इति कालसारे—६६

**क्षारलवणम्**— कृत्रिमलवणमिति कुल्लूकः ।
अक्षारलवणान्नाः स्युर्निमज्जेयुश्च ते त्र्यहम् ।
मासाशनं च नाश्नीयुः शयीरंश्च पृथक् क्षितौ ॥
मनुः—५-७३

**क्षिप्रहोमः**— द्विविधा होमा याज्ञिकप्रसिद्धाः ।
क्षिप्रहोमास्तन्त्रहोमाश्च ।
तत्र क्षिप्रहोमाः क्षिप्रं हूयन्त इति व्युत्पत्त्या
सायं प्रातर्होमादयः तन्त्रहोमाश्च परिसमूहन
बर्हिरास्तरणाद्यङ्गविस्तारयुक्ता इति संस्कारतत्त्वे
रघुनन्दनभट्टाचार्याः—११

**क्षीरम्**— दुग्धम् ।
हेम्ना तु सह यद्दत्तं क्षीरेण मधुना सह ।
तदप्यक्षय्यतां याति पितॄणां तु तिलोदकम् ॥
शङ्खः—१३-१५

**क्षीरकुशः**— क्षीरकुशाः— मलयजाताः कुशाः

क्षीरस्ताविकुशविशेषा वा इति परिभाषाप्रकाशे—१०० गुन्द्राशब्दो द्रष्टव्यः ।

**क्षीरशाकम्**— अपक्वनष्टदुग्धम् ।
"अपक्वमेवयन्नष्टं क्षीरशाकं हि तत्पयः" इति वाग्भटे।

**क्षीरषाष्टिकम्**— क्षीरमिश्रितः षाष्टिकौदनः ।
बुधग्रहस्य प्रियं तत् ।
गुडौदनं पायसं च हविष्यं क्षीरषाष्टिकम् ।
दध्योदनं हविश्चूर्णं मांसं चित्रान्नमेव च ॥
दद्याद् ग्रहक्रमादेवं द्विजेभ्यो भोजनं बुधः ।
शक्तितो वा यथालाभं सत्कृत्य विधिपूर्वकम् ॥
याज्ञ०—१-३०५

**क्षीरसः**
**क्षीरसारः** } नवनीतमितिवैद्यकशब्दसिन्धौ ।
ईषच्छलेष्मकरं गौल्यं पित्तघ्नं तर्पणं गुरु ।
पुष्टिं चैवाभिधा तस्य क्षीरसारस्तु क्षीरसः ॥
इति राजनिघण्टुः—६१५

**क्षीरहोता**— अग्न्याधेयसम्बन्धिनामृत्विजां मध्ये यः कश्चियदग्निहोत्रे ऋत्विग् भवति स क्षीरहोता
इत्यपरार्कः ।
"यो यस्याग्निनादत्ते स तस्य क्षीरहोता"
इति हारितः

**क्षीरिका**— फलाध्यक्षम् । हेमाद्रि परिशेष—५८८

**क्षुतम्**— छिक्का ।
स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्योपसर्पणे ।
आचान्तः पुनराचामेद् वासो विपरिधाय च ॥
याज्ञ०—१-१९७

**क्षुतः**— छिक्कावान् ।

**क्षुत्**— (१) क्षुधा ।
"अजीगर्त्तः सुतं हन्तु मुपासर्पद् बुभुक्षितः ।
नचालिप्यत पापेन क्षुत प्रतिकारमाचरन् ॥"
मनुः—१०-१०५

**क्षुद्रकः**— परिमाणविशेषः टङ्कद्वयपरिमितः कोलवटकद्रंक्षणापरपर्यायः खारीशब्द द्रष्टव्यः।

**क्षुद्रद्रव्यम्**— मृद्भाण्डासनखट्वास्थिदारुचर्मतृणादि यत्।
शमीधान्यं कृतान्नं च क्षुद्रं द्रव्यमुदाहृतम् ॥
इति नारदः ।

**क्षुद्रपशुः**— अजाव्यादिः ।
"दुःखे च शोणितोत्पादे शाखाङ्गच्छेदने तथा ।
दण्डः क्षुद्रपशूनां तु द्विपणप्रभृतिः क्रमात् ॥"
याज्ञ०—२-२२५

**क्षुद्रान्त्रम्**— हृतस्यान्त्रम् । मिताक्षरा— ३-९४

**क्षुधा**— बुभुक्षा ।
क्षुधार्त्तश्चात्तुमभ्यागाद् विश्वामित्रः श्वजाघनीम् ।
चण्डालहस्तादादाय धर्माधर्मविचक्षणः ॥
मनुः—१०-१०८

**क्षुपः**— करवीरादयः सरलप्रायाः अवल्लिरूपाः क्षुपाः
इति विज्ञानेश्वरः—२-२२९
क्षुपा ह्रस्वशाखाः शाखोटकादय इति चण्डेश्वरः
विवादरत्नाकरे—२८

गुच्छतोऽपि ह्रसीयांसः क्षुपा इत्यपरार्कः ।
क्षुपो जात्यादिविटप इति विश्वरूपः ।

क्षुमा— अतसी इति विज्ञानेश्वरः । याज्ञ०— १-१८७
क्षुमा अतसी इति मित्रमिश्रः संस्कारप्रकाशे—४१५

क्षुरः— क्षौरसाधनं क्षुर इति प्रसिद्धम् ।
"शिवो नामेति लोहक्षुरमादाय निवर्त्तयामिति प्रवपति
पारस्करगृ०—२-१-११

क्षेत्रम्—(१) धान्यादिशस्योत्पत्तिस्थानं क्षेत्रम् केदार इति यावत् ।
क्षेत्रवेश्मवनग्रामविवीतखलदाहकाः ॥
राजपत्न्याभिगामी च दग्धव्यास्तु कटाग्निना ॥
इति याज्ञ०—२-२८१

खलात् क्षेत्रादगाराद्वा यतो वाऽप्युपलभ्यते ।
आख्यातव्यं तु तत्तस्मै पृच्छते यदि पृच्छति ॥
मनुः—११-१७

क्षेत्रभेदा यथा—
व्रीहिभवोचितं क्षेत्रं त्रैहेयं तत्समीरितम् ।
शाल्युद्भवोचितं यत्तु शालेयमभिधीयते ॥
यव्यं यवोचितं क्षेत्रं यवक्यं यवकोचितम् ।
षष्टिकोद्भवकं यत्तु तिल्यं तैलीनमित्यपि ।
एवं माष्यं तु माषीणं कोद्रव्यं कौद्रवीणवत् ।
तथा भङ्ग्यं चा भाङ्गीनमुम्यमौमीनमित्यपि ॥
अथ मौद्ग्यं च मौद्गीनमणव्यमाणवीनवत् ।
माषकोद्रवभङ्गोमामुद्गाणुप्रभवोचितम् ॥
इत्यादिशब्दकल्पद्रु मोद्धृतशब्दरत्नावल्याम् ।
(२) पुण्यस्थानम्, यथा—पुरुषोत्तमक्षेत्रमित्यादि ।

पुरुषोत्तमाख्यं सुमहत्क्षेत्रं परमपावन-
मित्युत्कलखण्डे ।
यथा वा— धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ।
मामकाः पाण्डवाश्चैव किम कुर्वत सञ्जय ॥
इति भ० गीता—१-१

पुण्यस्थानानि यथा—
अष्ट वैष्णवक्षेत्राः ११६ वदरिकासालग्रामपुरुषोत्तम-
द्वारकाबिल्वाचलानन्तसिंहश्रीरङ्गाः—१२०
अष्टौ शैवाः १११ अविमुक्त गङ्गाद्वारशिवक्षेत्ररामे
यमुनाशिव सरस्वतीमध्यशार्दूल राजक्षेत्राः १२२
शाक्ता अष्टौ च १२३ औघ्घीणजालपूर्णकामकोल्ल-
श्रीशैलकाञ्चीमहेन्द्राः १२४ एते महाक्षेत्राः १२५
इति बार्हस्पत्यसूत्रम् ६ अध्यायः ।
पुष्करं मूर्द्धजं गयाशिरः कुरुक्षेत्रमिति पुण्यक्षेत्राणि
इति पराशरमाधवे प्रायश्चितकाण्डे देवलः—४७८
(३) शरीरम् ।
इदं शरीरं कौन्तेय क्षेत्रमित्युच्यते बुधैः ।
एतद् यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥
भगवद्गीता—१३-१

क्षेत्रत्वं च तस्य क्षतत्राणात् क्षयात्, क्षरणात्
क्षेत्रवद्वाऽस्मिन् कर्मफलानिर्वृत्तेरिति
शङ्कराचार्यपादाः ।
(४) इच्छादि ।
इच्छा द्वेषं सुखं दुःखं संघातश्चेतना धृतिः ।
एतत् क्षेत्रं समासेन सविकारमुदाहृतम् ॥
इति भ० गीता १३-६

(५) भूमिमानविशेषः ।
करैरयुत १०००० संख्याकैः क्षेत्रं तस्य प्रकीर्त्तितम्

शुक्रनीतौ—१-२०८

**क्षेत्रजः**— पुत्रविशेषः ।

स च स्वक्षेत्रे (स्वभार्यायाम्) स्वनिर्देशेन स्वीयनिर्देशेन वा सम्बन्धिनः पुरुषान्तरात् नियोगविधिना उत्पादितः पुत्रः ॥

यस्तल्पजः प्रमितस्य क्लीबस्य व्याधितस्य वा ।

स्वधर्मेण नियुक्तायां स पुत्रः क्षेत्रजः स्मृतः ॥

मनुः—९-१६७

नियुक्तायां सपिण्डेनोत्तमवर्णेन वोत्पादितः क्षेत्रजो द्वितीयः ॥ विष्णुस्मृतिः—१५-३

**क्षेत्रज्ञः**— आत्मा ।

योऽस्यात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते ।

मनुः—१२-१२

इदं शरीरं कौन्तेय क्षेत्रमित्युच्यते बुधैः ।

एतद् यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥ इति

**क्षेत्रिकः**— (१) शस्यक्षेत्रस्वामी ।

ओघवाताहृतं बीजं यस्य क्षेत्रे प्ररोहति ।

क्षेत्रिकस्यैव तद्बीजं न वप्ता लभते फलम् ॥

मनुः—९-५४

क्षेत्रिकः क्षेत्रकारी इति स्मृतिचन्द्रिका । व्यवहार४८९

(२) कलत्रस्वामी ।

क्रियाभ्युपगमात्त्वेतद्बीजार्थं यत्प्रदीयते ।

तस्येह भागिनौ दृष्टौ बीजी क्षेत्रिक एव च ॥

मनुः—९-५३

**क्षेत्रियः**— क्षेत्रकर्षकः ।

क्षेत्रियस्यात्यये दण्डो भागाद्दशगुणो भवेत् ।

ततोऽर्द्धदण्डो भृत्यानामज्ञानात्क्षेत्रिकस्य तु ॥

मनुः—८-२४१

**क्षेत्री**— क्षेत्रपतिः ॥

भर्त्तुः पुत्रं विजानन्ति श्रुतिद्वैधं तु भर्त्तरि ।

आहुरुत्पादकं केचिदपरे क्षेत्रिणं विदुः ॥

मनुः—९-३२

**क्षेपः**— भर्त्सनम् ।

सत्यासत्यान्यथास्तोत्रैर्न्यूनाङ्गेन्द्रिय रोगिणाम् ।

क्षेपं करोति चेद्दण्ड्यः पणानर्धत्रयोदशान् ॥

याज्ञ०—२-२०४

एकजातिर्द्विजातींस्तु वाचा दारुणया क्षिपन् ।

जिह्वायाः प्राप्नुयाच्छेदं जघन्य प्रभवो हि सः ॥

मनुः—८-२७०

क्षेपः निर्भर्त्सनमिति विज्ञानेश्वरः ।

गलहस्तादिना प्रेरणमिति परिभाषाप्रकाशे मित्रमिश्रः ।

विगर्हातिक्रमाक्षेप इति देवलवचनव्याख्याने ॥

(सम्पूर्णश्लोकः क्षमाशब्दे द्रष्टव्यः)

**क्षेपणम्**—(१) यापनम् ।

विधवा यौवनस्था च नारी भवति कर्कशा ।

आयुषः क्षेपणार्थं तु दातव्यं स्त्रीधनं सदा ॥

इति विवादचिन्तामणौ ।

(२) भूपातनम् ।

क्षेपणैर्मुष्टिभिश्चैव वराहोद्धृतनिस्वनैः ।

तलैर्वज्रनिपातैश्च प्रसृताभिस्तथैव च ॥

इति महाभारते ।

(३) यन्त्रविशेषः ।

"दिग्भ्यो निपेतुर्ग्रावाणः क्षेपणैः महिता इव"

इति भागवते ।

क्षेमः— (१) कुशलम् ।

समागमे वैश्यं प्रति कुशलपृच्छार्थकः शब्दः ।

ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयम् ।
वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च ॥
मनुः—२-१२७

क्षेममस्त्रियामित्यमरः ।

(२) लब्धस्य परिपालनम् ।

उपेयादीश्वरं चैव योगक्षेमार्थसिद्धये ।
याज्ञ०—१-१००

अत्र लब्धपरिपालनं क्षेम इति विज्ञानेश्वरः ।

दिवा वक्तव्यता पाले रात्रौ स्वामिनि तद्गृहे ।
योगक्षेमेऽन्यथा चेत्तु पालो वक्तव्यतामियात् ॥
मनुः—८-२३०

(३) पूर्तम् ।

क्षेमं पूर्तं योगमिष्टमित्याहुस्तत्त्वदर्शिनः ।
अविभाज्ये तु ते प्रोक्ते शयनासनमेव च ॥

इति व्यवहारमयूखे लौगाक्षिः ।

क्षैरेयी— पायसम् क्षीरी इति भाषायाम् ।

क्षोधुकः— क्षुधातुरः ।

अनीश्वरो ह क्षोधुको भवति । गोभिलः—१-६-२

क्षौद्रम्— मधु ।

मक्षिकाः कपिलाः सूक्ष्माः क्षुद्राख्यास्तत्कृतं मधु ।
मुनिभिः क्षौद्रमित्युक्तं तद्वर्णात् कपिलं भवेत् ॥
इति भावप्रकाशे

अपः शस्त्रं विषं मांसं सोमं गन्धांश्च सर्वशः ।
तैलं मधुगुडं कुशान् ॥ मनुः—१०-८८

क्षौमम्— दुकूलम् ।

क्षुमा अतसी तत्तन्तुनिर्मितं वस्त्रं क्षौममिति विज्ञानेश्वरः । क्षौमं तसर इति असहायभाष्ये ।

"सगौरसर्षपैः क्षौमम् ॥" याज्ञः—१-१८७

कौशेयं तित्तिरिर्हृत्वा क्षौमं हृत्वा तु दर्दुरः ।
कार्पासतान्तवं क्रौञ्चो गोधा गां वाग्गुदो गुडम् ॥
मनुः—१२-६४

क्षौरम्— मुण्डनम्, वपनम् ।

अस्नाने गमने रणेऽम्बरधृतौ श्राद्धे महेऽभ्यर्चने
भुक्तौ पर्वचतुर्दशीव्रतनिशामासान्तसंक्रान्तिषु ।
भौमार्कार्किदिने त्रिपूर्वहुभुङ्मूलानुराधामघा
श्लेषाजे कुतिथिन्दुयोगकरणे क्षौरं बुधो वर्जयेत् ॥
इति पण्डितसर्वस्वे ।

क्ष्वेडः— गरलम् ।

क्ष्वेडो ध्वनौ कर्णामये विषे ।
क्ष्वेडा वंशशलाकायां सिंहनादे च योषिति ।
लोहितार्कपर्णफले घोषपुष्पे नपुंसकम् ॥
दुरासदे च कुटिले वाच्यलिङ्गः प्रकीर्त्तितः ॥

अतएव कुटिलार्थे खोड़ इति अपभ्रंशव्यवहारः दृश्यते ।

**क्ष्वेडनम्**— सिंहनादः इति नरसिंह वाजपेयी—२-४८३
मुख शब्द इति मयूखे। अव्यक्त दन्तशब्द इति कुल्लूक
"नास्फोटयेन्न च क्ष्वेडेत्" मनुः—४-६४

**क्ष्वेड़ा**— ध्वनिः कौटिल्यं, परस्परच्छिद्रान्वेषणं च।
लाङ्गुलचालनं क्ष्वेड़ा प्रतिवाचो विवर्त्तनम्।
दन्तदर्शनमारावस्ततो युद्धं प्रवर्त्तते।
महाभा० उद्—७२-७१

**क्ष्वेडितम्**— हुंकारैः क्ष्वेडितोत्कृष्टैः सिंहनादैः सगर्जितैः।
महाभा० द्रोण—३८-१२

# ख

**खम्**— (१) आकाशः मनुः—१२-१२०
खं संनिवेशयेत् स्वेष्ट चेष्टनस्पर्शनेऽनिलम्।
पंक्तिदृष्ट्योः परं तेजः स्नेहेऽपो गां च मूर्त्तिषु॥
(२) इन्द्रियम्।
त्रिराचामेदपः पूर्वं द्विः त्रिमृज्यात्ततो मुखम्।
खानि चैव स्पृशेदद्भिरात्मानं शिर एव वा॥
मनुः—२-६०

**खजः**}—मथनदण्डः।
**खजा**} खजा मन्थनदण्डो वा अङ्गारावक्षेपणं वा हस्ताकार-
पिष्टविकारप्रमथनार्थदण्डो वा इति महाभारत
व्याख्यानुराशयः। विरा० पा० प्र०—८-१
अथापरो भीमबलः श्रिया ज्वल
न्नुपाययौ सिंहविलास विक्रमः।
खजां च दर्वीं च करेण धारय
न्नसिं च कालांगमकेशमव्रणम्॥
"खजामन्थप्रहस्तयोरिति तत्रैव"
अकारान्तोऽपि पुंलिङ्गः।
पयस्यन्तर्हितं सर्पिर्यद्वन्निर्मथ्यते खजैः।
शुक्रं निर्मथ्यते तद्वद् देहसंकल्पजैः खजैः॥
महाभा०—१२-२१४-२१

**खञ्जः**— पादविकलः।
खञ्जो वा यदि वा काणो दातुः प्रेष्योऽथवा भवेत्।
हीनातिरिक्तगात्रो वा तमपीडा नयेत् पुनः॥
मनुः—३-२४२

**खञ्जरीटः**— खञ्जनाख्यपक्षिविशेषः कज्जलपाती इतिप्रसिद्ध
बकं चैव बलाकां च काकोलं खञ्जरीटकम्।
मत्स्यादान् विड्वराहांश्च मत्स्यानेव च सर्वशः॥
मनुः—५-१४

**खटिका**— पाण्डु, खडि इति प्रसिद्धा।
प्रमाणं खटिकाग्राही शब्दे मृग्यम्॥

**खटिकाग्राही**— (१) आयव्ययरक्षकः।
(२) गणकः खटिकाग्राही गणक इति व्यवहारप्रकाशे
मित्रमिश्रः स च साक्षिविशेषः।
दूतक खटिकाग्राही कार्यमध्यगतस्तथा।
एकएव प्रमाणं स्यान्नृपोऽध्यक्षस्तथैव च॥
इति व्यवहारप्रकाशे बृहस्पतिः—५-२०

**खट्वम्**— अभक्ष्यविशेषः।
खट्ववार्त्ताककुम्भीकव्रश्चनप्रभवाणि च।
भूतृणं शिग्रुकं चैव खुखण्डं कवकानि च॥

एतेषां भक्षणं कृत्वा प्राजापत्यं चरेद्द्विजः ।
इति बृहद्यमः । मिताक्षरा—३-२८६

**खट्वा**—(१) खट्वाख्यः पक्षिविशेष इत्याचारेन्दौ ।
खट्वावार्त्ताककुम्भीक व्रश्चनप्रभवाणि च ।
इति बृहस्पतिः । अत्र खट्वाख्यः पक्षि इत्यन्ये इति
विज्ञानेश्वरः याज्ञ०—३-२८६
तन्मते खट्वमिति पाठ ।
(२) पल्यङ्कः । "खट्" आकाङ्क्षायाम् ।
खट्यते काङ्क्ष्यते शयनार्थिभिरिति खट्वा
पल्यङ्कः— अमरः—२-६-१३८

**खट्वाङ्गम्**—दण्डारोपितशिरकपालात्मको ध्वजः, न पुनः
खट्वैकदेश इति विज्ञानेश्वरः याज्ञ०—३-२४३
"महोक्षः खट्वाङ्गं परशु" इति महिम्नस्तवे ।
खट्वाङ्गकपाल पाणिर्वा द्वादशसम्वत्सरान् ब्रह्मचारी
भैक्षाय ग्रामं प्रविशेत् कर्माचक्षाणः
इति गौतमः—३-४-४
खट्वाङ्गं पाशुपतानां प्रसिद्धमिति हरदत्तः ।
"खट्वाङ्गं त्रिशूलमिति गोविन्दानन्दः"
प्रायश्चित्तविवेकः—६७

**खड्गः**—(१) गण्डकः गण्डा इति प्रसिद्धः अरण्यपशु-
विशेषः । "खड्गे तु विवदन्त्यग्राम्यशूकरे च"
वसिष्ठः—१४-४७
भक्ष्याः श्वाविड्गोधाशशशल्यक कच्छपखड्गाः
खड्गवर्जाः पञ्च पञ्चनखाः बौधायनः—१-५-१२-५
(२) खड्गो मृगविशेषः शृङ्गमृत्युरितिगौतमीयवृत्तौ
हरदत्तः । (३) स्वनामप्रसिद्ध शस्त्रविशेषश्च ।

**खड्गपात्रम्**— मध्याह्नः खड्गपात्रं चेत्यादि कुतपगणने
कुतपशब्दे द्रष्टव्यम् ।

**खड्गोपस्तरणम्**— गण्डकचर्मनिर्मितासनम् ।

**खण्डफुल्लः**— भित्त्यादीनां स्फुटितसंस्कारः ।
"किष्कुमात्रमणिद्वारमन्तरिकायां खण्डफुल्लार्थमसम्पातं
कारयेत्" इति कौटल्यः—३-८-१५
खण्डफुल्लार्थं स्फुटितसंस्कारार्थमितिः श्रीमूला ॥

**खण्डिकः**— घटः ।
अक्षतास्तु यवाः प्रोक्ता भृष्टा धाना भवन्ति ते ।
भृष्टास्तु व्रीहयो लाजा घटः खण्डिक उच्यते ॥
गोभिलस्मृतिः—३-१३३
खण्डिकस्थाने षण्डिक इति पाठोऽप्यस्ति ।
श्रीजगन्नाथमन्दिरे यः खण्डशब्दः प्रयुज्यते स
अस्मादेवं समागत इति तर्क्यते ।
उत्कलीयः हाण्डिशब्दोऽपि अन्नपचनपात्रादौ प्रयुक्त
अस्यैवापभ्रंशः ।

**खदिरः**— खदिरवृक्षः खदिरसारश्च ।
खदिरः बालपत्र इति हेमाद्रिः खइर इति उत्कलीयाः ।

**खदिरशाकम्**— लज्जालुः इति शब्दकल्पद्रुमे । कफेलु
जलप्रभवखदिरशाकमिति श्राद्धदीपे दिव्यसिंहः ।

**खनित्रम्**- खननसाधनम्, वंशदण्डाग्रारोपितलौहकीलकम् ।
खणति इति लोकप्रसिद्धम् ।
यथा खनन् खनित्रेण नरो वार्यधिगच्छति ।
तथा गुरुगतं विद्यां शुश्रूषुरधिगच्छति ॥
मनुः—२-२०१

**खरः**— (१) गर्दभः ।
परीवादात्खरो भवति श्वा वै भवति निन्दकः ।
परिभोक्ता कृमिर्भवति कीटो भवति मत्सरी ।
मनुः—२-२१८

(२) खराः वर्त्तिकास्थलानि इति देवपालः ।
"षट्कर्पूः कुर्यात्" तासां दक्षिणतः खराः
इति काठकगृह्ये—५-११-४

(३) सम्वत्सरविशेषस्य नाम
खरे भवेत् पुमान् वीर इत्यग्निपुराणे—१३९-७

**खरपट्टम्**— चौर्यशास्त्रविशेषः कर्त्तृनामप्रसिद्ध इति
श्रीमूला कौट०—४-८

**खरिका**— (१) पलायनशीला गौः स्थूरिकाशब्दो द्रष्टव्यः
(२) कस्तूरीभेदः पिण्डिकाशब्दे द्रष्टव्यः ।

**खर्जूर**
**खर्जूरी** } वृक्षविशेषस्तालनारिकेलवृक्षसदृशः । तस्य फलम् श्राद्धदेयत्वेन प्रदर्शितम् ।
विल्वामलकमृद्वीकापनसाम्रातदाडिमम् ।
भव्यपालेवताक्षोटखर्जूराम्रफलानि च ॥
इत्यादिश्रादेयत्वेनोक्तं श्राद्धदीपे
खर्जूरीभेदा उक्ता भावप्रकाशे ।
भूमिखर्जूरिका स्वाद्वी दुरारोहा मृदुच्छदा ।
तथा स्कन्धफला काककर्कटी स्वादुमस्तका ॥
पिण्डखर्जूरिका त्वन्या सा देशे पश्चिमे भवेत् ।
खर्जूरी गोस्तनाकारा परादद्वीपादिहागता ॥
जायन्ते पश्चिमे देशे सा छोहारेति कीर्त्यते ।
खर्जूरीत्रितयं शीतं मधुरं रसपाकयोः ॥ इति

**खर्वः**— (१) समपरिमिता तिथिः ।
खर्वो दर्पस्तथा हिंस्रस्त्रिविधं तिथिलक्षणम् ।
खर्वो नाम तिथेः साम्यं दर्पो वृद्धिः प्रकीर्त्तितः ॥
इति कालमाधवे ।

(२) वामनः । (३) वामहस्तः इतिकल्पतरुः ।
"अखर्वेण पात्रेण पिवेदञ्जलिना वा" वसिष्ठः—५-७
खर्वेण वह्निपक्वेन शरावादिना इति सायणः
तै० स०—२-५-१-७

(४) सहस्रकोटीपरिमाणः—१००००००००००
"नियुतं प्रयुतं कोटिरर्वुदं चाब्जखर्वकौ"
इति शुक्रनीत्याम् ॥

**खर्वटः**— (१) खर्वटः प्रचुरकण्टकसन्तानो ग्राम इति
विज्ञानेश्वरः याज्ञ०—२-१६७
खर्वटा गिरितटग्रामा इति श्रीधरस्वामी ।
स्फीताञ्जनपदांस्तत्र पुरग्राम व्रजाकरान् ।
खेटखर्वटवाटांश्च वनान्युपवनानि च ॥
इति श्रीमद्भागवते—४-११
बहुकारुकृषीवलो ग्राम इति व्यवहारकल्पतरौ—४६१
खर्वटं खेटकं वापि ग्रामं वा शस्यशालिनम् ।
निवर्त्तनशतं वापि तदर्द्धं वापि शक्तितः ॥
इत्यादिमात्स्ये—२८२-३
मार्कण्डेयपुराणे तु नगरलक्षणमुल्लिख्य
"तदर्धेन तथा खेटं तत्पादेन च कर्वटमित्युक्तम् ४६-४५
(२) नृहीनो ग्राम इति मित्रमिश्र-श्राद्धप्रकाशे—१८७
(३) चतुःशतग्राममध्यस्थलमिति भूरिप्रयोग
इति शब्दकल्पद्रुमे ।

**खर्वपात्रम्**— अग्निपक्वशरावादि ।

खर्वेण ब्रह्मिपक्वेन शरावादिना इति तैत्तिरीय-संहिताभाष्ये सायणः। तै० सं०—२-५-१-७
खर्वो वामहस्त इति पारस्करगृह्यभाष्ये गदाधर
१-११

**खलम्**— (१) धान्यादिमर्दनस्थानम्।
खलं धान्यकरणमिति नित्याचारप्रदीपे।
खलात्क्षेत्रादगाराद्वा यतो वाऽप्युपलभ्यते।
आख्यातव्यं तु तत्तस्मै पुच्छते यदि पुच्छति॥
मनुः—११-१७

खलं धन्यपवनस्थानमिति श्रीमूला-कौट०—३-६
पक्वं शस्यं छेदनात्परतः क्षेत्रादाकृष्य यत्र परिष्क्रियते देशविशेषे स्थाप्यते सोऽयं खल इति गोभिलीय-भाष्ये—४-४-३०

खलं सस्यसमर्द्दनदेशः मध्यदेशे खरिहानमिति-प्रसिद्धमिति मित्रमिश्रः।
राजमार्गश्मशानानि क्षेत्राणि च खकानि च
इत्यादि तत्र यमः

**खलः**— दुर्जनः।
अहो मायाकृतं कर्म खलाः कलमपचेतसः।
तावत् कुर्वन्ति कार्पण्यं यावत् स्यात् प्रबलं बलम्।
वृहन्नारदीय पु०—८-४४

खलः कक्के भुवि स्थाने करे कर्णजपेऽधमे
इति हेममेदिन्यौ इति व्याख्यासुधायाम्॥

**खलतिः**— खल्वाटः इति कल्पतरुः।
केशशून्य इति सायणः॥ तै० सं०—२-५-२-५-७

**खलयज्ञः**— यथोक्तरूपेण खले विभज्य धान्यदीनां दानम्।
भूमिं भित्त्वौषधीर्भित्वा भित्वा कीटपिपीलिकाः।
पुनन्ति खलयज्ञेन कर्षका नात्र संशयः॥
इति नित्याचारप्रदीपे हारीतः।
वृक्षं छित्त्वा महीं भित्त्वा हत्वा च कृमिकीटकान्।
कर्षकः खलयज्ञेन सर्वपापैः प्रमुच्यते॥
इति पराशरः—२-१०

यदा खले धान्यमानयति तदा खलयज्ञ इति अष्टावक्रभाष्ये। मानवगृ०—२-१०-७
"पुनन्ति खलु यज्ञेन" इति विष्णुधर्मोत्तरे—२-८२-३०

**खलीकारः**— निर्भर्त्सनम्।

**खल्वः**— खल्वाश्चणका लंगाश्चेति महीधरः शुक्लयजुः
१८-१२

**खसः**— क्रियालोपात् शूद्रतांगतः क्षत्रियः मनुः—१०-४४
औड्रशब्दो द्रष्टव्यः।

**खाडवः**— खाण्डव इत्यस्य खाडव इति पाठभेदः।

**खाण्डवः**— खाद्वम्लकटुप्राय वस्त्वाद्य प्रलेह्यः।
वैद्यकशब्दसिन्धौ तु खाडव इति पाठो गृहीतः।
"पिप्पली शुण्ठियुक्तस्तु मुद्गयुषस्तु खाण्डवः"
इति निर्णयसिन्धौ

खाण्डवं खण्डविकारः फाणितादिः इति वैजयन्त्याम्
विष्णुः—५१-३१

अम्लकधान्यफलमूलादिनिर्यासः खाण्डव इति श्राद्धकल्पलतायाम्—६१

**खाण्डिकः**— खाण्डिकेभ्योऽनुवाक्या अनुगेयाः कारयेत
इति गोभिलः—३-३-८

खाण्डिकः समूहो घटेत्यनर्थान्तरमिति चन्द्रकान्तः

**खातः**— खननम् ।

"कूपखाते तटाखाते दीर्घीखाते तथैव च ।
अन्येषु धर्मखातेषु प्रायश्चित्तं न विद्यते ॥"

इति पराशरः—६-४०

**खादकः**— ऋणिकः ।

दानं दीयमानं मूलधनं धनिकेन ग्रहणं गृह्यमाणं
तदेव खादकेन इति विवादरत्नाकरे—५
खादको वित्तहीनः स्यात्लग्नको वित्तवान् यदि ।
मूलं तस्य भवेद्देयं न वृद्धिं दातुमर्हति ॥

इति मिताक्षरायाम्—२५४

**खारिका**— (१) खारी खारीशब्दो द्रष्टव्यः ।
(२) खारीपरिमितधान्यावुत्पादनयोग्याभूमिः ।
ददाति खारिकां भूमिं दरिद्राय द्विजातये ।
तस्य पुण्यं प्रवक्ष्यामि वदस्तन्निशामय ॥

बृहन्नारदीय पु०—११-१३२

**खारी**— मानविशेषः षोड़शद्रोणात्मकः ।

"धान्यदाने शुभं धान्यं खारिषष्टिमितं स्मृतम्"

शङ्खस्मृतिः—१-२४

"द्रौणैः षोड़शभिः खारि" इति विष्णुधर्मोत्तरे ॥
भावप्रकाशे मानपरिभाषाप्रकरणे तु—
माषैश्चतुर्भिः शाणः स्याद्धरणः स निगद्यते ।
टङ्कः स एव कथितस्तद्द्वयं कोल उच्यते ॥
क्षुद्रको वटकश्चैव द्रंक्षणः स निगद्यते ।
कोलद्वयं तु कर्षः स्यात्स प्रोक्तः पाणिमानिका ॥
अक्षः पिचुः पाणितलं किंचित् पाणिश्च तिन्दुकम् ।
बिड़ालपदकं चैव तथा षोडशिका मता ॥
करमध्यो हंसपदं सुवर्णं कवलग्रह ।
उदुम्बरं च पर्यायैः कर्षमेव निगद्यते ॥
स्यात् कर्षाभ्यामर्द्धपलं शुक्तिरष्टमिका तथा ।
शुक्तिभ्यां च पलं ज्ञेयं मुष्टिराम्रं चतुर्थिका ॥
प्रकुञ्चः षोड़शी विल्वं पलमेवात्र कीर्त्यते ।
पलाभ्यां प्रसृतिर्ज्ञेया प्रसृतं च निगद्यते ॥
प्रसृतिभ्यामञ्जलिः स्यात्कुड़वोऽर्धशरावकः ।
अष्टमानं च स ज्ञेयः कुडवाभ्यां च मानिका ॥
शरावोऽष्टपलं तद्वज् ज्ञेयमत्र विचक्षणैः ।
शरावाभ्यां भवेत्प्रस्थश्चतुः प्रस्तस्तथाढ़कः ॥
भाजनं कांस्यपात्रं च चतुःषष्टिपलश्च सः ।
चतुर्भिराढ़कैर्द्रोणः कलशो नल्वणोऽर्मणः ॥
उन्मानं च घटी राशिर्द्रोणपर्याय संज्ञितः ।
द्रोणाभ्यां शूर्पकुम्भौ च चतुः षष्टिशरावकः ॥
शूर्पाभ्यां च भवेद्द्रोणी वाहो गोणी च सा स्मृता ।
द्रोणी चतुष्टयं खारी कथिता शूक्ष्मबुद्धिभिः ॥
माषटङ्काक्षविल्वानि कुडवप्रस्थनाढकम् ।
राशिर्गोणी खारिकेति यथोत्तरचतुर्गुणम् ॥
एतद् विश्लेषणम्—
(४) माषाः— १ टङ्कः धरणः शाणो वा
(२) टङ्कौ— १ कोलः क्षुद्रकः वटकः द्रङ्क्षणो वा
(२) कोलौ— १ कर्षः पाणिमानिका अक्षः पिचुः पाणिः पाणितलं किंचित् तिन्दुकं विडाल पदकम् षोड़विका करमध्यः, हंसपदं, सुवर्णं कवलग्रहः, उदुम्बरम्, वा
(२) कर्षौ— १- अर्द्धपलं, शुक्तिः, वा

(२) शुक्ती— १ पलं मुष्टिः आम्रं चतुर्थिका प्रकुञ्च षोड़शी विल्वं वा ।
(२) पले— १ प्रसृतिः प्रसृतं वा ।
(२) प्रसृती— १ अञ्जलिः कुडवः अर्द्धशरावः अष्टमानं वा ।
(२) अञ्जलि— १ मानिका, शरावः अष्टपलं वा ।
(२) मानिके— १ प्रस्थः
(४) प्रस्थाः— १ आढकः भाजनं कांस्यपात्रं चतुःषष्टिपले वा ।
(४) आढ़काः— १ द्रोणः कलशः, नल्वणः, अर्मणो वा उन्मानं घटः राशिः वा
(२) द्रोणौ — १ शूर्पः, कुम्भः चतुःषष्टिशरावकः वा
(२) शूर्पौ— १ द्रोणी, वाहः, गोणी वा
(४) द्रोणि— १ खारी, खारिका वा।
ज्योतिः शास्त्रे लीलावत्याम्—
हस्तोन्मितैर्विस्तृतिदैर्घ्यपिण्डै
र्यद्द्वादशास्रं घनहस्तसंज्ञम् ।
धान्यादिके यद् घनहस्तमानं
शास्त्रोदिता मागधखारिका सा ॥
द्रोणस्तु खार्याः खलु षोड़शांशः
स्यादाढ़को द्रोणचतुर्थभागः ।
प्रस्थश्चतुर्थांश इहाढ़कस्य
प्रस्थांघ्रिराद्यैः कुड़वः प्रदिष्टः ॥
पादोनगद्याणकतुल्यटङ्कै
र्द्विसप्त ७२ तुल्यैः कथितोऽत्र सेरः—८
मणाभिधानः खयुगैः ४० श्च सेरै
र्धान्यादितौल्येषु तुरुष्कसंज्ञा ॥ इत्यादि
स्मृतिचन्द्रिकायां स्मृत्यन्तरे—
अङ्गुल्यग्रत्रयग्राह्या शाणमित्यभिधीयते ।
शाणं पाणितलं मुष्टिः प्रसृतिश्च तथाञ्जलिः ॥
कुडुपश्च तथा प्रस्थ आढ़को द्रोण एव च ।
मानी खारी च विज्ञेयाः संख्यायाश्चतुरुत्तराः ॥
अत्र कुम्भ शब्दः खारी पर्यायः तत्र क्वचिद्देशे कुम्भशब्दप्रयोगात् इति व्यवहारकाण्डे—७४०

**खार्जूरम्**— खर्जूरीजातं मद्यम् ।
पानसं द्राक्षं माधूकं खार्जूरं तालमैक्षवम् ।
मधूत्थं सैरमारिष्टं मैरेयं नारिकेलजम् ॥
समानानि विजानीयाद् मद्यान्येकादशानि तु ।
द्वादशं तु सुरा मद्यं सर्वेषामधमं स्मृतम् ॥
इति मिताक्षरायां पुलस्त्यः—३-२५३
मन्वर्थमुक्तावल्यां तु—
पानसद्राक्षमाध्वीकं खार्जूरं तालमैक्षवम् ।
माध्वीकं टाङ्कमार्द्वीकमैरेयं नारिकेलजम् ॥
सामान्यानि द्विजातीनां मद्यान्येकादशैव च ॥
द्वादशं तु सुरामद्यं सर्वेषामधमं स्मृतम् ॥
इति पाठः—११-९५

**खिलम्**— (१) खिलं वर्षत्रयपर्यन्तमकृष्टं क्षेत्रमिति नारदः
सम्वत्सरेणार्धखिलं खिलं स्याद्वत्सरैस्त्रिभिः ।
पञ्चवर्षावसन्नं तु क्षेत्रं स्यादटवीसमम् ॥
नारदसंहिता—१२-२३
दुष्कर्षं क्षेत्रमित्यपरार्कः।
द्वे खिलाप्रहते समे । त्रिषु इत्यमरः—२-१५
(२) श्रीयुक्तमहानाम्नकादि
स्वध्यायं श्रावयेत्पित्र्ये धर्मशास्त्राणि चैव हि ।
आख्यानानीतिहासांश्च पुराणानि खिलानि च ॥

मनुः—३-२३२

खिलानि श्रीसूक्तशिवसंकल्पादीनि इति कुल्लूकः ।

(३) खिलं न्यूनमिति श्रीधरस्वामी ।

उर्वरितमिति विजयध्वजः असम्पूर्णमित्यमरः

भवतानुदितप्रायं यशो भगवतोऽमलम् ।

येनेवासौ न तुष्येत मन्ये तद्दर्शनं खिलम् ॥

श्रीभागवते—१-५-८

**खिलीकृतः**— व्याकुलः ।

क्षुत्खिलीकृतवर्गस्य परिभूतस्य शत्रुभिः ।

दर्शद्वयं प्रवासो ऽस्ति परतो नाहिताग्निवत् ॥

इति कालसारे हारितः ।

सोऽहमस्या मुखं भूयो द्रष्टुं दर्शयिता कथम् ।

योऽहमस्याः पुरो भूमौ परैर्भग्नैः खिलीकृतः ॥ इति ।

**खिलोपचारः**— कर्षणहीनं क्षेत्रं खिलम् । तस्य कर्षणोपयोगितासम्पादनार्थोऽव्ययः ।

"खिलसम्भजनार्थो व्यय इति स्मृतिचन्द्रिकायाम्'

**खुखण्डम्**— उद्भिज्जविशेषः ।

मधुकैटभवृत्राणां त्रिशीर्षस्यासुरस्य च ।

विष्णुना हन्यमानानां जन्मेदः पतितः भुवि ॥

पिण्डोपमं खुखण्डं तु कवकं चेत्यसंनिभम्

इति कल्पतरूद्धृतब्राह्मे

कवकं राजसर्षपाख्यं शाकं, खुखण्ड तद्विशेषो गोबलीवर्दन्यायेन निर्दिष्ट इति विज्ञानेश्वरः

याज्ञ०—३-२८६

विष्णुस्मृतिटीकायामस्य सुखण्डमिति पाठो गृहीतः ।

**खुखुण्टकम्**— खुखुण्डकानि छत्राकसमानप्रकृतिकद्रव्याणि पिण्डोपमानि इति कालसारे गदाधरः

पलाण्डुशोभाञ्जनकौ तथा गृञ्जनकाह्वयः ।

खुखुण्टकान्यलाबूनि कृष्णं लवणमेव च ॥

इति तत्रत्य महाभारते ।

**खुरः**— गवादिनां पादाग्रम् ।

नाविनीतैर्व्रजेद्धुर्यैर्न च क्षुद्व्याधिपीडितैः ।

न भिन्नशृङ्गाक्षिखुरैर्न वालधिविरूपितैः ॥

मनुः—४-६७

**खेटम्**<br>**खेटः**<br>**खेटकम्** } कर्पकग्राम इति श्रीधरस्वामी । "खेटखर्वट-वाटीश्च वनान्युवनानि च ।" इति श्रीभागवते—१-६-११

खेटग्रामाग्रहाराश्च कुब्जं दुर्गं च पत्तनम् ।

पुरं च राजधानीति कीर्त्तिता अष्टधा बुधैः ॥

शूद्रैरधिष्ठितं खेटम् इति लक्षणप्रकाशोद्धृतसिद्धान्तशेखरे ।

सोत्सेधवप्राकारं च सर्वतः परिखावृतम् ।

योजनार्द्धार्धविष्कम्भमष्टभागायतं पुरम् ॥ ४४

प्रागुदक् प्रवणं शस्तं शुद्धवंशबहिर्गतम् ।

तदर्द्धेन तथा खेटं तत्पादेन च कर्वटम् ॥४५

पुरं च खेटकं चैव—४२

मार्कण्डेय पु० अ—४६

**खेटकः**— (१) आयुधविशेषः ।

धनुः कुन्तं च खड्गं च खेटं वापि द्विजाधमः ।

क्रीत्वा विक्रीय वर्त्तेत यमलोकान्न हीयते ॥

इति मरीचिः ।

खड्गं कुन्तं धनुर्बाणं खेटं क्रीत्वा द्विजश्चरेत ।

विक्रयेद् यदि तान् पश्चाद् रौरवं नरकं व्रजेत् ॥
इति देवलः हेमाद्रौ प्रायश्चित्ते—२१६
(२) भग्नचरणद्वय इति स्मृतिचन्द्रिका
तत्र जड़मूकान्यवधिपरकुब्जवामनखेटकान् ॥
इति कात्यायनस्मृतिः – १-७३

**खेयः**— तोयप्रवर्त्तनार्थसेतुः । मिताक्षरा—२-१५६
सेतुस्तु द्विविधः प्रोक्तः खेयो बन्ध्यस्तथैव च ।
तोयप्रवर्त्तनात् खेयो बन्ध्यः स्याद् विनिवर्त्तनात् ॥
विवादरत्नाकरे—२२६ नारदः

**खोटः**— शृङ्गहीनः बलीवर्दादिः ।
कूट इति पाठान्तरम् । गत्याघातः खोटनमिति
शब्दकल्पद्रुमे "काणखोरखोवणेटाः" इति ।
गौतमध०—३-१०-६

**खोड़ः** } भग्नचरणद्वय इति हेमाद्रौ श्राद्धखण्डे।
**खोड़कः** } खेटकशब्दस्यायं पाठभेदः ।
खोडो भग्नपादद्वय इति माधवाचार्याः ॥ पराशरः—३
"जड़मूकान्धवधिरकुब्जवामनखोड़कान्" इति पराशर-
माधवे कात्यायनः ।
उत्कलेषु कुष्ठादिना छिन्नपादः खोड़ इति वदन्ति ।

**खोरः**— वृद्धः ।
काणखोर कूट वणेटाः इति गौतमध०—३-१०-६

**ख्यातिः**— प्रसिद्धिः ।
येनास्मिन् कर्मणा लोके ख्यातिमिच्छति पुष्कलाम् ।
न च शोचत्यसम्पत्तौ तद् विज्ञेयं तु राजसम् ॥
मनुः—१२-३६

# ग

**गङ्गाद्वारम्**— हरिद्वारम् श्राद्धदेशरूपेण विष्णुना उक्तम् ॥
विष्णुः—८५-२८

केचिद्चुर्हरिद्वारं मोक्षद्वारं जगुः परे ।
गङ्गाद्वारं च केप्याहुः केचिन्मायापुरीं पुनः ॥ इति
वैजयन्त्युद्धृते स्कान्दे
सर्वत्र सुलभा गङ्गा त्रिषु स्थानेषु दुर्लभा ।
गङ्गाद्वारे प्रयागे च गङ्गासागरसङ्गमे ॥
कूर्मपु०—१-२८

**गजच्छाया**— श्राद्धकालविशेषः (योगविशेषः)
(१) यदेन्दुः पितृदैवत्ये हंसश्चैव करे स्थितः ।
याम्या तिथिर्भवेत् सा हि गजच्छाया प्रकीर्त्तिता
इति मिताक्षरायाम्—१-२१८
पितृदैवत्यं मघा । हंसः सूर्यः । करः हस्तानक्षत्रम् ।
याम्यातिथिः त्रयोदशी ।
हंसे करस्थिते यातु अमावास्या करान्विता ।
सा ज्ञेया कुञ्जरच्छाया इति बौधायनोऽब्रवीत् ॥
पुरुषार्थचिन्तामणिः—३१५

(२) अजेन सर्वलोहेन मघासु च यतव्रतः ।
हस्तिच्छायासु विधिवत् कर्णव्यजनवीजितम् ॥
इति महाभारतवाक्यात् गजच्छायेत्यत्र गजस्य
छाया इति शूलपाणिः हेमाद्रौ इत्थमेव परिशेष—२४६
(३) चन्द्रसूर्ययोर्ग्रहणकालोऽपि गजच्छाया
सैंहिकेयो यदा भानुं ग्रसते पर्वसन्धिषु ।
गजच्छाया तु सा प्रोक्ता तत्र श्राद्धं प्रकल्पयेत् ॥

इति वाराहे ।

अग्निपुराणे च—
सैंहिकेयो यदा सूर्यं ग्रसते पर्वसन्धिषु ।
हस्तिच्छाया तु सा ज्ञेया श्राद्धदानादिकेऽक्षया ॥
इति—१६५-३

(४) अमावास्याऽपराह्णः ।
अमावास्यां गते सोमे छाया या प्राङ्मुखी भवेत् ।
गजच्छाया तु सा प्रोक्ता तत्र श्राद्धं प्रकल्पयेत् ॥
(५) प्राक्छायादेशोऽपि इति हेमाद्रौ परिशेषखण्डे
२४५
(६) अपि नः स कुले जायाद् यो नो दद्यात्त्रयोदशीम् ।
पायसं मधुसर्पिर्भ्यां प्राक्छाये कुञ्जरस्य च ॥
मनुः—३-२७४
अत्र जायादिति उत्कलीयतालपत्रपुस्तकपाठः ।
अस्यैव श्लोकस्य मतभेदेन एतानि व्याख्यानानि
इति मे मतम्
(७) नभस्यस्यापरः पक्षो यत्र कन्यां व्रजेद्रविः ।
समहालयसंज्ञः स्याद्गजच्छायाह्वयस्तथा ॥
इति वृद्धमनुः पराशरमाधवे आचारकाण्डे ॥

**गजवीथी**— "रोहिण्यार्द्रा मृगशिरा गजवीथ्यभिधीयते"
देवीभागवते -- २-१५

**गजसूक्तम्**— आतून इन्द्र क्षुमन्तम् इति बौधा० गृह्य-
शे—१-२०-४
कुसीदी काण्वऋषिः इन्द्रो देवता, गायत्रीछन्दः
ऋ० म०—८-८१
आतून इन्द्र क्षुमन्तं चित्रं ग्राभं संगृभाय ।
महाहस्ती दक्षिणेन ॥ १ ॥
विद्मा हि त्वा तुविकूर्मिं तुविदेष्णं तुवीमघम् ।
तुविमात्रमवोभिः ॥ २ ॥
नहि त्वा शूर देवा न मर्तासो दित्सन्तम् ।
भीमं न गां वारयन्ते ॥ ३ ॥
एतो न्विन्द्रं स्तवामेशानं वस्वः स्वराजम् ।
न राधसा मर्धिषन्नः ॥ ४ ॥
प्र स्तोषदुप गासिषच्छ्रवत्साम गीयमानम् ॥
अभि राधसा जुगुरत ॥ ५ ॥
आ नो भर दक्षिणेनाऽभि सव्येन प्र मृश ।
इन्द्र मा नो वसोर्निर्भाक् ॥ ६ ॥
उपक्रमस्वा भर धृषता धृष्णो जनानाम् ।
अदाशूष्टरस्य वेदः ॥ ७ ॥
इन्द्र च उ नु ते अस्ति वाजो विप्रेभिः सनित्वः
अस्माभिः सुतं सनुहि ॥ ८ ॥
सद्योजुवस्ते वाजा अस्मभ्यं विश्वश्चन्द्राः ।
वशैश्च मक्षु जरन्ते ॥ ९ ॥

**गडु-** } गडुनाम्ना प्रसिद्धः जलपात्रविशेषः ।
**गडुकम्** } पानादिव्यवहारार्थं यस्योदरभागे मुखं
संयोजितमस्ति । गडुकान् पूरयेत् पश्चान्निर्मलेन
जलेन वै ॥ ८९
गडुकाष्टशतं कुर्यादथवाप्यष्टविंशतिः—९१
गडुकैः स्नापयेत् सर्वैः ॥ १०४
स्कन्द माहे ४१ अध्यायः ।
अम्भः पलैश्चतुर्भिस्तु सम्पूर्णं गडुकं स्मृतम् ।
इत्यादि विष्णुधर्मे नित्याचारप्रदीपोद्धृते ।

**गडुमान्**— कुब्जः ।

"स्यादेडे बधिरः कुब्जे गडुलः कुकरे कुणिः"
इत्यग्निपुराणे—३६४-६
गलश्रेणी च गडुमान् स्फुटिताङ्गश्च सज्वरः
इति श्राद्धमयूखे ब्रह्म० पु०
हेमाद्रौ तु गलरोगी च गडुमान् इति पाठः।
परिशेष -४६६

**गडूकः**— जलपात्रम्।
चरुका दर्विका लौही भाण्डानि विविधानि च।
ताम्रादिधातुसम्भूता गडूकाः करकास्तथा।
इति स्कान्दे हेमाद्रि श्राद्ध—७३६

**गड्डुकम्**— गड्डु प्रसिद्धं जलपात्रम्।
"धाराजलं गड्डुकं च" सूरिसर्वस्वम्—२३-२

**गणः**— (१) भिन्नजातीया अपि एकक्रियाजीविनो गणाः।
गणो व्रातः आयुधीयादीनामेककर्मोपजीविनामिति
मिताक्षरा—२-१६२
(२) ब्राह्मणसमूहः।
"ब्राह्मणानां समूहस्तु गण इत्युच्यते बुधैः"
इति व्यवहारनिर्णये कात्यायनः।
(३) कुत्सितब्राह्मणः।
यस्तु जीवति चौर्येण गोसुवर्णापहारकः।
परस्वं हरते नित्यं स विप्रो गण उच्यते॥
इति गौतमधर्मसूत्रपरिशिष्टे—१२-२५
(४) त्रयोगुल्माः
रथाः— २७ गजः— २७
नराः— १३५ अश्वाः— ८१
एषां समष्टिः गणः। महाभा०—१-१-२-२१
"त्रयो गुल्मा गणो नाम" इति विस्तरस्तु
अक्षौहिणी शब्दे द्रष्टव्यः॥

**गणकः**— (१) सुवर्णादिगणनाकर्मणि नियुक्तः।
कायस्थाः लेखका गणकाश्च इति मिताक्षरायां
याज्ञ०—१-३३६
(२) ज्योतिर्वित्।

**गणदीक्षी**— बहुयाजकः मिताक्षरा—१-१६१
कदर्य बन्धचौराणां क्लीवरङ्गावतारिणाम्।
वैणाभिशस्तवार्धुष्यगणिकागणदीक्षिणाम्॥
याज्ञ०—१-१६१

**गणपतिशान्तिविधिः**—अथातो विनायकान् व्याख्यास्यामः ॥१॥ शालकटङ्कटश्चकुष्माण्डराजपुत्रश्चोस्मितश्च देवयजनश्चेति ॥ २ ॥ एतैरधिगतानामिमानि रूपाणि भवन्ति। ३ लोष्टं मृन्दाति ॥ ४ ॥ तृणानि छिनत्ति ॥ ५ ॥ अङ्गेषु लेखान् लिखति ॥ ६ ॥ अपस्वप्नं पश्यति ॥ ७ ॥ मुण्डान् पश्यति ॥ ८ ॥ जटिलान् पश्यति ॥ ९ ॥ काषायवाससः पश्यति ॥ १० ॥ उष्ट्रान् शूकरान् गर्दभान् दिवाकीर्त्यादीन् अन्यांश्चाप्रयतान् स्वप्नान् पश्यति ॥ ११ ॥ अन्तरिक्षं क्रामति ॥ १२ ॥ अध्वानं व्रजन् मन्यते पृष्ठतो मे कश्चिदनुव्रजति ॥ १३ ॥ एतैः खलु विनायकैराविष्टा राजपुत्रा लक्षणवन्तो राज्यं न लभन्ते ॥ १४ ॥ कन्याः पतिकामाः लक्षणवत्यो भर्तॄन् न लभन्ते ॥ १५ स्त्रियः प्रजाकामा लक्षणवत्यः प्रजां न लभन्ते ॥ १६ ॥ स्त्रीणामाचारवतीनामपत्यानि म्रियन्ते ॥ १७ ॥ श्रोत्रियोऽध्यापक आचार्यत्वं न प्राप्नोति ॥ १८ ॥

अध्येतृणामध्ययने महाविघ्नानि भवति ॥ १९ ॥ वणिजां वणिक्पथो विनश्यति ॥ २० ॥ कृषिकराणां कृषिरल्पफला भवति ॥ २१ ॥ तेषां प्रायश्चितम् ॥ २२ ॥ मृगाखरकुलायमृत्तिकारोचना गुग्गुलाः ॥ २३ ॥ चतुर्भ्यः प्रस्रवणेभ्यश्चतुरुदकुम्भातव्यङ्गानाहरेत ॥ २४ ॥ सर्वगन्ध सर्वरस सर्वौषधीः सर्वरत्नाति चोपकल्प्य प्रतिसर दधिमधुघृतमिति ॥ २५ ॥ एतान् संभारान् संसृज्य ऋषभचर्मारुह्याथैनम् ।
सहस्राक्षां शतधारमृषिभिः पावनं कृतम् ।
ताभिष्ट्वाभिषिञ्चामि पावमानीः पुनन्तु त्वा ॥
अग्निना दत्ता, इन्द्रेणदत्ता, सोमेन दत्ता, वरुणेन मृगोऽधिवासः । कुलाय कुञ्जन्तको मृगमृत्तिकोपादेया रोचना गुग्गुलै प्रसिद्धैः ॥ इति अष्टावक्रभाष्ये ।
दत्ता, वायुना दत्ता, विष्णुना दत्ता, बृहस्पतिना दत्ता, विश्वैर्देवै र्दत्ता, सर्वैर्देवैर्दत्ता ओषधय आपो वरुणसम्मितास्ताभिष्ट्वाभिषिञ्चामि पावमानीः पुनन्तु त्वा इति सर्वत्रानुषजति ।
यत्ते केशेषु दौर्भाग्यं सीमन्ते यच्च मूर्द्धनि ।
ललाटे कर्णयोरक्षणोरापस्तद्घ्नन्तु ते सदा ॥
भगं ते वरुणो राजा भगं सूर्यो बृहस्पतिः ।
भगमिन्द्रश्च वायुश्च भगं सप्तर्षयो विदुः ॥
इति ॥ २६ अधिस्नातस्य निशायां नद्यः पीड़ितसर्षपतैलमौदुम्बरेण श्रुवेण मूर्त्तति चतस्र आहुतीर्जुहोति । (ओं) शालकटंकटाय स्वाहा । कूष्माण्डराजपुत्राय स्वाहा । अस्मिताय स्वाहा । देवयजनाय स्वाहा इति २७ अतऊर्द्ध ग्रामचतुष्पथे नगरचतुष्पथे निगमचतुष्पथे वा सर्वतोमुखान् दर्भानास्तीर्य नवे शूर्पे बलिमुपहरति फलीकृतांस्तण्डुलानफलीकृतां स्तण्डुलानामं मांसं पक्वं मांसमामान् मत्स्यान् आमानपूपान् पक्वापूपान् पिष्टान् गन्धान् अपिष्टान् गन्धान् गन्धपानं मधुपानं मैरेयपानं सुरापानं मुक्तं माल्यं ग्रथितं माल्यं रक्तं माल्यं शुक्लं माल्यं रक्तपीतशुक्लकृनीलहरित चित्रवासांसि माषकल्माषमूलफलमिति ॥ २८ अथदेवानामावाहनं विमुखः श्येनो बको यक्षः कलहो भीरुः विनायकः कूष्माण्डराजपुत्रो यज्ञाविक्षेपी कुलङ्गापमारी यूपकेशी सूपरक्रोडी हैमवती जम्भको विरूपाक्षो लोहिताक्षो वैश्रवणो महासेनो महादेवो महाराज इति । एते मे देवाः प्रीयन्तां, पीता मां प्रीणयन्तु तृप्ता मां तर्पयन्त्विति ॥ २९ अधिश्रितेऽर्धरात्र आचार्यो ग्रहानुपतिष्ठते । भगवति भर्गं मे देहि । तेजस्विनि तेजो मे देहि यशस्विनि यशो मे देहि । पुत्रवति पुत्रान् मे देहि सर्ववति सर्वान् कामान् मे प्रदेहीति ॥ ३०
मुक्तम्—अग्रथितम् ।
अतऊर्द्ध मुदित आदित्ये विमले सुमुहूर्त्ते सूर्यपूजापूर्वकमर्घ्यदानमुपस्थानं च ।
नमस्ते अस्तु भगवन् शतरश्मे तमोनुद ।
जहि मे देव दपर्भाग्यं दौभाग्येन मां संयोजयस्व इति । ३१ अथ ब्राह्मणतर्पणम् । ऋषभे दक्षिणा ।
इति मानवगृह्ये द्वितीयपुरुषे चतुर्दशः खण्डः ।

**गणपूर्वः**— संघे प्रधानीभूतः ।

"अपरिज्ञातपूर्वाश्च गणपूर्वाश्च भारत ।
पुत्रिकापुत्रपूर्वाश्च श्राद्धे नार्हन्ति केतनम् ॥"
महाभा० अनु—९१-१९-२०

अत्र गणेषु संघेषु पूर्वाः गणपूर्वाः इति हेमाद्रिः ।
परिशेष—४७६

**गणान्नम्**— बहुस्वामिकमन्नम्।
गणानां गणिकान्नं चेत्यादि अभोज्यान्नप्रकरणे
मनुः—४-२०६
यद्बहुभिर्मिलित्वा परिष्क्रियते परिवेश्यते वा
तद्गाणान्नमिति प्रायश्चित्तविवेकव्याख्याने
गोविन्दानन्दः। वस्तुतस्तु परिवेशकबाहुल्यात् न
गणान्नत्वं, तेषां सहायकत्वादिति मन्मतम् ॥

**गणाभ्यन्तरः**— गणमध्यवर्त्ती।
गणः संघः। ये सदा एकया क्रियया जीवन्ति, ते
अत्र गणशब्दवाच्याः। तदन्तर्गतचातुर्विद्योऽपि
गणशब्दवाच्य इति अश्राद्धीयब्राह्मणनिरूपणे हेमाद्रिः।

**गणितम्**— गणनायोग्यं पण्यम्, क्रमुकफलादि
मिताक्षरा—२-२५४ गणनायोग्यं वस्तु वा ॥

**गणिमम्**— गणनायोग्यं पूगादि। [1]
लोकेऽस्मिन् द्विविधं पण्यं जङ्गमं स्थावरं तथा ॥
षड्विधस्तस्य तु बुधैर्दानादानविधिः स्मृतः ॥
गणिमं तुलिमं मेयं क्रियया रूपतः श्रिया ॥
नारदः—८-२-३

**गण्डः**—(१) कपोलाक्षयोर्मध्यप्रदेश इति विज्ञानेश्वरः२-८६
(२) योगविशेषः ज्योतिःशास्त्रप्रसिद्धः ॥

**गण्डिका**— तरुप्रकाण्डम्।
"उह्यमानमलाबुद्धतिप्लवगण्डिकावेणिकाभिस्तारयेयुः"
कौट०—४-३-८

**गण्डूपदः**— किंशुलुकः (केञ्चुअ इति प्रसिद्धः) इति
गोविन्दानन्दः प्रा०य०—२४१

**गण्डूषः**— (१)मुखपूरितजलम्।
गण्डूषः मुखपूरणम् इति शब्दकल्पद्रुमे।
गण्डूषः प्रसृतिपरिमित इति मेदिनी।
अलाभे दन्तकाष्ठानां प्रतिषिद्धे च तद्दिने।
अपां द्वादशगण्डूषैर्मुखशुद्धिं विधियते इति
नरसिंह पु०—५८-५२
वीरमित्रोदयव्याख्यायां तु प्रतिषिद्धे तथाहनि
इति पाठभेदः ॥ याज्ञ०—१-९८
(२) गण्डूषः परिमाणविशेषः।
हस्तौ प्रक्षाल्य गण्डूषं यः पिबेदविचक्षणः।
स हि दैवं च पित्र्यं च आत्मानं चापि घातयेत् ॥
लघुशातातपस्मृतिः—११२

**गतप्रत्यागतः**— भृत्यादिः।
यः विरागात् पूर्वं गतः पश्चात् आगतः।
शत्रुसेविनि मित्रे च गूढ़े युक्ततरो भवेत्।
गतप्रत्यागते चैव सहि कष्टतरो रिपुः ॥
मनुः—७-१८६

**गताध्वा**— अमावास्या।
गतः अध्वा स्वकीयं स्थानं परिपाटीगणनमार्गो यस्याः
अमावास्यायाः सेयं गताध्वा। चतुर्दश्यामेव तस्या
क्षीणत्वात्। तदुक्तं छन्दोगपरिशिष्टे—
संमिश्रा या चतुर्दश्या अमावास्या भवेत् क्वचित्।
खर्विकां तां विदुः केचिद् गताध्वामिति चापरे ॥
इति संस्कारप्रकाशे—८८३
"दृश्यमानेऽप्येकदा गताध्वा भवतीति"

गोभिल गृ०—१-५-६ गतः प्राप्तः देव पितृलोक-प्रापणाय अध्वा अनया सेयं गताध्वा प्रशस्ता भवति इति चन्द्रकान्तभाष्ये । तत्र संमिश्रेत्यस्य व्याख्याने केचित्-यजुर्वेदिनः । अपरे—ऋग्वेदिनः इति, गदाधरपद्धतौ कलसारे तुइदानीं समापक्षे व्यवस्थामाह

सम्मिश्रा या चतुर्दश्या अमावास्या भवेत् क्वचित् ।
खर्विकां तां विदुः केचिदुपेध्वमिति चापरे ॥

या अमावास्या तिथिक्षयवृद्धिरहिता सा समेत्युच्यते स्तम्भेनावस्थितेति स्तम्भितेति कल्पतरुकारादयः ता-माहुः या समामावास्या चतुर्दश्या संमिश्रा भवेत् तां खर्विकां खर्वः समतिथिर्ज्ञेया इति बौधायनोक्तेः समामित्यर्थः । क्वचिदुभयदिनापराह्णद्वयसम्बन्ध सम्भवे इत्यर्थः । केचित् बुधाः, विदुः- जानन्ति श्रद्धायेति शेषः श्राद्धार्हे स्वीकुर्वन्ति इति यावत् अपरे च बुधा यूयमितिशेषः । इति-हेतोः अन्येषां स्वीकारा-द्धेतोः उपेध्वम् उपगच्छत श्राद्धाय स्वीकुरुत इत्यर्थः । केवलं न विद्मः अपरे चेति चकारः समुच्चये । कृत्यरत्नाकरेऽपि उपेध्वमिति पाठः—६२४

**गतिः**— देहप्राप्तिः ।

"अवेक्षेत गतीर्नॄणां कर्मदोषसमुद्भवाः"

मनुः—६-६१

एता दृष्ट्वास्य जीवस्य गतिः स्वेनैव चेतसा ।
धर्मतोऽधर्मतश्चैव धर्मे दध्यात् सदा मनः ॥

मनुः—१२-२३

**गद्गदः**— स्खलद्गीः इति त्रिकाण्डमण्डनविवरणे ।

योगशास्त्राभियुक्ते वा कुब्जे वा वामने जडे ।
गद्गदे वाग्रजे दुष्येत परिविन्दन्ननानुजः ॥

इति त्रिकाण्डमण्डने ।

जिह्वादिदोषेण सहसा वक्तुमशक्त इति पराशर-माधवे—४-२१

कुब्जवामनषण्डेषु गद्गदेषु जडेषु च ।
जात्यन्धे बधिरे मूके न दोषः परिवेदने ॥

लिखितस्मृतिः—७६

"गद्गदः अस्पष्टवाक् इति कल्पतरुः" गार्हस्थ्य-११०

**गद्गरः**— साहसिकः ।

न विवाहः समाजो वा यदि राजा न पालयेत् ।
न वृषाः संप्रवर्त्तेरन् उन्मथ्येरंश्च गद्गराः ॥

इति महाभारतराजधर्मे

अत्र गद्गराः साहसिका इति मित्रमिश्रः

राजनीतिप्रकाशः—११

गीताप्रेसमुद्रितमहाभारते गर्गरा इति पाठो दृश्यते । शान्ति० राज०—६८-२१

**गद्दिका**— गद्दी इति प्रसिद्धा शय्या ।

यः पट्टगण्डिकाः श्राद्धे गद्दिकाश्च मनोहराः ।
ददाति तस्य हि स्वर्गे कल्प्यते दिव्यमासनम् ॥

इति हेमाद्रौ विष्णुधर्मोत्तरे ।

**गद्याणः**— मानविशेषः ।

तुल्या यवाभ्यां कथितात्र गुञ्जा
वल्लस्त्रिगुञ्जो धरणं च तेऽष्टौ ।
गद्यापकस्तद्द्वयमिन्द्रतुल्यै (१४)
र्वल्लैस्तथैकोघटक प्रसिद्धः ॥ इतिलीलावत्याम् ।

**गन्त्री**— (१) शकटमितिविज्ञानेश्वरः याज्ञ०—१-१४८

वेणुविणाभेरीमृदङ्गन्त्यूार्त्त शब्देषु इति

गौतमः—२-७-७

बाणभेरीमृदङ्गगर्त्तार्त्त शब्देषु इति हरदत्तोद्धृतपाठः।

(२) शकटभिन्नः यानविशेष इति मित्रमिश्र—

गर्त्तीं वा शकटं वापि लोहचक्राक्षकूबरम्।

दत्वापित्तणामाप्नोति धनाढ्यमतिभूयसीम् ॥

गन्धकी— गन्धतृणम्।

गुन्द्रा श्राद्धे क्षीरकुशाः वल्वजा गन्धकी तथा

वीरणा श्चोलपाश्चैव लम्वा वर्ज्याश्च नित्यशः ॥

इति कल्पतरौ वायुपुराणम् ॥

गन्धकी गन्धतृणमिति कालसारे गदाधरः

परिभाषा प्रकाशे मित्रमिश्रश्च १००

गन्धतृणं धान्यपत्रसदृशपत्रं धनित्री इति

उत्कलेषु प्रसिद्धमिति वैद्याः—११

तच्च सम्भवति सादृश्यात् ॥

गन्धतुलसी— दुर्लभा इति कर्पूरकान्ति इति ख्याता

तुलसीप्रायालम्बमानपत्र। वीजकाण्डप्ररोहा।

गन्धतैलम्— गन्धतैलं सुवासितं तैलम्।

गन्धतैलमत्तरेति आचारभूषणे—१५४

सार्षपं गन्धतैलं च यत्तैलं पुष्पवासितम्।

अन्यद्रव्ययुतं तैलं न दुष्यति कदाचन ॥

इति तत्र प्रचेताः।

गन्धनेपालिका— वनमल्लिका इति मित्रमिश्रः

श्राद्धप्रकाशः—१६०

गन्धर्वः— निर्निमित्तजलस्रावी देशः।

ब्रह्मचर्यान्ते गन्धर्वे देवकुले वा इत्यादि काठक गृ०—

(२-७-३) सूत्रव्याख्याने गन्धर्वे-निर्निमित्त

जलस्राविणि देशे इति देवपालः ॥

भाषान्तरे तु गन्धर्वोदकसन्निधाने इति।

गन्धर्वनगरम्— नगरं शून्यतो दृष्टं गन्धर्वनगरं स्मृतम्।

इति विष्णुधर्मोत्तरे—३-६-१५

गयाशिरः } गया इति प्रसिद्धं स्थानम्।
गयाशीर्ष } गयाशीर्षस्य श्राद्धदेशत्वं विष्णुना उक्तम्

विष्णुस्मृतिः—८५-४

"पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः"

महानद्याः पश्चिमेन यावत् गृध्रेश्वरो गिरिः।

उत्तरे ब्रह्मयूपस्य यावद्दक्षिणमानसम् ॥

एतद्गयाशिरो नाम त्रिषु लोकेषु विश्रुतम् ॥

इति आदित्यपुराणेक्तं गयाशिर्षप्रमाणमुक्तं पराशर-

माधवे आचारकाण्डे। श्राद्धकल्पलतायाम्—३६

गरगीः— विषभुक्।

"गरगीरिव सीदति" बौधा०—४-८-१

गरदः— आततायिविशेषः यः वधार्थे विषप्रयोक्ता।

अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः।

क्षेत्रदारहरश्चैव षडेते आततायिनः ॥ वसिष्ठः—३-१६

गर्गरः— गद्गरशब्दस्य पाठभेदः (गद्गरशब्दो द्रष्टव्यः)

दधिमथनदण्डः। गर्गरो मीनभेदे स्त्रीमन्थन्यामिति

मेदिनी इति भारतभावदीपे नीलकण्ठः ॥

गर्त्तः— (१) गर्त्तं रथः।

आरोहतं वरुणमित्रगर्त्तम्।

स्तुहि श्रुतं गर्त्तसदमित्यादि दर्शनादिति हरदत्तः
गौतम ध०—२-७-७
द्वितोयस्य सम्पूर्णः पाठो यथा—
स्तुहि श्रुतं गर्त्तसदं युवानं मृगं न भीमुपहत्नुमुग्रम् ।
मृला जरित्रे रुद्रस्तवानोऽन्यं ते अस्मन्निवपन्तु सेनाः ।
ऋक्—२-३३-११
(२) जलाधारविशेषः ।
धनुः सहस्राण्यष्टौ य गतिर्यासां न विद्यते ।
न ता नदीशब्दवहा गर्त्तास्ताः परिकीर्त्तिताः ॥
इति गोभिलस्मृतौ—१-१४२
कात्यायनस्मृतौ—१०-६
कूपो नाम दुःखेनादायोदकं पातुं योग्यः यः करेणोदकं गृहीत्वा पातुं योग्यः स गर्त्त इति गोविन्दस्वामी-
बोधा० ध०—२-३-६-२८

**गर्त्तानूपम्**— जलप्रायं गर्त्तयुक्तं क्षेत्रम् ।
गर्त्तानूपं सुपेकं च समन्तात् क्षेत्रसंयुतम् ।
प्रकृष्टं च कृतं काले वापयम् फलमश्नुते
इति वृहस्पतिः
फलसंग्रहार्थं केदारेषु गर्त्ताः क्रियन्ते, गात इति गड़िआ इति तेषां प्रसिद्धिरस्ति ।

**गर्दः**— शकटम् ।
"वाणभेरीमृदङ्गगर्दार्त्तशब्देषु" इति अनध्याय-प्रकरणे गौतमः—२-७-७
अस्य गर्दशब्दस्य गर्त्त इति पाठान्तरम् ।
तयोः गर्त्तः साधीयान् इति मन्ये आरोहतं वरुणमित्र गर्त्तं इत्याद्युदाहरणात् ।

**गर्भः**— भ्रूणः ।
"गर्भो भ्रूणेऽर्भके कुक्षौ सन्धौ पनसकण्टके"
इति विश्वमेदिन्यौ ॥

**गर्भपातः**— पञ्चमषष्ठमासयोः गर्भस्खलनम् ।
आचतुर्थाद् भवेत्स्रावः पातः पञ्चमषष्ठयोः ।
अप्रसवसंज्ञा तु सप्तमाष्टममासयोः ॥
अतः ऊर्ध्वं प्रसूतिः स्यात् । इति श्राद्धदीपे
आचतुर्थाद् भवेत्स्रवः पातः पञ्चमषष्ठयोः ।
अतः ऊर्ध्वं प्रसूतिः स्याद्दशाहं सूतकं भवेत् ॥
इति मिताक्षरायां मरीचिः—३-२०

**गर्भस्रावः**— चतुर्थमासमध्ये गर्भभ्रंशः
प्रमाणं गर्भपातशब्दे मृग्यम् ।

**गर्भाधानम्**— गर्भस्थापनम् । संस्कारकर्मविशेषः
"गर्भाधानमृतौ पुंसः सवनं स्पन्दनात्पुरा"
याज्ञ०—१-११

**गलग्रहाः**— (१) त्रयोदश्यादि चत्वारः
सप्तम्यादि दिनत्रयम् ।
चतुर्थी चैव ताः प्रोक्तास्तिथयोऽमी गलग्रहा ॥
विद्यारम्भे व्रते चैव सर्वमेतद् विवर्जयेत् ।
इति पण्डितसर्वस्वे ।
कृष्णपक्षे चतुर्थी च सप्तम्यादिदिनत्रयम् ।
त्रयोदशी चतुष्कं च अष्टावेते गलग्रहाः ॥
इति मदनरत्ने नारदः ।
(२) आरम्भानन्तरं यत्र प्रत्यारम्भो न विद्यते ।
गर्गादिमुनयः सर्वे तमेवाहुर्गलग्रहम् ॥

इति राजमार्त्तण्डे ।

**गलन्तिका**— गलन्तिका सन्ततपतद्धारमुदकपात्रम् इति निर्णयसिन्धुव्याख्यायां कृष्णभट्टः ।
प्रपा कार्या च वैशाखे देवे देया गलन्तिका
इति स्कान्दे ।

**गलशुण्डिके**— हनुमूलगलयो सन्धी । मिता०—३-९८
अवटुपार्श्वस्थौ नलौ इति वैजयन्त्याम् ।
विष्णुः—९६-९२

**गलुः**— चन्द्रकान्तमणिः ।
ससाल्वकेराशुवचो निशम्य रथोत्तमं काञ्चन भूषिताङ्गम्
मसारगल्वर्कमयैर्विभङ्गैर्विभूषितं हेमनिवद्धचक्रम् ॥
महाभा० शान्ति—४६-३३
अत्र गलुः चन्द्रकान्तमणिरिति नीलकण्ठः ।

**गल्लः**— मुखपार्श्वाङ्गविशेषः । गाल इति भाषाप्रसिद्धः
"उभौ हस्तौ च गल्लौ द्वावोष्ठौ पाणिद्वयं स्पृशेत्"
लघ्वाश्वलायनस्मृतिः—१-३२

**गवत्रम्**— यवसम्, घास इत्यर्थः ।
गोभिस्तु भक्षितं शस्यं यो नरः प्रतियाचते ।
सामन्तानुमतं देयं धान्यं यत्र तु भक्षितम् ॥
गवत्रं स्वामिना देयं धान्यं वै कर्षकाय च ॥
इति विवादरत्नाकरे नारदः—२३८
गवत्रं यवसमिति चण्डेश्वरः ॥ गवत्रं यवसमिति व्यवहार कल्पतरौ—४६७

**गवयः**— (१) गोसदृश आरण्यः पशुः गौरगवयशरभाश्च ॥ इत्यभक्ष्यप्रकरणे वसिष्ठः—१४-४६
गयल इति भाषायाम् ।
(२) अभक्ष्यमत्स्यविशेषः ।
"मत्स्यानां वा चेटगवयशिशुमारनक्रकुलीशः"
इति वसिष्ठः—१४-४१

**गवलः**— महिषः ।
पूजां समारभेद्देव्या नक्षत्रे वारुणेऽपि वा ।
पशुघाताश्च कर्त्तव्या गवलाजवधस्तथा ।
इति समयप्रदीपोद्धृते देवीपुराणे पृ—१७३

**गवाक्षः**— वातायनम् ।
द्वारदेशगवाक्षकेषु नावस्थानम् इतिविष्णुः पृ०—४१३
मेखला भ्रमनिष्कासगवाक्षान् नोपरोधयेत्
इति कात्यायनः ।
द्वारोपवेशनं नित्यं गवाक्षेण निरीक्षणम् ।
असत्प्रलापो हास्यं च दूषणं कुलयोषिताम्
इति विवादरत्नाकरे व्यासः—४३०

**गवाशनः**— गोमांसभक्षकः ।
प्रेरयन् कूपवापीषु वृक्षच्छेदेषु पातयन् ।
गवाशनेषु विक्रीणंस्तु प्राप्नोति गोवधम् ।
पराशरः—९-३६

**गवाह्निकम्**— गोसेवाविशेषः ।
तृणोदकादिसंयुक्तं यः प्रदद्याद् गवाह्निकम् ।
कपिलादानस्य फलं प्राप्नुयानात्र संशयः ॥
इति नित्याचार—२-५७०
तथा नित्याचारप्रदीपोद्धृत ब्रह्मपुराणे—
लवणस्य च चत्वारि पलान्यष्टौ घृतस्य च ।

परकीयस्य दुग्धस्य तथा देयानि षोड़श ॥
द्वात्रिंशत् शीतलस्यापि जलस्य च पलानि च ।
आदौ विचार्य वयसः परिमाणं बलं रुचिम् ॥
आकस्मिकं प्रदातव्यं पुण्यार्थे तु गवाह्निकम् ।
प्रभाते लवणं पत्रं दीयते च ततो जलम् ॥
ततस्तृणानि भोज्यन्ते शोषणं मांसवर्जितम् ।
निशि दीपः स मन्त्रज्ञो दिव्याः पौराणिकाः कथाः ॥
एवं कृत्वा रत्नपूर्णां महीं दत्त्वा फलं लभेत् ॥
कल्पतरौ नियतकालकाण्डेऽपि—४६१
"शूद्र एकाहिकं गोदशकस्य ग्रासं दद्यात्"

विष्णुस्मृतिः—८-१७

"देवाश्च पूजिता सर्वे यो ददाति गवाह्निकम्"

अत्रिसंहिता—३३४

**गवेधुकाः**— गवेधुका-गरगड़ इति प्रसिद्धा ।
गवा जलेन तत्र वा एधते इति, गवे गवार्थं दीयते रक्ष्यते इति वा गवेधुका । गवेधुका आरण्यगोधूमा इति ऋग्वेदभाष्यभूमिकायां सायणः ।
गवेधुकाः कुसुम्भबीजसदृश इति हेमाद्रिः
गवेधुका नीवारा इति बालम्भट्टी याज्ञ०—१-३६५
आरण्या व्रीहय इति केचित् ।
स्त्री गवेधुर्गवेधुका इत्यमरः—२-६-२५
व्याधौ समुत्थिते-"इमा रुद्राय तवसे कपर्दिन इति प्रत्युचं गावेधुकं चरुं जुहुयात्"

शांखायन गृ०—५-६-२

एषते रुद्रभागेति हुत्वा राम गवेधुकाम् ।
अर्द्धर्चेन तथाप्नोति धनं नास्त्यत्र संशयः ।

विष्णुधर्मोत्तर पु०—२-१२५-२०

अर्द्धर्चेन द्वितियेन क्षेत्रमध्ये बलिं हरेत् ।
मूषिकाशलभोत्पाते सुरामांसासवादिभिः ॥

विष्णुधर्मो—२-१२५-२१

**गवोपनिषद्**— महाभारते अनुशासनपर्वणि ७८ अध्याये सौदास उवाच—
त्रैलोक्ये भगवन् किंचित् पवित्रं कथ्यतेऽनघ ।
यत् कीर्त्तयन् सदा मर्त्यः प्राप्नुयात्पुण्यमुत्तमम् ॥ ३ ॥
भीष्म उवाच—
तस्मै प्रोवाच वचनं प्रणताय हितं तदा ।
गवामुपषिद्विद्वान् नमस्कृत्य गवां शुचिः ॥
गावः सुरभिगन्धिन्यस्तथा गुग्गुलुगन्धयः ।
गावः प्रतिष्ठा भूतानां गावः स्वस्त्ययनं महत् ॥
गावो भूतं च भव्यं च गावः पुष्टिः सनातनी ।
गावो लक्ष्म्यास्तथामूलं गोषु दत्तं न नश्यति ॥
अन्नं हि परमं गावो देवानां परमं हविः ॥
स्वाहाकारवषट्कारौ गोषु नित्यं प्रतिष्ठितौः ॥ ७ ॥
गावो यज्ञस्य हि फलं गोषु यज्ञाः प्रतिष्ठिताः ।
गावो भविष्यं भूतं च गोषु यज्ञाः प्रतिष्ठिताः ॥
सायं प्रातश्च सततं होमकाले महाद्युते ।
गावो ददति वै हौम्यमृषिभ्यः पुरुषर्षभ ॥ ९ ॥
यानि कानि च दुर्गाणि दुस्कृतानि कृतानि च ।
तरन्ति चैव पाप्मानं धेनुं ये ददति प्रभो ॥
एकां च दशगुर्दद्याद् दश दद्याच्च गोशती ।
शतं सहस्रगुर्दद्यात् सर्वे तुल्यफला हि ते ॥
अनाहिताग्निः शतगुरयज्वा च सहस्रगुः ।
समृद्धो यश्च कीनाशो नार्घ्यमर्हन्ति ते त्रयः ॥
कपिलां ये प्रयच्छन्ति सवत्सां कांस्यदोहनाम् ।

सुवर्णां वत्ससम्वीतामुभौ लोकौ जयन्ति ते ॥
युवानमिन्द्रियोपेतं शतेन शतयूथपम् ।
गवेन्द्रं ब्राह्मणेन्द्राय भूरिभृङ्गमलङ्कृतम् ॥
वृषभं ये प्रयच्छन्ति श्रोत्रियाय परन्तप ।
ऐश्वर्यंतेऽधिगच्छन्ति जायमानाः पुनः पुनः ॥ १५ ॥
नाकीर्त्तयित्वा गाः सुप्यात् तासां संस्मृत्य चोत्पतेत् ।
सायं प्रातर्नमस्येच्च गास्ततः पुष्टिमाप्नुयात् ॥ १६ ॥
गवां मूत्रपुरीषस्य नोद्विजेत कथंचन ।
न चासां मांसमश्नीयात् गवां पुष्टिं तथाप्नुयात् ॥ १७
गाश्च संकीर्त्तयेन्नित्यं नावमन्येत तास्तथा ।
अनिष्टं स्वप्नमालक्ष्य गां नरः सम्प्रकीर्त्तयेत ॥ १८ ॥
गोमयेन सदा स्नानात् करीषे चापि संविशेत् ।
श्लेष्ममूत्रपुरीषाणि प्रतिघातं च वर्जयेत् ॥ १९ ॥
साद्रें चर्मणि भुञ्जीत निरीक्षेद् वारुणीं दिशम् ।
वाग्यतः सर्पिषा भूमौ गवां पुष्टिं समश्नुते ॥
घृतेन जुहुयादग्निं घृतेन स्वस्ति वाचयेत् ।
घृतं दद्याद् घृतं प्राशेद् गवां पुष्टिं सदाश्नुते ॥
गोमत्या विद्यया धेनुं तिलानामभिमन्त्र्य यः ।
सर्वरत्नमयीं दद्यान्न स शोचेत्कृताकृते ॥
गावोमामुपतिष्ठन्तु हेमशृङ्गयः पयोमुचः ।
सुरभ्यः सौरभेय्यश्च सरितः सागरं यथा ॥
गावे पश्याम्यहं नित्यं गावः पश्यन्तु मां सदा ।
गावोऽस्माकं वयं तासां यतो गावस्ततो वयम् ॥
एवं रात्रौ दिवा चापि समेषु विषमेषु च ।
महाभयेषु च नरः कीर्त्तयन् मुच्यते भयात् ॥ इति

**गव्यूतिः**— (१) क्रोशद्वयम् ।
जलान्तरगतेभानौ यत् सूक्ष्मं दृश्यते रजः ।
प्रथमं तत्प्रमाणानां त्रसरेणुं प्रचक्षते ॥
त्रसरेणवोऽष्टौ विज्ञेया लिक्षैका परिमाणतः ।
ताराजसर्षपास्तिस्रस्तास्त्रयो गौरसर्षपाः ॥ २ ॥
सर्षपाः षड्यवो मध्ये अङ्गुलं च तदष्टकम् ।
द्वादशाङ्गुलिकः शङ्कुस्तद्द्वयं हस्त उच्यते ॥ ३ ॥
तच्चतुष्कं धनुः प्रोक्तं क्रोशो धनुः सहस्रिका ॥
क्रोशद्वयं च गव्यूतिः योजनं तच्चतुष्टयम् ॥ ४ ॥
विष्णुधर्मोत्तर पु०—१-४-१४

(२) गोमार्ग इति लक्ष्मीधरहरदत्तौ ।
मध्वामं मार्गे मांसं भूमिर्मूलफलानि रक्षा गव्यूतिर्निवेशनं युग्यघासश्चोग्रतः प्रतिगृह्याणि । आप-१-६-१८-१

**गाजरः**— मूलविशेषः ।
गृञ्जनं चुक्रिकां चुक्रं गाजरं पोतिकां तथा ।
इत्याचारेन्दूद्धृतब्रह्मपुराणे
अत्र गाजरगृञ्जनयोः एकत्रपाठः वस्तुभेदं ज्ञापयति ॥
"गृञ्जनं पलाण्डुभेदः पश्चिमदिशि प्रसिद्धः नतु गाजरम् तस्यपृथगुक्तेः । हेमाद्रिणा तु गृञ्जनं गाजरमेवोक्तं गौड़श्राद्धकौमुद्यामप्येवम् । तच्चिन्त्यम्
इति निर्ण्णयसिन्धो—२९४

**गाड़वः**— गाड़वाः स्वाद्वम्लकटुपाकवस्त्वाद्याः प्रलेहा इति नरसिंहवाजपेयी । नित्याचार—२-१७१
खाडव खाण्डव गाड़व षाड़वशब्दाः पाठभेदा इति मे मतिः

वटकानि च भक्ष्याणि कल्माषं गाड़वं तथा ।
मुद्गं पुष्पोदनं चैव पञ्चमुद्गो बलिः स्मृतः ॥ इति

**गाथा** — गाथा मोक्षाय प्रयोज्यो गीतविशेषः याज्ञ०-३-११३
**गाथिका** — गाथा ऋग्विशेषः इन्द्रगाथादयः

यदिन्द्रदोयशराश इतीन्द्रगाथा पञ्चर्चं इति
आह्निके मित्रमिश्रः—३३२
गीयन्ते इति गाथाः विशिष्टा एव ऋचः
यान्तस्वरयुक्तासु च कासुचिदृक्षु गाथाशब्दो रूढ़ः
यथोक्तम्—
छन्दोगा बह्वृचा श्चैव पौगा वाजसनेयिनः ।
उच्चनीचस्वरं प्राहुः स वै गाथिक उच्यते ॥
इति देवपालः ॥ काठक गृ०—३-१-२३
गाथालक्षणं सङ्गीतरत्नाकरे—५-२२८
कला मुनिजनैरुक्ता गाथायाश्चतुरक्षरा ।
अध्यष्टाविंशतिशतं कालानां तत्र कीर्त्तितम् ॥
मात्रावृत्तैः कलानां च पूर्त्तिः स्तोभाक्षरैरपि ।
कर्त्तव्यानेककान्यत्र वर्णालङ्कार गीतयः ॥ इत्यादि
गाथा यज्ञगाथेन्द्रगाथाद्या इति विज्ञानेश्वरः—१-४५
गाथा छन्दोविशेषयुक्तानि वाक्यानीति गोविन्दराजः
गाथाशब्दो वृत्तविशेषवचनः यथोक्तं पिङ्गलेन
अत्रासिद्धगाथेति । अविगीताः परम्परागताः
श्लोकाः अप्युच्यन्ते इति मेधातिथिः ।

**गान्धर्वमुहूर्त्तः**— दिवसस्य सप्तमो मुहूर्त्तः ।

**गान्धर्वविवाहः**— वरकन्ययोरिच्छया संयोगः ।
मनुः—३-३२
इच्छयान्योऽन्यसंयोगः कन्यायाश्च वरस्य च ।
गान्धर्वः स तु विज्ञेयो मैथुन्यः कामसम्भवः ॥

**गान्धारः**— देशविशेषः सम्प्रति कान्दाहार इति प्रसिद्धः ।
यस्य देशस्य रजपुत्री गान्धारी दुर्योधनस्य माता ।

**गान्धारकम्**— तण्डुलीयकमिति चन्द्रिका ।
अलाबूं गुञ्जनं चैव पलाण्डुं पिण्डमूलकम् ।
गान्धारकं करम्माणि लवणान्युपराणि च ॥

**गान्धारी**— कन्याविशेषः ।
ऊर्ध्वं दशाब्दादृया कन्या प्राग्रजोदर्शनात्तु सा ।
गान्धारी स्यात् समुद्वाह्या चिरंजीवितुमिच्छुना ॥
इति संस्कारप्रकाशे आश्वलायनः—७६७

**गान्धिकः**— गन्धवणिक् इति मेदिनी ।
स च अम्बष्ठात् राजपुत्र्यां जात इति पराशरपद्धतिः
इतिशब्दकल्पद्रुमे ।

**गायकः**— वैश्यायां रजकाज्जातो नर्त्तको गायको भवेत् ॥ धर्मशास्त्रसंग्रहे औशनसस्मृतिः—१६

**गायत्रंसाम**— गायत्रीमाश्रित्य गीयमानं साम ।
अतीषङ्गाः पदस्तोमाः सामानि व्याहृतिस्तथा ।
भारुण्डानि च सामानि गायत्रं रैवतं तथा ॥
वसिष्ठः—२८-१२
तत् सवितुर्वरेण्यमित्यस्यां गीयमानं नामगायत्रमिति नन्दपण्डितः ॥ विष्णुः—५६-२०

**गायत्री**— तत्सवितुरित्यादि मन्त्रः ।
गायन्तं त्रायते इति गायत्री ।
सावित्र्याश्चापि गायत्र्याः सन्ध्योपास्त्यग्निकार्ययोः ।
अज्ञानात् कृषिकर्त्तारो ब्राह्मणा नामधारकाः ॥
पराशरः—८-१
अत्र तत्सवितुर्वरेण्यमिति सवितृप्रतिपादकत्वात् सावित्री, णीकार यकारयोर्विश्लेषेण चतुर्विंशत्यक्षरत्वाद् गायत्री ।

"चतुर्विंशत्यक्षरा गायत्री इति श्रुतेः"

गायत्री वा इदं सर्वं भूतं यदिदं किंच वाग्वै गायत्री वाग्वा इदं सर्वं भूतं गायति च त्रायते च इति- इति छान्दोग्योपनिषत्—३-१२-१

गायकं त्रायते पापाद् गायत्रीत्युच्यते हि सा

शिव पु०—१-१५-१६

**गायनः**— गानजीवी अभोज्यान्नप्रकरणे मनुः—४-२१०

यत्र सूक्तं दुरुक्तं च समं स्यान्मधुसूदन ।

न तत्र प्रलपेत् प्राज्ञो बधिरेष्विव गायनः ॥ इति

महाभा० उद्०—६२-१३

**गार्हपत्यः**— वैदिकोऽग्निविशेषः ।

**गिरिकर्णिका**— अपराजिता (पुष्पम्)

"कुट्टलोन्मत्तकं केरी तथा च गिरिकर्णिका"

सूर्यवर्ज्यपुष्पनिर्णये नित्याचारप्रदीपोद्धृतभविष्ये

नित्याचार—१-५४७

गिरिकर्णिका गोकर्णी इति आचारेन्दुः—१५८

कूटज इति पूजाप्रकाशे—२१२

**गिरिदुर्गम्**— गिरिदुर्गं पर्वतपृष्ठमतिदुरारोहं सङ्कचैक-भागोपेतमन्तर्नदीप्रस्रवणाद्युदकयुक्तम् इति कुल्लूकः

मनुः—७-७०

गिरिदुर्गं परिमण्डलगिरिवलयवेष्टितो देशः ।

गिरिशिरोभागो वा इति वैजयन्त्यां नन्दपण्डितः

विष्णुः—३-६

**गिरिशालिनी**— श्वेतकुटजा इत्याचारेन्दौ—१५४

पारिभद्रं पाटला च बकुलं गिरिशालिनी ।

तिलकं जासुवनजं पीतकं नगरं तथा ॥

एतानि सुप्रशस्तानि कुसुमान्यच्युतार्च्चने ॥

वामनपुराणे विष्णुदेयपुष्पे । इति तत्रत्य अपरजिता इति पूजाप्रकाशे मित्रमिश्रः ।

**गीतकम्**— शिवस्तुतौ ब्राह्मणप्रयुक्तो गीतविशेषः

इति सङ्गीतरत्नाकरे ।

अपरान्तकमुल्लोप्यं मद्रकं प्रकरीं तथा ।

औवेणकं सरो बिन्दुमुत्तरं गीतकानि च ॥

याज्ञ०—३-११३

अपरान्तकादीनि सप्तगीतकानि छन्दकादीनि तु सप्तगीतानि इति तयोर्विशेषः सङ्गीतशास्त्रे द्रष्टव्यः ।

**गुच्छः**— गुच्छा अवल्लिरूपा असरलप्रायाः कुरण्टकादय

इति विज्ञानेश्वरः । याज्ञ०—२-२२६

गुच्छा अवल्लीरूपा असरलप्रकाण्डाः कुरुण्टकादयः

इति चण्डेश्वरः विवादरत्नाकरः—२८५

वृक्षेभ्यो न्यूनपरिमाणा उद्भिज्जाः गुल्माः कुरुवकादयः, ततो न्यूनपरिमाणाः गुच्छा इत्यपरार्कः

मूलत एव यत्र लतासमूहो भवति न च प्रकाण्डानि ते गुच्छा मल्लिकादय इति कुल्लूकः ॥

मनुः—१-४८

**गुञ्जलः**— परिमाणविशेषः ।

पञ्चगुञ्जलको माषः प्राणस्तेषु चतुर्गुणैः ।

कलञ्जं धरणं प्राहुर्मणिमानविशारदाः ॥

इति सरस्वतीविलासे विष्णुगुप्तः ।

**गुञ्जा**— परिमाणविशेषः यवद्वयपरिमितः।
"तुल्या यवाभ्यां कथिताऽत्र गुञ्जा" इतिलीलावत्याम्।

**गुडः**— (१) आयुधविशेषः।
शराणामथखड्गानां खनकानां तथैव च।
लगुडानां गुडानां च हुडानां परिघैः सह ॥
विष्णुधर्मोत्तर पु०—२-२६-३०
"लगुडानां गुडानां च हुडानां परिघैः सह"
इति मात्स्ये—२१६-३०
अयोगुडशब्दानुसारेण गुडशब्दं वाटुलि इति ख्यातानां मृद्गोलकानां पाषाणगोलकानां वा क्षेपणीयानाम् अभिधा भवितुमर्हति इति ज्ञायते।
(२) इक्षुरसविकारः।
तृणकाष्ठद्रुमाणां च शुष्कान्नस्य गुडस्य च।
चेलचर्मामिषाणां च त्रिरात्रं स्यादभोजनम् ॥
मनुः—११-१६६

**गुडपिष्टम्**—गुडपिष्टं गुडमिश्रं शाल्यादिपिष्टम् इति
विज्ञानेश्वरः याज्ञ०—१-२८९

**गुडपुष्पः**— मधूकवृक्ष इति शब्दकल्पद्रुमे।

**गुडाका**— निद्रा।
"निद्रालस्ये गुडाका स्यादिति गुडाका निद्रा" इति भगवद्गीतातात्पर्यचन्द्रिकायाम्।
एवमुक्त्वा हृषीकेशं गुडाकेशः परंतपः
न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह ॥
भ० गीता—२-९

**गुडौदनम्**— कृसरान्नलक्षणं लिखित्वा ततः तदर्द्धं माषं मोचायाः फलमेतद् गुडौदनम् ॥ इत्याचारेन्दुः—१६६

**गुणः**— (१) सत्त्वरजस्तमांसि त्रयो गुणाः।
"सत्त्वं रजस्तमश्चैव त्रीन् विद्यादात्मनो गुणान्"
मनुः—१२-२४
(२)सन्धिप्रभृतयः षड् गुणाः राजधर्मविषयकाः
सन्धिं च विग्रहं चैव यानमासनमेव च।
द्वैधीभावं संश्रयं च षड्गुणांश्चिन्तयेत्सदा ॥
मनुः—७-१६०
(३) दयाक्षमादयोऽपि गुणाः गौतमः—१-८-२४
(४) गुणः व्यञ्जनं सूपशाकादि।
गुणांश्च सूपशाकाद्यान् पयो दधि घृतं मधु।
विन्यसेत् प्रयतः पूर्वं भूमावेव समाहितः ॥
इति मनुः—३-२२६
अत्र गुणान् अप्रधानानि व्यञ्जनानि इत्यर्थ इति
श्राद्धदीपकारः
गुणाः व्यञ्जनानि इति लक्ष्मीधरः कृत्यकल्पतरुः॥
श्राद्ध—१७५ (५) पाककर्त्ता गुण इति अमर—२-९-२८
(६) राज्ञः अभिषेकादिरपि गुणः।
प्रजापालनादेर्गुणधर्मत्वेन परिगणनात्।
(७) आवृत्तिः।
"द्विगुणं हिरण्यं धान्यम्" वसिष्ठ—२-४४

**गुण्डिचायात्रा**— आषाढशुक्लद्वितीयायां श्रीपुरुषोत्तम देवविग्रहाणां गुण्डिचामन्दिरं प्रतिरथेन यात्रा।
गुण्डिचामण्डपं यान्तं ये पश्यन्ति रथे स्थितम्।
कृष्णं बलं सुभद्रां च ते यान्ति भवनं हरेः ॥

इति कालसारे ब्रह्म० पु०—६६-१

गुदम्— पार्थिवेन्द्रियम् ।

गुदं त्वपानं पायुर्ना इति अमरः—२-६-७३

अविनिष्ठिवतो दर्पाद्द्वावोष्ठौ छेदयेन्नृपः ।

अवमूत्रयतोमेढ्रमवशर्धयतो गुदम् ॥ मनुः – ८-२८२

गुन्द्रः— मुञ्जः काण्डशर इति प्रसिद्धः ।

गुन्द्रस्तेजनकः शर इत्यमरः—२-४-१६२

तेजनी कटं वेति पारस्करः । गुन्द्राशब्दो द्रष्टव्यः ।

सुरस्तु मुञ्जो बाणाख्यो गुन्द्रस्तेजनकः शर इति व्याख्यासुधायाम् ।

गुन्द्रा— भद्रमुस्तकः मुञ्जः ।

गुन्द्राः श्राद्धे क्षीरकुशाः वल्वजा गन्धकी तथा ।

वीरणाश्चोलपश्चैव लम्वा वर्ज्याश्च नित्यशः॥

इति कल्पतरौ (श्राद्ध—११४) वायुपुराणम् ।

गुन्द्रामुस्तका इति परिभाषाप्रकाशे—१००

गुन्द्रा मुस्तक इति शूलपाणिः ।

भद्रमुस्तकः सम्प्रति नागरमुथा इति ख्यातः

हेमाद्रौ तु

सदा श्राद्धे युपाश्चैव वल्वजास्तरवस्तथा ।

वीरणाश्च लवाश्चैव वर्ज्या वर्षाश्च नित्यशः ॥ इति पाठ

श्राद्धकल्पे—६४१

गुरुः— (१) जनकः ।

निषेकादीनि कर्माणि यः करोति यथाविधि ।

सम्भावयति चान्नेन स विप्रो गुरुरुच्यते ॥

मनुः—२-१४२

(२) आचार्यः ।

"स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति"

याज्ञ०—१-३४

"गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया"

"स्नास्यंस्तुगुरुणाज्ञप्तः शक्त्या गुर्वर्थमाहरेत्"

मनुः—३-२४५

(३) अध्यापकः ।

अल्पं वा वहु वा यस्य श्रुतस्योपकोरति यः ।

तमपीह गुरुं विद्याच्छ्रुतोपक्रियया तथा ॥

मनुः—२-१४९

अध्यापिता ये गुरुं नाद्रियन्ते विप्रा वाचा मनसा कर्मणा वा ।

यथैव ते न गुरोर्भोजनीयास्तथैव तान्न भुनक्ति श्रुतं तत ॥ वसिष्ठः—२-११

"अमावास्या गुरुं हन्ति शिष्यं हन्ति चतुर्दशी"

मनुः—४-११४

विष्णुधर्मे—

संस्कृतैः प्राकृतैर्वाक्यैर्यः शिष्यमनुरूपतः ।

देशभाषाद्युपायैश्च बोधयेत् स गुरुः स्मृतः ॥

व्यवहारप्रकाशे ५४

(४) मान्यजनाः

उपाध्यायः पिता ज्येष्ठो भ्राता चैव महीपतिः ।

मातुलः श्वशुरस्त्राता मातामह पितामहौ ।

वर्णज्येष्ठः पितृव्यश्च पुंस्येते गुरवः स्मृताः ॥

मातृमातामही गुर्वी पितुर्मातुश्च सोदरा ।

श्वश्रूः पितामही ज्येष्ठा धात्री च गुरवः स्त्रियः ॥

इति देवलः- कूर्मपुराणे तु ज्येष्ठा भ्रातृजाया गुरुः स्त्रिय

इति विशेषः कूर्म पु०—२-१२ अध्यायः

हारीतश्च दिविष्ठा भूमिष्ठाश्च खलु गुरवः ।
अग्न्यादयो देवा दिविष्ठाः तेषां जपहोमार्च्चनादिभिः
शुश्रूषां कुर्यात् । भूमिष्ठाः खलु गुरवो, यथा—
ब्रह्मणो मातापितरौ ज्येष्ठभ्राता ज्येष्ठस्य पत्नी
उपाध्याया उपाध्यायपत्नी दीक्षितः प्रव्रजितो
राजा वयोवृद्धाः ज्ञानवृद्धा स्तपोवृद्धाश्चेति ।
तेषामभिवादनाभिगमनार्घातिथ्यादिभिः शुश्रूषां
कुर्य्यात् इति कल्पतरौ ब्रह्मचारि—१६८

**गुर्वर्थम्**— गुरुदक्षिणा, समावर्त्तनकाले यद्दीयते ।
न पूर्वं गुरवे किंचिदुपकुर्वीत धर्मवित् ।
स्नास्यंस्तु गुरुणाज्ञप्तः शक्त्या गुर्वर्थमाहरेत् ॥
मनुः—२-२४५

**गुर्विणी**— गर्भिणी ।
गुर्विणी बाल वत्सा च रोगी द्रव्यपरायणः ।
एते नक्तेषु भुञ्जन्ति बाला मध्याह्न एव च ॥
द्रव्यपरायणः कुटुम्बी द्रव्यार्जनपालनतत्परः सन्
इति शूलपाणिः प्रायश्चित्तविवेके—५०७

**गुर्वी**— गर्भिणी
गृहीता स्त्री बलादेव म्लेच्छै गुर्वीकृता यदि ।
गुर्वी न शुद्धिमाप्नोति त्रिरात्रेणेतरा शुचिः ॥
देवलः—४७

**गुल्फः**— जङ्घापादयोः सन्धिः ।
आगुल्फाद् वासः परिदध्यात (कुलस्त्री) इति शंखः ।

**गुष्टिः**— सकृत्प्रसूता गौः ।

धेनुं श्राद्धेषु यो दद्याद् गृष्टिं कुम्भोपदोहनाम् ।
गावस्तमुपतिष्ठन्ति गवां पुष्टिस्तथैव च ॥
इति कालसारोद्धृतवायुपुराणे ।

**गुल्मः**— (१) द्वित्रेषु पञ्चसु वा ग्रामेषु राज्ञा कल्पितं रक्षास्थानम् ।
द्वयोस्त्रयाणां पञ्चानां मध्ये गुल्ममधिष्ठितम् ।
तथा ग्रामशतानां च कुर्याद्राष्ट्रस्य संग्रहम् ॥
मनुः—७-११४
गुल्मं रक्षितृपुरुषसमूहं स्थापयेदिति कुल्लूकः
(२) पदातिः ।
एवं विधान् नृपो देशान् गुल्मैः स्थावरजङ्गमैः ।
तस्करप्रतिषेधार्थं चारैश्चाप्यनुचारयेत् ॥
मनुः—९-२६६
"गुल्मैः पदातिसमूहैरिति विवादरत्नाकरे"
गुल्मः पदातिसमूह इति व्यवहारकल्पतरौ—११४
गुल्मः स्वस्थारिनिवेशितः पदातिसमूह इति
व्यवहारप्रकाशे—१२०
कृत्वा मूलप्रतीकारं गुल्मैः स्थावरजङ्गमैः ।
स्कन्धावारेण महता प्रययुः पाण्डुनन्दनाः ॥
महाभा० उद्०—१५१-६१
(३) वृक्षेभ्यो न्यूनपरिमाणा उद्भिज्जाः गुल्माः
कुरुवकादय इत्यपरार्कः ।
गुल्मा अनतिदीर्घनिविडलतामालत्यादय इति
विज्ञानेश्वरः—२-२२६
एकमूलः सङ्घातजातः शरेक्षुप्रभृतिर्गुल्म इति
कुल्लूकः—१-४८
गुल्माः प्रकाण्डरहिता इति स एव—१८-२४७

(४) चण्डालादीनां समूहः ।

"चण्डालश्वपचादीनां समूहो गुल्म उच्यते"

इति व्यवहारनिर्णये कात्यायनः विवादरत्नाकरेऽपि-६६६

(५) सैन्यसंख्याविशेषः ।

एको रथो गजश्चैको नराः पञ्च पदातयः ।

त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते ॥

पत्तिं तु त्रिगुणामेतामाहुः सेनामुखं बुधाः ।

त्रीणि सेनामुखान्येको गुल्म इत्यभिधीयते ॥

महाभा०—१-१-२-२०

रथाः-९+ गजाः ९+ नराः ४५+ अश्वाः २७=गुल्मः

**गुहाशयः**— आत्मा ।

"पूः प्राणिनः सर्व एव गुहाशयस्य"

आप०—१-८-२२

**गूढः**— संकरजातिविशेषः ।

"नृपायां नृपसंसर्गात् प्रमादाद् गूढजातकः" ॥ २८

सोऽपि क्षत्रिय एव स्यादभिषेके च वर्जितः ।

अभिषेकं विना प्राप्य गोज इत्यभिधायकः ॥

धर्मशास्त्रसंग्रहे औशनसस्मृतिः—२९

**गूढजः**— पुत्रविशेषः ।

गृहे प्रच्छन्न उत्पन्नो जारात् पश्चात् सवर्णजनित-त्वेन निर्णीतः क्षेत्रस्वामिनो गूढजो नाम पुत्र इति व्यवहारप्रकाशे ।

विवाहितायां गूढोत्पन्नो गूढजः कन्यायां तु तथोत्पन्नः कानीन इति तयोः प्रभेदः ।

**गूढोत्पन्नः**— पुत्रविशेषः यः गृहे गूढमुत्पद्यते ।

उत्पद्यते गृहे यस्य न च ज्ञायेत कस्य सः ।

स गृहे गूढ उत्पन्नस्तस्य स्याद् यस्य तल्पजः ॥

मनुः—९-१७०

**गृञ्जनम्**— (क) विषदग्धं मांसम् ।

विषदग्धेन शल्येन यो मृगः परिहन्यते ।

अभक्ष्यं तस्य तन्मांसं तद्धि गृञ्जनमिष्यते इत्यपरार्कः ।

(ख) गृञ्जनं गाजर इति केचित् किन्तु तन्न ।

गृञ्जनं चुक्रिकां चुक्रं गाजरं पोतिकां तथा

इति ब्राह्मनिर्देशात् इत्याचारेन्दौ ।

(ग) लशुनगृञ्जनपलाण्डुवाख्यानि त्रीणि स्थूलकन्द-शाकानि इति कुल्लूकः—५-५

(घ) गृञ्जनं लशुनसदृशः कन्दविशेषः उत्तरापथे प्रसिद्ध इति लक्ष्मीधरः ।

(ङ) गृञ्जनं काश्मीरदेशे शलगमेति प्रसिद्धमिति बालंभट्टी याज्ञ०—१-१७६

(च) गृञ्जनं लशुनानुकारिलोहितसूक्ष्मकन्दमिति विज्ञानेश्वरः ।

(छ) गन्धाकृतिरसैस्तुल्यं गृञ्जनं तु पलाण्डुना ।

सूक्ष्मनालाग्रपत्रत्वाद् भिद्यते तु पलाण्डुतः ॥

इति वाग्भट्टटीकायाम् ।

(ज) गृञ्जनं गाजर इति प्रसिद्धमिति हेमाद्रिः

परिशेष—५६०

गृञ्जनं गाजरादन्यदिति मयूखे ।

(झ) पत्रविशेषः भाषायां गञ्जाइ इति गञ्जा इति प्रसिद्धः ।

गृञ्जनं पत्रविशेषः, यदीयं चूर्णं गायकाः कण्ठशुद्ध्यर्थं भक्षयन्ति वेश्याश्च मदार्थम् । मूलविशेषो वा

गाजरापरपर्यायः इति माधवाचार्याः ॥ पराशर—११-६
गृञ्जनो हरिद्रक्तवर्णः पलाण्डुविशेषः इति त एव
श्राद्धप्रकरणे ।
"वर्जयेद् गृञ्जनं श्राद्धे" इति उशना
(ट) गृञ्जनं गजस्तथा इति निरुक्तपाठात
पश्चिमप्रसिद्धः पलाण्डुविशेषः इत्येके न तु
शक्राशनम् इति गदाधरराजगुरुः ।
शक्राशनं गञ्जाइ इति तस्याभिप्रायः ।
(ठ) ········· गृञ्जनम् ।
विषदिग्धपशोर्मांसे क्लीबं पुंसि रसोनके ॥
इति मेदिनी—२०-५८
(ड) लशुनं दीर्घपत्रश्च पिच्छगन्धो महौषधम् ।
करणश्च पलाण्डुश्च लतार्कश्चापराजिता ।
गृञ्जनं यवनेष्टश्च पलाण्डोर्दश जातयः ॥
इति सुश्रुतेनोक्तम् इति व्याख्यासुधायाम्—२-४-१४८
(ढ) गृञ्जनं गाजरपर्याय इत्याचाररत्ने ।
(ण) गृञ्जनं मूलविशेषः सालगम् इति ख्यात
इति शब्दकल्पद्रुमे ।
(त) गृञ्जनं वीर्यजनकं पर्ण्णं चूर्ण्णं विशेषतः ॥
हेमाद्रिप्रायश्चित—१६२.

**गृध्रः**— स्पृहावान् ।
धर्मं तु यः प्रवृणीते स वृद्धः ।
कामे गृध्रो हीयतेऽर्थानुरोधात ॥
महाभा० उद्—२७-५

**गृष्टिः**— धेनुं श्राद्धेषु यो दद्याद् गृष्टिं कुम्भोपदोहनीम् ।
गावस्तमुपतिष्ठन्ति गवां पुष्टिस्तथैव च ॥
इति वायु पु० कल्प- श्राद्ध—१५८

सकृत्प्रसूता—
"तृतीये मासि कर्त्तव्यं गृष्टेरन्यत्र शोभनम् ।
भृष्टेश्चतुर्थे मासे तु षष्ठे मास्यथवाष्टमे ॥"
इति बृहस्पतिः परिभाषाप्रकाशे—१-६८

**गृहम्**— भार्य्या ।
"न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते"
प्रजापतिस्मृतिः—५५
अथ पत्न्याचारमनुक्रमिष्यामः । गृहं पत्नी इति हारीतः
विवादरत्नाकरे—४३१

**गृहकारी**— चटकाख्यः कीटविशेषः इति विज्ञानेश्वरः
"गृहकारी ह्युपस्करम्" याज्ञ०—३-२१४
गृहकारी चरटाख्यः कीटविशेष इति वैजयन्त्याम्
विष्णुः—४४-३६
भित्त्यादिषु मृत्तिकादिगृहकारी सपक्षः कीट इति
कुल्लूकः ।
वको भवति हृत्वाग्निं गृहकारी ह्युपस्करम् ।
रक्तानि हृत्वा वासांसि जायते जीवजीवकः ॥
मनुः—१२-६६
एवंभूतः कोटः (मृत्तिकाभ्रमर) माटि भअंर
इत्युच्यते जनैः ।

**गृहपतिव्यञ्जनः**— गुप्तचरविशेषः ।
कर्षकः क्षीणवृत्तिः प्रज्ञाशौचयुक्तो गृहपतिव्यञ्जन
इति कुल्लूकः ॥ मनुः-१५४, कौट०—१-११-६

**गृहमेधा**— गृहकृत्यपरा स्त्री इति व्यवहारकल्पतरौ—६२२
"गृहमेधा भवेन्नित्यं भूषणानि च पूजयेत्"
इति तत्र ऋष्यशृङ्गः ।

**गृहमेधी**— गृहस्थः।

"अप्रणोद्योऽतिथिः सायंसूर्योढो गृहमेधिना।"

मनुः—३-१०५

काले प्राप्तस्त्वकाले वा नास्यानश्नन् गृहे वसेत्।
तापसेष्वेव विप्रेषु यात्रिकं भैक्षमाहरेत्।
गृहमेधिषु चान्येषु द्विजेषु वनवासिषु॥

मनुः—६-२७

**गृहसंवेशकः**— वास्तुविद्योपजीवी स्थपति सूत्रधारादि रिति हेमाद्रिः—४८५

स्रोतसां भेदको यश्च तेषां चावरणे रतः।
गृहसंवेशको दूतो वृक्षरोपक एव च॥

इति श्राद्धकर्मे मनुः—३-१६३

**गृह्यः } गृह्याग्निः }** आवसथ्याग्निः

वैश्वदेवस्य सिद्धस्य गृह्येऽग्नौ विधिपूर्वकम्।
आभ्यः कुर्याद्देवताभ्यो ब्राह्मणो होममन्वहम्॥

मनुः—३-८४

**गैरिकं**— सुवर्णम्।

प्रयोगः अर्जुनीशब्दे द्रष्टव्यः।

**गोकर्णः**— (१) प्रसारितयोरनामिकाङ्गुष्ठयोरन्तरालः

"प्रादेशतालगेकर्णस्तर्जन्यादियुते तते।
अङ्गुष्ठे सकनिष्ठे स्याद् वितस्तिर्द्वादशाङ्गुला॥" इति

(२) शिवक्षेत्रविशेषः उत्तरकनारमण्डले कुमटा-तालुकायां गाआतः दक्षिणस्यां पञ्चदशक्रोशदूरे समुद्रस्य पश्चिमतीरे इति काणे इतिहासनिर्णयः।

**गोकर्णाकृतिः**— समस्ताङ्गुलिसाहित्यमेव गोकर्णाकृतिः इति गौतमधर्मसूत्रक्रियाकाण्डे—४५६

गोकर्णाकृति हस्तेन माषमग्नं जलं पिबेत्

इत्याचमनकल्पे॥

**गोकुमारी**— गोकुमारी वृषेणसंयुक्ता गौरिति दण्डविवेके असंयुक्ता इति पाठः समीचीनः

गोकुमारीं देवपशुमुक्षाणं वृषभं तथा।
वाहयन् साहसं पूर्वं प्राप्नुयादुत्तमं वधे॥

इति कात्यायनः।

**गोकुलम्**— (१) गोसमूहः।

गोकुले कन्दुशालायां तैलयन्त्रेक्षुयन्त्रयोः।
अमीमांस्यानि शौचानि स्त्रीषु बालान्तरेषु च॥

इति हेमाद्रौ शातातपः।

गोकुले कन्दुशालायां तैलचक्रेषु चक्रयोः।
असीमांस्यानि शौचानि स्त्रीणां च व्याधितस्य च॥

अत्रिः—१६२

(२) बहूनां गवां ग्रामे स्थापयितुमशक्यत्वेनारण्ये स्थापनाय कल्पितो व्रजप्रदेशो गोकुलम् इति

माधवाचार्यः पराशरः—१२-६७

**गोघ्नः**— (१) अतिथिः।

दाशगोघ्नौ संप्रदाने इति पाणिनिः—३-४-६७

(२) गोहन्ता।

उपपातकसंयुक्तो गोघ्नो मासं यवान् पिबेत्।
कृतपापो वसेद् गोष्ठे चर्मणा तेन संवृतः॥

मनुः—११-१०८

**गोचरः**— कृषीबलः इति वरदराजः।
शते हृतेऽपह्नुते च दातव्यं धर्मशोधनम्।
गोचरस्य प्रदातव्यं सभ्यैः फालं प्रयत्नतः॥
इति व्यवहारनिर्णये बृहस्पतिः।

**गोचर्म**— भूमिमानविशेषः।
(क) गोचर्म दश निवर्त्तनानि इति विज्ञानेश्वरः१-२१०
सप्तहस्तेन दण्डेन त्रिंशद्दण्डा निवर्त्तनम्।
दश तान्येव गोचर्म दत्त्वा स्वर्गे महीयते॥
इति तत्र बृहस्पतिः।
उपलब्धबृहस्पतिस्मृतौ तु दश हस्तेन दण्डेन इति पाठः
बृहस्पतिः—८
(ख) दण्डेन सप्तहस्तेन त्रिंशद्दण्डा निवर्त्तनम्।
त्रिभागहीनं गोचर्म मानमाह प्रजापतिः।
मत्स्यपु०—२८२-१४
(ग) बालम्भटव्यां विष्णुधर्मोत्तरे-याज्ञ०—१-३६५
"यद्दत्तन्नमथाश्नाति नरः सम्वत्सरं द्विजाः।
एकं गोचर्ममात्रं तु भुवः प्रोक्तं विचक्षणैः॥"
इति विष्णुधर्मे—३-३०५-५
एकोऽश्नीयाद् यद्दुत्पन्नं नरः संवत्सरं फलम्।
गोचर्ममात्रा सा क्षौणी स्तोका वा यदि वा बहुः॥
इति विष्णुस्मृतिः—५-१८४
विवादरत्नाकरे विष्णुस्मृतिमानं गृहीतम्॥
(घ) गवां शतं सैकवृषं यत्र तिष्ठत्ययन्त्रितम्।
तत्क्षेत्रं दशगुणितं गोचर्म परिकीर्त्तितम्॥
पराशरः—१२-४८
गवां शतं वृषश्चैको यत्र तिष्ठेदयन्त्रितः।
एतद् गोचर्ममात्रं तु प्राहुर्वेदविदो नराः॥
(ङ) दशहस्तेन वंशेन दशवंशान् समन्ततः।
पञ्च वाऽप्यधिकं दद्यादेतद्गोचर्म उच्यते।
इति मदनपारिजाते वृद्धवसिष्ठबृहस्पती।
दशहस्तेन दण्डेन त्रिंशद्दण्डा निवर्त्तनम्।
दश तान्येव विस्तारो गोचर्मैतन्महाफलम्॥
बृहस्पतिः—१-८
(च) "चतुर्दिशं चतुर्हस्तं गोचर्मेत्युक्तम्"
इति वैखानसगृह्यसूत्रे—६-१
गोमयेन गोचर्ममात्रं चतुरस्रं स्थण्डिलमुपलिप्य
बौधायनः।
अत्र गोचर्म-गोः चर्म यत्परिमितं तत्परिमितमित्यर्थः
(छ) सवृषं गोसहस्रं च यत्र तिष्ठत्यतन्द्रितम्।
बालवत्सप्रसूतानां तद्गोचर्म इति स्मृतम्॥
बृहस्पति—१-९
(ज) यत्र एकादश गाव उपविशन्ति तावान्
भूभागो गोचर्म इति मित्रमिश्रः। शुद्धिप्रकाशे-१००

**गोजः**— क्षत्रियजातिविशेषः गोड़ इति पाठन्तरम्।
नृपायां नृपसंसर्गात् प्रमादाद् गूढजातकः।
सोऽपि क्षत्रिय एव स्यादभिषेके तु वर्जितः॥
अभिषेकं विना प्राप्य गोज इत्यभिधायकः॥
ओशनसस्मृतिः—२८-२९

**गोजिह्वा**— गजजिभि इति प्रसिद्धा लता इति
मयूखे निलकण्ठः।

गोजिया लता इति दरियाशाक इति च भाषा
इति शब्दकल्पद्रुमे ।

**गोड़ः**— गोजशब्दो द्रष्टव्यः ।

**गोणी**— मानविशेषः द्रोणचतुष्टयात्मकः खारीशब्दे द्रष्टव्यः ।

**गोण्डः**— गोण्डः पामरजातौ च वृद्धनाभौ च तद्वति ।
इति मेदिनी—१३-११
जातिः गण्ड इति, नाभिस्तु गाण्डु इति भाषायां
प्रसिद्धः ।

**गोतीर्थम्**— गोमूत्रम् ।
"गवां हि तीर्थे वसतीह गंग।"
विष्णुः—२३-६१

**गोत्रम्**— वंशः ।
सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ ।
वंशोऽन्ववायः सन्तानः इत्यमरः—२-७-१
अत्र सन्ततिरनवच्छिन्नपुत्रपौत्रादिप्रवाह इति श्राद्धदीपे
दिव्यसिंहमहापात्राः ।
सपिण्डा तु पुरुषे सप्तमे विनिवर्त्तते ।
समानोदकभावस्तु निवर्त्तताचतुर्दशात् ॥
जन्मनाम्नोः स्मृतेरेके तत्परं गोत्रमुच्यते ॥
इति मिताक्षरायां वृहन्मनुः ।
विश्वामित्रो जमदग्निर्भरद्वाजोऽथ गौतमः ।
अत्रिर्वसिष्ठः कश्यप इत्येते सप्त ऋषयः ॥
सप्तानामृषीणामगस्त्याष्टमानां यदपत्यं तद्गोत्रम्
यद्यपि वसिष्ठादीनां न गोत्रत्वं युक्तं, तेषां
सप्तर्षित्वेन तदपत्यत्वाभावात् तथापि तत्पूर्वभाविव-
सिष्ठाद्यपत्यत्वेन गोत्रत्वं युक्तम् ॥
अतएव पूर्वेषां परेषां चैतद् गोत्रमिति
निर्णयसिन्धौ—२१०
गोत्रं वंशपरम्परा इति विज्ञानेश्वरः—१-५३

**गोत्रभित्**— सगोत्रागामि ब्राह्मणः ।
कृष्णपृष्ठशब्दो द्रष्टव्यः ।

**गोदण्डः**— गोप्रहारार्थदण्डः ।
अङ्गुष्ठमात्रस्थूलस्तु बाहुमात्रप्रमाणकः ।
सार्द्रश्च सपलाशश्च गोदण्डः परिकीर्त्तितः ॥
यमस्मृतिः—४१

**गोदानम्**— (१) केशसमूहः ।
"गोदानं केशसमूहम् उन्दति" इति हरिहरः
गोदानं शिरःप्रदेश इति गदाधरः ।
पारस्करगृः—२-१-६
(२) संस्कारकर्मविशेषः । तच्च चतुर्थं वेदव्रतम् ।
द्विजातानां षोड़शादिवर्षेषु कर्त्तव्यं
श्मश्रुवपनादि कर्म ।
(३) गोदानशब्देन च शिरसस्त्रयो भागा उच्यन्ते
गृह्यान्तरेषु । तथा च दक्षिणे गोदान एतत्कर्मेति ।
गवि भूमौ दीयत इति गोदानम् स्वपतः
शिरः भाग इति आ० भाष्ये, काठक गृ०—४-४-१
केशान्तः गोदानाख्यं कर्मेति विज्ञानेश्वरः
याज्ञ०—१-३६

× × × ×

तत्रापि गोदानकर्मणि गोमिथुनदानमपि विहितमस्ति

**गोधा**— गोधि इति ख्यातः पञ्चनखप्राणीविशेषः
नकुलाकारः सर्पपुच्छः ॥
श्वाविधं शल्यकं गोधां खड्गकूर्मशशांस्तथा ।
भक्ष्यान् पञ्चनखेष्वाहुरनुष्ट्रांश्चैकतोदतः ॥
मनुः—५-१८

**गोधिः**— ललाटमिति लक्षणप्रकाशे मित्रमिश्रः ।
व्यक्तस्वस्तिकरेखं च ललाटं राज्यसम्पदे ।
प्रलम्बमालिकं यस्या देवरं हन्ति सा ध्रुवम् ॥
रोमशेन शिरालेन पांसुला गोधिनामता ॥ इति
तत्रैव स्कान्दे काशीखण्डे ।

**गोधूमः**— शस्यविशेषः । मनुः—५-२५
"गोधूमः सुमतः समौ" इत्यमरः—२-९-१८
अस्नेहा अपि गोधूमयवगोरसविक्रियाः
भोज्या इति शेषः याज्ञ०—१-१६६
"गोधूमाश्च मे मसूराश्च मे यज्ञेन कल्पन्ताम्"
शु० यजुः—१८-१२
यथोक्तवस्त्वसम्पत्तौ ग्राह्यं तदनुकारी यत् ।
यवानामिव गोधूमा व्रीहीणामिव शालयः ॥ इति
कात्यायनः परिभाषा प्रकाशे—१०६

**गोनाम**— काम्या प्रिया च हव्या च इडा रन्ता सरस्वती
मही विश्रुता चाघ्न्या च गोनामानि विदुर्बुधाः ।
इति शब्दसंग्रहे ।
"गोनामभिश्च पृथक् काम्यासीत्येतत प्रभृतिभिः"
इति गोभिलः—३-८-३

**गोनिहारः**— गोमयम् ।
"गोनिहारमुक्तानां यवानामेकविंशति रात्रं च"
विष्णुः—४८-१६
गोनिहारः गोमयमिति नन्दपण्डितः ।

**गोपः**— (१) दशकुली पञ्चकुली रक्षकः इति श्रीमूला ।
सगोपस्थानिको बाह्यं प्रदेष्टा चोरमार्गणम् ।
कुर्यान्नागरिकश्चान्तर्दुर्गे निर्दिष्टहेतुभिः ॥
कौट०—४-६
(२) गवां पालकः ॥
गोपः क्षीरभृतो यस्तु सदुह्याद्दशतोऽवराम् ।
गोस्वाम्यनुमते भृत्यः सा स्यात् पालेऽभृते भृतः ॥
मनुः—८-२३१

**गोपघोण्टा**— कण्टेइ कोलि इति प्रसिद्धं फलम् ।
तद्वृक्षश्च घोण्टाशब्दो द्रष्टव्यः ।

**गोपतिः**— (१) सूर्यः ।
"वीर्येण गोपतेस्तुल्यः" इति हेमाद्रौ भविष्यवचनम् ।
तवातितेजसाविष्टमिदं रूपं न शोभते ।
असहन्ति च संज्ञा सा वने चरति शाद्वले ॥
ब्रह्म— पु०—६-३६
(२) वृषः ।

**गोपालः**— जातिविशेषः ।
क्षत्रियात् शूद्रकन्यायां सुतो जायेत नामतः ।
स गोपाल इति ज्ञेयो भोज्यो विप्रैर्न संशयः ॥
इति पराशरः—११-२३

**गोपीथम्**— (१) रक्षणम् ।

"अञ्जलिना वा पिवेदखर्वेण वा पात्रेण प्रजायै गोपीथाय" व्रताचरणमुत्पत्स्यमानाया प्रजाया रक्षणार्थमिति सायणभाष्यम् तै० सं—२-५-१-७

आकल्पमेवं वेशं स गतो विष्णुः सनातनः ।
स्वमायारचितस्यास्य गोपीथायात्मसाधनः ॥
इति देवीभागवते—८-१४-१४

अजातशत्रुः पृतनां गोपीथाय मधुद्विषः ।
परेभ्यः शङ्कितः स्नेहात् प्रायुङ्क्त चतुरङ्गिणीम् ॥
इति श्रीमद्भागवते—१-१०-३२

अत्र गोपीथाय रक्षणाय इति श्रीधरस्वामी । अन्यत्र तु पीथं पानमिति स एव ।

(२) जलाशयादिः । न गोपीथे इति पैठीनसीः गावः पिवन्ति अस्मिन्निति व्युत्पत्त्या जलाशयादि इति चिन्तामणिः इति शब्दकल्पद्रुमे ।

**गोप्याधिः**— भोगहीनः आधिः ।

गोप्याधिभोगे नो वृद्धिः सोपकारे च हापिते ।
नष्टो देयो विनष्टश्च दैवे राजकृताद्दते ॥ याज्ञ०—२-५६

**गोप्रचारः**— (१) गवादीनां स्थानाशनसौकर्यार्थमनुप्तशस्यो भूभागः "ग्राम्येच्छया गोप्रचारो भूमि राजवशेन वा" इति याज्ञ०—२-१६६

(२) तीर्थविशेषः ।

स्नातो गोदो वैतरण्यां त्रिसप्तकुलमुद्धरेत् ।
देवनद्यां गोप्रचारे तथा मानसके पदे ॥
इति तीर्थप्रकाशे—४५२

गोप्रचारः गतान्तर्गत इति काणे इतिहासे ।

**गोप्रतारतीर्थम्**— अयोध्यायां वर्त्तमानः सरय्वास्तीर्थविशेषः । यत्र रामाश्रय। साकेतनगरीजनाः स्वर्गं प्राप्ताः । रामश्च वैष्णवं ज्योतिः । स्कान्दे० वै० अयोध्या—६

गोप्रतारं ततो गच्छेत् सरय्वास्तीर्थमुत्तमम् ।
यत्र रामो गतः स्वर्गं सभृत्यबलवाहनः ॥
इति महाभा० वन०—८४-७१

फैजावादमण्डले गुप्तार इति स्थानमिति काणे इतिहासे—१४३१

**गोमती-नदी**— सा विशिष्टश्राद्धदेशः । गोमती नैमिषारण्यप्रभवा नदी ।

**गोमतीविद्या**— यमोक्ता गोस्तुतिरूपा ।

गावः सुरभयो नित्यं गावो गुग्गुलु गन्धिकाः ।
गावः प्रतिष्ठा भूतानां गावः स्वस्त्ययनं महत् ॥
अन्नमेव परं गावो देवानां हविरुत्तमम् ।
पावनं सर्वभूतानां रक्षन्ति च वहन्ति च ॥
हविषा मन्त्रपूतेन तर्पयन्त्यमरान् दिवि ।
ऋषीणामग्निहोत्रेषु गावो होमप्रयोजिकाः ॥
सर्वेषामेव भूतानां गावः शरणमुत्तमम् ।
गावः स्वर्गस्य सोपानं गावो धन्याः सनातनाः ॥
नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च ।
नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः ॥
इति यमः । पराशरमाधवे—८-४१

महाभारते गोस्तुतिर्गवोपनिषत् नाम्ना वर्त्तते गवोपनिषच्छब्दे द्रष्टव्या ।

"गोघ्नस्त्रीन् मासान् प्राजापत्यं कुर्य्याद गोमतीं

च अपेद् विद्याम्" लघुशातातपस्मृतिः—२६

**गोमायुः**— शृगालः ।

विड्वराहखरोष्ट्राणां गोमायोः कपिकाकयोः ।
प्राश्यमूत्रपुरीषाणि द्विजश्चान्द्रायणं चरेत् ॥

मनुः—११-१५४

**गोमी**— गोस्वामी ।

यदन्यगोषु वृषभो वत्सानां जनयेच्छतम् ।
गोमिनामेव ते वत्सा मोघं स्कन्दितमार्षभम् ॥

मनुः—६-५०

**गोमुखः**— वाद्यविशेषः ।

रणशिङ्गा इति ख्यातः ।
शिंगा इति विहारिलालव्याख्याने ॥
ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः ।
सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥

भ० गीता—१-१३

"शुभं वद दुन्दुभे सुप्रजास्त्वाय गोमुख"

वाराह०-गृ०—११-८

**गोयज्ञः**— गवां पुष्टिकामस्याग्न्यादीनां यजनं गोयज्ञ इति गोभिलगृह्यसूत्रभाष्ये ।
"गोयज्ञे पायसश्चरुः" गोभिल० गृ०—३-६-१०
गोयज्ञो गोमङ्गलमिति काश्मीरेषु प्रसिद्धः ॥ गोयज्ञे च हलानि योजयन्ति प्रथमे वसन्ते हिमापगमे ।
यज्ञशब्दोऽत्र तन्त्रम् इति काठकगृ० भाष्ये—५-१७-१
पारस्करगृह्यसूत्रे तु शूलगवमुक्त्वा अनन्तरम् एतेनैव गोयज्ञो व्याख्यात इत्युक्तम्

३-८-१४

पारिभाषिक एव स्यात् कालो गोवाजियज्ञयोः ।
अन्यस्यानुपदेशाच्च खस्तरारोहणस्य च ॥
अथवा मार्गपाल्येऽह्नि कार्यो गोयज्ञकर्मणः ।
नीराजनेऽह्नि वाश्वानामिति तत्रान्तरे विधिः ॥ ३-१२

गोभिलस्मृतिः—३-१०१-१०२

"मार्गपाल्यह्नि" इति गोभिलभाष्ये कर्मप्रदीपपाठः

३-६-११

**गोलकः**— (१) विधवाया जारजः पुत्रः ।

परदारेषु जायेते द्वौ सुतौ कुण्डगोलकौ ।
पत्यौ जीवति कुण्डः स्यान्मृते भर्त्तरि गोलकः ॥

(२) पलाशवृक्षः ।

ऋणेष्वज्ञायमानेषु गोलकमध्यमपर्णैर्जुहुयात्
यत्कुसीदमिति गोभिलः ।
अत्र गोलकाः पलाशा इति स्मृतिचन्द्रिका ।

व्यवहार—४१४

मुद्रितगोभिलगृह्यसूत्रे तु गोलक इति पाठः

४-४-२६

पलाशा गोलकाश्चैव लोहचूर्णं च चीवरमिति

कात्यायनः—२८-१८

गोभिलस्मृतौ च—३-१५०

(३) भोज्यद्रव्यविशेषः । गोलकाः यवमयव्रीहिमया गोला इति प्राकृतभाषया प्रसिद्धा इति देवपालः ।
"गोलका रुद्रदैवत्या" इति काठक गृ०—५-१६-५

**गोलभर्त्ता**— गोलस्य वैधवेयस्य भर्त्ता पुत्रत्वेन स्वीकर्त्ता

गोलभर्त्ता इति हेमाद्रौ श्राद्धकल्पे—४६७

**गोलाङ्गूलः**— वानरविशेषः।
गोलाङ्गूलाः कृष्णमुखा वानरा इति कल्पतरुः
नियतकाल—३०४
गोपुच्छ सदृशपुच्छो वानरविशेषः इति हेमाद्रौ
परिशेषखण्डे—१८५

**गोलोकः**— पलाशवृक्ष इति गोभिलभाष्ये।
ऋणे प्रज्ञायमाने गोलकानां मध्यमपर्णेन
जुहुयात् गोभिल-गृ०—४-४-२६
गोलका पलाशः इति स्मृतिचन्द्रिकायाम्॥
व्यवहार—४१४
तत्र "गोलका मध्यमपर्णेन" इति पाठः
वस्तुतस्तु स भ्रान्तः। गोलकानां पलाशानामिति
चन्द्रकान्तव्याख्या तु साधीयसी।

**गोवत्सद्वादशी**— कार्त्तिककृष्णद्वादशी।
निर्णयसिन्धु—१४६

**गोवाटः**— गोष्ठम् "गोष्ठं गोवाडं नमो रुद्राय सकृत
पिण्डमदे इत्यादिना मन्त्रेणाभिमन्त्रयते॥
इति हरिहरः पारस्करगृ०—३-१५-१५

**गोविकर्त्ता**— गोदमकः इति नीलकण्ठः।
तैलान्नं पचते यस्तु गोविकर्त्ता स उच्यते।
इति केचित् महाभा० विरा०—प्राप्र—२-६
"आरलिको गोविकर्त्ता सूपकर्त्ता नियोधक" इति

**गोविन्द-द्वादशी**— अलभ्ययोगविशेषः।
कालसारे— तार्क्षपुराणे—
फाल्गुनस्यामले पक्षे कुम्भस्थे दिवसाधिपे।
जीवे धनुषि योगे च शोभने रविवासरे॥
पुष्यर्क्षे यदि सम्पूर्णा गोविन्दद्वादशी स्मृता।
गोविन्दद्वादशीं प्राप्य गच्छेच्छ्रीपुरुषोत्तमम्॥
व्रतमापूर्य तत्रैव विष्णुसायुज्यमाप्नुयात्।
महाज्यैष्ठ्या दशगुणं फलमाप्नोति मानवः॥
प्रकारान्तरं ब्रह्माण्डे—
कुम्भस्थे भास्करे राजन् मकरे चाङ्गिरः शनी।
द्वादशी शुक्लपक्षस्य पुष्यर्क्षे जायते यदि॥
गोविन्दद्वादशी नाम महापातकनाशिनी।
तस्यां कृत्वोदधिस्नानं दृष्ट्वा श्रीपुरुषोत्तमम्॥
श्वेतसन्निहिते गङ्गामवगाह्य विधानतः।
त्रयोदशमहाज्यैष्ठ्याः फलमाप्नोति मानवः॥
अत्र प्रकारद्वये योगतारतम्यात् फलतारतम्यम्
एतत् प्रकारद्वयं श्रीपुरुषोत्तमक्षेत्र एव यत्तु—
यत्र कुत्र हरेः स्थाने यः कुर्याद् व्रतमीदृशमिति
तत्र क्षेत्रे यत्र कुत्रापि इति ज्ञेयम्। अन्यथा
"पञ्चतीर्थं नरः कुर्यात्" इत्याद्यसंगतं स्यात्
सामर्थ्ये उपवासोऽसामर्थ्ये हविष्यम्।
तथा च तार्क्षे—
बालवृद्धातुराः कन्या ये समर्था उपोषितुम्।
हविष्यभोजनं कृत्वा विष्णुपूजनतत्पराः॥
पुनः प्रकारान्तरं विष्णुधर्मे
फाल्गुनामलपक्षस्य पुष्यर्क्षे द्वादशी यदि।
गोविन्दद्वादशी नाम महापातकनाशिनी॥
तस्यामुपोष्य विधिवन्नरः प्रक्षीणकल्मषः।
प्राप्नोत्यनुत्तमां सिद्धिं गुरोर्वृद्धिं सुदुर्लभाम्॥

विष्णुधर्मोत्तरोक्ते तु न पुरुषोत्तमक्षेत्रनियमः
तत्रानुक्तत्वात् । राजमार्त्तण्डप्रकारत्रयेऽप्येवं बोध्यम् ।
तथा तु—
संयोगो द्वादशीपुष्ये कुम्भसंस्थे दिवाकरे ।
कुम्भेतीग्ममयूखमालिनि निशानाथोपगूढे गुरौ
द्वादस्यां विधिवद्‌विधाय विविधां पूजां हरेः श्रद्धया ।
पूपं प्राश्य हविष्यमच्युतकथां शृण्वन् व्यपोहत्यघं
द्वादश्यां विधिरेषः पुष्यविगमे कार्यो बुधैः श्रद्धया ॥
तथा—
द्वादश्यां शुक्लपक्षे शशिनि गुरुयुते कुम्भसंस्थे खरांशौ
पूजां कृत्वा सुरारेर्विधिविहितहविः प्राशयेन्मन्त्रपूतम् ।
पुष्याद्यृक्षं न चेत्स्यात् तदपि विधिमनुं
वासुदेवस्य कृत्स्नं
द्वादश्यामेव कुर्यान्नहि विहितविधिर्द्वादशीमन्तरेण ॥
पुरुषोत्तम व्यतिरिक्तस्थलेऽपि योग उक्तः ।
तथा च गोविन्द द्वादशीयोगो गङ्गायामप्युक्तः ।
महापातकसंज्ञानि यानि पापानि सन्ति मे ।
गोविन्दद्वादशीं प्राप्य तानि मे हर जाह्नवि ॥
इति पद्मपुराणीयमन्त्रलिङ्गात् ॥

**गोवीथी**— (१) हस्तश्चित्रा तथा स्वाती गोवीथीति तु
शब्दिता इति देवीभागवते—८-१५
(२) गोमार्गः ।
गोवीथीं ग्रामरथ्यां च श्मशानं गोपितं तथा ।
संपीड्य नरकं यान्ति यावदाभूतसंप्लवम् ॥
बृहस्पतिः—४२

**गोवीर्यम्**— गवाश्रेष्टः ।

भृतावनिश्रितायां तु दश भागमवाप्नुयुः ।
लाभगोवीर्यशस्यानां वणिग् गोपकृषिवलाः ॥
इति विवादरत्नाकरे नारदः—१५६

**गोषष्ठी**— फाल्गुनशुक्लषष्ठी (आरण्यषष्ठी द्रष्टव्या)

**गोष्ठाष्टमी**— कार्त्तिकशुक्लाष्टमी ।

**गोष्ठी**— वृथाकथा इति नित्याचारप्रदीपे नरसिंहवाजपेयिनः
न गोष्ठीभिः सम्वध्येत् । इति शङ्खलिखितौ ।

**गोष्ठीश्राद्धम्**— गोष्ठ्यां क्रियमाणं श्राद्धं गोष्ठीश्राद्धमिति
माधवाचार्याः ।
गोष्ठ्यां यत् क्रियते श्राद्धं गोष्ठीश्राद्धं तदुच्यते ।
बहूनां विदुषां प्राप्तौ सुखार्थं पितृतृप्तये ॥
इयि पराशरमाधवे वृद्धवसिष्ठः अ—२

**गोसत्रम्**— गवायनाख्यो यागः सन्वरमरकालसाध्यः ।
"गोसत्रादिषु सावन" इति कालमाधवे ।

**गोसवः**— यज्ञविशेषः ।
यजेत वाश्वमेधेन स्वर्जिता गोसवेन वा ।
अभिजिद् विश्वजिद्‌भ्यां वा त्रिवृताग्निष्टुता ऽपि वा ॥
मनुः—११-७४

**गोसूक्तम्**— आगावो अग्मन् इत्यादि
गोसूक्तमश्वसूक्तं च शुद्धाशुद्धीये सामनी
वसिष्ठः—२८-१४
गोसूक्तेनचाग्नेरुपस्थाने दर्शनात्
इत्युज्वलावृ० आप०—१-६-१८-६
गोसूक्तं यथा-ऋक्—४-६-२५ (म ६-२८)

आगाव इत्यष्टर्चं सूक्तस्य वार्हस्पत्य भरद्वाजऋषिः
त्रिष्टुब्जगत्यनुष्टुभः छन्दांसि गावो देवता
गवामुपस्थाने विनियोगः—
आगावो अग्मन्नुत भद्रमक्रन्त्सीदन्तु गोष्ठे
रणयन्त्वस्मे ।
प्रजावतीः पुरुरूपा इह स्युरिन्द्राय पूर्वीरुषसो दुहानाः ॥१
इन्द्रो यज्वने पृणते च शिक्षत्युपेद्ददाति न स्वं
मुषायति । भूयो भूयो रयिमिदस्य वर्धयन्नभिन्ने
खिल्ये निदधाति देवयुम् ॥ २ ॥
न ता नशन्ति न दभाति तस्करो नासामामित्रो
व्यथिरादधर्षति ।
देवांश्च याभिर्यजते ददाति च ज्योगित्ताभिः सचते
गोपातिः सह ॥ ३ ॥
नता अर्वारेणुककाटो अश्नुते न संस्कृतत्रमुपयन्ति
उरुगायमभयं तस्य ता अनु गावो ता अभि ।
मर्त्तस्य विचरन्ति यज्वनः ॥ ४ ॥
गावो भगो गाव इन्द्रो मे अच्छान् गावः सोमस्य
प्रथमस्य भक्षः ।
इमायागावः स जनास इन्द्र इच्छामी
च्छ्रुदा मनसा चिदिन्द्रम् ॥ ५ ॥
यूयं गावो मेदयथा कृशं चिदश्रीरं चित्कृणुथा
सुप्रतीकम् । भद्रं गृहं कृणुथ भद्रवाचो बृहद्वो वय
उच्यते सभासु ॥ ६ ॥ प्रजावतीः सूयवसं रिशंतीः
शुद्धा अपः सुप्रपाणे पिवन्ति ।
मावः स्तेन ईशत माघशंस परि वो
हेती रुद्रस्य वृज्याः ॥ ७ ॥
उपेदमुपपर्चनं मासु गोषुप पृच्यताम् ।
उपऋषभस्य रेतस्युपेन्द्र तव वीर्ये ॥ ८ ॥

गोसूक्तं सामविशेष इति नन्दपण्डितः ॥
विष्णुः—५६-१८

**गौल्मिकः**— गौल्मिकचार्मिकादयः प्रतारका विवास्या
इति विष्णुः

**गौः**— (१) पृथिवी ।
खं सन्निवेशयेत् स्वेषु चेष्टनस्पर्शनेऽनिलम् ।
पंक्तिदृष्ट्योः परं तेजः स्नेहेऽपो गां च मूर्त्तिषु ॥
मनुः—१२-१२०

(२) पशुविशेषः ।
यावद्वत्सस्य पादौ द्वौ मुखं योन्यां च दृश्यते ।
तावद् गौः पृथिवी ज्ञेया यावद् गर्भं न मुञ्चति ॥
याज्ञ०—१-२०७

**गौड़ी**— सुराविशेषः गुड़निर्मितः ।
गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा ।
यथैवैका तथा सर्वा न पातव्या द्विजोत्तमैः ॥
मनुः—११-९४

**गौणकालः**— मुख्यकालस्य अनुकल्पकालः ।
मुख्यकाले यदावश्यं कर्म कर्त्तुं न शक्यते ।
गौणकालेऽपि कर्त्तव्यं गौणोऽप्येतादृशो मतः ॥

**गौरः**— (१) अश्वसदृशः आरण्यपशुः ।
"गौरगवयशरभाश्च" इति अभक्ष्यप्रकरणे
वसिष्ठः—१४-४३

(२) गौरीपुत्रः ।
अष्टवर्षा तु या दत्ता श्रुतशीलसमन्विते ।
सा गौरी तत्सुतो गौरः पङ्क्तिपावनपावनः ॥

इति मात्स्ये ।

(३) श्वेतसर्षपः । कल्पतरौ नियतकाल—१५५

हविष्येषु यवा मुख्यास्तदनु व्रीहयः स्मृताः ।
माषकोद्रवगौरांश्च सर्वालाभेऽपि वर्जयेत् ॥

कात्यायनः—६-१०

**गौरसर्षपः**— (१) श्वेतसर्षपः ।

"गौराः श्वेतसर्षपा" इति कालसारे गदाधरः ।

(२) परिमाणविशेषः

जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः ।
प्रथमं तत्प्रमाणानां त्रसरेणुं प्रचक्षते ॥
त्रसरेणवोऽष्टौ विज्ञेया लिक्षैका परिमाणतः ।
ता राजसर्षपस्तिस्रस्ते त्रयो गौरसर्षपाः ॥

मनुः—८-१३२-३३

**गौरी**— अष्टवर्षीया कन्या ।

अष्टवर्षा भवेद्गौरी नववर्षा च रोहिणी ।
दशवर्षा भवेद् कन्या अत ऊर्द्ध्वं रजस्वला ॥

सम्वर्त्तः—६६

अप्राप्तरजसा गौरी प्राप्ते रजसि रोहिणी ।
अव्यञ्जन कुचा कन्या कुचहीना तु नग्निका ॥

भविष्यपुराणे संस्कारप्रकाशः—७६८

**गौरीव्रतम्**— भाद्रशुक्लतृतीयाविहितं व्रतम् ।

मुहूर्त्तमात्रसत्त्वेऽपि दिने गौरीव्रतं परे ।
विद्धाधिका याम्यपेवं गणयोगप्रसंसनात् ॥

इति माधवाचार्याः ।

शुद्धाधिकास्थले पूर्वेद्यु रेवेति मन्मतम् ।
"अवर्मण्यं तिथिमलं त्यजेदेकादशीं विना"

इति वचनात् ॥

**ग्रथ्नः**— पुष्पफलादीनां स्तवकः । पेन्था इति भाषायाम् ।

"शलाटु नीलमित्युक्तं ग्रथ्नः स्तवक उच्यते"

इति चन्द्रकान्तभाष्ये ।

पश्चात् पतिरवस्थाय युग्मं तमौदुम्बरं शलाटुग्रथ्नमावध्नाति । गोभिल गृ०—२-७-४

**ग्रन्थिभेदः**
**ग्रन्थिभेदकः** } चौरविशेषः यः वस्त्रादिग्रन्थिमुद्घाट्य द्रव्यमपहरति ।

अङ्गुली ग्रन्थिभेदस्य च्छेदयेत्प्रथमे ग्रहे ।
द्वितीये हस्तचरणौ तृतीये वधमर्हति ॥

मनुः—९-२७७

**ग्रन्थी** — ग्रन्थमात्राभिधायी ।

अज्ञेभ्यो ग्रन्थिनः श्रेष्ठाः ग्रन्थिभ्यो धारिणो वराः ।
धारिभ्यो ज्ञानिनः श्रेष्ठाः ज्ञानिभ्योऽध्यवसायिनः ॥

मनुः—१२-१०३

**ग्रप्सः**— स्तवकसंघात इति गदाधरः ।

एकस्तवकनिबद्ध इति हरिहरः ।

"युग्मेन सटालुग्रप्सेनौदुम्बरेण"

पारस्करगृ०—१-१५-४

**ग्रहः**— (१) ग्रहणम् अपहरणमित्यर्थः ।

मनुः—९-२७७

अङ्गुली ग्रन्थिभेदस्य च्छेदयेत्प्रथमे ग्रहे इति ।

(२) आदित्यादि ।

ग्रहाधीना नरेन्द्राणामुच्छ्रायाः पतनानि च ।
भावाभावौ च जगतस्तस्मात् पूज्यतमाः ग्रहाः ॥

याज्ञ०—१-३०८

नक्षत्राणामिव ग्रहम् ॥ मनुः—७-१२१

तत्र ताराग्रहाः पञ्च द्वौ च ज्ञेयो महाग्रहो ॥ ७ ॥
उपग्रहौ च द्वौ ज्ञेयावेवं प्रोक्ता नवग्रहाः ।
भौमज्ञजीवभृगुजसौरास्ताराग्रहाः स्मृताः ॥ ८ ॥
चन्द्रादित्यौ तथाराम विज्ञेयो द्वौ महाग्रहौ ।
उपग्रहौ च द्वौ ज्ञेयौ राहुः केतुश्च भार्गव ॥

विष्णुधर्मोत्तरे—१-७२-६

(३) शुक्रग्रन्थिप्रभृतिनाम्ना प्रथितं यज्ञपात्रम् ।
सौवर्णराजताब्जानामूर्ध्वपात्रग्रहाश्मनाम् ।
शाकरज्जुमूलफलवासोविदलचर्मणाम् ॥

याज्ञ०—१-१८२

(४) सूर्याचन्द्रमसोर्ग्रहणम् ।
चन्द्रसूर्यग्रहे नाद्याद्‍ दद्यात् स्नात्वा तु मुक्तयोः ।
अमुक्तयोरस्तगयोरद्याच्चेत्र परेऽहनि ॥
सूर्यग्रहे तु नाश्नीयात् पूर्वं यामचतुष्टयम् ।
चन्द्रग्रहे तु यामांस्त्रीन् बालवृद्धातुरैर्विना ॥

कालदीपे ।

ग्रहोऽनुग्रहनिर्बन्धग्रहणेषु रणोद्यमे ।
सूर्यादौ पूतनादौ च सैंहिकेयोपरागयोः ॥

इति विश्वः ।

ग्रहणम्— (१) चन्द्रसूर्ययोर्ग्रहसंस्पर्शः ।
हेमाद्रौ मार्कण्डेये-
चन्द्रे वा यदिवा सूर्ये दृष्टे राहौ महाग्रहे ।
अक्षयं कथितं पुण्यं तत्रार्के तु विशेषतः ॥
दृष्टे दर्शनयोग्य इत्यर्थः ॥ हेमा० परि०—२४७
चन्द्रसूर्योपरागे तु यावद्दर्शनगोचरे ।
इति चक्षुर्गोचरत्वमेव निमित्तम् इति विद्याकर-

वाजपेयिनः । नित्याचारपद्धतिः—११७
(२) निग्रहः ।
पञ्चसेनाग्रगान् हत्वा सप्त मन्त्रिसुतानपि ।
शूरमक्षं च निष्पिष्य ग्रहणं समुपाविशत् ॥

रामायणे—१-१-७५

गृहणाध्ययनम्— गुरोः सकाशात् शास्त्रग्रहणम् ॥
इति हरदत्त गौतम० ध०—१-१-६०

ग्रामः— (१) शालासमुदायो ग्राम इति मेधातिथिः ॥

मनुः—८-२१६

विप्राश्च विप्रभृत्याश्च यत्र चैव वसन्ति ते ।
स तु ग्राम इति प्रोक्तः शूद्राणां वास एव च ॥
इति श्रीधरस्वाम्युद्धृतभृगुवचनम् श्री० भाग—१-६-११
तथा भद्रजनप्राया सुसमृद्धकृषीवला ।
क्षेत्रोपभोगभूमध्ये वसतिर्ग्रामसंज्ञिता ॥ इति विवाद-
रत्नाकरोद्धृतमार्कण्डेये भद्रजनस्थाने शूद्रजनेति
पाठान्तरम् ॥ २३०
भवेत् क्रोशात्मको ग्रामो रूप्यकर्षसहस्रकः ।
ग्रामार्द्धकं पल्लिसंज्ञं पल्ल्यर्द्धं कुम्भसंज्ञकम् ॥

शुक्रनीतिः—१-१९३

(२) यतित्रयम्—
एको भिक्षुर्यथोक्तस्तु द्वावेव मिथुनं स्मृतम् ।
त्रयो ग्रामः समाख्यातः ऊर्ध्वं तु नगरायते ॥

दक्षः—७-३५

(३) समुदायः
सर्वेतेमांस्तु नियमान् ब्रह्मचारी गुरौ वसन् ।
संनियम्येन्द्रियग्रामं तपोवृद्ध्यर्थमात्मनः ॥

मनुः—२-१७५

(४) कुलवृद्धाः।

"ग्रामशब्दवाच्याः स्वकुलवृद्धाः इति हरिहरः"

ग्रामवचनं च कुर्युः॥ पारस्कर गृ०—१-८-११

**ग्रामकूटकः**— ग्रामे कपटव्यवहारशीलः।

कल्पतरुः नियतकाल—२७१

ग्रामकूटः ग्रामवासिनामनेकोपद्रवैरात्मम्भरिरिति

हेमाद्रिः। श्राद्धकल्पे—७८६

ग्रामं कूटयति छलयतीति ग्रामकूटकः

हेमाद्रिश्राद्धकल्पे—४६०

गाँटाउटर् इति साम्प्रतिकाः

**ग्रामगणी**— ग्राममुख्यो ग्रामवृद्धः इति यावत्।

नगरग्रामगणिनो नगरग्रामजनमुख्या इति विवादरत्नाकरे चण्डेश्वरः।

क्षेत्रसीमाविरोधे तु सामन्तेभ्यो विनिर्णयः।

नगरग्रामगणिनो ये च वृद्धतमा नराः॥ इति नारदः

**ग्रामघातः**— ग्रामोपद्रवः।

ग्रामलुण्ठनमिति कुल्लूकः

ग्रामघाते हिताभङ्गे पथि मोषाभिदर्शने।

शक्तितो नाभिधावन्तो निर्वास्याः सपरिच्छदाः॥

मनुः—९-२७४

**ग्रामयाजी**— बहुयाजकः

नाश्रोत्रियतते यज्ञे ग्रामयाजिकृते तथा।

स्त्रिया क्लीबेन च हुते भुञ्जीत ब्राह्मणः क्वचित्॥

मनुः—४-२०५

**ग्रामवचनम्**— लोकवचनम् इयि भर्त्तृयज्ञः

ग्रामशब्दवाच्याः स्वकुलवृद्धाः स्त्रिय इति हरिहरः।

ग्रामशब्देन स्वकुलवृद्धाः स्त्रियोऽभिधीयन्ते।

ता हि पूर्वपुरुषैरनुष्ठीयमानं सदाचारं स्मरन्ति इति गदाधरः।

ग्रामवचनं च कुर्युरिति पारस्करः—१-८-११

**ग्रामिकः**— ग्रामरक्षणे नियुक्तः ग्रामपतिरित्यर्थः।

ग्रामदोषान् समुत्पन्नान् ग्रामिकः शनकैः स्वयम्।

शंसेद् ग्रामदशेशाय दशेशो विंशतीशिने॥

मनुः—७-११६

ग्रामिकः ग्राममहत्तर इति श्रीमूला।

ग्रामार्थेन ग्रामिकं व्रजन्तमुपवासाः पर्यायेणानुगच्छेयुः

कौट०—३-१०-१६

**ग्रामसङ्करः**— ग्रामावकरस्थानम् इति मित्रमिश्रः।

सकर्दमे तु वर्षासु प्रविश्य ग्रामसङ्करम्।

जङ्घाभ्यां मृत्तिकास्तिस्रः पद्भ्यां तु द्विगुणाः स्मृताः॥

इति आह्निकप्रकाशे यमः।

सकर्दमं तु वर्षासु प्रविश्य ग्रामसङ्करम्।

जङ्घयो मृत्तिकास्तिस्रः पादयोर्द्विगुणास्ततः॥ इति मिताक्षरायां पाठः—१-३०

**ग्रामीयककुलाः**— ग्रामिकजनसमूहा इति कुल्लूकः।

ग्रामीयककुलानां च समक्षं सीम्नि साक्षिणः।

प्रष्टव्याः सीमालिङ्गानि तयोश्चैव विवादिनोः॥

इति मनुः—८-२५४

ग्रामेयककुलानामिति मिताक्षरोद्धृतपाठः ।
कल्पतरौ अपि ग्रामेयककुलानामिति पाठः ।
तत्र ग्रामेयकः ग्राम्यः इति लक्ष्मीधरः
व्यवहारकाण्डे—४४२

**ग्राम्यपशुः**— गौरविरजोऽश्वोऽश्वतरो गर्दभो मनुष्यश्चेति सप्तग्राम्यापशव इति पैठीनसिः कल्पतरौ ।

**ग्रावस्तुत्**— ऋत्विग्विशेषः ।
गौरजः पुरुषोऽथाविरश्वाश्वतरगर्दभाः ।
एते ग्राम्याः स्मृताः सप्त आरण्याः सप्त चापरे ॥
ब्रह्माण्ड पु०—१-२-८-४७

**ग्रासः**— कवलम्, सकृद्भक्षणीयान्नादिपिण्डः ।
अङ्गुष्ठपर्वमात्रा तु आहुतिः परिकीर्तिता ।
आहुतिद्वितयं ग्रासो मयूराण्डाकृतिस्तथा ॥
इत्याचारेन्दौ स्मृत्यर्थसारः ।
अष्टौ ग्रासा मुनेर्भक्तं वानप्रस्थस्य षोड़श ।
द्वात्रिंशत्तु गृहस्थस्य अमितं ब्रह्मचारिणः ।
वसिष्ठः—६-२०

**ग्रासावराधम्**— ग्रासादन्यूनम् ।

**ग्रीवेष्टकम्**— ग्रीवेष्टकं माषामिक्षादि लड्डुकमिति
नित्याचारप्रदीपे—६६५
दुग्धग्रीवेष्टकं दुग्धलड्डुकमिति तत्रैव ।
"खस्तिका लोपिका दुग्धग्रीवेष्टक किलाटिका" इति ।

**ग्रैवेयकम्**— कण्ठभूषणं हारादि ।
"ग्रैवेयकप्रदानाच्च सर्वशास्त्रार्थविद् भवेत्"
इति नित्याचारप्रदीपे कालोत्तरे—६६८

**ग्लहः**— (१) परस्परानुमत्या कितव (सभिक) स्थापित पण
इति विज्ञानेश्वरः—२-११६
ततः कोपपरीतात्मा निष्ककोटिं हलायुधः ।
ग्लहं जग्राह रुक्मी च ततस्त्वक्षानपातयत् ॥
ब्रह्मपु०—२०१-१८
(२) द्यूते यः पातः क्रियते इति व्यवहारकल्पतरुः
५२०
तत्र "ग्लहः प्रकाशः कर्त्तव्यो निर्वास्याः कूटदेविनः"
इति बृहस्पतिः—२२-११

# घ

**घटः**— (१) परिमाणविशेषः द्रोणपर्य्यायः खारीशब्दे द्रष्टव्य
(२) मृत्पात्रविशेषः कलसपर्यायः ।
दासी घटमपांपूर्णं पर्य्यस्येत् प्रेतवत् पदा ।
अहोरात्रमुपासीरन्नशौचं बान्धवैः सह ॥
मनुः—११-१८३

**घटिका**— दण्डः ।
दशभिः पञ्चभिश्चैव निमेषैः परिकीर्त्तिता ।
काष्ठा, तत्त्रिंशता ज्ञेया कला पद्मजनन्दन ॥
तत्त्रिंशता क्षणो ज्ञेयस्तैः षड्भिर्घटिका स्मृता ।
तद्द्वयेन मुहूर्त्तं स्याद्दिनं तत्त्रिंशता भवेत् ॥
बृहन्नारदीय पु०—५-१०

**घना**— (भूमि) कठिना भूमिः ।

"घनाया भूमेरुपघात उपलेपनम्"

बोधायनः—१-६-१३-१६

**घर्घरा**— किंकिणी ।

घागुडि इति भाषायाम् ।

**घर्मः**— स्वेदः

घर्मो निदाघः स्वेदः स्यात इत्यमरः—१-७-३३

**घट्टनम्**— आलोडनम् घण्टा घाण्टिवा इत्यादि भाषा ।

ततो याम्यैर्नरैराशु दर्व्याघट्टनघट्टिताः ।

कृतावर्त्ते महातैले मथ्यन्ते पापकर्मिणः ॥ इति

मार्कण्डेय पु॰—१२-३६

**घाण्टिकः**— यो नृत्यगीतादिना क्षुद्रघण्टिकादि

निबन्धनपुरःसरेण जीवति स घाण्टिकः ।

यो वा घण्टां वादयन्नेव भिक्षते सः, गुर्जरदेशे

घण्टाल इति प्रसिद्धः इति हेमाद्रिः ।

परिशेषखण्डे—४६२

उत्कलदेशे तु जानुघण्ट इति ख्याता वैष्णवविशेषा

परशुरामभक्ता ऊरुबद्धघण्टा भिक्षन्ते ।

"यक्ष्मा तथान्नं शौण्डस्य घाण्टिकस्यान्नमेव च"

इति यमः ।

घण्टिको दिव्यवाचनिक इति शूलपाणिः प्रा॰यः—२६८

**घासः**— बलीवर्दादेः भक्ष्यं पलालादि ।

"गव्यूतिर्निवेशनं युग्यघासश्चोद्यतः प्रतिग्राह्याणि"

आपस्त॰ ध॰—१-६।१।१८

उत्कलेषु आर्द्रतृणे घासशब्दः प्रसिद्धः ।

गवां कण्डूयनं चैव सर्वाघविनिसूदनम् ।

गवां घासप्रदानेन स्वर्गलोके महीयते ॥

इति विष्णुः नित्याचारप्रदीपे—२५१

**घासमुष्टिः**— मुष्टिग्राह्यो दूर्वादिघासः ।

**घुणः**—कीटविशेषः, स तु काष्ठे रेखां सृजति ।

यस्तु कृष्णेन वस्त्रेण मम कर्मपरायणः ।

भूमिकर्माणि कुर्वीत तस्य त्वं पतनं शृणु ॥

घुणो वै पञ्चवर्षाणि काष्ठभक्षश्च जायते ।

मशकस्त्रीणि वर्षाणि दंशकस्त्रीणि पञ्च च ॥

वाराहे-पूजाप्रकाशे—१७८

मक्षिका दंशमशका घुणाः सूक्ष्माः पिपीलिकाः ।

आमिषामेध्यसेवी च नैते कीटा विपत्तये ॥

इति यमः शुद्धिप्रकाशे—१२१

**घुर्घुरा**— खाद्यद्रव्यविशेषः ।

सहस्रमोदकाश्चापि फेणिका घुर्घुरादयः ॥ इति

स्कन्द॰ ब्रह्म॰ धर्मारण्य—२३-२२

**घुष्टान्नम्**— को भक्षयिष्यति इति उद्घुष्य यद् दीयते

तद् घुष्टान्नम् ।

गवा चान्नमुपाघ्रातं घुष्टान्नं च विशेषतः ॥

मनुः—४-२०८

गणान्नं गणिकान्नं च विदुषां च जुगुप्सितम् ।

घुष्टान्नं भुज्यतामन्नं ये केचिद् भोजनार्थिनः ॥

इत्याघाघुष्य यदन्नं दीयते इति कल्पतरु

नियतकालः—२६०

**घृणा**— (१) दया।

योगस्तपो दमो दानं सत्यं शौचं श्रुतं घृणा।
विद्या विज्ञानमास्तिक्यमेतद् ब्राह्मणलक्षणम्॥

इति वसिष्ठः—६-२३

(२) कुत्सितविषये विवाद इति हेमाद्रिः॥

परिशेष—३४६

सत्यं दानं क्षमाशीलमानृशंस्यं क्षमा घृणा।
दृश्यन्ते यत्र लोकेऽस्मिन् तं देवा ब्राह्मणं विदुः॥

इति तत्र यमः

(३) अनीर्षुर्गुप्तदारः स्याच्चोक्षः स्यादघृणी नृपः।
स्त्रियः सेवेत नात्यर्थं मृष्टं भुञ्जीत नाहितम्॥

महाभा० शान्तिः—७०-८

अत्र अघृणी इत्यस्यार्थः अकुत्सन इति।

**घृणालुः**—दयालुः इति मित्रमिश्रः-श्राद्धप्रकाशे—६५

तत्र देवलः—

त्रिशुक्लः क्रूरवृत्तिश्च घृणालुः सकलेन्द्रियः।
विमुक्तो यो निदोतभ्यो ब्राह्मणपात्रमुच्यते॥ इति

**घृतपशुः**— पशुकार्ये धृतमिति लक्ष्मीधरः।

कुर्याद् घृतपशुं सङ्गे कुर्य्यात पिष्टपशुं तथा।
नत्वेवं तु वृथा हन्तुं पशुमिच्छेत कदाचन॥

मनुः—५५-३७

घृतपशुः— घृतमयी पशुप्रतिकृतिरिति कुल्लुकः।

**घृतपूरः**— खाद्यविशेषः।

लड्डूकमेकं घृतपूरमेकं फेनद्वयं कोकरसत्रयं च।
घृतप्लुतं मण्डकषोड़शानां वटाष्टदायी नरकं न पश्येत

स्कन्द० वै- मार्ग—६-३१

घृतपूरः पिष्टकविशेष इति शब्दकल्पद्रुमे।

तत्र राजवल्लभः—

मर्दिता समिता क्षीरनारिकेलघृतादिभिः।
अवगाह्य घृते पक्त्वा घृतपूरोऽयमुच्यते॥

इति चिन्तामणौ तु—

क्षीरेण मर्दितं चूर्णं गोधूमानां सुगालितम्।
विस्ताय सर्पिषा पाच्यं कटाहेऽथ सितान्वितम्।
घृतपूरोऽयमुद्दिष्टं कर्पूरमारिचान्वितः॥ इति

दुग्धजो यथा—

पाकपिण्डीकृतं क्षीरं शर्कराचूर्णमिश्रितम्।
घृतपूरविनिर्माणं कारयेत् स्वल्पसर्पिषि॥

एवं शालिभवः कशेरूभवः, नारिकेलभवः आम्रजश्च घृतपूरं शब्दकल्पद्रुमे अनुसन्धेयः

हेमाद्रौ—परिशेषखण्डे—६०३

घृताक्तदुग्धालोडितैः शालिगोधूमपिष्टसारैः विहितापूपविशेषा घृतपूरा इति।

भक्ष्यान् वक्ष्ये करम्भश्च इष्टका घृतपूरकाः।
कृशरं मधुसर्पिश्च पयः पायसमेव च॥

इति वायुपुराणे

घृतपूरं घृतगण्डकं शक्करपारा इति महाराष्ट्रभाषायां प्रसिद्धम्॥

**घृतसूक्तम्**— बोधा० गृ०—३-७-(१४-२१)

(१) यो ब्रह्म ब्रह्मण उज्जभार प्राणेश्वरः कृत्तिवासाः पिनाकी। इशानो देवः स न आयुर्दधातु तस्मै जुहोमि हविषा घृतेन स्वाहा।

(२) विभ्राजमानः सरिरस्य मध्याद्रोचमानो

धर्मरुचिर्य आगात । स मृत्युपाशादपनुद्य
घोरादिहायुषेणो घृतमत्तु देवः स्वा ॥
(३) ब्रह्मज्योति ब्रह्मपत्नीषु गर्भं यमादधत्पुरुरूपं जयन्तम्
सुवर्णरम्भग्रहमर्कमर्च्यं तमायुषे वर्धयामो घृतेन स्वाहा ॥
(४) श्रियं लक्ष्मीमौपलामम्बिकां गां षष्ठीं जयामिन्द्र-
सेनेत्युदाहुः । तां विद्यां ब्रह्मयोनिं सरूपामिहायुषे
तर्पयामो घृतेन स्वाहा ॥
(५) दाक्षायन्यः सर्वयोन्यः सयोन्यः सहस्रशो
विश्वरूपा विरूपाः । ससूनवः सपतयः सयूथ्याः
इहायुषेणो घृतमिदं जुषन्तां स्वाहा ॥
(६) दिव्या गणा बहुरूपाः पुराणा आयुश्छिदो नः
प्रमथन्तु वीरान् । तेभ्यो जुहोमि बहुधा घृतेन मा नः
प्रजां रीरिषो मोत वीरान् स्वाहा ॥
(७) एकः पुरस्ताद् य इदं बभूव यतो बभूव भुवन-
स्य गोपाः । यमप्येति भुवनं साम्पराये स नो
हविर्घृतमिहायुषेऽस्तु देव स्वाहा ।
(८) वसून् रुद्रानादित्यान् मरुतोऽथ साध्यान्
ऋभून् यक्षान् गन्धर्वांश्च पितॄंश्च विश्वान् ।
भृगून् सर्पांश्चाङ्गिरसोऽथ सर्वान् घृतं
हुत्वा स्वायुष्या महयाम शश्वत् स्वाहा ॥

× × ×

कुमाराणां ग्रहगृहीतानां भूतोपसृष्टानाम् ।
आयुष्येण घृतसूक्तेनाहरहः स्वस्त्ययनार्थं स्वाध्याय-
मधीयीत । एतैरेव मन्त्रैराहुतीर्जुहुयात्
एतैरेवमन्त्रैर्बलीन् हरेत् अगदो हैव भवति ॥
बौधा० गृ० —३-७-२७

**घटकपञ्चमी**—आश्विनकृष्णपञ्चमी ।

**घोणा**—नासिका ।

क्लीबे घ्राणं गन्धवहा घोणा नासा च नासिका
अमरः—२-६-९२

प्रचण्डघोणः पृथुदीर्घनेत्रस्ताम्रायताक्षः कुरुराजः प्रा
इतियुधिष्ठिरवर्णने ॥ महाभा० आश्रम—२९-१

**घोण्टा**—(१) गुवाकः गुवाकवृक्षो वा
घोण्टा तु बदरीपूगवृक्षयोरपि योषिति ॥
इति मेदिनी—११-१३

(२) कण्टेइकोली इति नाम्ना प्रसिद्धः वृक्षः तत्फलं च
सौवीरं बदरं घोण्टेति अमरः—१-४-३७
बदरीसदृशाकारो वृक्ष सूक्ष्मफलो भवेत् ।
अटव्यामेव सा घोण्टा गोपघोण्टेति चोच्यते ॥
इति तद्व्याख्यायां व्याख्यासुधायाम् ।

**घोण्टाका**— कुविन्दा ।

कुविन्दां श्वेतवार्त्ताकीं कुष्माण्डं च न भक्षयेत्
इति प्रायश्चित्तविवेके देवलः—२४६
अत्र कुविन्दा घोण्टाका इति शूलपाणिः ।
इयमेव घोण्टाका टमाटो नाम धारिणी भवेत् ।
पश्चिमोत्कलेषु पातलघण्टा इति नाम्नापि सा
व्यवह्रियते । सापि कुविन्दते लता ।

**घोषः**— ध्वनिः ।

तत्र भुक्त्वा पुनः किंचित् तूर्यघोषैः प्रहर्षितः ।
संविशेत्तु यथाकालमुत्तिष्ठेच्च गतक्लमः ॥
मनुः—७-२२५

**घोषवन्तः**— व्यञ्जनवर्णविशेषाः ।

वर्गाणां प्रथमद्वितीयाः जिह्वामूलीयोपध्मानीयौ
शषसाश्चेति अघोषाः अन्ये घोषवन्तः ।
"द्व्यक्षरं चतुरक्षरं वा घोषवदाद्यन्तरन्तस्थं
दीर्घाभिनिष्ठानं कृतं कुर्यान्न तद्धितम् ॥

पारस्करः—१-१७-२

**घ्राणम्**— नासिका ।

अङ्गुष्ठेन प्रदेशिन्या घ्राणं चैवमुपस्पृशेत् ॥

गोभिलस्मृतिः—१-६

# च

**चकोरः**— चक्रवाकः ।

स च विषसूचकः । तदुक्तं मात्स्ये—
विरज्यति चकोरस्य दृष्टिः पार्थिवसत्तम ।
विकृतिं च स्वरो याति कोकिलस्य तथा नृप ॥

२१८-१८

कोकिलशब्दे पूर्णः पाठः ।

**चक्रम्**— (१) सेना ।

चक्रं चमूर्वरूथिन्यनीकिनी वाहिनी बलम् ।
सैन्यमिति हलायुधः का—२
अव्याहतं तस्य चक्रं पृथिव्यामभवद्द्विज ।
न चाधर्मे मनो भूपास्तस्य सर्वेऽभवन् वशे ॥

मार्कण्डेय पु०—११६-५

परचक्रभयं नास्ति तस्मिन् राष्ट्रेऽपि पाण्डव ।
पर्जन्यः कामवर्षी स्यादीतिभ्यो न भयं भवेत् ॥
इति जयन्त्युपक्रमे श्राद्धदीपोद्धृतभविष्योत्तरे ।
(२) रथावयवविशेषः ।

यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत् ।
एवं पुरुषकारेण विना दैवं न सिद्ध्यति ॥

याज्ञ०—१-३५१

**चक्रचरः**— अश्वखनिकः इति श्रीमूला कौट०—४-४

उत्कलेषु नियतभिक्षुका ब्राह्मणा "चकुलिआ पण्डा" इत्युच्यन्ते
अनुक्रमचरणाच्चक्रचरत्वमिति बौधा०—३-१-३

**चक्रवाकः**— जलचरपक्षिविशेषः ।

स च वसिष्ठेन–१४-४८ सूत्रे अभक्ष्यपक्षी-मध्ये पठितः ॥

**चक्रवान्**— तैलिकः- स बीजवधविक्रयजीवी

इति कुल्लुकः—४-८४

**चक्रवृद्धिः**— वृद्धिप्रयोगविशेषः यत्र वृद्धेरपि वृद्धिर्गृह्यते ।

वृद्धेर्वृद्धिश्चक्रवृद्धिरिति मन्वर्थमुक्तावल्यां बृहस्पतिः ।
नातिसाम्वत्सरीं वृद्धिं न चादृष्टां पुनर्हरेत् ।
चक्रवृद्धिः कालवृद्धिः कारिता कायिका च या ॥

मनुः—८-१५३

वृद्धिरपि पुनर्वृद्धिश्चक्रवृद्धिरुदाहृता इति नारदः ।

**चक्राह्वः**— चक्रवाकपक्षी ।

"कोयष्टिप्लवचक्राह्वबलाकाबकविष्किरान्"
इति अभक्ष्यपक्षीनिर्देशे याज्ञवल्क्यः—१-१७३

**चक्री**— (१) तैलिकः ।

वैश्यायां शूद्रतश्चौर्याज्जातश्चक्री च उच्यते ।
तैलपीष्टकजीवी तु लवणं भावयन् पुनः ॥ २३
इति धर्मशास्त्रसंग्रहे औशनसस्मृतिः ॥ २२
(२) चक्रयुक्तयानादि चक्रि तद्योगाद् यानवाहका अपि ।
चक्रिणो दशमीस्थस्य रोगिणो भारिणः स्त्रियाः ।
स्नातकस्य च राज्ञश्च पन्था देयो वरस्य च ॥
मनुः—२-१३८

**चणकः**— शस्यविशेषः चणा बुट छोला इति भाषा इति शब्दकल्पद्रुमे ।
हरिमन्थकः महाराष्ट्रदेशे अश्वाहारत्वेन प्रसिद्ध इति हेमाद्रिः । उत्कलेषु हरिमन्थकः बुट इत्युच्यते । हरिमन्थकस्तु सोला इति ख्यातः स तु चणकविशेषः उत्कलदेशे तु चणा इति वड़चणा इति ख्यातं चणकप्रकारद्वयं तस्मादन्यत् ।

**चण्डनिर्णोदनम्**— तीव्राघात इति गोविन्दानन्दः
यथा—क्षारोपस्वेद चण्डनिर्णोदनप्रक्षालनादिभिः वासांसि शुद्धयन्ति एवं तपोयज्ञदानैः पापकृतः शुद्धिमुपयान्ति धायमाना इव धातवोऽग्नौ दोषेभ्यः । तस्मात् विश्रम्भात् स्नेहाल्लोभाद् भयात् प्रमादात् वा अशुभं कृत्वा सद्यःशोधनमारभेत ।
इति प्रायश्चित्तविवेके शूलपाणिः ।

**चण्डः**— (१) कोपनः इति विज्ञानेश्वरः—२-६८
(२) चण्डः- छिन्नमेहनचर्मा इति हेमाद्रिः ।
चण्डिवस्त्रापनयन इति चौरादिको धातुः ।
चण्डतीति चण्डः विद्धशिश्नो द्रविडेषु प्रसिद्धः । तत्र हि शिश्नवृषणाधः शिरायं छिद्रं विधाय विटाः सुवर्णघटिकाघटितं मुक्ताफलादि विरचयन्ति । इति हेमाद्रिः ॥ परिशेष—४८८

**चण्डातकम्**— स्त्रीपरिधानोचितान्यंशुकानि इति हेमाद्रिः परिशेष—६६४
चण्डां श्रियं सततं गच्छति प्राप्नोति इति ।
अर्धोरुकं वरस्त्रीणामर्धोरुपर्यन्तं वासः
इति शब्दकल्पद्रुमे ।
"स्त्रीणां श्राद्धेषु सिन्दूरं दद्युश्चण्डातकानि च"
इति विष्णोधर्मोत्तरे इति श्राद्धप्रकाशे—१६३

**चण्डालः**— (१) शूद्रात् ब्राह्मण्यां जातः ।
अयोगवश्च क्षत्ता च चण्डालश्चाधमो नृणाम् ।
प्रातिलोम्येन जायन्ते शूद्रादपसदास्त्रयः ॥
मनुः—१०-१६
(२) आशाकरस्त्वदाता च दातुश्च प्रतिषेधकः ।
शरणागतं यस्त्यजति स चण्डालः प्रकीर्त्तितः ॥
इति स्मृतिमुक्ताफले यमः गौतमधर्मसूत्रपरिशिष्टे च
(३) असूयकः कृतघ्नश्च पिशुनो दीर्घरोषकः
चत्वारः कर्मचण्डाला जन्मतश्चापि पञ्चमः ॥
इति वसिष्ठः ।
(४) क्रियाहीनश्च मूर्खश्च सर्वधर्मविवर्जितः ।
निर्दयः सर्वभूतेषु विप्रश्चण्डाल उच्यते ॥
अत्रिसंहिता—३८२

**चतुःशालम्**— चतुर्द्वारं गृहमित्यपरार्कः
चतसृणां शालानां समाहारः चतुः शालमिति स्मृतिचन्द्रिका ।

**चतुःषष्टिपलः**— आढकस्य नामान्तरम्(खारीशब्दे द्रष्टव्यम्)

**चतुःषष्टिशरावकः**— परिमाणविशेषः शूर्पकुम्भपर्याय
इति खारीशब्दे द्रष्टव्यः ।

**चतुःसमम्**— त्वक्केसरलवङ्गैस्तु त्रिसमं मुनिभिः स्मृतम् ।
त्वक्पत्रकलवङ्गानि केसरं च चतुःसमम् ॥
इति स्कान्दे परिभाषाप्रकाशे—११४
कस्तूरिकाया द्वौ भागौ चत्वारश्चन्दनस्य च ।
कुङ्कुमस्य त्रयश्चैकः शशिनः स्याच्चतुः समम् ॥
इति गरुडपुराणे परिभाषाप्रकाशे—११४

**चतुःसमः**— अङ्गुल्यो हृदयं पृष्ठं कटिर्यस्य तथा समाः ।
पुरुषः स भृगुश्रेष्ठ चतुःसम उदाहृतः ॥
विष्णुधर्मोत्तर-पु०—२-८-२०

**चतुःस्वस्ति**— स्वस्ति नो इन्द्र इति मन्त्रः
इति नित्याचारप्रदीपे—२-१०६

**चतुर्द्दशभुवनानि**— भूर्भुवश्च महश्चैव स्वश्चैव जनस्तथा।
तपश्च सत्यमित्येवं लोकाः सप्तोपरि स्थिताः ॥ ४० ॥
अतलं वितलं चैव सुतलं च तलातलम् ।
महातलं च विप्रेन्द्र ततोऽधश्च रसातलम् ॥ ४१ ॥
पातालं चेति सप्तेति पातालानि क्रमादधः ॥
बृहन्नारदीय पु०—३-४२

**चतुर्द्दशविद्याः**— पुराणन्यायमीमांसा धर्मशास्त्राङ्गमिश्रिता
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥
याज्ञ०—१-३

**चतुर्भद्रः**— चत्वारि भद्राणि धर्मज्ञानवैराग्यैश्वर्याख्यानि
यस्मिन् स चतुर्भद्रः ।
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात् पुण्यतरश्चैव मा पुत्रमनुतप्यथा ॥
महाभा० शान्ति०—२९-२४

**चतुर्मेधः**— अश्वमेधः पुरुषमेधः सर्वमेधः पित्रमेधः
इति चत्वारो मेधाः, तदध्यायी चतुर्मेधः
चतुर्णां यज्ञानामाहर्त्ता इत्यन्ये इति हरदत्तः
आपस्त०—२-८-१८-२२
चत्वारो मेधा वैश्वदेवादय इति कल्पतरुः ।
चतुर्मेधः पङ्क्तिपावन इत्युक्तमापस्तम्बेन ।
त्रिमधुशब्दो द्रष्टव्यः ।

**चतुर्मेधी**— चातुर्मास्ययाजी
तत्र हि चत्वारो मेधा वैश्वदेवादयः क्रियन्त
इति कल्पतरुः ।
त्रिणाचिकेतः पञ्चाग्निस्त्रिसुपर्णश्चतुर्मेधी इत्यादि
वसिष्ठः—३-१९
चतुर्मेधा इति पाठान्तरम् ।

**चतुर्वेदी**— चतुर्षु वेदेषु अभिज्ञः ।
सर्वकाम समृद्धात्मा जरामरणवर्जितः ॥ २२
पुण्यक्षयादिहागत्य चतुर्वेदी द्विजो भवेत् ।
वैष्णवं योगमास्थाय ततो मोक्षमवाप्नुयात् ॥
ब्रह्म० पु०—६६-२३

**चतुर्होता**— पृथिवी होता द्यौरध्वर्युः रुद्रोऽग्नीत्
बृहस्पतिरुपवक्ता इत्याद्यनुवाकः ।
चित्तिः स्रुगित्यादयो मन्त्राश्चतुर्होतार उच्यन्ते
इति देवपालः काठक गृ०—४-२-१

**चतुश्चकः**— एडादधश्चतुश्चको इष्टिविशेषो दर्शपूर्णमास-
विकृतिभूतो ऐडादधे च चतुश्चके ॥
बौधा० ध०—१-१३-३०

**चत्वरम्**— चत्वरं नानाजनावस्थानदेश, अङ्गनं वा
काकादिवलिस्थानमित्यपरे इत्याह्निके मित्रमिश्रः।
न चत्वरोपद्वारयोर्मूत्रपुरीषे कुर्यात इति तत्र हारीतः।
चत्वरं स्थण्डिलेऽङ्गने इति मेदिनी—२७-१५२
चत्वरं स्यात् पथांश्लेषे स्थण्डिलाङ्गनयोरपि ॥
इति हैमः।

**चत्वरिंशत्संस्काराः**— चत्वारिंशत्संस्काराः गौतमेन
दर्शिताः। संस्कारशब्दे ते द्रष्टव्याः।

**चन्दनमाला**— पत्रपुष्पकृतमाला इति नरसिंहवाजपेयी
नित्याचारप्रदीपे
भूप चन्दनमाला यः कुरुते कृष्णमद्मनि।
देवकन्यायुतैर्लक्षे सेव्यते सुरनायकः ॥
इति—१-७०३

**चन्दनीषष्ठी**— वैशाखशुक्लषष्ठी (आरण्यकषष्ठी द्रष्टव्या)

**चन्द्रषष्ठी**— भाद्रकृष्णषष्ठी।
तत्र चन्द्रषष्ठीव्रतं भविष्ये उक्तं निर्णयसिन्धौ द्रष्टव्यम्।

**चपेटः**
**चपेटिका** } तलः करतलाघात इत्यर्थः
चापुड़ा इत्युड्रभाषायाम्।
चड़ इति चापड़ इति शब्दकल्पद्रुमः।

**चपेटीषष्ठी**— भाद्रशुक्लषष्ठी।
भाद्रे चपेटी विख्याता इति स्कान्दे।

**चमसः**— यज्ञपात्रविशेषः भोजनपात्रम्।
चमु भक्षणे यत्र चम्यते स चमस इति हरदत्तः।
"औदुम्बरश्चमसः सुवर्णनाभः प्रशास्त" इति
आपस्त०—२-८-१९-३
"वसतिश्चमसोयानम्" इति देवलः
चतुष्कोणो दण्डयुक्तो मध्ये निम्नः पात्रविशेषश्चमस
इति राजनीतिप्रकाशे—९६
साम्प्रतिकः चामच् शब्दः अस्यैवापभ्रंश इति
अनुमीयते।

**चमसी**— सूक्ष्मचूर्णम्।
पादोना कलाय चमसी कौट०—२-१५ २९
कलायचमसी वेसन् इति यदुच्यते तत् ॥

**चमूः**— सैन्यपरिमाणविशेषः
त्रयो गुल्मा गणो नाम वाहिनी तु गणास्त्रयः।
स्मृतास्तिस्रस्तु वाहिन्यः पृतनेति विचक्षणैः ॥
चमूस्तु पृतनास्तिस्रः इति महाभा०—१-१-२-२१
३×३×३×३=८१
रथाः—९×८१=७२९
गजाः—९×८१=७२९
नराः—४५×८१=३६४५
अश्वाः—२७×८१=२१८७
रथाः—७२९+ गजाः ७२९+नराः ३६४५+ अश्वाः
२१८७=चमूः।

**चम्पकद्वादशी**— ज्येष्ठशुक्लद्वादशी।

**चम्पाषष्ठी**— मार्गशिरशुक्लषष्ठी इति मयूखे ।

**चरणम्**— (१) ब्रह्मचर्येणाध्ययनमिति नीलकण्ठः
इतो गत्वा सञ्जय क्षिप्रमेव उपातिष्ठेथा ब्राह्मणान् ये तदर्हाः ।
विशुद्धवीर्याश्चरणोपपन्नाः कुले जाताः सर्वधर्मोपपन्नाः ॥ महाभा० उद्—३०-७
(२) वेदशाखा चरणः वेदशाखा इति श्रीमूला ।
कामं देशजातिगोत्रचरणमैथुनापहाने नर्मयेयुः ।
कौट०—४-१
न पृच्छेच्चरणं गोत्रं न च विद्यां कुलं न च ।
अतिथिं वैश्वदेवान्ते श्राद्धे च मनुरब्रवीत् ॥
पञ्चतन्त्रे—४-३
(३) पादः ।
चरणौ गुल्फतोऽधस्तात् तलमभिव्याप्य पादौ
इति कात्यायनस्नानसूत्रव्याख्याने हरिहरः—१-६
(४) चरणं आचार इति गोविन्दस्वामी बौधा—६-१४-६

**चरणवन्तः**— आचारवन्तः । यद्वा गुरुपूर्वक्रमागतं शाखाध्ययनं तद्विहितोपनयनं च येषां ते चरणवन्तः इति गोविन्दस्वामी ॥ बौधा० ध०—२-१४-६

**चरित्रम्**— (१) चरित्रं शिष्टसमाचार इति मेधातिथिः ।
चरित्रं देशाचार इति माधवः ।
स्वां प्रसूतिं चरित्रं च कुलमात्मानमेव च ।
स्वं च धर्मं प्रयत्नेन जायां रक्षन् हि रक्षति ॥
मनुः—९-७

यद् यदाचर्यते येन धर्म्यं वाधर्म्यमेव वा ।
देशस्याचरणान्नित्यं चरित्रं तत्प्रकीर्त्तितम् ॥
इति कात्यायनस्मृतिसारोद्धारे—३७
(२) व्यवहाराङ्गविशेषः ।
धर्मश्च व्यवहारश्च चरित्रं राजशासनम् ।
चतुष्पाद् व्यवहारेऽयमुत्तरः पूर्वबाधकः ॥
नारदस्मृतिः—१-११
तत्र सत्ये स्थितो धर्मो व्यवहारस्तु साक्षिषु ।
चरित्रं पुस्तकरणे राजाज्ञायां तु शासनम् ॥
नारदस्मृतिः—१-१२
(३) चरित्रं पुस्तकरणम् । पुस्तं पञ्जिका इति चण्डेश्वरः । पुस्तं सम्प्रति फाइल् इत्युच्यते ।
यद्यदाचर्यते यत्र धर्म्यं वा धर्ममेव वा ।
देशस्याचरणं नित्यं चरित्रं तद्धि कीर्त्तितम् ॥
इति कात्यायनः- ३७
(४) चरित्रं व्यवहार इति व्यवहारप्रकाशे—६७
अनुमानेन निर्णीतं चरित्रमिति कीर्त्तितम् ।
देशस्थित्या द्वितीयं तु शास्त्रविद्भिरुदाहृतम् ॥
इति बृहस्पतिः ।

**चरित्रबन्धकम्**— अत्र चरित्रपदेन गङ्गास्नानाग्निहोत्रादिजनिता पूर्वं तदेव यत्राऽऽधीकृत्य द्रव्यं गृह्यते तत् चरित्रबन्धकम् । अथवा धनिकस्य शोभनचरित्रेण बहुमूल्यं यद् वस्तु आधीक्रियते तत् इति विज्ञानेश्वरः
चरित्रबन्धककृतं सवृद्धया दापयेद्धनम् ।
सत्यंकारकृतं द्रव्यं द्विगुणं प्रतिदापयेत् ॥
याज्ञ०—२-६१

**चरुः**— अनवस्रावितान्तरोष्मपक्वे ईषदरिद्धे तण्डुलपाके चरुशब्द प्रयोग इति हरिहरः पारस्करः—२-१७-५

अनवलाविताम्तरुष्मपक्वादने चरुशब्दः प्रसिद्ध इति
विज्ञानेश्वर याज्ञ०—२-८३
स्वशाखोक्तश्च सुखिन्नोह्यदग्धोऽकठिनः शुभः।
न चातिशिथिलः पाच्यो न चरुश्चारसस्तथा ॥
चतुर्थपादेतु- न च वीतरसो भवेदिति परिभाषा-
प्रकाशोद्धृत छन्दोगपरिशिष्टपाठः—१०६
स्वशाखोक्तश्चरुः खिन्न इति संस्कारतत्त्वे—६
तत्र वीत रसो-गलितमण्डः इति भट्टाचार्याः

**चरुस्थाली**— चरुपात्रम्।
मृण्मय्यौदुम्बरी वापि चरुस्थाली प्रशस्यते।
गोभिलस्मृतिः—२-७२
तिर्यगूर्ध्वं समिन्मात्रा दृढ़ानातिवृहन्मुखी।
मृण्मय्यौदुम्बरी वापि चरुस्थाली प्रशस्यते ॥
इति परिभाषाप्रकाशे—१०८
तत्र तिर्य्यगूर्ध्वं समिन्मात्रा-गर्भप्रसारदैर्ध्याभ्यां
प्रादेशमात्र इति मित्रमिश्रः।

**चर्म**— (१) ढ़ाल।
प्रहारवारणं ढ़ाल इति प्रसिद्धम् इति नीलकण्ठः
महाभा० भीष्म—४६-३३
(२) मसूरिका इति समयमयूखे—१७७
शिरः कपाल मन्त्राणि नखचर्मतिलास्तथा।
एतानि क्रमशो नित्यमष्टम्यादिषु वर्जयेत् ॥
इति तत्रत्यस्कन्दपुराणम् ॥
(३) त्वक्।
तृणकाष्ठद्रुमाणां च शुष्कान्नस्य गुडस्य च।
चेलचर्मामिषाणां च त्रिरात्रं स्यादभोजनम् ॥
इति प्रायश्चित्तप्रकरणे मनुः—११-१६६

**चर्मकारः**— निषादात् वैदेह्यां जातः जातिविशेषः।
कारावरो निषादात्तु चर्मकारः प्रसूयते ॥
मनुः—१०-३६
सूतात् नृपायां जातश्च।
सूताद् विप्रप्रसूतायां सुतो वेणुक उच्यते।
नृपायामेव तस्यैव जातो यश्चर्मकारकः ॥
औशनसस्मृतिः-४
वैदेहीकात्तु विप्रायां जाताश्चर्मोपजीविनः ॥ २१
स चान्त्यजवर्गे पठितः रजकशब्दे द्रष्टव्य।

**चलना**— व्यभिचारिणी।
"ब्रह्मबन्ध्वां चलानायां नीलः" गौतम—३-४-२६

**चषकः**— पानपात्रम्।
"चषके पुटके वापि पिबेत्तोयं द्विजोत्तमः"
वृद्धहारीतस्मृतिः—८-२७२

**चषालः**—यूपकटकः।
चषालो यूपकटक इति कोषात् पञ्चारत्निपरिमाणयूपस्य अग्रभागे अधिके चतुरङ्गुलोच्चे सन्तक्षिते कटकवत् यः प्रवेश्यते स चतुरङ्गुलमात्रः सुबिलः चषाल इत्युच्यते।

**चाक्रिकः**— तैलिक इति हेमाद्रिः वैतालिक इति अन्यत्र
स एव तैलिकचाक्रिकध्वजिसुवर्णकार इति सुमन्तुः।

**चाक्रिकग्रहणम्**— ग्रहणविशेषः।
चाक्रिकग्रहणं मुख्यमायनं तदमुख्यकम्।
पुष्पवन्मण्डलसममध्यभागप्रपीड़ितम् ॥ २८०
यत्रीलतक्ष्म पृथुलं वर्त्तलं तत्त्रियामगम्।

तच्चाक्षिकमिति प्रोक्तं ग्रहणं पितृतृप्तिदम् ॥ २८१
तच्च पञ्चशताब्दानामेकदा वै भविष्यति ॥

पूर्वाङ्गिरसस्मृतिः ॥ २८२

**चक्षुषः—** षष्ठो मनुः, मनुः—१-६२ उत्तमशब्दो द्रष्टव्यः।

**चाङ्गेरिः—** आम्लिति इति प्रसिद्धः सुनिषन्नसदृशः अम्लस्वादुविशिष्टः पत्रशाकः स्थलजः।

**चाटः—** प्रतारकः।

चाटाः प्रतारकाः विश्वास्य ये परधनमपहरन्ति इति विज्ञानेश्वरः चाटाः बहुभाषिण इति मित्रमिश्रः राजनीतिप्रकाशे—२०५

चाटतस्करदुर्वृत्त महासाहसिकादिभिः।
पीड्यमानाः प्रजा रक्षेत् कायस्थैश्च विशेषतः॥

याज्ञ०—१-३३६

चाटो वृक इति स्मृतिचन्द्रिका—५२२

चाटचोरभयेबाधा सर्वसाधरणी स्मृता।
तत्रोपशमनं कार्य्यं सर्वैनैकेन केनचित् ॥

इति तत्र बृहस्पतिः।

वृकापेक्षया प्रतारकः अधिकं सङ्गच्छते चोरशब्द-सामीप्यादिति मन्मतम्।

अनियतसैनिका अपि चाटशब्दवाच्याः।

**चाण्डालः—** अन्त्यजः शूद्रात् ब्राह्मण्यां जातः।

चण्डति कुप्यति सततमिति चाण्डालः

मनुः—४-७९

शूद्रादायोगवः क्षत्ता चण्डालश्चाधमो नृणाम्।
वैश्यराजन्याविप्रासु जायन्ते वर्णसङ्कराः ॥

मनुः—१०-१२

"ब्राह्मण्यां शूद्रसंसर्गाजातश्चाण्डाल उच्यते"

औशनसस्मृतिः—८

**चातकः—** (१) पक्षिविशेषः।

दात्यूहश्चातक इति विज्ञानेश्वरः याज्ञ०—१-१७२

(२) नपुंसकविशेषः।

स्त्री च पुंभावमास्थाय पुरुषाचारवद्गुणा।
चातको नाम षंडः स्यात् स्त्रीषण्डो वापि नामतः ॥

इति कर्मविपाके।

**चातुर्मास्यम्—** या पत्युः क्रीतासती अथान्यैश्चरति इह चातुर्मास्येषु वसिष्ठः—१-३७

चातुर्मास्ये चत्वारि पर्वाणि भवन्ति, वैश्वदेवः, वरुणप्रघासः शाकमेधः सुनासीरीयं चेति।

**चातुर्मास्यः—** आषाढ़कार्त्तिकफाल्गुनपूर्णिमाः।

चतुर्षु मासेषु भवाश्चातुर्मास्यः। संज्ञा चैषा तिसृणां पौर्णमासीनां यासु चातुर्मास्यानि क्रियन्ते।
काः पुनस्ताः फाल्गुन्याषाढ़ी कार्त्तिकः।

आपस्त० ध०—१-३-१०-१

**चातुर्मास्यद्वितीयाः—** अमान्ताषाढ़कार्त्तिकफाल्गुन-कृष्णद्वितीयाः ॥

शुचावूर्जे तपस्ये वा या द्वितिया भवेत्तिथिः।
चातुर्मास्यद्वितीयास्ताः प्रवदन्ति मनीषिणः ॥

**चातुर्मास्यव्रतम्—** आषाढ़पूर्णिमादिपक्षमारभ्य कार्त्तिकशुक्लैकादशी पर्यन्तविहितो व्रतविशेषः।

आषाढ़शुक्लैकादश्यां पौर्णमास्यां विशेषतः ।
चातुर्मास्यव्रतारम्भं कुर्यात्कर्कटसंक्रमे ॥
अभावेऽपि तुलार्केऽपि मन्त्रेण नियमं व्रती ।
कार्त्तिकेशुक्लद्वादश्यां विधिवत्तत्समापयेत् ॥
चतुर्द्धाऽपीह तच्चीर्णे चातुर्मास्यव्रतं नरः ॥
इति कालसारेद्धृतवाराहे ॥

आषाढ़ादिचतुर्मासान् प्रातः स्नायी भवेन्नरः
इति मात्स्ये ॥

चातुर्मास्यव्रतं कुर्यान्नरः किंचिन्महीपते ।
नान्यथा त्वाब्दिकं पापं विनिहन्त्य प्रयत्नतः ॥
इति वाराहे ।

श्रावणे वर्जयेच्छाकं दधि भाद्रपादे तथा ।
दुग्धमाश्वयुजे मासि कार्त्तिके चामिषं त्यजेत् ॥
इति स्कान्दे ।

यस्तु केशवमुद्दिश्य चान्द्रायणपरायणः ।
चातुर्मास्यं नयेद् भक्त्या से, विष्णुतनुमाविशेत् ॥
इति विष्णुपुराणे ।

प्रकाशितः विष्णुपुराणे नास्ति ।

"तत्रापि चेदशक्तः स्याद् भीष्मपञ्चकमुत्तमम्"
इति स्कान्दे ॥

यतीनामपि एकस्थाननिवासादिरूपं व्रतम् ॥

**चातुर्वर्ण्यम्**— चत्वारो वर्णाः ब्राह्मणक्षत्रियवैश्यशूद्राः ।
ब्राह्मणादिषु चातुर्वर्ण्यादीनामुपसंख्यानम् ।
"चातुर्वर्ण्यस्य कृत्स्नोऽयमुक्तो धर्मस्त्वयाऽनघ"
मनुः—१२-१

**चातुर्विद्यम्, चातुर्विद्यः, चातुर्वैद्यः, चातुर्वैद्यम्, चातुर्वैद्यः** — चतस्र एव विद्याः चातुर्विद्यम् । तेन तदध्यायिनो लक्ष्यन्ते । चातुर्विद्यं विकल्पी चेत्यादि ॥
वसिष्ठः३-२०
चतस्रएव विद्याश्चातुर्विद्यम् । तेन तद्विदो लक्ष्यन्ते । चातुर्वैद्यमिति बौधायनीये पाठः
१-१-८

चातुर्वैद्य इति आङ्गिरसस्मृतौ पाठः—५-१
चातुर्विद्यो विकल्पी च अङ्गविद्धर्मपाठकः ।
आश्रमस्थास्त्रयो विप्राः पर्षदेषा दशावरा ॥
चतुर्णामपि वेदानां पारगा ये द्विजोत्तमाः ।
स्वैः स्वैरङ्गैर्विनाप्येते चातुर्वैद्या इति स्मृताः ॥
इति अङ्गिरः—५-२
चतुर्वैद्यो विकल्पी च अङ्गविद्धर्मपाठकः ।
त्रयश्चाश्रमिणो मुख्याः पर्षदेषा दशावरा ॥
पराशरः—८-२७ उत्तराङ्गिरस—५-१

**चातुर्होत्रा**— पृथिवी होत्रेत्यादि ऋक् ।
"चातुर्होत्रां पौर्णमासीमभिमृशेत्" । चत्वारो होतृशब्दा यस्यामृचि सा चतुर्होत्रा इति दायभागव्याख्यानेषु ।

**चात्रम्**— तर्कुः ।
चात्रं सूत्रकर्त्तनसाधनं तर्कुरिति यावत् इति
हरिहरः-पारस्क० गृ०—१-१५-४
अष्टाङ्गुलः प्रमन्थः स्याच्चात्रं स्याद्द्वादशाङ्गुलम् । इति

**चात्वालः**— उत्तरवेदि पुरीषावटं चात्वाल
इति गोविन्दस्वामी ।
सौमिक्यावेदेरीशानकोणस्थितो मृदाहरणोपयुक्तो देशविशेष इति चिन्नस्वामी ।

अन्तरेण चारवालोत्करौ यज्ञस्य तीर्थम् ।

बौधा—१-१५-१५

चान्दिनी— अकृत्वा तु सुतोत्पत्तिं विरागी यस्त्यजेत् प्रियाम् ।
स्तवेत्तपस्तत्पुण्यं च चान्दिन्यां च यथाजलम् ॥

ब्रह्म० वै० पु०—४६-५६

चान्द्रायणम्— व्रतविशेषः ।

पापक्षयाय पुण्याय च तदनुष्ठीयते ।

तत्स्वरूपमाह मनुः—११-२१६

एकैकं ह्रासयेत् पिण्डं कृष्णे शुक्ले च वर्द्धयेत् ।
उपस्पृशंस्त्रिषवणमेतच्चान्द्रायणं स्मृतम् ॥

शुक्ले चेत् प्रारम्भो यवमध्यं, कृष्णे चेत्प्रारम्भः पिपीलिकमध्यमित्युच्यते इदमेव ।

शिशुचान्द्रायणं यतिचान्द्रायणं च तत्तच्छब्दे द्रष्टव्यम् ।

चान्द्रायणविधिर्यथा—

पूर्णिमायां वपनपूर्वकं व्रती चान्द्रायणव्रतसंकल्पं कुर्यात्। गौतमोक्तशुक्लचतुर्दश्यादिपक्षस्तु वैकल्पिक इति विज्ञानेश्वरः। धर्मार्थचान्द्रायणे वपनं वैकल्पिकम् ॥

देशकालवाक्यानन्तरम् अमुकसगोत्रः श्रीमानमुकदेवशर्माहं मम अमुकपापक्षयार्थं श्व आरभ्य अमुकपूर्णिमान्तचान्द्रामाससमाप्तिपर्यन्तं (यवमध्यपक्षे तु अमुकामावास्यान्तमिति योज्यम्) चान्द्रायणव्रतमहं चरिष्ये ।

धर्मार्थके तु मम इह जन्मजन्मान्तरगतज्ञानाज्ञातकृतसकलदुरितक्षयपूर्वकशाश्वतस्वर्गसुखलाभाय भगवतः श्रीवासुदेवस्य चरणारविन्दप्रीतये वा

इति विशेषः ।

सङ्कल्पानन्तरं तद्दिने पञ्चदश ग्रासान् अश्नीयात् । परेद्युः कृष्णप्रतिपदि प्रातः नद्यादौ कृतस्नानः प्रातः सन्ध्यातर्पणानन्तरं व्रताङ्गप्रातः सवनस्नानमाचरेत् ॥ ततः पूर्वाभिमुखो भूत्वा मार्जनं कुर्यात् ।

तत्र मार्जनमन्त्रा यथा—

ओम् आपोहिष्ठेत्यादिमन्त्राणां सिन्धुद्वीपः ऋषिः गायत्रीछन्दः आपो देवताः चान्द्रायणव्रताङ्गमार्जने विनियोगः ।

ओम् आपोहिष्ठा मयोभुवस्तान ऊर्जे दधातन ।
महे रणाय चक्षसे ।
यो वः शिवतमो रसस्तस्य भाजयतेह नः ।
उशतीरिव मातरः ।
तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ
आपो जनयथा च नः ।

ओं पवित्रं ते (ऋ० म०—९-८३) इत्यादिमन्त्राणां पवित्र आङ्गिरस ऋषिः जगती छन्दः पवमानः सोमो देवता चान्द्रायणाङ्गमार्जने विनियोगः ।

ओं पवित्रं ते विततं ब्रह्मणस्पते
प्रभुर्गात्राणि पर्येषि विश्वतः ।
अतप्ततनुर्न तदामो अश्नुते
शृतास इद्वहन्तस्तत् समासत ॥ १ ॥
तपोष्पवित्रं विततं दिव स्पदे ।
शोचन्तो अस्य तन्तवो व्यस्थिरन् ।
अवन्त्यस्य पवितारमाशवो
दिवस्पृष्ठमधितिष्ठन्ति चेतसा ॥ २ ॥
अरुरुच दुषसः पृश्निरग्रिय
उक्षाबिभर्त्ति भुवनानि वाजयुः

मायाविनो ममिरे अस्य मायया ।
नृचक्षसः पितरो गर्भमादधुः ॥ ३ ॥
गंधर्व इत्यापदमस्य रक्षति
पातिदेवानां जनिमान्यद्भुतः
गृभ्णातिरिपुं निधयानिधापतिः
सुकृत्तमामधुनीभक्षमाशत ॥ ४ ॥

ऋ० म०—९-८३

ओं हिरण्यवर्णा इत्यादिमन्त्राणां शन्तातिः ऋषिः ॥ त्रिष्टुप् छन्दः आपोदेवताः (अथर्वका—१-३३-सू०)
ओं हिरण्यवर्णाः शुचयः पावका यासुजातः सवितायास्वग्निः ।
या अग्निं गर्भं दधिरे सुवर्णास्तान आपः शंस्योनाभवन्तु ।
यासां राजावरुणजातिमध्ये सत्यानृते अवपश्यन् जनानाम्, या अग्निं गर्भं दधिरे सुवर्णास्तान आपः शंयोना भवन्तु ।
यासां देवादिवि कृण्वन्तिभक्षंया अन्तरिक्षे बहुधा भवन्ति ।
या अग्निं गर्भं दधिरे सुवर्णास्तान आप श स्योनाभवन्ति
शिवेनमाचक्षुपापश्यताऽऽपः शिव यातन्वोपस्पृशत त्वचं मे ।
घृतश्च्युतः शुचयो याः पावकास्तान आप शंस्योना भवन्तु ॥
ओम् इयंवीरुदित्यादिमन्त्राणाम् अथर्वा ऋषिः अनुष्टुप् छन्दः मधुवनस्पतिर्देवता (अथ—१-३४)
इयं वीरुन्मधुजातामधुनात्वाश्वनामसि मधो रधि प्रजातासि सानोमधुमतस्कृधि ।
जिह्वाया अग्रे मधु मे जिह्वामूले मधुलकम् ।
ममेदहक्रतावसो मम चित्तेसुपायसि ।
मधुमन्मे विक्रमणं मधुमन्मे परायणम् ।
वाचा वदामि मधुमद् भूयासं मधुसंदृशः
मधोरस्मि मधुतरे मधुघान् मधुमत्तरः
मामित्किलत्वं वनाः शाखां मधुमतीमिव ॥

ततोवक्ष्यमाणमन्त्रैस्तर्पणं कुर्यात्, प्रतिमन्त्रमुदकाञ्जलिं देवतीर्थेन दद्यात्, विशेषनियमाभावात् ॥
ओम् आप्यायस्वेति मन्त्रस्यगौतम ऋषिः गायत्रीछंदः सोमोदेवता चान्द्रायणांगतर्पणे विनियोगः
मंत्रः—(ऋ० म-१-१४-९१)
ओम् आप्यायस्व समेतु ते विश्वतः सोमवृष्ण्यम् । भवावाजस्यसंगथे ।
ओं संतेपयांसि इति मन्त्रस्य गौतम ऋषिः त्रिष्टुप् छन्दः सोमो देवता चांद्रायणांगतर्पणे विनियोगः । (ऋ० म०—१-६-२२)—
ओं संते पयांसि समुयन्तु वाजाः संवृष्ण्यान्यभिमातिषाहः ।
आप्यमानो अमृतायसोम दिविश्रवांस्युत्तमानिधिष्वः ।
ओं नवोनव इति मन्त्रस्य सूर्या ऋषिका त्रिष्टुप्छन्दः चन्द्रमा देवता चान्द्रायणांगतर्पणे विनियोगः । (ऋ० म०—१०-७-८५)
ओं नवो नवो भवति जायमानोऽह्नां केतुरुष समेत्यग्रम् ।
भागं देवेभ्यो विदधात्यायन् प्रचंद्रमास्तिरते दीर्घमायुः
एतन्मार्जन तर्पणे प्रातः सवनवन्माध्यंदिनसवने सायंसवने च प्रत्यहं कुर्यात् । तर्पणानन्तरं यथाशक्ति गायत्रीं जप्त्वा गोष्ठादि-पुण्यस्थाने देवालये स्वगृहे वा पञ्च भूसंस्कारपूर्वकं पावकनामानमग्निमुपसमाधाय पूर्वोक्तैराप्याय स्वादिभिर्मन्त्रैः हविरनुमन्त्र्य आधारा-

वाज्यभागौ च हुत्वा पञ्चवारुणमन्त्रैः
पञ्चाहुतीर्हुत्वा आप्यास्व, संतेपयांसि नवोनव इति मंत्रत्रयेण आहुतित्रयं दत्वा कूष्माण्डीभिर्जुहुयात् ।
ओं यद्देवा इति मंत्राणां कूष्माण्डऋषिः अनुष्टुप् छन्दः अग्न्यादयो देवताः चांद्रायणानादेशाज्यहोमे विनियोगः (यजुः काठक०-३८ स्थान-५६-५६)
ओं यद्देवा देव हेडनं देवासश्चकृमावयम् ।
अग्निर्मातस्मादेनसो विश्वान्मुंचन्त्वं हसः
यदि दिवा यदि नक्तमेनांसि च कृमावयम्
वायुर्मातस्मादेनसो विश्वान्मुंचन्त्वं हसः ॥
यदिजाग्रद्यदिस्वप्न एनांसि चकृमावयम् ।
सूर्योमानस्मादेनसोविश्वान्मुंचन्त्वं हसः
यद्ग्रामे यदरण्ये यत् सभायां यदिद्रिये
यत्सूर्ये यदर्य एनश्चकृमावयं यदेक स्याधिधर्मणि
तस्यावयजनमसि ।

ततः देवकृतस्येत्यादिभिरष्टाभि समिद्धोमं कुर्यात् तद् यथाशुः यजुः—८-१३
ओं देवकृतस्येत्यादिमंत्राणां प्रजापतिऋषिः यजुश्छन्दः अग्निर्देवता चान्द्रायणांगसमिद्धोमे विनियोगः
ओं देवकृतस्यैनसोऽवयजनमसि, मनुष्यकृतस्यैनसोऽवयजनमसि पितृकृतस्यैनसोऽवयजनमसि ।
आत्मकृतस्यैनसोऽवयजनमसि । एनस एनसोऽवयजनमसि । यच्चाहमेनोविद्वांश्चकार यच्चाविद्वांस्तस्य सर्वस्यैनसोऽवयजनमसि ।
ततः स्विष्टकृद्धोमं विधाय आह्निकपुण्याहवाचनादि कुर्यात् । ततः प्रातः सवनरीत्या माध्यंदिनसवने संध्यामार्जनतर्पणानि विधाय स्वगृहादिस्वाध्युपितस्थाने पूर्वाभिमुखः स्वयं च्युतयज्ञियवृक्षपत्रे आयमतैजसचक्रोत्पत्रादिभिन्ने भाजने वा स्थापितं भोज्यद्रव्यं चरुभैक्षसक्तुकणयावकशाकपयोदधिघृतमूलफलोदकानामन्यतमम् आप्यायस्व, संतेपयांसि नवोनव इति मन्त्रैरनुमन्त्र्य ततः दिवससंख्यया मयूराण्डप्रमाणग्रासरूपेण परिकल्पितं वक्ष्यमाणमन्त्रैर्मनसोच्चरितैः संमन्त्र्य गृहणीयात् ।

अथ ग्रासाभिमन्त्रणम्—
ओं भूः स्वाहेति प्रथमम् । ओं भुवः स्वाहेति द्वितीयम्
ओं स्वः स्वाहेति तृतीयम् । ओं तपः स्वाहेति चतुर्थम् ।
ओं सत्यं स्वाहेति पञ्चमम् । ओं यश स्वाहेति षष्ठम् ॥
ओं श्रीः स्वाहेति सप्तमम् । ओं ऊर्कस्वाहेति अष्टमम् ॥
ओं इट्स्वाहेति नवमम् । ओं ओजः स्वाहेति दशमम् ।
ओं तेजः स्वाहेत्येकादशम् । ओं वर्चः स्वाहेति द्वादशम् ।
ओं पुरुषः स्वाहेति त्रयोदशम् । ओं धर्मः स्वाहेति चतुर्दशम् । ओं शिवः स्वाहेति पञ्चदशं ग्रासमभिमन्त्रयेत् ।

एतदभिमन्त्रणं तु मानसम् । अभिमन्त्रणं ग्रासग्रहणकाले न तु भोजनकाले । यस्मिन् दिवसे यावन्तो ग्रासा स्तद्दिने प्रथमतस्तावन्तो ग्रासमन्त्राः स्मरणीयाः । तदुत्तरेषां नास्ति प्रसंगः ग्रासान्तराभावात् । ग्रासभक्षणे प्रथमतः पञ्चसु ग्रासेषु क्रमेण प्राणायस्वाहेत्यादि पंचप्राणाहुतिमन्त्राः पठनीयाः । ततोऽन्ये ग्रासा विनामन्त्रं भक्षणीयाः ॥ यस्मिन् दिने चत्वारो ग्रासाः तदा प्रथमग्रासं प्राणायस्वाहा अपानायस्वाहेति मन्त्राभ्यामश्नीयात् यदा त्रयो ग्रासाः तथा प्रथमद्वितीयग्रासौ द्वाभ्यां मन्त्राभ्यामश्नीयात् तृतीयं त्वकेन । यदा तु द्वौ ग्रासौ तदा प्रथमग्रासं द्वाभ्यां मन्त्राभ्यां द्वितीयं त्रिभिः प्राणाहुतिमन्त्रै-

भक्षयेत् । एकग्रासस्थले तं सर्वैर्मन्त्रैरश्नीयात् ततः आसायं रौरव योधां गायत्री वान्यदुपनिषदादिपवित्रं पठेत् । सायं-सामयं सवनं प्रातः सवनवत् सम्पाद्य मार्जन तर्पणमन्तरं चन्द्रापस्थानं कुर्यात् ।

ओं आप्यायस्व, संते पयांसि, नवोनव इति त्रिभि- पूर्वोक्तै मन्त्रैः । एतदुपस्थानं प्रतिसवनं वा कार्यं तर्पणानन्तरम् ।

कृष्णप्रतिपदि चतुर्दशग्रासानशित्वा क्रमेण ग्रासं ग्रासं विमुञ्चन् अमावास्यायामुपोष्य, शुक्ले एकोपचय- विधिना ग्रासानशित्वा पूर्णिमायां समापयेदिति पिपीलिकमध्यं चान्द्रायणम् ॥

शुक्लप्रतिपदमारभ्य पूर्णिमायां पञ्चदशग्रासानशित्वा कृष्णे एकग्रासापचयविधिना अमावास्यामुपोष्य यवमध्यचान्द्रायणं वा कुर्यात् इति पक्षान्तरम् ॥

व्रती सत्यं वदेत् । पतितैरसज्जनैश्च सह संभाषणं वर्जयेत् । मासमध्ये तिथीनामुपचये अपचये वा ग्रासानामुपचयोऽपचयो वा भवेत् तिथिवृद्ध्या चरेद् पिंडानिति याज्ञवल्क्यवचनादिति विज्ञानेश्वराः ।

चान्द्रायणव्रते एकस्मिन् चांद्रमासे चत्वारिंशदधिक- शतद्वय ग्रासनियमात् ग्राससाम्यात् यतिचांद्रायणशिशुचान्द्रायणयोः चांद्रायण संज्ञा ।

चांद्रायणसमाप्तिदिने यथाशक्ति यथोत्साहं ब्राह्मण- भोजनं संपाद्य व्रतं समापयेदिति श्रीकुलमणिमिश्र- शर्माकृता चांद्रायणव्रतपद्धतिः समाप्ता ॥

**चान्द्रिका**— कार्षिकः पणः ।

ताम्रकर्षकृतामुद्रा विज्ञेयः कार्षिकः पणः ।
स एव चान्द्रिका प्रोक्ता ताश्चतस्रस्तु धानका ॥ इति वीरमित्रोदयव्यवहारप्रकाशे बृहस्पतिः पृ०—१७६

मन्ये एतस्मादेव शब्दात् साम्प्रतिकः चांदाशब्दः समुत्पन्न इति ॥

**चामीकरम्**— सुवर्णम् ।

**चाम्पेयः**— चंपक इति हेमाद्रिः । नागकेशर इत्यमरः

**चारः**— (१) चार इति प्रसिद्धः वृक्षविशेषः ।

(२) चारः जनपदचरितज्ञानाय प्रच्छन्नचारी इति राजनीतिप्रकाशे—१८६

विशेषेण चारप्रतिचारौ मन्त्रप्रणिधयश्च सर्पा इति तत्र शंखलिखितौ ॥

प्रविश्य सर्वभूतानि यथा चरति मारुतः ।
तथा चारैः प्रवेष्टव्यं व्रतमेतद्धि मारुतम् ॥
मनुः—९-३०६

चारः गुप्तः स्पर्शः प्रणिधिः प्रकटः स्पश इति भारतभावदीपे नीलकण्ठः शान्ति—५८-५

चारश्च प्रणिधिश्चैव काले दानममत्सरात् ।
युक्त्यादानं न चादानमयोगेन युधिष्ठिर ॥

**चारम्**— चारवृक्षफलम् ।

पयसा सह सर्पिषि च क्वथितं बहुखारिकचारफलैः सितया सह कर्पूरनारिफलेन समं युतसीकरकं सुतशुभ्रकरम् । इति स्कान्दे वै० मार्गशीर्ष—१५-१७

**चारकः**— (१) कारागृहम् । विवादरत्नाकरे—७०

न चारके निरोद्धव्य आर्यः प्रात्ययिकः शुचिरिति
कात्यायनः ।

धर्मस्थीये चारके बन्धनागारे वा शय्यासनभोजनो-
च्चारसंचाररोधबन्धनेषु ॥ कौट०—४-९-२०

(२) भ्रमणशीलः गुप्तचरो वा।

शुद्धात्मा गुणवान् पार्थः सत्यवान् नीतिमान् शुचिः।
तेजोराशिरसंख्येयो गृह्णीयादपि चक्षुषा॥
विज्ञाय क्रियतां तस्माद् भूयश्च मृगयामहे॥
ब्राह्मणैश्चारकैः सिद्धैर्येचान्ये तद्विदो जनाः॥
महाभा० विरा०—२७-१०

**चारणः**— (१) नटगायनादिः। ते हि स्वभार्यां चारयंति।
नैष चारणदारेषु विधिर्नात्मोपजीविषु॥
सज्जयन्ति हिते नारीर्निगूढ़ा चारयंति च॥
चारणा नटा इति व्यवहारप्रकाशे—पृ०—४०८
मनुः—८-३६२

(२) चारणशब्दः शाखाध्यायिषु रूढ़ इति हरदत्तः॥
दशवर्षं पौरसख्यं पञ्चवर्षं तु चारणम्।
त्रिवर्षपूर्वः श्रोत्रियः अभिवादनमर्हति॥ इति
आपस्त—१-४-१४-१३

**चारणदाराः**— (१) नटगायनदीनां भार्याः
मनुः—८-३६२

श्लोकऽयं चारणशब्दे द्रष्टव्यः।

(२) चारणदारा देवदास्य इति बौधायनविवरणे
बौधायनधर्मसू०—२-४-३

**चारित्रम्**— चरित्रवत्ता।
"कुलस्त्रियां चारित्रविवादे" मिताक्षरा—२-१२
न नाभिं दर्शयेत, आगुल्फाद्वासः परिदध्यात,
न स्तनौ विवृतौ कुर्यात, न हसेदप्रावृता भर्त्तारं
तद्बन्धून् वा न द्विषान्न गणिकाधूर्त्ताभिसारिणी
प्रव्रजिता प्रेक्षणिका मायामूलकुहककारिका
दुःशीलादिभिः सहैकत्र तिष्ठेत्।
संसर्गेण हि कुलस्त्रीणां चारित्रं दुष्यति
इति शङ्खः मिताक्षरायाम् याज्ञ०—१-८७

**चारुपुटः**— चारुपुटः कर्णिकार इति मित्रमिश्रः
जातीशताह्वा सुमनाः कुन्दं चारुपुटं तथा।
बाणं च चंपकाशोकं करवीरं च यूथिका॥
एतानि तु प्रशस्तानि कुसुमान्यच्युतार्चने। इति।
पूजाप्रकाशोद्धृताग्नेये—५२
आचारेन्दौ तु अम्बुपटमिति पाठः।

**चालनिका**— तितउ, चालुणी इति उत्कलभाषाप्रसिद्धा।
तुलामानभाण्डं रोचनीदृषन्मुषलोलूखलकुट्टकरोचक
यन्त्रपत्रकशूर्पचालनिका कण्डोलीपिटकसम्मार्जन्य
श्चोपकरणानि। कौट०—२-१५-६२

**चाषः**—पक्षिविशेषः "अथ चाषकिकीदिविः"
इत्यमरः—२-५-१६
स्वर्णचातक इति शब्दकल्पद्रुमे।

**चिंकटकः**— चिंगुड़ि इति प्रसिद्धः मत्स्यः।
लवणजलप्रभवचिंकटकानां न श्राद्धे देयत्वमिति
गदाधरराजगुरुः आचारसारे॥

**चिंचा**— (१) तिन्तिड़ी, तेन्तुली इति भाषा प्रसिद्धा

अश्ममयफलपत्रा ।

तिलमुस्तकशिग्रूणां कोकिलाक्षपलाशयोः ।

काकजङ्घातथा वर्शचिचाश्वत्थवटस्य च ।

एभिस्तु दशभिः क्षारैः शुद्धिर्भवति कांस्यके ॥

इति मिताक्षरायाम्-याज्ञ०—१-१९०

(२) पत्रशाकविशेषः विष्णुधर्मोत्तरे-

मूलकस्य तथा शाकं चिञ्चाशाकं तथैव च।

आर्द्रकस्य तथा शाकं पालकं शाकमेव च ॥

आम्ललोलस्य शाकं चसदैव हरिवल्लभम् ।

फलेष्वामलकं पूजा बादरं तिन्तिडीफलम् ॥

इति पूजाप्रकाशे—७८

**चिता**— श्मशानाग्निः ।

**चितिः**— चिता ।

"चिता चित्या चितिः स्त्रियाम्" इत्यमरः—२-८-११७

दुःस्वप्ने मैथुने वान्ते विरिक्ते क्षुरकर्मणि ।

चितियूपश्मशानास्थ्नां स्पर्शने स्नानमाचरेत् ॥

इति पराशरः मिताक्षरायाम्—१-३०

**चित्रम्**— (१) लेख्यम् इति व्यवहार कल्पतरुः ।

चित्रमिति लोकप्रसिद्धिः ।

बन्धहस्तस्य यद्देयं चित्रेण चरितेन वा ॥

अदत्तेऽर्थेऽखिलं बन्धं नाकामो दाप्यते क्वचित् ॥

इति विवादरत्नाकरे बृहस्पतिः ।

बंधहस्तस्य गृहीतबंधकस्य उत्तमर्णस्य इति तत्र ।

(२) शुक्लपक्षगतदिवसस्य प्रथमो मुहूर्त्तः चित्र इति ।

चित्रः केतुर्दाता इति तैत्तिरियश्रुतिः कालमाधवे—२

**चित्रकः**— (१) दीनारः ।

कार्षापणो ण्डिका ज्ञेयास्ताश्चतस्रस्तु धानकः ।

ते द्वादशसुवर्णस्तु दीनारश्चित्रकः स्मृतः ॥ इति

कात्यायनस्मृतिसारोद्धारे

(२) चित्रकपोत इति लक्ष्मीधरः ।

तत्र देवलस्मृतौ—अभोज्यपक्षीप्रस्तावे

बलाकाहंस—दात्यूह भृंग राजकचित्रकाः ।

उलूककुररश्येन गृध्रकुक्कुटवायसाः ॥ इति

(३) व्याघ्रविशेषश्च ।

**चिपिटः**— (१) नतनासिकः ।

वक्त्रो ह्रस्वश्च चिपिटः सुखसौभाग्यभंजक इति

काशीखण्डे—३७-१४

(२) चूड़ा इति प्रसिद्धं भोज्यद्रव्यम् ।

शालयः सतुषा आर्द्रा भृष्टा अस्फुटितास्ततः ।

कुट्टिताश्चिपिटाः प्रोक्तास्ते स्मृताः पृथुका अपि ॥

**चिपिटकम्**— चूड़ा इति प्रसिद्धम् ।

चिपिटशब्दो द्रष्टव्यः ।

**चिरकम्**— एतदप्यष्टविधं पत्रं चिरकाचिरकभेदेन द्विविधम् । द्विविधमपि स्वहस्तकृतमन्यहस्तकृतं चेति द्विविधम् । चिरकं नाम पुत्रपौत्रादिदृष्टं साक्ष्यादि-पश्चारूढं । तदानीं गमकानां विद्यमानत्वात् चिरकमिति । तदन्यदचिरकम् इति सरस्वतीविलासे ।

**चिरकारी**— विलम्बकारी ।

आमन्त्रितश्चिरं नैव कुर्य्याद् विप्रः कदाचन ।

देवतानां पितृणां च दातुरन्यस्य चैव हि ॥
चिरकारी भवेत् रोगी पच्यते नरकाग्निना ।
इति श्राद्धदीपे । चिरकारी विलम्बकारी ।

**चिरातीतम्**— उच्छिष्टभांडखर्परादिकम्, क्षुद्रमार्गादिस्थम् इत्याचारे गदाधरः ।
"प्राक्प्रशस्तं चिरातीतमनेकान्तरितं लघु" इति ब्रह्मपुराणे तु—
रथ्यागतमविज्ञातं दासवर्गेण संस्कृतम् ।
प्राक्प्रशस्तं चिरातीतमनेकान्तरितं लघु ॥
ब्रह्म० पु०—२२१-१२१

**चिरिबिल्वः**— पूतिकरंज इति हेमाद्रिः पृ०—१३५३

**चिर्भटः**— तिक्तकर्कटी इति पराशरमाधवे ।
"लाजाभिश्च शलाभिश्च त्रपुषोर्वारुचिर्भटः"
इति मार्कण्डेये ।
खर्बुजमिति कमलाकरः । प्रयोगस्तु आरुकशब्दे द्रष्टव्यः

**चिल्लः**— (१) चिल्ले क्लिन्ने चक्षुषी अस्येति चिल्लः
चिला इति भाषायाम् ।
(२) पक्षिविशेषः ।
गृध्रः कंकः कपोतश्च उलूकः श्येन एव च ।
चिल्लश्च चर्मचिल्लश्च भासः पांडर एव च॥ इति
ष्णुधर्मोत्तरे इति शब्दकल्पद्रुमः ।
यद्देहकं काकवलाकचिल्लामेध्येन लिप्तं तु भवेत्
कदाचित् । श्रोत्रे मुखे वा परिमस्तके वा स्नानेन
लेपोपहतास्य शुद्धिः ॥ वृहद्यमस्मृतिः—३-६१

**चीणाकम्**— अतिदीर्घाकारमुर्वारुकसदृशमिति हेमाद्रिः ॥
परि—५५१
चीणाकं लकुचं जम्बु इति ब्रह्मपुराणे ।
वीणाकमिति पाठस्तु अस्यैव पाठान्तरं
भवितुमर्हतीति ज्ञायते ॥

**चीनः**— क्रियालोपात् शूद्रत्वं गताः क्षत्रियाः चीनाः ॥
मनुः—१०-४४
औड्रशब्दोद्रष्टव्यः ।

**चीनकः**— धान्यविशेषः चिना इति प्रसिद्धः ।
चीनकाः षष्टिकविशेषः इति बालंभट्टी याज्ञ०—१-३६५
प्रियंगवो ह्युदाराश्च कोरदूषाः सचीनकाः ।
विष्णुपुराणम्—१-६-२१ इति शब्दकल्द्रुमे ।
गीताप्रेस् विष्णुपुराणपुस्तके तु सतीनकाः इति पाठः ।

**चीरम्**— वस्त्रखण्डमिति मेधातिथिः "वसीतचर्मचीरं वा"
मनुः—६-६
चीरं वस्त्रखंडो वल्कलं वेति विज्ञानेश्वरः—१३-४५
जीर्णं वस्त्रखण्डमिति सुभूतिः । चीराणि किं पथि न
सन्ति इति भागवते—२-२-५

**चीरकम्**—ऋणादिषु विवादेषु जानपदं लेख्यम् ।
चीरकं स्यादृणादिषु इति वरदराजीये प्रजापतिः ।
चीरकलक्षणमुक्तं व्यवहारमाधवे—६२
चीरकं नाम लिखितं पुराणैः पौरलेखकैः ।
अर्थिप्रत्यर्थिनिर्दिष्टं यथासम्भवसंस्कृतैः ॥
स्वकीयैः प्रतिनानाद्यै रर्थिप्रत्यर्थिमाक्षिणाम् ।

प्रतिनामभिराक्रान्तं पत्रं प्रोक्तं स्वहस्तवत् ॥
स्पष्टावगमसंयुक्तं यथास्मृत्युक्तलक्षणम् ॥

**चीरी**— उच्चैः स्वरः कीटविशेषः इति मिताक्षरायाम् ।
मधुदंशः पलं गृध्रो गां गोधाग्निं वकस्तथा ।
श्वित्री वस्त्रं श्वा रसं तु चीरी लवणहारकः ॥
याज्ञ० — ३-२१५

**चीरीवाकः**— चीराख्य उच्चैः स्वरः कीट इति कुल्लूकः
मनुः—१२-६३
झिंकारी इति यः प्रसिद्धः स इत्यनुमीयते ।
मांसं गृध्रो वपां मद्गुस्तैलं तैलपकः खगः ।
चीरीवाकस्तु लवणं वलाकाशकुनिर्दधि ॥
मनुः—१२-२३
चीरीवाकौ पर्यायशब्दौ

**चीवरः**— (१) लौहचूर्णम् ।
लौहचूर्णं च चीवर इति गोभिलभाष्ये—४-६-७
लौहचूर्णं तु चीवरमिति कात्यायनः—२८-१८
गोभिलस्मृतिश्च—२-२५०
(१) शमीधान्यविशेषः ।
(३) वस्त्रम् ।
अनग्निरनिकेतश्चाप्यगोत्रचरणो मुनिः ।
कौपीनाच्छादनं यावत् तावदिच्छेच्च चीवरम् ॥
महाभा०—१-६१-१२

**चुक्रम्**— अत्यम्लं दधि इत्याचारेन्दौ ।
गृञ्जनं चुक्रिकां चुक्रं गाजरं पीतिकां तथा इति श्राद्धे ।

**चुक्रिका**—अंबटवेल इत्याचारेंदौ ।
चिरकालशुक्तं पानकमिति निर्णयसिन्धौ—२९४
(निर्णयसागर) वचनं कपालशब्दे द्रष्टव्यम् ।

**चुक्रीका**— चांगेरी चिंचा वा इति हेमाद्रिः ।
"प्रियालामलचुक्रीकास्तिन्दुकं मधुसाह्वयम्"

**चुंचुः**— (१) चिंचाचंचुचंचुकी च दीर्घपत्रा सतिक्तका।
चुंचु शीता सराऽरुच्या स्वाद्वी दोषत्रयापहा इति॥
भावप्रकाशपूर्वखण्डे ।
चेंचु इति प्रसिद्ध शाक इति गौड़ाः इति दिव्यसिंह-
महापात्राः।
सुवर्चलायाश्चुंचोर्वा लोणिकाया रसैरपि ।
इति वाग्भटे चिकित्सा—६
चञ्चुः इति कृत्यकल्पतरौ पाठः ।
तत्र चञ्चुः चेञ्चु इति प्रसिद्धं शाकम् ॥ श्राद्ध—४८
(२) ब्राह्मणेन वैदेहकस्त्रियामुत्पन्न इति कुल्लूकः
"मेदांध्र चुंचुमद्गुनामारण्यपशुहिंसनम्"
मनुः—१०-४८

**चुल्ली**— पाकार्थं यत्र बह्निः प्रज्वाल्यते ।
पञ्च सूना गृहस्थस्य चुल्ली पेषण्युपस्करः ।
कण्डनी चोदकुम्भश्च बध्यते यास्तु वाहयन् ॥
मनुः—३-६८

**चुलुकम्**—माषमज्जनजलम् ।
माषमज्जनजलमाचामेत्तच्चुलुकमिति महोपनिषद्
इति शब्दकल्पद्रुमे ।

**चूड़ा**— बाहुविभूषणम् । उत्कलेषु चूडि इत्युच्यते ।
कर्णपूरैः सुमाल्यैश्च सदा मालाः स चूडिनः ॥ इति
स्कान्दे । इति कल्पतरौ ।

**चूड़ाकर्म**— उपनयनप्राग्भाविसंस्कारविशेषः सुप्रसिद्धः ।
चूड़ाकर्म द्विजातीनां सर्वेषामेव धर्मतः ।
प्रथमेऽब्दे तृतीये वा कर्त्तव्यं श्रुतिचोदनात् ।
मनुः—२-३५

**चूड़ामणिग्रहणम्**— सूर्यवासरे सूर्यग्रहणे ।
चंद्रवासरे चंद्रग्रहणे चूड़ामणिरिति संज्ञा भवति ।
रविग्रहे सूर्यवारे सोमे सोमग्रहे तथा ।
चूडामणिरितिख्यातिस्तत्रानन्तफलं भवेत् ॥
इति व्यासः ।

**चूर्णम्**— (१) ताम्बूलप्रलेपनं प्राण्यंगभस्म ।
प्रासादादिप्रलेपनं च येन क्रियते ।
(२) अन्यदपि चूर्णीभूतं वस्तु । यथा गोधूमचूर्णम्
इत्यादि ॥

(३) चूर्णं तैलचूर्णमिश्र ओदन इति विज्ञानेश्वरः
गुडौदनं पायसं च हविष्यं क्षीरषाष्टिकम् ।
दध्योदनं हविश्चूर्णं मांसं चित्रान्नमेव च । ३०४
दद्याद् ग्रहक्रमादेवं द्विजेभ्यो भोजनं बुधः ॥
याज्ञ०—१-३०५

**चूर्णी**— देशान्तरप्रसिद्धपुराणेकमूल्यताम्रनिर्मितमुद्रा-
विशेषश्चूर्णी इति प्रायश्चितविवेकव्याख्याने
गोविन्दानन्दः । कपर्दकशतमिति गोपिकामोहनकोषे ।

**चेटः**— अभक्ष्यमत्स्यविशेषः इति कल्पतरौ ।
मत्स्यानां वा चेटगवयशिशुमारनक्रकुलीराः ।
वसिष्ठः—१४-४१

**चेलम्**— वस्त्रम् ।
तृणकाष्ठद्रुमाणां च शुष्कान्नस्य गुड़स्य च ।
चेलचर्मामिषाणां च त्रिरात्रं स्यादभोजम् ॥ इति
चौर्यप्रायश्चित्ते मनुः—११-१६६

**चैत्यम्**—आयतनम् इति विवादरत्नाकरे चण्डेश्वरः—२८५

**चैत्यः**—अभीष्टदेवता ।
चित्ते भवः चैत्यः इति आश्वलायवृत्तिकाराः ।
चित्यम् उपयाचितकम् उच्यते । तत्र भवाः
शान्तिपुष्टिदाः देवताश्चैत्या इति आश्वलायन-
गृह्यपरिशिष्टभाष्ये । तेन चैत्ययज्ञः ग्रहयज्ञ इत्युक्तः ।
"अथा होमोऽहरहश्चैत्ययज्ञः"
आश्व० गृ० परि० आचारेन्दु—१७

**चैत्यद्रुमः**— ख्यातवृक्षः ।
ग्रामादिसमीपे ख्यात वृक्ष इति कुल्लूकः ।
मनुः—१०-५०

**चैत्यवृक्षः**— ख्यातवृक्षः ।
सभाप्रपा पूपशाला वेशमद्यान्नविक्रयाः ।
चतुष्पथाश्चैत्यवृक्षाः समाजाः प्रेक्षणानि च ॥
मनुः—६-२६४

चैत्यो ग्रामप्रसिद्धो वृक्ष इति नरसिंहवाजपेयी ।
नित्याचारप्रदीपे—२५१

**चैत्रावली**– चैत्रपौर्णमासी "चैत्र्यावल्याः परे तु या" इति अनध्ययनद्वितीयायां द्रष्टव्यम् ॥

**चैत्री**— (१)चैत्रपौर्णमासी ।
(२)अष्टकापार्वणःश्राद्धश्रावण्याग्रहायणीचैत्र्याश्वयुजीति सप्तपाकयज्ञसंस्थाः गौतम० ध०—८-१६
अत्र चैत्रीशब्देन शूलगवः इति मस्करी-हरदत्त-चतुर्विंशतिमतसंग्रहाः । होलकाख्यं कर्मेति स्मृतिचन्द्रिका—४१४

**चैलधावः**— वस्त्र प्रक्षालक इति हेमाद्रिः ।

**चोक्षः**– (१) स्वभावशुद्धो मनः प्रसादजनकोऽरण्यादिदेश ।
अवकाशेषु चोक्षेषु नदीतीरेषु चैव हि ।
विविक्तेषु च तुष्यंति दत्तेन पितरः सदा ॥
मनुः—३-२०७
(२) दक्षः शुद्धो वा ।
अनीर्षुर्गुप्तदारः स्याच्चोक्षः स्यादघृणी नृपः ।
स्त्रियः सेवेत नात्यर्थं मृष्टं भुञ्जीत नाहितम् ॥
महाभा०—१२-७०-८

**चोक्षम्**— तर्क इति नीलकण्ठः ।
प्रश्न इति मेदिनी ।
"चोक्षं स्यादद्भुते प्रश्ने चोदनार्हे तु वाच्यवत्"
मेदिनी—२६-२३
सत्यं ध्यानं समाधानं चोक्षं वैराग्यमेव च ।
अस्तेयं ब्रह्मचर्यं च तथा संग्रहमेव च ।
एवं दोषा मदस्योक्तास्तान् दोषान् परिवर्जयेत् ॥
महाभा० उद्—४३-३४

**चौडम्**— चूडाकर्माख्यसंस्कारकर्म ।
गार्भैर्होमैर्जातकर्मचौडमौञ्जीनिबन्धनैः ।
वैजिकं गार्भिकं चैनो द्विजानामपमृज्यते ॥
मनुः—२-२७

**चौरः**— तस्करः ।
उत्क्षेपकः संधिभेत्तापान्थमुद्ग्रन्थिभेदकः ।
स्त्रीपुंगोऽश्वपशुस्तेयी चौरो नवविधः स्मृतः ॥
इति स्मृतिचन्द्रिकायां व्यासः ।

**चौरिका**— चौर्यम् ।
इतरेष्वागमाद्धर्मः पादशस्त्ववरोपितः ।
चौरिकानृतमायाभिधर्मश्चापैति पादशः ॥
इति मनुः—१-८२

**चौलम्**— चूड़ाकर्म ।
दहनं वपनं चैव चौलं वै गिरिरोहणम् ।
नाव आरोहणं चैव वर्जयेद्गर्भिणीपतिः ॥
इति रत्नसंग्रहे,

## छ

**छत्राकम्**— छत्रु इति प्रसिद्धम् उद्भिज्जम् छत्राकारम् ।
छत्राकं विड्वराहं च लशुनं ग्रामकुक्कुटम् ।
पलाण्डुं गृञ्जनं चैव मत्या जग्ध्वा पतेद्द्विजः ॥
मनुः—५-१९

**छदिः**— चाल इति छात इति च भाषायाम् ।
वानप्रस्थः ग्रामस्य छदिं न दर्शेदरण्यवासप्रियोऽभयदायी सर्वभूतानाम् इति अग्निवेश्यगृह्यसूत्रे—२-७-१०

**छन्दः**— इच्छा

यः साधयन्तं छन्देन वेदयेद्धनिकं नृपे ।
स राज्ञा तच्चतुर्भागं दाप्यस्तस्य च तद्धनम् ॥

मनुः—८-१७६

"स्वच्छन्दं विधवागामी" याज्ञ० – २-२६५

"अभिप्रायवशौ छन्दो" अमरः—३-३-८८

**छन्दः (सान्तम्)**— (१) इच्छा । वरदराजीये पृ—३१३

देशं कालं च योतीयाल्लाभं कुर्याच्च योऽन्यथा ।
तत्र स्यात्स्वामिनश्छन्दोऽधिकं देयं कृतेऽधिके ॥

याज्ञ०—२-१९५

(२) गायत्र्यादिच्छन्दः

छादनाच्छंद उद्दिष्टं वाससी इव चाकृतेः ।
आत्मा संच्छादितो देवैर्मृत्योर्भीतैस्तु वै पुरा ॥
आदित्यैर्वसुभिः रुद्रैस्तेन छंदांसि तानि वै ।

अत्र आकृतेः शरीरसंस्थानस्य इति मित्रमिश्राः

परिभाषा प्रकाशे—८७

आर्षं छन्दश्च दैवत्यं विनियोगस्तथैव च ।
वेदितव्यं प्रयत्नेन ब्राह्मणेन विशेषतः ॥
अविदित्वा तु यः कुर्याद् याजनाध्यापनादिकम् ।
होममन्तर्जलादीनि तस्य चाल्पफलं भवेत् ॥

इति परिभाषा प्रकाशे—८५ योगियाज्ञवल्क्यः ।

(३) वेदः—

आचारहीनं न पुनन्ति वेदा यद्यप्यधीताः सहषड्भिरंगैः ।
छंदांस्येनं मृत्युकाले त्यजन्ति नीडं शकुन्ता इव जातपक्षाः ॥

वसिष्ठः—६-३

शूद्रोऽप्येवंविधः कार्यो विना मन्त्रेण संस्कृतः ॥
न केनचित् समसृजच्छान्दसा तं प्रजापतिः ॥

इति यमवचनव्याख्याने हरिहर आह "यतस्तंशूद्रं एकतमेनापि छन्दसा वेदेन प्रजापतिः न समसृजत समयोजयत्" इति पारस्करः—२-१-२३

**छन्दकः**— प्रासादविशेषः मत्स्य० पु० अ०—२६८

प्रासादशब्दे द्रष्टव्यः ।

**छन्दस्कृतम्**— वेदस्य मन्त्रभागः ।

मन्त्रभागः छन्दस्कृतपदवाच्य इति नित्याचारप्रदीपे नरसिंहवाजपेयी ।

"यथोदितेन विधिना नित्यं छन्दस्कृतं पठेत् ॥

मनुः—४-१००

छन्दस्कृतं गायत्र्यादिछन्दोयुक्तमिति कुल्लूकः ।

ऋक्सामवेदौ ।

छन्दांसि गायत्र्यादीनि अभिप्रेतानि, तैः कृतं युक्तं ब्रह्म ऋक् साम । अनेकार्थत्वात् करोतेरयमत्रार्थो । व्याख्यायते यथा गोमयान् कुरु इति संहारे ।

पृष्ठं कुर्वित्युन्मर्द्दने । एवमत्र युजेरर्थो वर्तते इति मेधातिथिः । ४-१००

**छन्दोविचितिः**— छन्दः शास्त्रम् ।

गायत्र्यादीनि छन्दांसि यथा विचीयन्तेविविच्य ज्ञायन्ते सा छन्दोविचितिरिति उज्वलाकारः ।

आप०—२-४-८-११

**छर्दनम्**— वमनम् ।

"प्राक्पञ्चनखेभ्यश्छर्दनं घृतप्राशनं च"

इति गौतमः—३-५-२३

**छर्दिः**— वमनम् ।
संकुलोपाहितवेदसमाप्तिच्छर्दिश्राद्धमनुष्य-
यज्ञेष्वहोरात्रम् गौतमः—२-७-३४

**छलम्**— (१) प्रमादाभिहितम् ।
भूतच्छलानुसारित्वाद् द्विगतिः समुदाहृतः ।
भूतं तत्त्वार्थसंयुक्तं प्रमादाभिहितं छलम् ॥
इति नारदः--१-२६
छलं निरस्य भूतेन व्यवहारान् नयेन्नृपः ।
भूतमप्यनुपन्यस्तं हीयते व्यवहारतः ॥ याज्ञ०—१-१९
(२) ऋणसाधनोपायविशेषः ।
छद्मना याचितं चार्थमानीय ऋणिकाद्धनी ।
अन्वाहितादिवाहृत्य दाप्यते यत्र सोऽधिः ॥
इति बृहस्पतिः ।
(३) शाठ्यम् ।
छलानि तु पञ्चाशत् प्रकाराणि इति सरस्वतीविलासे ।

**छविः**— चर्म ।
"तां छविं परिदधीत" पारस्करः—३-११-६
छविं कृत्तिम् इति हरिहरः ॥

**छात्रः**— अन्तेवासी ।
"छत्रादिभ्योणः" पा—४-४-६२ किं यस्य छत्रधारण-
शीलं स छात्रः । किं चातः राजपुरुषे प्राप्नोति, एवं
तर्हि उत्तरपदलोपोऽत्र द्रष्टव्यः ।
छत्रमिव छत्रं गुरुश्छत्रम् । गुरुणा शिष्यः छत्रवत्
छाद्यः शिष्येण गुरुः छत्रमिव परिपाल्यः
इति पातञ्जलमहाभाष्ये ॥
"परमर्मज्ञः प्रगल्भश्छात्रः कापटिकः" कौट०—१-११-२

**छिक्का**— छिंक इति प्रसिद्धा ।

**छिद्रपीडा**— छिद्रान्वेषणनिबन्धनपीड़ा इति
स्मृतिचन्द्रिका ॥ व्यवहार—२८४
दुःखासिका कलिर्भेदश्छिद्रपीड़ा परस्परम् ।
प्रतिकूलकलत्रस्य द्विदारस्य न संशयः ॥ इति दक्षः ।

**छुछुन्दरिः**— चुचुंदरा इति भाषाप्रसिद्धः जन्तुविशेषः
गंधमूषिक इति त्रिकाण्डशेषः । गंधनकुल इति
हारावली । राजदुहिताक्षा मूषिका इति
मिताक्षरा—३-२१३
छुछुन्दरीः शुभान गंधान पत्रशाकं तु बर्हिणः ।
श्वावित्कृतान्नं विविधमकृतान्नं तु शल्यकः ॥
मनुः—१२-६५

**छुरिका**— खड्गपुत्री ।
क्षुरिकाशब्दस्यापभ्रंशो भवितुमर्हति ।
(१) छुरिका बन्ध्या गौरिति कुल्लूकः ॥
मनुः—८-३२५
अस्य पाठान्तरं स्थूरिकाशब्दे द्रष्टव्यम् ।

**छेदः**— छिद्यते अनेनेति छेदः ।
नद्यावाटौ निवर्त्तनं तत् परिमाणं च इति विज्ञानेश्वरः
याज्ञ०—१-३२०

**छोटिका**— अङ्गुलिघर्षणशब्दः ।
संभ्रम्य छोटिकां दद्यात्कराग्रं जानुमण्डले ।
मात्राभिः पंचदशभिः प्राणायामोऽधमः स्मृतः ॥
इति मिताक्षरायाम्—३-२०१

# ज

**जगद्धात्रीपूजा —**
कार्त्तिकस्य सिते पक्षेनवम्यां जगदीश्वरीम्।
त्रिकालमेककालं वा वर्षे वर्षे प्रपूजयेत् ॥
संगमतन्त्रे इति शब्दकल्पद्रुमे
कार्त्तिकस्य युगाद्यायामृद्धिकामोर्चयेदुगाम् इति
तत्रैव स्मृतिसागरे ।

**जङ्घा —** गुल्फोर्ध्वं जान्वधोभागः ।
जङ्घे जानुतोधस्तात्गुल्फपर्य्यन्ते इति ।
कात्यायनस्नानसूत्रव्याख्याने हरिहरः—१-६

**जटा—** केशः ।
ग्रामादाहृत्य चाश्नियादष्टौ ग्रासान् समाहितः ।
स्वाध्यायं च सदा कुर्याजटाश्च विभृयात्तथा ॥
इति वानप्रस्थधर्मे शंखस्मृतिः—६-४

**जटिलः** – (१) ब्रह्मचारी इति मेधातिथिः ।
(२) मुंडो वा जटिलो वा स्यादथवा स्याच्छिखाजटाः
मनुः—२-२१६

इति मनूक्त्या संपूर्णकेशवान् ब्रह्मचारी ।
(३) संपूर्णकेशवान् ।

**जड़ः—** वेदग्रहणासमर्थो जड़ इति दायभागे जीमूतव हनः
बुद्धिविकल इति कुल्लूकः—७-१४६
मूलस्तु वर्णानुच्चारक इति तस्मादस्य भेदः ।
जड़ा मूकमनसः इति हेमाद्रिः ॥ परिशेष—४७०

**जतु—** योजकद्रव्यविशेषः जउ इति प्रसिद्धः ।

**जत्रु–** वक्षोंसयोः संधिर्जत्रु इति विज्ञानेश्वरः याज्ञ०-३-८८
तन्नामास्थिविशेष इति यावत् ।
जत्रु ग्रीवामूलमिति शार्ंगधरदीपिकायाम् ।
जत्रुणी स्कन्धसन्धी इति लक्षणप्रकाशे
जत्रु ग्रीवास्कन्धयोः सन्धिरिति कल्पतरुः ॥
गार्हस्थ्य—३७

**जनपदः—** जननिवासस्थानं पुरभिन्नम्
वाक्याभेदे प्रयोगदर्शनात् ॥

**जनवादः—** जनैः सह निरर्थकवाक्कलहः इति कुल्लूकः
द्यूतं च जनवादं च परिवादं तथानृतम् ।
स्त्रीणां च प्रेक्षणालम्भमुपघातं परस्य च ॥
वर्जयेदिति शेषः मनुः—२-१७६

**जन्तुः—** प्राणी ।
एकः प्रजायते जन्तुरेक एव प्रलीयते ।
एकोऽनुभंक्ते सुकृतमेक एव च दुष्कृतम् ॥
मनुः—४-२४०

**जन्मदाः—** सूतिकागृहदेवताः ।
सूतिकावासनिलया जन्मदा नाम देवताः ।
तासां यागनिमित्तं तु शुद्धिर्जन्मनि कीर्त्तिता ॥
इति गदाधरकृतपारस्करभाष्ये—१-१६

**जन्माष्टमी—** भाद्रकृष्णाष्टमी ।
अत्र निशीथे श्रीकृष्णजन्म
तथा भाद्रपदे मासि कृष्णाष्टम्यां कलौ युगे ।
अष्टाविंशतिमे जातः कृष्णोऽसौ देवकीसुतः ॥
इति ब्राह्मे ॥

**जपः**— विशिष्टमन्त्रा वृत्तिरिति हेमाद्रिः ।
मन्त्रमन्त्रार्थयोरभेदचिन्तनमिति ।
विधानेन मन्त्रोच्चारणमिति शब्दकल्पद्रुमे ।

**जपा**—ओड्रपुष्पम् मन्दार इति यावत् ।
जवा इति पाठान्तरं नामान्तरं वा
जवादिकुसुमं भाण्डो रूपीका च कुरण्टकः ।
पुष्पाणि वर्जनीयानि श्राद्धकर्मणि नित्यशः ॥
इति श्राद्धदीपोद्धृतब्रह्माण्डपुराणे ॥
ओड्रपुष्पं जवा चाथ त्रिसंध्या सारुणा मता ।
जपा संग्राहिणी केश्या त्रिसंध्या कफवातजित् ॥
इति भावप्रकाशे ।
रुद्रपुष्पमिति हेमाद्रिः ॥ परिशेष—६८४
कल्पतरौ जवादिस्थाने "जपादि" इति पाठः ॥
तत्र जपादिशब्दादेवंविधं रक्तकुसुमम् इति
श्राद्धकाण्डे—१५६

**जम्बीरम्**— लेम्बु इति भाषा ।
"फले जम्बीरमामिषम्" इति आमिषशब्दे द्रष्टव्यम् ॥

**जम्बुवनजम्**— जवा इति वीरमित्रोदय पूजाप्रकाशे-१२
तिलकं जम्बुवनजं पीतकं नगरं तथा ।
एतानि तु प्रशस्तानि कुसुमान्यच्युतार्चने ॥
इति तत्र वामनपुराणे ।
आचारेन्दो जाम्बुवनजमिति पाठः ।
अनयोः कतरः साधीयान् इति बुधैर्विभाव्यम् ॥

**जम्बूकः**— शृगालः ।

ब्राह्मणी तु शुना दष्टा जम्बुकेन वृकेण वा ।
उदितं ग्रहनक्षत्रं दृष्ट्वा सद्यः शुचिर्भवेत् ॥
अत्रिसंहिता—८७

**जम्भकविद्या**— वशीकरणान्तर्द्धानविद्या ॥
श्रीमूला—१-१२-१

**जयः**—अष्टादशपुराणानि रामस्य चरितं तथा ।
विष्णुधर्मादिशास्त्राणि शिवधर्माश्च भारत ॥
कार्ष्णश्च पंचमी वेदो यन्मया भारतं स्मृतम् ।
सौराश्च धर्मा राजेन्द्र मानवोक्ता महीपते ॥
जयेति नाम एतेषां प्रवदन्ति मनीषिणः ।
इति परिभाषाप्रकाशोद्धृत भविष्यपुराणे ॥ १७ ॥
वाल्मीक्यां तु कृष्णेन व्यासेन प्रणीतः कार्ष्ण इति
(२) विदुलाया उपाख्यानं जयसंज्ञकमिति महाभारते ॥
जयो नामेतिहासोऽयं श्रोतव्यो विजिगीषुणा ।
महीं विजयते क्षिप्रं श्रुत्वा शत्रुंश्च मर्दति ॥
उद्—१३६-१८

**जयन्ती**— (१) रोहिणीयुक्ता श्रीकृष्णजन्माष्टमी ।
जयं पुण्यं च कुरुते जयन्तीमिति तां विदु इति स्कान्दे
(२) यदानुशुक्लद्वादश्यां प्राजापत्यं प्रजायते ।
जयन्ती नाम सा प्रोक्ता सर्वपापहरा तिथिः ॥
इति ब्राह्मे ।
(३) शाकविशेषः ।
कदली दाडिमी धान्यं हरिद्रामानकं कचु ।
बिल्वोऽशोको जयन्ती च विज्ञेया नवपत्रिका ॥
इति तिथितत्त्वे ॥

**जयपत्रम्**— यस्मिन् पत्रे जयनिर्देशो नृपतिना दत्तः।
पूर्वोत्तरक्रियावादनिर्णयां ते यदा नृपः।
प्रदद्याज्जयिने लेख्यं जयपत्रं तदुच्यते ॥
पूर्वोत्तरक्रियावादप्रमाणं यत्परीक्षणम्।
निगदं स्मृतिवाक्यं च यथा सभ्यविनिश्चितम्।
एतत्सर्वं समासेन जयपत्रेऽभिलेखयेत् ॥ इति
स्मृतिचन्द्रिकायां व्यासः।
प्राड्विपाकादिहस्ताङ्कं मुद्रितं राजमुद्रया।
सिद्धेर्थे वादिने दद्याज्जयिने जयपत्रिकाम् ॥
इति सरस्वतीविलासे बृहद्वसिष्ठः।

**जया**— (१) कुटजपुष्पमिति नरसिंहवाजपेयी।
नित्याचार—१-५४७
मालती मल्लिका चैव तथा काशोऽतिमुक्तकः।
पाटली करवीरश्च जया पारन्तिकेति च ॥
नित्याचार—१-६१०
(२) तृतीयाष्टमीत्रयोदशीतिथयः जयासंज्ञकाः
(३) वैष्णवैकादशी विशेषश्च।
द्वादश्यां तु सिते पक्षे ऋक्षं यदि पुनर्वसु।
नाम्ना सा तु जया ख्याता तिथीनामुत्तमा तिथिः ॥
(४) चित्तं च स्वाहा चित्तिश्च स्वाहा इत्यादयो
होमाः त्रयोदश ॥ पारस्करः—१-५
द्वादशगृहीतेन जयान् जुहुयादिति लौगाक्षिः।
यथाधीतं मन्त्रमनुद्रुत्य ऋगन्तेन स्वाहाकारेण द्वादश-
प्रक्षेपा आहुतीति केचित्।
अन्ये तु द्वादशावदानगृहीताज्यस्य सर्वमन्त्रानुद्रवणेन
सर्वान्ते स्वाहाकारेणैक एव प्रक्षेप इत्यनुतिष्ठन्ति।
इति देवपालभाष्ये काठक० गृ०—३-१-१४

**जरायुः**— गर्भवेष्टनम्।

**जरायुजः**—पशवश्च मृगाश्चैव व्यालाश्चोभयतोदतः।
रक्षांसि च पिशाचाश्च मनुष्याश्च जरायुजाः ॥
मनुः—१-४३

**जर्त्तिलः**—जर्त्तिलाः कृष्णतिला इति हेमाद्रिः।
जर्त्तिलास्तु तिलाःप्रोक्ताः कृष्णवर्णा वनोद्भवाः।
जर्त्तिलाश्चैव ते ज्ञेयाः अकृष्टोत्पादिताश्च ये ॥
इति हेमाद्रौ सत्यव्रतः हेमा० परि—६४८
विज्ञेया इति आह्निकभूषणपाठः—१६६
तत्र आपस्तम्बः—
अटव्यां ये समुत्पन्ना अकृष्टाः फलितास्तथा।
ते वै श्राद्धे पवित्राः स्युस्तिलास्ते न तिलास्तिलाः ॥
इति अकृष्टभूमौ जातास्तिला जर्त्तिला इति श्राद्धमयूखे।
आरण्यतिला इति ऋग्वेदभाष्यभूमिकायां सायणाचार्या
तथा हलायुधः जर्त्तिलः कथ्यते सद्भिररण्य-
प्रभवस्तिल इति २-५-८३

**जलदिव्यम्**— महाभियोगेषु त्रिविधमानुषप्रमाणाभावे
निर्णयपादे श्वासकासादिरोगरहितस्य वादिनः
प्रतिवादिनो वा जलदिव्यं विहितम् ॥
अत्र धर्मावाहनादि सकलदेवतापूजाहोमप्रतिज्ञा-
पत्रस्थापनान्तकर्मानन्तरं ग्राहजलौकामत्स्यादि
दुष्टप्राणिवर्जिते स्थिरजले नाभिप्रमाणोदके
यज्ञियवृक्षोद्भवां धर्मस्थूणामवष्टभ्य प्राङ्मुखः
शोध्यस्तिष्ठेत। तदा त्रिषु शरेषु मुक्तेषु एको वेगवान्
मध्यमशरपातस्थानं गत्वा तमादाय तत्रैव तिष्ठति।
अन्यस्तु पुरुषो वेगवान् शरमोक्षस्थाने तोरणमूले

तिष्ठति। एवं स्थितयोः तृतीयस्यां करतालिकायां शोध्यो निमज्जति। तत्समकालमेव तोरणमूलस्थितोऽपि द्रुततरं मध्यमशरपातस्थानं गच्छति। शरग्राही च तस्मिन् प्राप्ते द्रुततरं तोरणमूलं प्राप्य अन्तर्जलगतं शोध्यं यदि न पश्यति तदा शुद्धो भवति। अर्थात् तदा स यदि जले निमग्नस्तिष्ठति तदा शुद्धः यदि अमग्नो भवति तदा अशुद्धः।

सत्येन माभिरक्ष त्वं वरुणेत्यभिशाप्यकम्।
नाभिदघ्नोदकस्थस्य गृहीत्वोरुजलं विशेत्॥
समकालमिषुं मुक्तमानीयान्यो जवीनरः।
गते तस्मिन् निमग्नांगं पश्येच्चेच्छुद्धिमाप्नुयात्॥

याज्ञ०—२-१०८-६

**जलपवित्रम्**— आचमनार्थोदकस्य पावनहेतुभूतं वस्त्रमिति गोविन्दस्वामी। बौधा०—२-१०-१७-१२

**जलायनम्**— प्रणाली इति मिताचारप्रदीपे परबाधां न कुर्वीत जलवातायनादिभिरिति॥

**जलौकाः**— रक्तपायो जलचरकीटविशेषः जोक इति उड्भाषायां प्रसिद्धः।

जलौका रक्तमादत्ते केवलं सा तपस्विनी।
अङ्गना तु धनं वित्तं मांसं वीर्यं बलं सुखम्॥

दक्षस्मृतिः—४-६

**जवनः**— वेगगामी पारस्करः—१-१६-७

**जाग्रद्गौरीपञ्चमी**— श्रावणशुक्लपञ्चमी।

सुप्ते तु देवदेवेशे पंचमी श्रावणे सिता।
कुर्युस्तत्र यथाशक्ति जाग्रद्गौरी महोत्सवम्॥

**जांगलम्**— (१) कपिशमिति नरसिंहवाजपेयी।
जांगलं चाग्निना दग्धादिति गान्धे।

**जांगलः**— देशविशेषः।
यद्यप्यल्पोदकतरुपर्वतादिदेशो जांगलः
तथाप्यत्र सजलतरुपर्वतो देशो जांगलशब्देनाभिप्रेतः
इति विज्ञानेश्वरः।
"रम्यं पशव्यमाजीव्यं जांगलं देशमावसेत्"

याज्ञ०—१-३२१

अल्पोदकतृणो यस्तु प्रवातः प्रचुरातपः।
स ज्ञेयो जांगलो देशो बहुधान्यादिसंयुतः॥
इति जांगललक्षणम्।

**जांघिकम्**— जंघाजन्य वेतनमिति विवादरत्नाकरे।

**जातम्**— रेतः "बृहदिति जातम्" बृहदित्यनेन जातं वीर्यं प्रक्षिपतीति देवपालः काठकगृ०—३-६-३

**जातकर्म**— संस्कारविशेषः।
"जाते पुत्रे यत्कर्म क्रियते मेधाजननायुष्यकरणादि"

मनु—२-२९

**जातरूपम्**— सुवर्णम्।
जातरूपं स्पृशेदापो दिवा नीतं तु यत्नतः।

अङ्गिरःस्मृतिः—१६

जातरूपेण धारया कुमारस्य मुखे जुहोति।

गोभिलस्मृतिः—२-७-११

**जातशिला**— जातशिलासु मणिकं प्रतिष्ठापयति

गोभिलः—४-७-१

तिष्ठति । एवं स्थितयोः तृतीयस्यां करतालिकायां शोध्यो निमज्जति । तत्समकालमेव तोरणमूलस्थितोऽपि द्रुततरं मध्यमशरपातस्थानं गच्छति । शरग्राही च तस्मिन् प्राप्ते द्रुततरं तोरणमूलं प्राप्य अन्तर्जलगतं शोध्यं यदि न पश्यति तदा शुद्धो भवति ।
अर्थात् तदा स यदि जले निमग्नस्तिष्ठति तदा शुद्धः यदि अमग्नो भवति तदा अशुद्धः ।

सत्येन माभिरक्ष त्वं वरुणेत्यभिशाप्यकम् ।
नाभिदघ्नोदकस्थस्य गृहीत्वोरुजलं विशेत् ॥
समकालमिषुं मुक्तमानीयान्यो जवीनरः ।
गते तस्मिन् निमग्नांगं पश्येच्चेच्छुद्धिमाप्नुयात् ॥
याज्ञ०—२-१०८ ६

**जलपवित्रम्**— आचमनार्थोदकस्य पावनहेतुभूतं वस्त्रमिति गोविन्दस्वामी । बौधा०—२-१०-१७-१२

**जलायनम्**— प्रणाली इति नित्याचारप्रदीपे
परबाधां न कुर्वीत जलवातायनादिभिरिति ॥

**जलौकाः**— रक्तपायी जलचरकीटविशेषः
जोक इति उद्भाषायां प्रसिद्धः ।
जलौका रक्तमादत्ते केवलं सा तपस्विनी ।
अङ्गना तु धनं वित्तं मांसं वीर्य्यं बलंसुखम् ॥
दक्षस्मृतिः—४-६

**जवनः**— वेगगामी पारस्करः—१-१६-७

**जाग्रद्गौरीपञ्चमी**— श्रावणशुक्लपञ्चमी ।
सुप्ते तु देवदेवेशे पंचमी व्यालपंचमी ।
कुर्युस्तत्र यथाशक्ति जाग्रद्गौरी महोत्सवम् ॥

**जांगलम्**— (१) कपित्थमिति नरसिंहवाजपेयी ।
जांगलं चाग्निना दद्यादिति गारुडे ।

**जांगलः**— देशविशेषः ।
यद्यप्यल्पोदकतरुपर्वतोद्देशो जांगलः
तथाप्यत्र सजलतरुपर्वतो देशो जांगल शब्देनाभिधीयते
इति विज्ञानेश्वरः ।
"रम्यं पशव्यमाजीव्यं जांगलं देशमावसेत्"
याज्ञ०—१-३२१
स्वल्पोदकतृणो यस्तु प्रवातः प्रचुरातपः ।
स ज्ञेयो जांगलो देशो बहुधान्यादिसंयुतः ॥
इति जांगललक्षणम् ।

**जांघिकम्**— जंघाजन्य देयमिति विवादरत्नाकरे ।

**जातम्**— रेतः "बृहदिति जातम्" बृहदित्यनेन जातं वीर्य्यं प्रक्षिपतीति देवपालः काठकगृ०—३-६-७

**जातकर्म**— संस्कारविशेषः ।
"जाते पुत्रे यत्कर्म क्रियते मेधाजननायुष्यकरणादि"
मनुः—२-२६

**जातरूपम्**— सुवर्णम् ।
जातरूपं स्पृशेदापो दिवा नीतं सु यज्जलम् ।
अङ्गिरः स्मृति—११६
जातरूपेण वादाय कुमारस्य मुखे जुहोति ।
गोभिलस्मृतिः—२-७-२१

**जातशिला**— जातशिलासुमणिकं प्रतिष्ठापयति
गोभिलः—३-६-६

तद्भाष्ये घनाविसिकताशंकाः स्मृता जातशिलास्तु
ताः इति

जातिः— चतुर्वर्णबाह्याः ।

चातुर्वर्ण्यस्य या सूतिरसजात्यादिसम्भवा ।
तस्या धर्माः समुद्दिष्टाः जातिः सा परिकीर्त्तिता ॥

इति विवादरत्नाकरे कात्यायनः—६६६

असजातिः असवर्णः ।

(२) ब्राह्मणत्वादि । (३) षड्जादिः ।

शुद्धास्तु जातयः सप्त ता षड्जादिस्वराभिधाः

इति संगीतरत्नाकरे ।

जातयस्तु षड्जादयः सप्त शुद्धाः संकरजातयस्त्वेकादश इत्येवमष्टादशविधाः इति विज्ञानेश्वरः याज्ञ०— ३-११५

(४) मालतीपुष्पम् ।

सुमाना जातिः "सुमना मालती जातिरितिस्मरणात्"

हेमा-परि—६८४

जातिदुष्टम्— लशुनगृंजनादि यज्जन्मना दूषितम् ।

लशुनंगृंजनं चैव पलाण्डुं कवकानि च ।
वार्त्ताकुं नालिकालावु उपेयाजातिदूषितम् ॥

इति भविष्ये ।

केशव वैजयन्त्यां तु-
वृन्ताकनालिकालावु ह्यवेयाजातिदूषितमिति पाठः

६८-४६

जातिब्राह्मणः— तपः श्रुतं च योनिश्चेत्येतद्ब्राह्मणकारकम्
तपः श्रुताभ्यां यो हीनो जाति ब्राह्मण एव स इति ।

पातञ्जलमहाभाष्योद्धृता स्मृतिः—२-२-१

पराशरमाधवे व्यासः व्यवहार—१५६

ब्रह्मबीजसमुत्पन्नो ब्रह्मसंस्कारवर्जितः ।
जातिमात्रोपजीवी यः सोऽब्राह्मण इति स्मृतः ॥

इति व्यासः ।

पराशरश्च

सावित्र्याश्चापि गायत्र्या सन्ध्योपास्त्यग्निकार्य्ययो ।
अज्ञानात् कृषिकर्त्तारो ब्राह्मणा नामधारकाः ॥ —८-३

जातिभ्रंशकरम्— पापप्रकारविशेषः ।

ब्राह्मणस्य रुजः कृत्वा घ्राति रघ्रेयमद्ययोः ।
जैह्मं च मैथुनं पुंसि जातिभ्रंशकरं स्मृतम् ॥

मनुः—११-६७

जाती— विष्णुदेयपुष्पविशेषः । जाइनाम्ना प्रसिद्धः

"जाती शताह्वा सुमनाः कुन्दं चाम्बुपटं तथा" इति

वामनपुराणे ।

मालती इति हेमाद्रिः श्राद्ध—६८३

जातीपुष्पशतैर्मालां केशवस्य निवेदयेत ॥
धेनुदानसहस्रेण फलं प्राप्नोत्यसंशयम् ॥

पूजाप्रकाशे—६७

जातेष्टिः— वैश्वानरः द्वादशकपालं निर्वपेत पुत्रे जाते इति
पुत्रजन्मनिमित्तीकृत्यविहिता इष्टिः ।

यस्मिन् जाते एतामिष्टिं निर्वपति पूत एव
स तेजस्वी अन्नाद इंद्रियावी पशुमान् भवति इति ।

जात्यम्— (१) प्रशस्तम् ।

जात्यं वासः सप्तरात्रिकम् कौट०—४१

(२) जातिफलम् ।

जम्बूविल्वफले चैव जात्यं वीणातकं तथा ।
नारङ्गबीजपूरौ च राजफलगुफलान्यपि ॥

इत्यादि नित्याचारप्रदीपे देवदेये ॥

**जानपदः—** जनपदे भवः ।

(१) देशवासी ।

देयं चौरहृतं द्रव्यं राज्ञाजानपदाय वै ।

अददद्धि समाप्नोति किल्विषं यस्य तस्य तत् ॥

याज्ञ०—२-३६

"जातिजानपदान् धर्मान्" मनुः— ८-४

**जानपदलेख्यम्-** लिखेज्जानपदं लेख्यं प्रसिद्धं स्थानलेखकः

राजवंशक्रमयुतं वर्षमासार्द्धवासरैः ॥

पितृपूर्वं नाम जातिश्च निकर्णिकयोर्लिखेत् ।

द्रव्यभेदं प्रमाणं च वृध्दीं चोभयसम्मताम् ॥ इति सरस्वतीविलासे व्यासः । एतज्जानपदं लेख्यमष्टविधम् । विभागपत्र- दानपत्र- संवितपत्र- स्थितिपत्र- सन्धिपत्र विशुद्धिपत्रादिपत्र- क्रयपत्रभेदात् ।

व्यवहारमाधवे च—६२

चीरकं च स्वहस्तं च तथोपगतसंज्ञितम् ।

आधिपत्रं चतुर्थं तु पञ्चमं क्रयपत्रकम् ॥

षष्ठं तु स्थितिपत्राख्यं सप्तमं सन्धिपत्रकम् ॥

विशुद्धिपत्रकं चैव अष्टधा लौकिकं स्मृतम् ॥ इति पराशरमाधवस्य नवप्रकाशने चीरकस्थाने चीकरमिति पाठः न संगच्छते ग्रन्थान्तरविसम्वादात् ॥

**जानु—** जंघोरुसंधिर्जानु मिता०—३-८७

दक्षिणं पातयेज्जानुं देवान् परिचरन् सदा ॥

इति कालसारे कात्यायनः

"जानुरूपर्वाष्ठिवदस्त्रियाम्" इति अमरः—२-६-७२

**जाबालः—** अजाजीवी ।

जाबालः स्यादजाजीवो देवाजीवस्तु देवलः ।

इति अग्निपुराणे—३६६-४५

**जामिः—** (१) कुलस्त्री ।

शोचन्ति जामयोर्यत्र विनश्यत्याशु तत्कुलम् ।

न शोचन्ति तु यत्रैता वर्द्धते तद्धि सर्वदा ॥

मनुः—३-५७

(२) जामिः कुलबालिकायां चेति हलायुधः का—५-१

(३) भगिनी, यत्र जामयः कृणवन्नजामि

इति ऋग्वेदे—१०-१०-१०

जामिः स्वसृकुलस्त्रियोः इत्यमरः—३-३-१४२

जामयो भगिनी-पत्नी-दुहितृस्नुषाद्या

इति कुल्लूकः—३-५८

(४) सधवा स्त्री ।

जामयो विद्यमाभर्त्तृकाः स्त्रिय इति विज्ञानेश्वरः-१-१५७

**जाम्बूनदम्—** सुवर्णम् ।

जाम्बूनदमयं दिव्यं विमानं सूर्यसन्निभम् ।

दिव्याप्सरोभिः सम्पूर्णमन्नदो लभतेऽक्षयम् ॥

इति श्राद्धदीपे ।

**जाया—** भार्या ।

पतिर्भार्य्यां संप्रविश्य गर्भो भूत्वेह जायते ।

जायायास्तद्धि जायात्वं यदस्यां जायते पुनः ॥

मनुः—६-८

**जारः—** "जीर्य्यति स्त्रियाः सतीत्वमनेन" जॄ० करणे घञ्

जारं चौरेत्यभिवदन दाप्यः पंचशतं दमम् ।

उपजीव्य धनं मुञ्चंस्तदेवाष्टगुणीकृतम् ॥

याज्ञ०—३-३०१

**जारद्गवीवीथी**— ज्येष्ठाविशाखानुराधावीथी जारद्गवी मता देवीभागवते—८-१५

**जारूथ्यः**— स्तुत्यः ।

जारूथ्यान् स्तुत्यान्, त्रिगुण दक्षिणान् इत्यन्ये इति नीलकण्ठः ।

नित्यं पुष्पफलाश्चैव पादपा निरुपद्रवाः ।
सर्वा द्रोणदुघा गावो रामे राज्यं प्रशासति ॥ ५८ ॥
स चतुर्द्दश वर्षाणि वने प्रोष्य महातपाः ।
दशाश्वमेधान् जारूथ्यानाजहार निरर्गलान् ॥

महाभा० शान्ति—२६-५६

**जालम्**— (१) मत्स्यग्रहणसाधनविशेषः ।

जालेन मत्स्यग्रहणसाधनेन इति हरिहरः ॥

पारस्करगृ० — १-१६-२०

(२) गवाक्षादि विवरः

जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः ।
प्रथमं तत् प्रमाणानां त्रसरेणुं प्रचक्षते ॥

मनुः—८-१३२

जला इति भाषायाम् ।

जालसूर्य्यमरीचिस्थं त्रसरेणू रजः स्मृतम्

याज्ञ०—१-३६२

**जालपादः**— जालपाद आव्यादिरिति लक्ष्मीधरः ।

प्रतुदाञ्जालपादांश्च कोयष्टिनखविष्किरान् ॥
निमज्जतश्च मत्स्यादां छौनं वल्लूरमेव च ॥

मनुः—५-१३

**जालिका**— शतपुष्पा इति मित्रमिश्रः । पूजाप्रकाशे—८१

वृन्ताकं जालिकाशाकं कुसुम्भान् मालकं तथा ।
पलाण्डुं लशुनं शुक्तं निष्पावं चैव वर्जयेत् ॥

इति कौर्मे । प्रकाशितपुराणे तु—

वृन्ताकं जालिकाशाकं कुसुम्भाश्मन्तकं तथा ।
पलाण्डुं लशुनं शुक्तं निर्यासं चैव वर्जयेत् ॥

इति पाठः कूर्म० पु०—२-१७ अध्यायः ।

**जाल्मः**— असमीक्षकारी इति श्रीमूला गूढजीवी रक्षाप्रकरणे कौट०—४-४

"धिङ् मूर्खं जाल्मम् इत्यादि साक्षेपम्"

इति मिताक्षरा—२-२०३

विवर्णः पामरो नीचः प्राकृतश्च पृथक्जनः ।
निहीनोऽपसदो जाल्मः क्षुल्लकश्चेतरश्च सः ॥

अमरः—२-१०-१६

"जाल्मोऽसमीक्ष्यकारो स्यात्" अमरः—३-१-१६

**जासुवनजम्**— जपापुष्पम्- इत्याचारेन्दौ—१५४

तिलकं जासुवनजं पीतकं तगरं तथा ॥
एतानि सुप्रशस्तानि कुसुमान्यच्युतार्चने ॥

इति वामनपुराणे ॥

जम्बुवनजमित्यस्य पाठान्तरं वीरमित्रोदयादौ ।

**जिव्रिः**— (वैदिकशब्दः) (१) पुरातनः

पितुर्नजिव्रे र्विवेदोभरंत ऋक्—१-७०-१०

(२) जिव्रिः पक्षिविशेषः इति वैद्यकशब्दसिन्धुः ।

**जिह्मः**— (१) कुटिलः ।

"अजिह्मोऽशठोऽशरणोऽसंकसुकः" वसिष्ठः—१०-२७

(२) तगरवृक्ष इति मेदिनी—२५-१३

जिह्मस्तु कुटिले मन्दे क्लीवं तगरपादपे ॥ इति

**जिह्वलः**— जिह्वालोलुपः

श्राद्धं कृत्वा परश्राद्धे भुञ्जते ये च जिह्वलाः।
पतन्ति पितरस्तेषां लुप्तपिण्डोदकक्रियाः ॥

इति श्राद्धदीपे ।

**जिह्वोल्लेखनिका**— यथाया जिह्वामार्जनं क्रियते ।

काशीखण्डे—३५-८२

जिह्वोल्लेखनिकां चापि कुर्य्याच् चापाकृतिं शुभाम् ।
दन्तकाष्ठ प्रदानेन नरः सौभाग्यमृच्छति ।
जिह्वोल्लेखनिकां दत्वा विरोगस्त्वभिजायते ॥

इति पूजाप्रकाशे पुलस्त्यः ।

**जीनम्**— चर्मपुटमिति कुल्लूकः । दृतिरिति शूलपाणिः ।

जीनकार्मुकवस्तावीन् पृथक्दद्याद्विशुद्धये ।
चतुर्णामपि वर्णानां नारीर्हत्वानवस्थिताः॥

मनुः—११-१३८

**जीरका**— शालीधान्यविशेषः इति वैद्यकशब्दसिन्धुः

**जीवः**— सुखदुःखादिभोक्ता अन्तरात्मा ॥

जीवसंज्ञोऽन्तरात्मान्यः सहजः सर्वदेहिनाम् ।
येन वेदयते सर्वं सुखं दुःखं च जन्मसु ॥

मनुः—१२-१३

**जीवकः**— जीवकाः चार्वाका इति हेमाद्रिः ।

(निग्रन्थशब्दो द्रष्टव्य)

त्रयी क्लेशं समुत्सृज्य जीवतेत्यब्रवीत्तु यान्
जीवका नाम ते जाताः सर्वधर्मबहिष्कृताः ॥

इति हेमाद्रौ विष्णुः

जीवका बार्हस्पत्याः चार्वाका इति यावत् इति मित्रमिश्रः । श्राद्धप्रकाशः—१४४

मनुः—१२-६६

**जीवजीवकः**— चकोरपक्षीति कुल्लूकः ।

रक्तानिहृत्वा वासांसि जायते जीवजीवक इति

**जीवनम्**— जीविकानिर्वाहपर्याप्तं धनम् ।

अन्यत्र ब्राह्मणात् किन्तु राजा धर्मपरायणः ।
तत्स्त्रीणां जीवनं दद्यादेष दायविधिः स्मृतः ॥

इति नारदः—१३-२५

**जीविका**— जवनोपायः

न लोकवृत्तं वर्त्तेत वृत्तिहेतोः कथंचन ।
अजिह्मामशठां शुद्धां जीवेद्ब्राह्मणजीविकाम् ॥

मनुः—४-११

**जीवोर्णा**— जीवतः मेषस्य ऊर्णा इति अष्टावक्रभाष्ये ।

मैत्रायणीयमानव० गृ०—१-१२-४

**जुंगितः**— जुंगितः पतितः प्रतिलोमजो वा

इति स्मृतिचन्द्रिका पृ—२४६

जुंगतिः प्रतिलोमजश्चर्मकारादिरिति विज्ञानेश्वरः

याज्ञ०—१-७२

चतलस्तु परित्याज्याः शिष्यगा गुरुगा च या ।
पतिघ्नी तु विशेषेण जुंगितोपगता तथा ॥

वसिष्ठः—२१-१२

जुंभकागायत्री   जुंभकाय स्वाहा इति मन्त्रः।

जुहूः— पलाशकाष्ठनिर्मिता अग्निहोत्रहवणीसदृशी मुख्यहोमकरणत्वात् हूयते अनयेति व्युत्पत्त्या जुहूादवाच्या स्रुक्।

जूषणम्— पाकोत्तरस्थितजलमिति पूजाप्रकाशे मित्रमिश्रः पृ—२०२

वृक्षराजं सुरेन्द्राय हविष्य पावकाय च।
चक्रिणे सप्तधान्यं च गरुडे मत्स्यजूषणम्॥
इति भविष्ये

जूषमित्यस्य पर्यायः शब्दकल्पद्रुमे भाषासु च तथैव व्यवहारः।

ज्ञातिः— सपिंडः समानोदकश्च।
जानाति छिद्रं कुलस्थितिं चेति ज्ञातिः।
सर्वभयेषु ज्ञातिभयं घोरमिति बार्हस्पत्यार्थशास्त्रे-५१२

ज्ञातिप्रायम्— ज्ञातीन् प्रैति गच्छतीति ज्ञातिप्रायम्। इति ज्ञातिमात् इत्यर्थः इति मेधातिथिः—३-२६४

प्रक्षाल्य हस्तावाचम्य ज्ञातिप्रायं प्रकल्पयेत्।
ज्ञातिभ्यः सत्कृतं दत्त्वा बान्धवानपि भोजयेत्॥
मनुः—३-२६४

ज्ञानम्— (१) ज्ञानं तत्त्वार्थसंबोधं शमश्चित्त प्रशान्तता।
दयाभूतहितैषित्वं ध्यानं निर्विषयं मनः इति॥
परिभाषाप्रकाशोद्धृतमहाभारते॥ परिभा०—३४

सर्वभावविनिर्मुक्तं क्षेत्रज्ञं ब्रह्मणि न्यसेत्।
एतज् ज्ञानं च ध्यानं च शेषोऽन्यो ग्रन्थविस्तरः॥
दक्षस्मृतिः—७-२१

श्रीमद्भगवद्गीतायामपित्रयोदशाध्याये—

अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम्।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः॥ ७॥
इन्द्रियार्थेषु वैराग्यमनहंकार एव च।
जन्ममृत्युजराव्याधिदुःख दोषानुदर्शनम्॥ ८॥
असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु।
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु॥ ९॥
मयि चानन्य योगेन भक्तिरव्यभिचारिणी।
विविक्तदेशसेवित्वमरतिर्जनसंसदि॥ १०॥
अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम्।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा॥ ११॥

मनुश्च—

सत्वं ज्ञानं तमोऽज्ञानं रागद्वेषौ रजः स्मृतम्।
एतद्व्याप्तिमदेतेषां सर्वभूताश्रितं वपुः॥ १२-२६
तत्र यत् प्रीतिसंयुक्तं किंचिदात्मनि लक्षयेत्।
प्रशान्तमिव शुद्धाभं सत्वं तदुपधारयेत्॥ १२-२७

द्वितीयश्लोकः महाभारतशान्तिपर्वणः-२०७-२० श्लोकेन सह सम्वदति॥

(२) शुक्लचतुर्थीदिनभागः कालमाधवः—२

ज्ञानप्रत्ययः— वेदार्थज्ञानमिति नरसिंहवाजपेयी।
आचार्यप्रत्ययः आत्मप्रत्ययः ज्ञानप्रत्ययश्चेति हारीतः

ज्ञानेन्द्रियम्— श्रोत्रादिपञ्चकम्।

श्रोत्रं त्वचक्षुषी जिह्वानासिका चैव पंचमी।
बुद्धीन्द्रियाणि पंचैषां श्रोत्रादीन्यनुपूर्वशः॥
मनुः—२-९१

**ज्येष्ठसामगः**— ज्येष्ठसामा।

ज्येष्ठसामतलवकाराणां प्रसिद्धम् ॥

उदुत्यं, चित्रमित्येतयोर्गीतम्। तद् गायतीति ज्येष्ठसामगः।

ज्येष्ठसाम्नां संततगाता ज्येष्ठसामग इति कात्यायनः श्राद्धकल्पसूत्रव्याख्याने गदाधरः। ज्येष्ठसामछंदोगानां व्रतं साम च तद्योगाद् ज्येष्ठसामगः

इति स एव तत्र।

**ज्येष्ठसामा**— ज्येष्ठसाम- सामविशेषः तदध्ययनांगव्रतं च तद्व्रताचरणेन यस्तदधीते स ज्येष्ठसामा ॥

इति विज्ञानेश्वरः ॥ याज्ञ०—१-२१६

**ज्येष्ठसामानि**- तलवकारिणां उदुत्यं चित्रमित्येतयोर्गीतानि इति गौतमीयवृत्तौ हरदत्तः—२-७-२६

**ज्येष्ठसामिकः**— मूर्द्धानं दिव इत्यसामुरन्नं तद् योऽधीते स ज्येष्ठसामिक इति। गोविन्दस्वामी बौधा०—८-२

ज्येष्ठसामग इति हरदत्तः गौतमः—२-७-८६

ज्येष्ठसामिक इति आपस्तम्बीयपाठः

त्रिमधुशब्दे द्रष्टव्यः।

**ज्यैष्ठिनेयः**— ज्येष्ठाया भार्यायाः पुत्रः।

"ऋषभषोड्शा ज्यैष्ठिनेयस्य" गौतमः—३-१०-१३

**ज्योतिषम्**—सूर्यादीनि ज्योतींषि अधिकृत्य प्रवृत्तं शास्त्रम् इति हरदत्तः ॥ आप०—२-४-८-११

**ज्योतिष्टोमः**— षोडश ऋत्विक्साध्यो यज्ञविशेषः।

**ज्योतिष्मती**— कंगुला इति शान्तिमयूखे।

ज्योतिष्मती च गांधारी निर्गंधा पूर्णकोशिका

इति शौनकः

ज्योतिष्मती लताविशेषः मालकंगनी इति लताफट्करी इति नया फट्की इति च भाषा इति शब्दकल्पद्रुमे।

**ज्योतिष्मान्**- शुक्लपक्षदिवसस्य षष्ठमुहूर्त नाम-कालमाधव-२

**ज्योत्स्निका**— कोशातकी इति समयमयूखे।

निर्णयसिन्धौ च। जहि इति प्रसिद्धफलविशेषः।

व्रीहिषष्टिकमुद्गाश्च फलाय सतिनं पयः।

श्यामाकाश्चैव नीवारागोधूमाद्या व्रते हिताः।

कूष्माण्डालाबूवार्त्ताकपालंकी ज्योत्स्निकास्त्यजेत् ॥

इति पृथ्वीचंद्रोदये अग्निपुराणे इति निर्णयसिंधौ सतिलमिति पाठोऽशुद्धः सतिनमिति शुद्धः।

**ज्वलम्**— कृष्णपक्ष दिवाभागस्य षष्ठो मुहूर्त्तः।

**ज्वलिता**— कृष्णपक्षदिवाभागस्य सप्तमो मुहूर्त्तः

कालमाधव—२

# झ

**झर्झरः**— वाद्यविशेषः झाझ इति प्रसिद्धः।

अथ पणवमृदङ्गदुन्दुभीनां क्रकचमहानकभेरी झर्झराणाम्।

निनदमतिभृशं नराः प्रचक्रुर्लवणजलोद्भवसिंहनाद मिश्रम् ॥ महाभा० द्रोण—३६-३१

**झलः**— व्रात्यक्षत्रियात् सवर्णायां जातः मनुः—१०-२२

"झलायष्टिप्रहरणा मल्ला बाहुयोधिन इति"

इति कुल्लूकः—१२-४५

**झल्लरी**— वाद्यविशेषः।

ब्राह्मण्यां शूद्रसंसर्गाज्जातश्चाण्डाल उच्यते ॥

सीसमाभरणं तस्य कार्ष्णायसमथापि वा।

वध्रीं कण्ठे समाबध्य झल्लरीं कक्षतोऽपि वा ॥

औशनसस्मृतिः।

**झिंटी**— कुरंटकः पुष्पविशेषः।

दासकेरेण्टा इति भाषाप्रसिद्धः ॥

# ट

**टङ्कः**— (१) कपित्थसदृशः काश्मीरदेशप्रसिद्ध इत्याचारे गदाधरः। अहिमारक इति हेमाद्रिः।

(२) पाषाणदारणः "टंकः पाषाणदारण"

इत्यमरः—२-१०-३४

(३) दारणः-कर्मारोपकरणविशेष इति श्रीमूला

कौट०—४-४-२०

(४) परिमाणविशेषः

माषैश्चतुर्भिः शाणः स्याद्धरण स निगद्यते।

टंकः स एव कथितः तद्द्वयं कोल उच्यते ॥

इति भावप्रकाशे मानपरिभाषाप्रकरणे ॥

टंको नीलकपित्थे च खनित्रे टंकनेऽस्त्रियाम् ॥ २४

जंघायां स्त्रीपुमान्कोपे कोषासि ग्रावदारणे ॥

इति मेदिनी—१-२५

(५) संभलदेशजातः अश्वश्च।

संभले शिलष्टजानुश्च पदापश्चाद्बलोपमः।

वर्त्तुलश्चापि ह्रस्वश्च टंको नाम स कीर्त्तितः ॥

इति वीरमित्रोदयलक्षणप्रकाशे।

(६) जंघा इति हेमचंद्रः। टांक इति भाषयाम् ॥

(७) दर्प इति हलायुधः।

**टांकम्**— मद्यविशेषः।

टंकः कपित्थविशेषः तद्भवं मद्यमिति कल्पतरुः।

खार्जूरशब्दो द्रष्टव्यः।

**टिट्टिभः**— पक्षिविशेषः।

क्रव्यादांच्छकुनान् सर्वांस्तथा ग्रामनिवासिनः।

अनिर्दिष्टांश्चैकशफांष्टिट्टिभं च विवर्जयेत् ॥

मनुः—५-११

# ठ

**ठकः**— धूर्त्तः।

ठकोधूर्त्त इति शूलपाणिः।

रजकश्चर्मकृच्चैव व्याधजालोपजीविनौ।

निर्णेजकः सौनिकश्च ठकः शैलुषकस्तथा ॥

मुखे भगस्तथा श्वा च वनिता सर्ववर्णगा।

चक्री ध्वजी वध्यघाती ग्राम्यशूकरकुक्कुटौ ॥

एभिर्यदंगं संस्पृष्टं शिरोवर्जं द्विजातिषु।

तोयेन क्षालनं कृत्वा आचान्तः शुचितामियात् ॥

इति प्रायश्चित्तविवेके (४७३) शातातपः मित्रमिश्रस्तु "निर्णेजकः सौनिकश्च ठकः" इति स्थाने चैलनिर्णेजकश्चैव नटः इति स्वयं पठित्वा प्रायश्चित्तविवेकपाठमित्थमुद्धरति यथा— चैवेत्यत्र सौचिरिति नट इत्यत्र टक इति

प्राश्चित्तविवेके पाठः व्याख्यातं च सौचिः सूच्याजीवी टको धूर्त्तः इति (२०७) मुद्रित प्रायश्चित्तविवेक-पुस्तके तु ॥ चैलनिर्णेजकः सौचिः टकः इति पाठो नास्ति। अत्र प्रदर्शित पाठो विद्यते।

उत्कलादिषु तु वञ्चकार्थे ठकशब्दो व्यवह्रियते ॥

# ड

**डामरम्**— डामरं परराजाद्युपप्लव इति माधवः।

परवात्याद्युपप्लव इति पाठान्तरम् ॥ पराशरः-६-५३

डामरः परसैन्यकृतोपद्रवादिः इति माधवाचार्याः १०-१५

डामरे समरे वापि दुर्भिक्षे वा जनक्षये।
वन्दीग्राहे भयार्त्तौ वा सदा स्वस्त्रीं निरीक्षयेत् ॥

पराशरः—१०-१५

**डिड्डिकः**— क्षुद्रमूषिकः इति धर्मकोशे।

चुचुन्दरिरिति गोविन्दस्वामी बौधा०—१-१०-१९-८

हंस-भासबर्हिण-चक्रवाक-प्रचलाक-काकोलूक-कण्टक डिड्डिकमण्डूकडेरिकाश्वबभ्रुनकुलादीनां वधे शूद्रवत्।

**डिण्डिमः**— वाद्यविशेषः ढोल इति भाषायाम्।

डिं डिं इति शब्दं मातीति डिण्डिमः।

डिंडिमः पणवस्तथेति हलायुधः ॥ का—१

भेरीश्चाप्यहनन् दृष्टा डिंडिमाश्च सहस्रशः।

इति महाभारते—७-१९३-४४

नमो दण्डाय चण्डाय अण्डायोत्पत्तिहेतवे।
डिण्डिमासक्तहस्ताय दण्डिमुण्डायते नमः ॥

वामनपुराणे—४७-७३

**डिंबः**— (१) बहुजनसंकुलः अशस्त्रकलहो वेति मेधातिथिः

डिंबाहवहतानां च विद्युता पार्थिवेन च।
गोब्राह्मणस्य चैवार्थे यस्य चेच्छति पार्थिवः ॥

मनुः—५-९४

डिभ इति पाठान्तरं

तत्र नृपतिरहितं युद्धमिति गदाधरराजगुरुः-कुल्लूकश्च

विप्लव इति हलायुधकोशे का—१

बुधैर्डमरो डिम्बश्च विप्लवः कथितः इति

अस्यैव डिम्बशब्दस्य साम्प्रतिकदङ्गाशब्दोऽपभ्रंश इति सम्भाव्यते।

**डिंभः**— शिशुः मूर्खश्च "डिम्भौ तु शिशुबालिशौ"

इत्यमरः—३-३-१३४

उत्कलेषु शिशुशब्दार्थे डिम्बशब्दस्य प्रचलनमस्ति ॥

डिम्ब इत्यस्य डिम्भ इति पाठभेदोऽपि।

**डुंडुभः**— हत्वा मूषकमार्जारसर्पाजगरडुंडुभान्।
कृसरं भोजयेद् विप्रान् लोहदण्डश्च दक्षिणा ॥

इति पराशरः—६-६

डुण्डुभो निर्विषद्विमुखसर्प इति व्याख्यासुधायाम् ॥

अमरः—१-८-५

उत्कलेषु तु एकमुखे प्रायेण जलचरे निर्विषसर्पविशेषे धण्ड इत्याख्या मन्ये स एव ॥

**डेरिका**— गन्धमूषिका इति हरदत्तः।

आप०—१-९-२५-१३

**डोमः**— जातिविशेषः।

चाण्डालं चैव डोमश्च श्वानकं च तथा इति।

दण्डीरश्चैव भण्डीरो भुवुण्डश्च वृथाश्रमी ।
वृथामुण्डी लिङ्गधारी समा एते यशस्विभिः ॥
इति मत्स्यसूक्ते ।

**डोम्बः**— (१) डोम इति प्रसिद्ध जातिविशेषः ।
निषादवनितासूते चण्डालाड्डोमसंज्ञितम् इत्याचारेन्दौ
(२) उग्रायां क्षत्रियात् डोम्बः ।
उग्रायां त्वाद्यै पौष्टिक डोम्बभिक्षु शिण्डिका जायन्ते"
इति व्यवहारकल्पतरौ पैठीनसिः—८१६

**डोरम्**— रज्जुमात्रम् ।
योक्त्रदामकडोरैश्च कण्ठाभरणभूषणैः ।
गृहे वापि वने वापि वद्ध स्याद्गौर्मृता यदि ॥
तदेव बन्धनं विद्यात् कामाकामकृतं च तत् ॥
पराशरः—६-७

**डोरकम्**— डोर इति भाषाप्रसिद्धम् ।
तस्याग्रतो दृढ़सूत्रं कुङ्कुमाक्तं सुडोरकम् ।
चतुर्दशग्रन्थियुतं वामे करतले न्यसेत् ॥
इति भविष्ये अनन्तव्रतकथायाम्—३८ ।

## ढ़

**ढ़ोण्डाः**— ढ़ौंडाख्या राक्षसी इति मयूखे ।
सा होलिकायां तालध्वनिभिः किलकिलाशद्बैश्च
निरा क्रियते ।
तेन शब्देन सा पापा होमेन च निराकृता ।
इति निर्णयसिन्धौ तु ढुण्डा इत्युच्यते—१६८

## ण

**णः**— (१) वलम् ।
"णकारो वलमित्युक्तः" वृद्धहारीतस्मृतिः—६-२१६
(२) निवृत्तिः "णश्च निवृत्तिवाचक" वृद्धहारीतः-३०३

## त

**तक्रम्**— पानाम्बुयुक्त दधि घोल इति भाषायाम् ।
तक्रं ह्य दश्विन्मथितपादाम्बुर्धाम्बुनिर्जलम्
अमरः—२-६-५३
सूत्रकार्पासकिण्वानां गोमयस्य गुड़स्य च ।
दध्नः क्षीरस्य तक्रस्य पानीयस्य तृणस्य च ॥
इत्यादि मनुः—८-३२६

**तक्षकः**— शिल्पजीवी जातिविशेषः ।
वर्धकिः इति हेमाद्रिः
सूचकाद् विप्रकन्यायां जातस्तक्षक उच्यते ।
शिल्पकर्माणि चान्यानि प्रासादलक्षणं तथा ॥
४३ औशनसस्मृतिः ।

**तक्षा**— वर्द्धकिरिति हेमाद्रिः ।
शूद्राद्वैश्यायां जातस्तक्षा इति गौतमीयवृत्तौ हरदत्तः
वैश्यात्क्षत्रियायां जातो महिष्यः तस्मात्करण्यां
जातो रथकारः स तक्षेत्यन्ये ।

**तगरम्**— गंधतगरम् पिण्डतगर इति कोंकणे प्रसिद्ध इति
शब्दकल्पद्रुमः ।

**तगरः**- पुष्पवृक्षविशेषः टगर इयि भाषा इति शद्बकल्पद्रुमे ।

"प्रियंगुचन्दनीभ्यां च बिल्वेन तगरेण च पृथगेवानु-
लिंपेत केशरेण च बुद्धिमान्" महाभारते-१३-१०४-८५

तगरं विष्णुदेयपुष्पमिति शेफाली शब्दे
कुब्जक शब्देऽपि द्रष्टव्यम् ।

तगरः गंधतगर इति मित्रमिश्रः श्राद्धप्रकाशे—१६०

**तटाबन्धः**— प्रौढ़तटाक इति माधवः

कूपखाते तटाबन्धे नदीबन्धे प्रपासु च ।
पानीयेषु विपन्नानां प्रायश्चित्तं च विद्यते ॥

इति पराशरः—९-३९

**तटाकम्**— तड़ागशब्दस्य पाठभेदः इति मन्ये ।

पल्वलानि तटाकानि सरांसि सरितस्तथा ॥
इति-रामायण-सुन्दर—१३-४
नद्योऽनूपवनान्ताश्च दुर्गाश्च धरणीधराः ॥

**तड़ागः**— महत्त्वद्वयहस्ताधिकपरिमाणः कृत्रिमो जलाशयः

तड़ाग इति हेमाद्रिः ।
पद्माकरस्तड़ागोऽस्त्री पार०—१-१०-२८
नदीषु देवखातेषु तड़ागेषु सरःसु च ।
स्नानं समाचरेन्नित्यं गर्भप्रस्रवणेषु च ॥

मनुः—४-२०३

**तण्डुलदिव्यम्**— देवतास्नानपानीयस्निग्धपानीयभक्षणे ।
शुद्धनिष्ठीवनात्शुद्धोनियम्योऽशुचिरन्यथा ॥

इति दिव्यतत्त्वे कात्यायनः ।

तण्डुलानां प्रवक्ष्यामि विधिं भक्षणनोदितम् ।
चौरे तु तण्डुला देया नान्यतीति विनिश्चयः ॥
तण्डुलान् कारयेच्छुक्लांगल्लेर्नान्यस्य कस्यचित् ।
मृण्मये भाजने कृत्वा आदित्यस्याग्रतः शुचि ।
स्नानोदकेन सम्मिश्रान् रात्रौ तत्रैव वासयेत्
प्राङ्मुखे पोषितं स्नातं शिरोरोपितपत्रकम् ॥

इत्यादि मिताक्षरायाम्—२-११३

**तण्डुलीयकम्**— शाकविशेषः ।

अल्पमारिष इति हेमाद्रिः श्राद्ध—५५७

कालशाकं तन्दुलीयं वास्तुकं मूलकं तथा ।
शाकमारण्यकं चैव दद्यात् पुष्पाण्यमूनि च ॥

इति हेमाद्रौ ब्राह्मे ।

आरण्यकशाकानि पञ्चीचुञ्चुप्रभृतीनि ।

इति हेमाद्रिः ।

कंटामारिष इति प्रसिद्धः । तस्य मेघनादोदनामानि
आयुर्वेदे प्रसिद्धानि इति वैद्याः ।
विडंगमिति राजनिर्घण्ट इति शब्दकल्पद्रुमः
तन्दुलीयशब्दे नास्यैव ग्रहणमपरस्य वा ॥

**तत्परः**— सूक्ष्मकालमानविशेषः ।

सुस्थे नरे सुखासीने यावत्स्पन्दतिलोचनम् ।
तस्य त्रिंशत्तमोभागस्तत्परः परिकीर्त्तितः ॥

इति कालसारे संक्रान्तिप्रकरणे देवीपुराणम्

देवी—२४-२८

मुद्रितदेवीपुराणे तु तत्परमिति पाठः—१२४-२४

**तदात्वम्**— वर्त्तमानकालः, तत्कालः ।

आयत्यां गुणदोषज्ञस्तदात्वे क्षिप्रनिश्चयः ।
अतीते कार्यशेषज्ञः शत्रुभिर्नाभिभूयते ॥

मनुः—७-१७९

**तनुकृतम्**— ऋग्विशेषः ।
कृत्नुर्भार्गव ऋषिः सोमोदेवता गायत्री ऋ० म—८-७१-३
"त्वं सोमतनूकृद्भ्यो द्वेषेभ्योऽन्यकृतेभ्यः ॥
उरुयन्तसि वरूथम् ।

**तन्तीयज्ञः**— यदाखले धान्यमानयन्ति तदाखलयज्ञः ।
उत्पूते धान्ये तत्र तन्तीयज्ञः इति अष्टावक्रभाष्ये ।
आयोजन-पर्ययन-प्रवपन-प्रलपन-सीतायज्ञ-खलयज्ञ
तन्तीयज्ञ-नहुयज्ञेष्वेता देवता इति मानव गृ०-२-१०-७

**तन्तुः**— (१) अपत्यम् ।
यद्यर्थिता तु दारैः स्यात्क्लीवादीनां कथंचन ।
तेषामुत्पन्नतन्तुनामपत्यं दायमर्हति ॥
मनुः—९-२०३

(२) सूत्रम् ।
तन्त्रं चेदं विश्वरूपे युवत्यौ वयतस्तन्तून् सततं वर्त्तयन्त्यौ
कृष्णान् सितांश्चैव विवर्त्तयन्त्यौ भूतान्यजस्रं
भुवनानि चैव ॥ महाभा० आदि—३-१४७

**तन्तुवायः**- सूचीशिल्पोपजीवीति विज्ञानेश्वरः याज्ञ-१-१६३
तन्ती इति सांप्रतिकव्यवहारः ।
तन्तुवायो दशपलं दद्यादेकपलाधिकम् ।
अतोऽन्यथावर्त्तमानो दाप्यो द्वादशकं दमम् ॥
मनुः—८-३९७

**तन्त्रम्**— (१) अनुष्ठानम् ।
शङ्कापिहितचारित्रो यः स्वाभिप्रायमाश्रितः ।
शास्त्रातिगः स्मृतीर्मूढो धर्मतन्त्रोपरोधनात् ॥
बौधा०—१-५-१०-८

(२) शास्त्रम् ।
आम्नाये स्मृतितंत्रे च लोकाचारे च सूरिभिः ।
शरीरार्धं स्मृता जाया पुण्यापुण्यफले समा ॥
इति बृहस्पतिः ।
अथवा मार्गपाल्यह्नि कालो गोयज्ञ कर्मणः ।
नीराजनेऽह्नि चाश्वानामिति तत्रान्तरे विधिः ॥
इति चन्द्रकान्तभाष्ये गोभिलगृ०—३-६-१५
(३) तंत्रमनुष्ठानप्रकार इति श्रीधरस्वामी ।
नामधेयानि मन्त्राश्च दक्षिणाश्च व्रतानि च ।
देवतानुक्रमः कल्पः सङ्कल्पस्तन्त्रमेव च ॥
इति श्रीमद्भागवत—२-६-२५
(४) कर्म "यज्ञतन्त्रे वितते ऋत्विजे कर्म कुर्वते"
वसिष्ठः—१-३१
(५) लोकव्यवहार इति गौतमीयटीकायां हरदत्तः
साक्षिसभ्यराजकर्त्तृषु दोषो धर्मतन्त्र-पीडायाम् ॥
गौतमः—२-४-११
श्रुत्वा त्वं प्रतिपद्यस्व प्राज्ञैः सह पुरोहितैः ।
आपद्धर्मार्थकुशलैर्लोकतन्त्रमवेक्ष्य च ॥
इति महाभा०—१-१०३-२६
(६) देशकालकर्त्तॄणामैक्येन अनेकेषां कर्मणामेकदा-
समाधानम् ।
तन्त्रशब्दः समुदायवाचक इति विज्ञानेश्वरः
द्वौ दैवे प्राक्त्रयः पित्र्ये उदगेकैकमेव वा ।
मातामहानामप्येवं तन्त्रं वा वैश्वदेविकम् ॥
याज्ञ०—१-२२८
अर्घ्येऽक्षय्योदके चैव पिण्डदानेऽवनेजने ।
तन्त्रस्य तु निवृत्तिः स्यात् स्वधावाचन एव च ॥
गोभिलस्मृतिः—३-७४

(७) वयनसाधनम् "तदापश्यत् स्त्रियौतंत्रे अधिरोप्य सुवेमे पटवयन्त्यौ" महाभा०—१-३-१४४
(८) तन्त्राख्यशास्त्रविशेषः।
कटकारस्ततः पश्चान्नारायणगणाः स्मृताः। ४६
शाखावैखानसेनोक्तास्तन्त्रमार्गविधिक्रियाः।
निषेकादिश्मशानान्ताः क्रियाः पूजाङ्गसूचिकाः। ४७
पञ्चरात्रेण वा प्राप्तं प्रोक्तं धर्मं समाचरेत्॥
औशनसस्मृतिः।
(९) आचारः सर्वानुपायानलसंप्रधाय समुद्धरेत्स्वस्य कुलस्य तंत्रम्॥ महाभा०—१३-४८-६
(१०) राज्ञः स्वराष्ट्रचिन्ता। तन्त्रः स्वराष्ट्रचिन्तायामवापः परचिंतने इति वैजयन्ती॥
(११) विवक्षा, सिद्धान्तः।
वर्षे वर्षे तु या नारी कृष्णजन्माष्टमी व्रतम्।
न करोति महाप्राज्ञ व्याली भवति कानने॥ इति × × × अत्र स्त्रीलिङ्गमतन्त्रम्।
इति निर्णयसिन्धौ-२ पृ—९८
अत्र अतन्त्रमविवक्षितमित्यर्थः।
लिङ्गं च वचनं देशः कालस्य कर्मणः फलम्।
मीमांसाकुशलाः प्राहुरविवक्षितपञ्चकम्॥ इत्युक्तेः
तंत्रं प्रधाने सिद्धान्ते सूत्रवाये परिच्छदे-
अमरः—३-३-१८५
(१२) प्रमाणम् अतीवचनार्थो परिज्ञानकृतो व्यवहारः प्रमाणपरतन्त्रैरतन्त्रीकर्त्तव्यः इति दायभागे।
अत्र तंत्रं प्रमाणमिति श्रीनाथः।
(१३) अङ्गम्।
धर्मतन्त्रपीड़ायां तस्याकरणे दोषः॥ गौतमः—२-६-३२
द्रव्यादानं विवाहसिद्धयर्थं धर्मतन्त्रसंयोगे च शूद्रात्"
गौतमः—२-६-२४
अत्र धर्मस्य पशुबन्धादेः प्रवृत्तस्य यत्तन्त्रमङ्गमश्वादि"
इति हरदत्तः।
(१४) प्रधानः।
रक्षेत् कन्यां पिता विन्नां पतिः पुत्रास्तु वार्द्धके।
अभावे ज्ञातयस्तेषां न स्वातन्त्र्यं क्वचित् स्त्रियाः॥
(१५) तत्त्वम्।
विदितं ते महाराज लोकतन्त्रं नराधिप।
तस्माल्लोभकृतं किंचित्तव तात न विद्यते॥
महाभा० उद्—८-३३

**तन्त्रहोमः**— परिसमूहनवर्हिरास्तरणाद्यङ्ग—विस्तारयुक्ता होमाः। क्षिप्रहोमशब्दो द्रष्टव्यः।

**तन्त्री**— रज्जुः वत्सतंत्रीं विततां नातिक्रमेत्
इति वसिष्ठः—१२-६
न लंघयेद्वत्सतन्त्रीमिति मनुः—४-३८
तन्ती इति गोभिलीये पाठः।
तन्त्री प्रसार्य्यमाणां बद्धवत्सां चानुमन्त्रयेतेयं तन्ती गवां मातेति। गोभिलगृ०—३-६-७

**तन्दुलीयम्**— सूक्ष्मपत्रमिति हेमाद्रिः।
महाराष्ट्राणां माठ इति प्रसिद्धम्।
ब्राह्मे—
कालशाकं तन्दुलीयं वास्तुकं मूलकं तथा।
शाकमारण्यकं चैव दद्यात् श्राद्धेषु नित्यशः॥
मूलपुराणे तु शाकमारण्यकं चापि दद्यात्पुष्पाण्यमुनिच इति पाठः।
ब्रह्म-पु०—२२०-१६१

**तंद्रा**— आलस्यम् ।

निद्रार्त्तस्येव यस्येहा तस्य तंद्रा विनिर्दिशेत्

इति माधवकरः ।

वेदोदितं स्वकं कर्म नित्यं कुर्य्यादतन्द्रितः ।

तद्धि कुर्वन् यथाशक्ति प्राप्नोति परमां गतिम् ॥

मनुः—४-१४

**तन्द्री**— तन्द्रा ।

द्यूतं पुस्तकशुश्रूषा नाटकासक्तिरेव च ।

स्त्रियस्तन्द्री च निद्रा च विद्याविघ्नकराणि षट् ॥

नारदः- स्मृतिचन्द्रिका, संस्कार—१३६

**तन्मात्रम्**— शब्दस्पर्शरूपरसगन्धाः "तास्वेव भूतमात्रासु प्रलीयन्ते विभागशः" मनुः—१२-१७

प्रकृतौ क्षोभमापन्ने पुरुषाख्ये जगद्गुरौ ।

महान् प्रादुरभूद् बुद्धिस्ततोऽहं समवर्त्तत ॥ ३-३

अहंकाराच्च सूक्ष्माणि तन्मात्राणीन्द्रियाणि च ।

तन्मात्रेभ्यो हि भूतानि जातानि जगतः कृते ॥ ३४

बृहन्नारदीय-पु०—३-३४

**तपः**-(१) कृच्छ्राद्याचरणम् सान्तो नपुंसकलिङ्गोऽयं शब्दः । वैधक्लेशजनकं कर्म इति शब्दकल्पद्रुमे । व्रतोपवासनियमैः शरीरोत्तापनं तपः इति परिभाषाप्रकाशे-३४ देवलः हेमाद्रौ परिशेषे च—३४७

नियमेषु तपः शब्दः इति आपस्तम्बः—१-२-४-१

सत्यं भूतहितं प्रोक्तं मनसो दमनं दमः ।

तपः स्वधर्मवर्त्तित्वं शौचं संकरवर्जितम् ॥

इति परिभाषा प्रकाशे ३४ महाभारतवचनम् ।

तपः स्वधर्मवृत्तितत्त्वमिति कुल्लूकः मनुः—१२-१०४

यद्दुस्तरं यद्दुरापं यद्दुर्गं यच्च दुष्करम् ॥

सर्वं तु तपसा साध्यं तपो हि दुरतिक्रमम् ॥

मनुः—१२-२३८

उपवासपराकादिकृच्छ्रचान्द्रायणादिभिः ।

शरीरशोषणं प्राहुस्तापसास्तप उत्तमम् ॥

कूर्म० पु०—२-११३

(२) माघो मासः (अकारान्तपुंलिङ्गः)

"तपश्च तपस्यश्च शैशिरावृतू" शुक्लयजुः—१५-५७

विष्णुधर्मोत्तरेपि—

ऊर्जाख्यः कार्त्तिकः प्रोक्तो मार्गशीर्षः सहस्तथा ।

सहस्यः पौष इत्युक्तो माघः स्यात्तप एव च ॥ -३-६-५

सान्तोऽप्ययं पुंसि "तपः सापे" अमरः—१-४-१५

**तपःपरः**— अवस्थाविशेषविशिष्टो ब्राह्मणः ।

मात्रश्च ब्राह्मणश्चैव श्रोत्रियश्च तपः परः ।

अनूचानस्तथा भ्रूण ऋषिकल्पं ऋषिर्मुनिः ॥

इत्येतेऽष्टौ समुद्दिष्टा ब्राह्मणाः प्रथमं श्रुतौ ।

तेषां तपःपरः श्रेष्ठो विद्यावृत्तविशेषतः ॥ इति देवलः ।

स्कन्दपुराणपाठानुसारेण स्वातन्त्र्येण तपःपर इति भेदो नास्ति ।

तत्र ततःपरमिति पाठदर्शनात् स्कंद० माहे-२-५-११०

**तपन्**— शुक्लपक्षदिवसस्य नवमो मुहूर्त्तः ।

कृष्णपक्षदिवसस्य अष्टमो मुहूर्त्तश्च ॥ कालमाधव—२

**तपस्यः**— फाल्गुनो मासः "तपश्च तपस्यश्च वासन्तिकावृतू" शुक्लयजुः—१५-५७

शुचावूर्जे तपस्ये वा या द्वितीया भवेत्तिथिः ।
चातुर्मास्यद्वितीयास्ताः प्रवदन्ति मनीषिणः ॥

**तपस्वत्**— कृष्णपक्षपञ्चदशीदिवसभागमात्रम्
कालमाधवः—२

**तपा**— माघमासः ।

**तपोनिष्ठः**— (१) तपस्वी ।
(२) वानप्रस्थः ।
ज्ञाननिष्ठा हि यतयस्तपोनिष्ठा वनाश्रमा ।
कर्मनिष्ठा हि गृहिण आद्याः स्वाध्याय निष्ठिता ॥ इति
हेमाद्रौ श्राद्धकल्पे—४१७

**तप्तकुम्भः**— नरकविशेषः ।
अतः परं भीमतरं तप्तकुम्भं निबोध मे ।
समन्ततस्तप्तकुम्भा वह्निज्वालासमावृताः ।
तेषु दुष्कृतकर्माणो याम्यैः क्षिप्ता ह्यधोमुखाः ॥
क्वाथ्यन्तेविस्फुटद्गात्रगलन्मज्जजलाविलाः ॥
इत्यादि मार्कण्डेये—१२-३४

**तप्तकृच्छ्रः**— कृच्छ्रविशेषः ।
तप्तकृच्छ्रं चरन्विप्रो जलक्षीरघृतानिलान् ।
प्रतित्र्यहं पिबेदुष्णान् सकृत् स्नायी समाहितः ॥
मनु—११-२१४
षट्पलं तु पिबेदम्भस्त्रिपलं तु पयः पिबेत् ॥
पलमेकं पिबेत्सर्पिस्तप्तकृच्छ्रं विधीयते ॥
इति पराशरः ।
तप्तक्षीरघृताम्बूनामेकैकं प्रत्यहं पिबेत् ।
एकरात्रोपवासश्च तप्तकृच्छ्र उदाहृतः ॥
याज्ञ०—३-३१७

**तप्तमाषकम्**— दिव्यविशेषः ।
तप्तघृतादिभ्यः सुवर्णमाषकस्य उद्धरणम् ।
अथातः संप्रवक्ष्यामि तप्तमाषकनिर्णयम् । ७३
कारयेदायसं पात्रं ताम्रं वा षोडशाङ्गुलम् ॥
चतुरङ्गुलखातं तु मृण्मयं वापि कारयेत् ॥ ७४
पूरयेद् घृततैलाभ्यां पलैर्विंशतिभिस्ततः ।
सुतप्ते निक्षिपेत्तत्र सुवर्णस्य तु माषकम् ॥ ७५
वह्न्युक्तं विन्यसेन्मन्त्रमभिशस्तस्यमूर्द्धनि ।
अङ्गुष्ठाङ्गुलियोगेन तप्तमाषं समुद्धरेत् ॥ ७६
शुद्धं ज्ञेयमदग्धं तु विष्फोटादिविवर्जितम् ।
विष्णुधर्मोत्तर-पु०—३-३२८-७७

**तमः**— गुणविशेषः अज्ञानमित्यस्यार्थः ।
"सत्वं ज्ञानं तमोऽज्ञानं रागद्वेषौ रजः स्मृतम्"
मनुः—१२-२६
पुनश्च—
यत्तु स्यान्मोहसंयुक्तमव्यक्तं विषयात्मकम् ।
अप्रतर्क्यमविज्ञेयं तमस्तदुपधारयेत् ॥ मनुः—१२-२९
महाभारत, शान्ति—२४७-२२
(२) अन्धकारः ।
आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् ॥
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः ॥ मनुः—१-५

**तरः**— (१) तरणम् ।
गर्भिणी तु द्विमासादिस्तथा प्रव्रजितो मुनिः ।

ब्राह्मणा लिङ्गिनश्चैव न दाप्यास्तारिकं तरे ॥

मनुः—८-४०७

अत्र तरे तरविषये इति कुल्लूकः ।

तरे कैवर्त्तै इति भावार्थचन्द्रिका ।

कुल्लूककृतमर्थं समीचीनं मन्ये ॥

तरंश्चेद् भयं शङ्केद् वासिष्ठं सूक्तं जपेत् समुद्रज्येष्ठा (ऋक् म०—७-४६) इति ।

शाङ्खायन० गृ०—४-१४

(२) जलयानशुल्कः ।

निरुदकस्तरोमाष्यः वसिष्ठः—१६-२२

(३) बलम् ।

निहत्य शत्रूंस्तरसा समृद्धान्
शक्रो यथा दैत्यबलानि संख्ये ।
कः पार्थ शोचेन्निरतः स्वधर्मे
पूर्वैः स्मृते पार्थिव विष्टजुष्टे ॥

महाभा० शान्ति—१२-३७

**तरक्षुः**— क्षुद्रव्याघ्रः इति गोविन्दानन्दः ।

मृगमहिषवराहकुंजरगण्डकतरक्षुत्रृक्षवानरवधे
अहोरात्रोपोषितश्चीर्णाते घृतं दद्यात् ॥

**तरंगः**— काचपात्रमिति आह्निकप्रकाशे मित्रमिश्रः ।

शंखशुक्ति तरंगाश्च यच्चान्यत्पानभाजनम् ।
दक्षिणेनैव गृह्णीयान्न वामेन कदाचन ॥ इति पुलस्त्यः

प्रायः—३३१

**तरत्संमदी तरत्समन्दीयम् तरत्समाः** — तरत्समंदी धावति इत्याद्या ऋचः ऋ० अ०—७-१-१५ अवत्सारः काश्यपः । पवमानः सोमः ।

गायत्री । तरत्समन्दी धावति धारसुतस्यान्धसः
तरत्समन्दी धावति । उस्रावेदवसूनां मर्त्तस्य देव्यवसः
तरत्समन्दी धावति ॥
वत्सयोः पुरुषन्त्योशमहस्राणि दद्महे ।
तरत्समन्दी धावति ॥
आपयोस्त्रिशतं तना सहस्राणि च दद्महे ।
तरत्समन्दी धावति ॥

**तरसम्**— (१) मांसम् ।

अगस्त्यो वर्षसाहस्रिके सत्रे मृगयां चकार ।
तस्यासंस्तरसमयाः पुरोडाशा मृगपक्षिणां प्रशस्तानाम्

वसिष्ठः—१४-१५

**तरसमयाः**— मांसविकाराः ।

**तरिकः**— जलयानशुल्कग्रहणाधिकारी ।

तरिकः स्थलजशुल्कं गृह्णन् दाप्यः पणान्दश ।
ब्राह्मणप्रातिवेश्यानामेतदेवानिमन्त्रणे ॥ याज्ञ०-२-२६३

अत्र तीर्यते अनेनेति तरिः नावादिः तज्जन्यशुल्काऽधिकृतस्तरिक इति विज्ञानेश्वरः ।

**तर्कः**— (१) अनुमानम् न्याय्याधिगमे तर्कोऽभ्युपायः

गौ० ध०—२-२-२३

आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसंधत्ते स धर्मो वेदनेतरः ॥

मनुः—१२-१०६

अत्र तर्कः मीमांसा इति कुल्लूकः ।

(२) तर्कोऽर्थवादः ।

"विधिर्विधेयस्तर्कश्च वेदः" पारस्कर-गृ०—२-६-५

अस्य सूत्रस्य व्याखाने तर्कः अर्थवाद

इति कर्कोपाध्यायः हरिहरगदाधरौ च ॥

**तर्ककः**— याचकः ।

तथानुजीविनो भृत्यान् संश्रितानतिथीनपि ।

कामैः संतर्पयामास कृपणांस्तर्ककानपि ॥

महाभा० शान्ति—४५-६

तर्ककः प्राश्निक इति नीलकण्ठः ।

**तर्कुः**— सूत्रकर्त्तनसाधनम् "ताकुडि" इति प्रसिद्धम्

तर्कुटी सूत्रला इति हारावली ।

पूर्णचात्रेण-सूत्रेण पूर्णं चात्रं सूत्रकर्त्तनसाधनं

तर्कुरिति यावत् ॥ इति पारस्करगृह्यसूत्रभाष्ये

हरिहरः—१-१५-४

**तर्जनी**— करस्य वृद्धाङ्गुलिसमीपस्था अंगुलिः ।

देशिनी इति यस्या नामान्तरम् ।

तर्जन्यङ्गुष्ठयोगेन स्पृशेन्नासापुटद्वयम् ।

अङ्गुष्ठमध्यायोगेन स्पृशेन्नेत्रद्वयं ततः ॥ ७

अङ्गुष्ठानामिकाभ्यां तु श्रवणौ समुपस्पृशेत् ।

कनिष्ठाङ्गुष्ठयोगेन स्पृशेत् स्कन्धद्वयं ततः ॥

सर्वासामेव योगेन नाभिं च हृदयं तथा ।

संस्पृशेच्च तथा मूर्ध्नि एष आचमने विधिः ॥

शङ्खः—१०-६

**तर्म**— छिद्रम् ।

युगतर्मसु शमीशाखामवदधाति ।

काठक-गृ०— ३-२-३

अत्र युगस्य तर्मसु छिद्रेषु शमीशाखामवदधाति ।

इति देवपालः ।

**तर्पणम्**— जलदानेन देवर्षि पितॄणां सन्तोषविधानम् ।

नित्यं स्नात्वा शुचिः कुर्याद्देवर्षिपितृतर्पणम् ।

देवताभ्यर्च्चनं चैव समिदाधानमेव च ॥

मनुः—२-१७६

**तर्पयन्ती**— कृष्णपक्षदशमी रात्रिः कालमाधवः—२

**तलम्** (पुंनपुं)— (१) हस्तमध्यम् । लेडि इति भाषायां प्रसिद्धम् ।

नाभिं पाणितलेन तु ॥ मनुः—४-१४३

हस्ताभ्यन्तरं तलमाहेति मित्रमिश्रः आह्निकप्रकाशे–६६

(२) अधः ।

अङ्गुष्ठमूलस्य तले ब्राह्मं तीर्थं प्रचक्षते ।

कायमङ्गुलि मूलेऽग्रे दैवं पित्र्यं तयोरधः ॥

मनु—२-५६

(३) चपेटः पाणितलेन प्रहारः चपेट इति यावत् ।

"तलप्रहाराभिहतो निपपात महितले"

मार्कण्डेय—१०-१७

ततः क्रोधाभिभूतेन शङ्करेण महात्मना ।

तलप्रहारैरमरा बहवो विनिपातिताः ॥

वामनपुराण—५-८

(४) स्वरूपम् । अधः स्वरूपयोस्तलम् इति कोशात्

इति कृष्णभट्ट-टीकायाम् ।

लक्ष्मीसहायं कल्पद्रुतलरंजिन गोकुलम् ।

इति निर्णयसिंधौ मंगलाचरणे ।

कल्पद्रुतलं कल्पद्रुमसदृशम् इत्यर्थः ।

**तल्पम्** (अस्त्रियाम्)— शय्या ॥

तं प्रतीतं स्वधर्मेण ब्रह्मदायहरं पितुः ।

स्त्रग्विणं तल्प आसीनमर्हयेत्प्रथमं गवा ॥ इति

मनुः—३-३

**तसरी**— तसर इति प्रसिद्धं वस्त्रसाधनं वस्तु ।

**तस्करः**— चौरः ॥

द्विविधांस्तस्करान् विद्यात्परद्रव्यापहारकान् ।

प्रकाशांश्चाप्रकाशांश्च चारचक्षुर्महीपतिः ॥

मनुः—९-२५६

**तापसव्यंजनः**— गुप्तचरविशेषः ।

मुंडो जटिलो वा वृत्तिकामस्तापसव्यंजन इति

कुल्लूकः—७-१५४

**तापी**— बुद्ध इति पूजाप्रकाशे मित्रमिश्रः—८२

सौरं मगेभ्यः शाकेभ्यस्तापिने यन्निवेदितम् ।

स्त्रीभ्यश्च देयं मातृभ्यो यत्तु किंचिन्निवेदितम् ॥

इयि हरिनाथीये स्मृतिसारे ।

**तामली**— तमली मूलोदकसंज्ञो वृक्षः तस्य त्वचा ग्रथिता

तामली मेखला ॥ सैरीतामलीवेत्येके

आप०—१-१-२-३७

**तामसः**—चतुर्थो मनुः

स्वारोचिषश्चोत्तमश्च तामसो रैवतस्तथा ।

चाक्षुषश्च महातेजा विवस्वत्सुत एव च ॥

मनुः—१-६२

**तामिस्त्रम्**— नरकविशेषः। नरकशब्दे द्रष्टव्यः ।

**ताम्बलः**— शणः । गोभिल-गृ०—२-१०-१०

मुञ्जकाशताम्बल्यो रशना इति अत्र ताम्बलः

शण इति चन्द्रकान्तः तासून इति पाठान्तरम् ॥

**ताम्रपट्टम्**— ताम्रनिर्मितपत्रम् ॥

दत्वा भूमिं निबन्धं वा कृत्वा लेख्यं तु कारयेत् ।

आगामिभद्रनृपति परिज्ञानाय पार्थिवः ॥ ३१८

पट्टे वा ताम्रपट्टे वा स्वमुद्रोपरिचिह्नितम् ।

अभिलेख्यात्मनो वंश्यानात्मानं च महीपतिः ॥

याज्ञ०—१-३१९

**ताम्रोपजीवी**— जातिविशेषः ।

आयोगवेन विप्रायां जातास्ताम्रोपजीविनः ।

तस्यैव नृपकन्यायां जातः सूनिक उच्यते ॥

औशनसस्मृतिः—१४

**तारः**— उत्सेधः समविरचिततारायामगात्राणि पात्राणीति

सूरिसर्वस्वे प्र०का०— २२-३३

**तारिकम्**— जलयानशुल्कम् तरशुल्कमिति नंदिनी ।

गर्भिणी तु द्विमासादिस्तथा प्रव्रजितो मुनिः ।

ब्राह्मणा लिङ्गिनश्चैव न दाप्यास्तारिकं तरे ॥

मनुः—८-४०७

**तार्किकवृत्तिः**— हेतुवादजीवनमिति नित्याचारप्रदीपे ।

**तार्य्यम्**— जलयानशुल्कम् "तार्य्यं दाप्यानि सारतः"

मनुः—८-४०५

भाण्डपूर्णानि यानानि तार्य्यं दाप्यानि सारतः ।

रिक्तभाण्डानि यत्किंचित्पुमांसश्चापरिच्छदाः ॥

मनुः—८-४०५

**तालम्**— तालभवं मद्यम् ।
खार्जूरशब्दो द्रष्टव्यः ।

**तालः**— (१) तृणराजः (वृक्षविशेषः)
तृणराजं विदुस्तालमिति मेधातिथिः—५-११८
(२) संगीतशास्त्रप्रसिद्धः ।
वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदः ।
तालज्ञश्चाप्रयासेन मोक्षमार्गं नियच्छति ॥
याज्ञ०—३-११५
ताल इति गीतपरिमाणं कथ्यते इति विज्ञानेश्वरः।
(३) परिमाणविशेषः ।
प्रसारितयोः अंगुष्ठमध्यमयोरन्तरालः
प्रादेशतालगोकर्णास्तर्जन्यादियुते तते ।
अंगुष्ठे सकनिष्ठे स्याद् वितस्तिर्द्वादशाङ्गुला ॥
आचारेन्दौ च—
अङ्गुष्ठादिकनिष्ठान्तं भवेन्मानचतुष्टयम् ।
प्रादेशतालगोकर्णवितस्तिस्तु यथाक्रमम् ॥
आचा०—३५३

**तालकंदः**— तालमूलीति लक्ष्मीधरः ।
भूम्यन्तर्निहिततालफलप्रभवमारग्वध फलाकारं पांड्यदेशादौ प्रसिद्धं मूलं, तालमूलीकंदो वेति हेमाद्रिः।
खर्जूरीतालकंदश्च मृणालं पद्मकेशरम् ।
नारिकेलं कसेरुं च नोच्छिष्टं मनुरब्रवीत् ॥ इति विद्याकरवाजपेयीधृतवचनम् ।

**तालनम्**— हस्तयोरास्फालनमिति हरदत्तः ।
करतालयोः संघर्षेण शब्दकरणमित्यर्थः ।
सन्निहिते मूत्रपुरीषवातकर्मोच्चैर्भाषाहासष्ठीवनदन्तस्कवननिःश्वङ्खणभ्रूक्षेपणतालननिष्ठ्यानीति
आप०—२-२-५-६

**तालवृन्तम्**— तालव्यजनम् इति निर्णयसिन्धुव्याख्याने
वस्त्रव्यजनमिति हेमाद्रिः ।
उदकुंभाम्बुदानं च तालवृन्तं स चन्दनम् ।
त्रिविक्रमस्य प्रीत्यर्थं दातव्यं ज्येष्ठमासि तु ॥
इति वामनपुराणे

**तालावचरः**
**तालावचरणः** } तालवादनजीवी इति श्राद्धकाण्डे लक्ष्मीधरः—८०
तालवादक इति चरतेर्भक्षणार्थत्वात् तालफलस्य
तालनिर्यासस्य भक्षयिता वा इति हेमाद्रिः—४६७
तालावचरो नट इति श्रीमूला कौट०—३-४-२२
तालवचरणः तालवादजीवी इति हेमाद्रिः—८०

**तालु**-(क्ली)— जिह्वाधिष्ठानभूतप्रदेश इति वैद्यकशब्दसिन्धौ
मुखतस्तालुनिर्भिन्नं जिह्वा तत्रोपजायते ॥
इति श्रीभागवते ।
तालूदरं वस्तिशीर्षं चिबुके गलशुण्डिके ।
अवटश्चैवमेतानि स्थनान्यत्र शरीरके ॥
इति प्राणायतनरूपेण तालुयोगेश्वरेण गणितम् ॥
याज्ञ०—३-९८

**तालूषकम्**— काकुदमिति विज्ञानेश्वरः याज्ञ०—३-८७

**तितउ**— चालनी । चालुणी इति भाषायाम् ।
सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत
अत्रा सखायः सख्यानि जानते भद्रैषां
लक्ष्मीर्निहिताधि वाचि ॥ ऋ०—१०-७१-२

**तितिक्षा**— क्षमा

स्वदारेषु च सन्तोषः सत्यं नित्यानसूयया ।
आत्मज्ञानं तितिक्षा च धर्मः साधारणो नृप ॥

कल्परत्नाकरे—१४

**तित्तिरिः**— पक्षिविशेषः । "तित्तिरिः कृष्णवर्णः स्यात् स तु गौरः कपिंजलः" इति भावप्रकाशे ।

कौशेयं तित्तिरिर्हृत्वा क्षौमं हृत्वा तु दर्दुरः ।
कार्पासतान्तवं क्रौञ्चो गोधा गां वाग्गुदो गुडम् ॥

मनुः—१२-६४

**तिथिः**— प्रतिपदादिः । वर्द्धमानया क्षीयमाणया वा चंद्रकलया तन्यते यः कालविशेषः स तिथिः ।

पुंसि स्त्रियां च ॥

अमादिपौर्णमास्यन्ता या एव शशिनः कलाः ।
तिथयस्ताः समाख्याताः षोड़शैव वरानने ॥

इति स्कन्द-प्रभास—१८-३

शुक्लान् वा यदि वा कृष्णान् प्रतिपत्प्रभृतीन् तिथीन् ।
उपोष्यैव वलिं दद्याद् विधिवदपरेऽहनि ॥

इति श्राद्धदीपे ।

**तिनिशः**— वृक्षविशेषः । मधुरादौ तिनाश इति ख्यातः । मन्ये, स उत्कलेषु "टिणिआ" इति ख्यातः वृक्ष इति ।

अर्जुनस्तिलकोऽशोकस्तिनिशो रक्तचन्दनम् ।
एवंविधानि काष्ठानि धटार्थे परिकल्पयेत् ॥

इति नारदः व्यवहारकल्पतरौ—२१४

**तिंतिडी**— चिंचा तेंतुलि इति प्रसिद्धः वृक्षः यस्याम्लरसात्मकफलम् ।

तिन्तिडी वेणुपृष्ठं च आम्रनिम्बौ तथैव च ।
अपामार्गश्च विल्वश्च अर्कश्चोदुम्बरस्तथा ॥

इति दन्तकाष्ठप्राशस्त्यम् नित्याचारप्रदीपे—१-१८२

**तिंदुकम्**— (१) फलविशेषः ।

मीतिमारकस्य फलमिति हेमाद्रिः ।

उग्रग्रीवं कचोरश्च तिंदुकं मधुमाह्वयम् ।

इति कूर्मपुराणे ।

तेन्दुआ इति प्रसिद्ध इति आह्निके मित्रमिश्रः ।

तिन्दुकः स्फूर्जक इति हेमाद्रिः ।

तत्काष्ठं दन्तकाष्ठाय अयोग्यम्—

"न च बन्धूकनिर्गुण्डीशिग्रु तिल्वतिंदुकजम्"

इति विष्णुः—६१-३

स च केन्दु इति उत्कलेषु प्रसिद्धः वृक्षः ।

(२) परिमाणविशेषः कर्षापरपर्यायः खारीशब्दे द्रष्टव्यः

**तिरीटकः**— लोध्रं इति पूजाप्रकाशे मित्रमिश्रः ।

किंशुकैश्च कुठारैश्च किंकिरातैः सकुब्जकैः ।
बकुलैश्चैव मन्दारैः कुन्दपुष्पैस्तिरीटकैः ॥ इति

पूजाप्रकाशोद्धृते देवीपुराणे ॥ पृ०—२१५

तिरीटको लोध्र इत्याचारेन्दौ—१८५

तत्र तु—

किंशुकैस्तगरैश्चैव किंकिरातैः सचम्पकैः ।
वकुलैश्चैव मन्दारैः कुन्दपुष्पैस्तिरीटकैः ॥ इति पाठः ।

**तिर्यग्वातसेवा**— मूत्रपुरीषोत्सर्ग इति कपर्दी ।

**तिलः**— (१) वृन्ताकम् ।

शिरःकपालमन्त्राणि नखचर्मतिलस्तथा ।

एतानि क्रमशो नित्यमष्टम्यादिषु वर्जयेत् ॥
इति समयमयूखे—१७७

(२) तैलबीजं सुप्रसिद्धम् ।

**तिलकः**— (१) विष्णुदेयपुष्पविशेषः ।
क्षुरक इति हेमाद्रिः ।
तिलकं जम्बुवनजं पातकं तगरं तथा इति वामनपुराणे
तिलकं श्राद्धदेयपुष्पत्वेन ब्रह्मपुराणे उक्तम् ।
जाति चम्पकलोध्राश्च मल्लिकावाणवर्बरी ।
वृन्ताशोकाटरूषं च तुलसी तिलकं तथा ॥
पावन्तीं शतपत्रां च गन्धशेफालीकामपि ।
कुब्जकं तगरं चैव मृगमारण्यकेतकीम् ॥
ब्रह्म० पु०—२२०-१६३
हेमाद्रौ तु पावन्तीस्थाने पारन्तीति पाठः समीचीनः ।
अग्निपुराणे तु पावन्तिरिति पाठः कुब्जकशब्दे द्रष्टव्यः
तिलकः तगर इति मित्रमिश्रः-श्राद्धप्रकाशे—१५६
तत्र ब्राह्मे—
चूडाशोकाटरूषं च तुलसीं तिलकं तथा ।
पाटलीं शतपत्रं च गन्धनेपालिकामपि ॥
कुब्जकं तगरं चैव मृगमारं च केतकीम् ।
यूथिकामतिशुक्लं च श्राद्धयोग्यानि भो द्विजाः ॥
अत्र तगरस्य पृथक् पाठात् तिलको न तगरः ॥
(२) ऊर्ध्वपुण्ड्रादि । "ऊर्ध्वपुंड्रं तिलकं ललाटे कुर्यात्
इति स्नानसूत्रव्याख्याने हरिहरः कात्यायनः—२-२

**तिलकव्रतम्**— चैत्रशुक्लप्रतिपद्विहितं व्रतम् ॥
तदुक्तं भविष्यत्पुराणे—
वसन्ते किंशुकाशोकशोभिते प्रतिपत्तिथिः ।
शुक्ला यस्यां प्रकुर्वीत स्नानं नियममास्थितः ॥
ललाटपट्टे तिलकं कुर्याच्चन्दनपङ्कजम् इति
कालमाधवः—२

**तिलचतुर्थी**— माघशुक्लचतुर्थी ।

**तिलण्टकम्**— तिलण्टकं पटोलमिति निर्णयसिन्धौ-२८६
(निर्णयसागर)
अस्य प्रयोगस्त्वारुकशब्दे द्रष्टव्यः ।

**तिलधेनुः**— तिलनिर्मिता धेनुः ।
पद्मपुराणसृष्टिखण्डे द्रष्टव्यम् ।

**तिलपेशलः**— तिलपात्रमिति देवपालः ।
तिलपूर्णशराव इति आदित्यदर्शनभाष्ये ।
तिलमाषकृसरमिति ब्र—भाष्ये
पक्ष्मगुणं तिलपेशलं केशवापाय प्रयच्छति
इति काठक० गृ०—३-१६-१८
केशवापो नापितः ।

**तिलवैष्णवी**— अलभ्ययोगविशेषः ॥
माघ्यां तु समतीतायां श्रवणेन तु संयुता ।
द्वादशी या भवेत् कृष्णा प्रोक्ता सा तिलवैष्णवी ॥
इति विष्णुधर्मोत्तरे ॥ समयप्रकाशे—२४५

**तिल्वकः**— चिल्लक इति लक्ष्मीधरः ।
रोध्र इति हेमाद्रिः । लोध्र इति वीरमित्रोदये ॥
तिल्वकः समिद्योग्य इति गोभिलचार्य्याणां मतम्
१-५-१५

तत् काष्ठं च दन्तकाष्ठाय विष्णुना निषिद्धम् ॥

विष्णुः—६१-३

तिष्यः— (१) कलियुगम् ॥

तिष्येऽधर्मस्त्रिभिः पादैर्धर्मः पादेन संस्थितः ।

इति पराशरमाधवे बृहस्पतिः । परा—१-३०

द्वापरे चाध्वरः प्रोक्तस्तिष्ये दानं दया क्षमः

इति बृहस्पतिः परिभाषाप्रकाशे—४६

(२) पुष्यानक्षत्रम्—

सीमन्ते तिष्यहस्तादितिहरिशशभृत पौष्णविध्युत्तराख्याः

पक्षच्छिद्रं च रिक्तां पितृतिथिमपहायापराः स्युः

प्रशस्ताः । इति कालविधानोक्तिः निर्णयसिन्धौ-१७७

(निर्णयसागर)

"तिष्येण पुष्टिकाम" आप—२-८-१८-२०

तीरितम्— ऋणादानादि व्यवहारेषु यत्कार्यं

निर्णयपर्यन्ततां नीतम् ।

तीरितं चानुशिष्टं च यत्र कूचनयद् भवेत् ।

कृतं तद्धर्मतो विद्यान्मतद् भूयो निवर्त्तयेत् ॥

मनुः—६-२३३

निरूपकदोषादन्यथा निर्वृत्तः तीरितः ।

साक्षिदोषादन्यथानिर्वृत्तः अनुशिष्ट इति

व्यवहारनिर्णये वरदराजः ।

तीर्थम्— (१) तीर्थं जलावतरणस्थानमिति नरसिंहवाजपेयी

लोकव्यवहारश्चतादृशः ।

"परस्त्रियं योभिवदेत् तीर्थेरण्ये वनेऽपि वा"

नदीनां वापि सम्भेदे न संग्रहणमाप्नुयात् ॥

मनुः—८-३५६

अकर्दममिदं तीर्थं भरद्वाज निशामय ।

रमणीयं प्रसन्नाम्बुसमनुष्यमनो यथा ॥ इति रामायणे

१-२-४

(२) गङ्गादिपुण्यजलाधाराश्च ।

गंगादितीर्थेषु वसन्ति मत्स्याः इति पुराणे ।

तीर्थानि गङ्गा सरस्वती यमुना नर्मदा विपाशा वितस्ता

कौशिकी नन्दा विरजा चन्द्रभागा सरयू, उत्पथवर्त्ती

सिन्धुः कृष्णावेणी शोणा तापी

पारावती पाषाणकी गोमती गण्डकी वाहुदा पम्पा

देविका ताम्रपर्णी चर्मण्वती वेत्रवती गोदावरी

तुङ्गभद्रा सुचक्षुररुणाचेति महानद्यः पुण्यतमाः गङ्गाद्वारं

कनखलं शक्रावतारं सौकरं प्रयागो गङ्गासागरमिति

एतानि गङ्गायास्तीर्थानि । प्लाक्षं प्रस्रवणं वृद्धकन्याकं

सारस्वतमादित्यतीर्थं वदरी पाञ्चालं वैजयन्तं पृथूदकं

नैमिषं विनशनं चापोदभेदं प्रभास

इति सारस्वततीर्थानि ।

कावेरीसङ्गमं सरस्वतीसङ्गमं गन्धमादनमिति

सामुद्राख्यतीर्थानि पुन्यतमानि ।

पुष्करं मूर्द्धजं गयाशिरः कुरुक्षेत्रमिति पुण्यक्षेत्राणि ।

वाराणसी महाभैरवं देवदारुवनं सौरं प्राचीनवाहः

केदारं मध्यमं महारुद्रं महावलं महालयं कुमारमहालयं

रुद्रावतारं वङ्गलं (वगलण्डं) विष्णुशिवं महाकालं

पुरुषोत्तमं जम्बूमार्गं चेत्येतानि आयतनानि

हिमवानुदयो महेन्द्रो विदुरः शतशृङ्गः श्रीपर्वतो

वेदपर्वतो विन्ध्यपर्वतः पारियात्रश्चेति पर्वताः

पुण्यतमाः पापं नाशयन्ति ।

इति पराशरमाधवे प्रायश्चित्तकाण्डे पृ—४७८

(नवप्रकाशन)

(३) स्त्रीयोनिश्च ।

"नातीर्थमुपेयात्" वसिष्ठः—१२-२२

अतीर्थगमनात्पुंसस्तीर्थसंगृहनात्स्त्रियाः

(४) ऋतुसंज्ञकः स्त्रीणां गर्भधारणयोग्यः कालः

यौगपद्ये तु तीर्थानां विप्रादिक्रमशो व्रजेत् ।

रक्षणार्थमपुत्रां वा ग्रहणक्रमशोऽपि वा ॥

इति देवलवाक्ये तीर्थमृत्युकाल इति हेमाद्रिः

स्मृतिचन्द्रिका च ॥ संस्कार—४१

माधवाचार्योऽपि—५०३

तीर्थम् ऋतुरिति पारस्करसूत्रभाष्ये गदाधरश्च—१-११

दीर्घप्रवासनः प्रव्रजितस्य प्रेतस्य वा भार्या सप्त-

तीर्थान्याकांक्षेत ॥ कौट०—३-४

(५) करस्थं ब्राह्मादितीर्थम् ।

कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च ।

प्रजापति पितृब्रह्म देवतीर्थान्यनुक्रमात् ॥

इति याज्ञवल्क्यः—१-१६

तत्र करमध्ये मध्ये आग्नेयमिति हारीतः

मध्ये सौम्यं प्रतिष्ठितमिति योगियाज्ञवल्क्य

इति नरसिंहवाजपेयी ।

(६) साधुजुष्टं क्षेत्रं तीर्थम् ।

यदध्यासितमर्हद्भिस्तद्धितीर्थं प्रचक्षते ॥

इति हेमाद्रिघृतस्मृतिवचनम् ।

(७) पात्रम् ।

दूरादेव परीक्षेत ब्राह्मणं वेदपारगम् ।

तीर्थं तद्धव्यकव्यानां प्रदाने सोऽतिथिः स्मृतः ॥

मनुः—३-१३

(८) उपायः ।

वासुदेवेन तीर्थेन तातगच्छस्व संशमम् ।

कालप्राप्तमिदं मन्ये मात्वदुर्योधनातिगाः ॥

महाभा-उद्—१२५-२६

अत्र तीर्थेन उपायेन इति नीलकण्ठः ।

(९) उपाध्यायः- शिक्षितोऽह्यसि सारथ्य तीर्थतः

पुरुषर्षभ । इति महाभारते—४-४-१६

अत्र तीर्थतः गुरुत इति नीलकण्ठः ।

(१०) अवसरः ।

स तदालब्ध तीर्थोऽपि न ववाधे निरायुधम् ।

मानयन् समृधे धर्मं विष्वक्सेनं प्रकोपनम् ॥

इति भागवते—३-१६-४

प्रादात्स्वन्नं च विप्रेभ्यः प्रजातीर्थे स तीर्थवित्

भाग—१-१२-१४

योनौ जलावतारे च मन्त्राद्यष्टादशस्वपि ।

पुण्यक्षेत्रे तथा पात्रे तीर्थं स्याद्दर्शनेषु च ॥ इति

हलायुधः का—५

मन्त्रादयो यथा हलायुधकोशटीकोद्धृतनीतिशास्त्रे

मन्त्रीपुरोहितश्चैव युवराजश्च भूपतिः ।

पंचमी द्वारपालश्च षष्ठोऽन्तर्विंविकस्तथा ॥

कारागाराधिकरी च द्रव्यसंचयकृत्तथा ।

कृत्याकृत्येषु चार्थानां नवमो विनियोजकः ॥

प्रदेष्टानगराध्यक्षः कार्य्यनिर्माणकृत्तथा ।

धर्माध्यक्षः सभाध्यक्षो दंडपालस्त्रिपंचमः ॥

षोडषी दुर्गपालश्च तथा राष्ट्रान्तपालकः ।

अटवी पालकान्तानि तीर्थान्यष्टादशैव तु ॥

(११) शास्त्रम् ।

आलोच्यतत्त्वमथतीर्थकृतां परेषाम् इति निर्णयसिन्धौ

मंगलाचरणे । तत्र तीर्थं शास्त्रमिति कृष्णभट्टः ।

(१२) चारः चार इति नीलकण्ठः

महाभा विरा —१-२९-३

तेषां चेव गतिस्तीर्थे वासश्चैषां प्रचिन्त्यताम् ॥

(१३) शिष्यः।

ब्रह्मचारीसुचरितो मेधावी कर्मकृद्धनदः।

प्रियो विद्यया वा विद्यामन्विच्छंस्तानि ब्राह्मणः॥

काठक-गृ०—१-११-२

(१४) ऋषि सेवितं वारि।

तीर्था-भिधानमिच्छन्ति तृतीयं कृतबुद्धयः।

शास्त्रं चैव निपानं च वारीचाप्यृषि सेवितम् ॥

देवपालभाष्ये काठक गृ—१-११-२

**तीर्थकरः**— दानोदकहस्तः दानशील इति यावत्

श्रीमूला —३-२

**तीव्रम्**— पतनीयैराक्रोशैस्तीव्रमाहुर्मनीषिणः।

नारदस्मृतिः—१८-३

**तीव्रावाक्**— महापातकयोक्त्री च जगद्द्वेषकरी च या।

जातिभ्रंशकरी वाच तीव्रा सा प्रथिता तु वाक् ॥

इति कात्यायनः।

**तुङ्गभद्रा**— महानदीविशेषः महानदी शब्दे द्रष्टव्यः।

तुङ्गा च भद्रा च तयोर्नद्योः मेलनेन कुण्डुलीसमीपे

तुङ्गभद्रा समुत्पन्ना इति काणे इतिहासे।

**तुण्डिलः**— तुण्डो विद्यते यस्य स तुण्डिलो मध्योन्नतः।

पुरोडाशाकृतिः तण्डुलपिष्टादिपक्वः किलाटलोपिका-

दिर्वा इति देवपालः। अत्र तुण्डस्थाने तुण्डा

इति पाठान्तरम् ॥ काठक गृ०—५-१६-४

**तुण्डीरम्**— तुण्डीरं बिम्बीफलमिति केदेवः।

निर्णयसिन्धौ—२९२ (निर्णयसागर)

चन्द्रिकायां शखः

पिण्डालकं च तुण्डीरं करमर्दं च नालिकम्।

कुष्माण्डं बहुबीजानि श्राद्धे दत्वा व्रजत्यधः॥

**तुन्नवायः**— सौचिकः इति कुल्लूकः दरजी इति भाषायाम्

पिशुनानृतिनोश्चान्नं क्रतुविक्रयिणस्तथा।

शैलूष तुन्नवायान्नं कृतघ्नस्यान्नमेव च ॥

मनुः—४-२१४

**तुरायणम्**— श्रौतकर्मविशेषः इति कुल्लूकः।

ऋक्षेष्ट्याग्रयणं चैव चातुर्मास्यानि चाहरेत्।

तुरायणं च क्रमशो दाक्षस्यायनमेव च ॥

मनुः—६-१

तुरायणं को वर्त्तयति यश्चरुपुरोडाशान् निवर्त्तयति

इति पांतंजलमहाभाष्ये—१५-१-२

तुरायणं हि व्रतमप्यधृष्यक्रोधनोऽकरवं त्रिंशतोऽब्दान्

महाभारते—१३-१३-३४

तुरायणं वैशाखपंचम्यां चैत्रस्य वा

कात्यायन-श्रौ०—२४-८-१-२

**तुरुष्कः**— सिह्लकरस इति दिव्यसिंहमहापात्राः

तत्र तु तुरुष्कमिति पाठः।

तुरुष्कं गुग्गुलं चैव घृताक्तं युगपद्दहेत्।

घृतं न केवलं विद्याज्जुष्टं वा तृणगुग्गुलुम्।

इति ब्रह्मपुराणे।

तुरुष्क तृणगुग्गुलुः गुग्गुलुविशेष इति कालसारे गदाधरः

**तुला**— विशा इति ख्यातः परिमाणरेखांकितः शिक्ययुक्तो दंडः।

(१) तोलनदण्ड इति विज्ञानेश्वरः याज्ञ—२-२४०

(२) पलानां शतेन तुला (भारशब्दो द्रष्टव्यः)

तुलास्त्रियां पलशतम् इति।

**तुलादिव्यम्**—महाभियोगे मानुषप्रमाणाभावे देयं दिव्यम् वादी प्रतिवादी वा व्यवहारस्य चतुर्थे पादे नृपद्वारादौ तद् पूर्वतोऽपि तोलनविद्भिः स्वर्णकारकांस्यकारादिभिः प्रथमं तोलितः ततः धर्मावाहनादि सकलेति कर्त्तव्यता नन्तरं समन्त्रं पुनस्तोलित ऊर्ध्वं गतः शुद्धः अधोगतस्त्वशुद्ध एव।

तुलाधारणविद्वद्भिरभियुक्तस्तुलाश्रितः।
प्रतिमानसमीभूतो रेखां कृत्वावतारितः॥ १००॥
त्वं तुले सत्यधामासि पुरा देवैर्विनिर्मिता।
तत् सत्यं वद कल्याणि संशयान्मां विमोचय॥
यद्यस्मि पापकृन्मातस्ततो मां त्वमधो नय।
शुद्धश्चेद्गमयोर्ध्वं मां तुलामित्यभिमन्त्रयेत्॥ १०२

याज्ञ०—२-(१००-१०२)

**तुलापुरुषः**—पिण्याकाचामतक्रोदकसक्तूनामुपवासान्तरितो व्यवहारस्तुलापुरुष इति विष्णुः—४६-२२

• पिण्याक-दधिसक्तूनामाहारः प्रतिवासरम्।
एकैकमुपवासः स्यात् सौम्यकृच्छ्रः प्रकीर्त्तितः॥
एषां त्रिरात्रमभ्यासादेकैकस्य यथाक्रमम्।
तुलापुरुष इत्येष ज्ञेयः पञ्चदशाहिकः॥ १२६॥

अत्रिस्मृतिः।

**तुलामानम्**— सुवर्णादितोलनयन्त्रम्, इति कुल्लूकः।

तुलामानं प्रतिमानं सर्वं च स्यात्सुलक्षितम्।
षट्सु षट्सु च मासेषु पुनरेव परीक्षयेत्॥

मनुः—८-४०३

तुलामानं उत्कलेषु विशा इत्युच्यते।
अथवा-तुला-विशा, मानं-द्रोणादि॥
प्रतिमानं द्रम्मादि एतदेव संगच्छते।

**तुलतिम्**— तुलायोग्यं पण्यं कनककस्तूरी-कुंकुमादि मिता—२-२५४

**तूणवम्**— तूणवं गोमुखः वाद्यविशेष इति देवपालः।
"नाडीं तूणवं मृदङ्ग" पणवं सर्वाणि च वादित्राणि" इत्यादि काठक गृ—२-५-२

**तूलिकम्**— तूलमयं तल्पम् (उपधानशब्दो द्रष्टव्यः।

**तूलिका**— (१) तूलमयकोमलशय्या।

तूलं शाल्मलीफलादिजन्यं, तेन निर्मिता शय्या तूलिका इति माधवाचार्य्याः—७-३०

तूलिका ह्युपधानातिरक्तवस्त्रादिकानि च।
शोषयित्वातपेनैव प्रोक्षणात् शुद्धिता पुनः।

पराशरः—७-३०

तूलिका चोपधानानि पुष्परक्ताम्बराणि च।
शोधयित्वा तथा किंचित् करैरुन्मार्जयेन्मुहुः॥

इति अंगिरः स्मृतौ—११४

शय्यां सतूलिकां दद्यादिति कौर्मे

(२) स्थूरिका शब्दो द्रष्टव्यः ।

**तूली**— तूलिका तूलमयशय्या इत्यर्थः ।

कार्पासनिर्मितां तूलीं दत्वा मृद्वीं सुशोभनाम् ।

इति चमत्कारखण्डे ।

**तूपरः**— श्रृंगोत्थानकालेपि श्रृंगरहित इति कल्पतरुः

तूवरशब्दस्य पाठभेदोऽयम् ।

यौवनेऽपि जातश्मश्रुः तूपर इति हेमाद्रिः परिशेषः-४६६

खञ्जतूपरमण्डाश्च ये चान्ये हीनचापिणः

इति तत्र ब्रह्मपुराणम् ॥

तूपरः शृङ्गहीनः शिशुरिति पराशरमाधवे—५३२

तत्र प्रजापत्यं तूपरमालभेत यस्या वाज्ञातमिव

ज्योगामयेत तैत्तिरीयकशाखा का-२-६ अनुवाकः ।

**तूवरः**— श्मश्रुकालेऽपि श्मश्रुरहितः इति कल्पतरुः ।

खंजतूवरमुंडाश्च तथान्ये दीर्घरोगिणः इति

श्राद्धकाण्डे पृ—६५ ब्रह्मपुराणम् ।

अजातशृङ्गो गौः कालेऽप्यश्मश्रुना च तूवरौ

इत्यमरः—३-३-१६५

"तूवरः प्रौढ़श्रृंगोनड्वान्" इति महाभारतव्याख्याने

नीलकण्ठः उद्—१६-६४

तं च तूवर ' बालं बह्वाशिनमविद्यकम्

उलूक मद्वचो ब्रूहि असकृद् भीमसेनकम् ॥ इति

उत्कलेषु लोकभाषायां निर्लज इत्यर्थे थोवरा

इति शब्दः प्रयुज्यते ।

मन्ये सः अस्यैवापभ्रंशः इति ।

**तृचम्**— एकर्षिछंदोदेवताविनियोगानां परस्परसापेक्षप्रयोगाणां नाम ॥ यथा-आपोहिष्ठा इत्यादयः ।

तिस्रऋचोऽस्मिन्निति समासः ऋचित्रेरुत्तरपदादि

लोपश्छंदसि इति साधुत्वम् ॥

**तृणगुग्गुलः**— सर्जरस इति कल्पतरुः ।

गुग्गुलुभेद इति दिव्यसिंहः

घृतं न केवलं दद्याद् जुष्टं वा तृण गुग्गुलुम

दीपार्थमिति शेषः

**तृणराजः**— तालः ॥ तृणराजं विदुस्तालमिति मेधातिथिः

मनुः—५-११८

गुवाकं तालहिन्तालौ तथा ताडी च केतकी ।

खर्जूरनारीकेलौ च सप्तैते तृणराजकाः ॥

तृणराजशिरापत्रैर्न कुर्याद् दन्तधावनम् ॥

इति विद्याकरवाजपेयीनिबन्धे ।

तालहिन्तालगुवाक केतकी महद्वट खर्जूर नारिकेलाः

सप्तैते तृणराजकाः इति गौतमधर्मसूत्रक्रियाखण्डे-४६१

**तृतीयिनः**— अच्छावाक अग्नीध्रो नेष्टा प्रतिहर्त्ता च

तृतीयिन उच्यन्ते ।

तृतीयिनस्तृतीयांशा इति मनुः—८-२१

**तृप्तिः**— कृष्णपक्षनवमीरात्रिः कालमाधवः—२

**तृष्णा**— आशा ।

जीर्यन्ति जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः ।

चक्षुः श्रोत्रेच जीर्येते तृष्णैका तरुणायते ॥ २१ ॥

बृहन्नारदीय पु०—३३-२१

**तेजः**— कृष्णनवमीदिनभागमात्रम् ॥

**तेजनः**— बाणफलकः ।
न कूटैरायुधैर्हन्याद् युध्यमानो रणे रिपून् ।
न कर्णिभिर्नापि दिग्धैर्नाग्निज्वलिततेजनैः ॥
मनुः—७-६

**तेजनी**— तृणपुलाका इति हरदत्तः ।
"अथादग्नेस्तेजनीं कटं वा" इति पारस्करः—१-५-२
अस्य व्याख्याने तृणपूलिका इति हरिहरगदाधरौ ।
गुन्द्रस्तेजनकः शर इति केशात् सा गुन्दनिर्मिता भवेत्
तेजनः मुञ्जतृण इति गोपिकामोहनकोशे ।

**तेजस्वान्**— शुक्लपक्ष दिवसस्य सप्तमो मुहूर्तः
कालमाधवः—२

**तेजस्वि**— कृष्णपक्षाष्टमीदिनभागमात्रम् कालमाधवः-२

**तैलकारः**— जातिविशेषः । तेलीति भाषायाम् ।
कलु-इति भाषा इति शब्दकल्पद्रुमे ।
स कोटकस्त्रीगर्भे कुम्भकारात् जातः इति
ब्रह्मवैवर्त्ते ब्रह्मखण्डे इति तत्र ।
औशनस स्मृतौ तु—
वैश्यायां शूद्रतश्चौर्य्याज्जातश्चक्री स उच्यते ।
तैलपिष्टकजीवी तु लवणं भावयन् पुनः ॥ ३३ ॥

**तैलपकः** } **तैलपायिक** } भ्रमरपा इति प्रसिद्धः पक्षवान्
मांसं गृध्रो वपां मद्‌गुस्तैलं तैलपकः खगः ।
चीरीवाकस्तु लवणं बलाकाशकुनिर्दधि ॥
मनुः—१२-६३
तैलं तैलपायिकः इति विष्णुः—४४-२३
तैलपायिकः परोष्णीनामको मक्षिकाविशेष इति
नन्दपण्डितस्तद्व्याख्याने ॥

"परोष्णी तैलपायिका" इत्यमरः—२-५-२३

**तैलिकः**— तैलार्थं तिलादिबीजानां पेष्टा इति कुल्लूकः ।
मनुः—३-१५८
अगारदाही गरदः कुण्डाशी सोमविक्रयी ।
समुद्रयायी बन्दी च तैलिकः कूटकारक ॥ इति

**तैषी**— पौषपूर्णिमा तैषीमुत्सृजन्ति गोभिलः—३-३-१४

**तोकः**— पुत्रः प्रायेण लोके बालकपुत्रे नप्तरि च तोकशब्दं
व्यवहरन्ति टोका इति ।
नमः स्तोकयतनयाय मृड इत्यत्र तोकतनय समवाय-
प्रयोगस्थले तु ।
यद्यपि तोक शब्दस्य तुत्र रूपमर्थं व्याचक्षते तथापि
नप्तृरूपार्थः श्रेयान् अवतोकास्थले तोकशब्दस्य गर्भ-
स्थानीयत्वात् ॥
"अवतोका स्रवद्गर्भा" इत्यमरः—२-६-६६

**तोक्मम्**— ईषद्विरूढं बीजम् ।
विरूढा यवास्तोक्मा इति महीधरः यजुः—१६-१
ईषदंकुरितानि व्रीह्यादीनि इति हरदत्तः ।
श्लेष्मोदके तोक्मकिण्वे आप—२-७-२-१२

**तोत्रम्**— (१) प्रतोद येन पशवः स्वाधीनाः क्रियन्ते ।
(२) तोत्रं गजदमनं वेणुकाख्यं वेणुवृक्ष समाकारम् ।
इति नीलकण्ठः भीष्म प—४५-५
कलिंगबाणाभिहतस्तोत्रार्दित इव द्वीपः ।
भीमसेनः प्रजज्वाल क्रोधेनाग्निरिवेधितः ॥
महाभा० भीष्म०—५४-६६
प्रतोदः प्राजनं तोत्रमिति हलायुधकोशे का—२

तुद्यते ताड्यते अनेनेति तोत्रं । गवादिताडनदंड इति शब्दकल्पद्रुमे ।

**तोमरः**— शावल इति वैद्यकशब्दसिन्धुः ।
शर्वला तोमरऽस्त्रियाम् इत्यमरः—२-६-६३
हस्तक्षेप्याः सशल्या दंडाः तोमरा इति महाभारत-व्याख्याने नीलकण्ठः उद्—१५५-४
सध्वजाः सपताकाश्च सशरासनतोमराः ।
रज्जुभिश्च विचित्राभिः सपाशाः सपरिच्छदाः ॥ इति
दीर्घदंडा भल्ला इत्यन्यत्र सः भीष्मवधपर्व—४६-११
सम्यक् प्रणीता नागाश्च प्रभिन्नकरटामुखाः ।
ऋष्टितोमरनाराचैर्निर्विद्धा वरवारणाः ॥ इति
विष्णुधर्मोत्तरे तु—
सायकश्च शरः प्रोक्तः इषुर्बाणः शिलिमुखः ।
हस्तमोच्यः स एवोक्तो वृहन्तश्चैव तोमर ॥ इति
३-१०-१५

**तोवरी**— तुवरी इति हेमाद्रिः ।
तोवरी राजमाषं च कोद्रवं कोरदूषकम् वर्ज्यम्
इति ब्रह्मपुराणे ।

**तौर्य्यत्रिकम्**— नृत्यगीतवादित्राणि ।
मृगयाक्षो दिवा स्वप्नः परिवादः स्त्रियो मदः ।
तौर्यत्रिकं वृथाट्या च कामजो दशको गणः ॥
मनुः—७-४७

**तौल्यम्**— तोलनयोग्यं सुवर्णादि इति व्यवहारमयूखे
तौल्यगणिममेयानामभावेऽपि हि वादयेत् ॥ इति

**त्रपु**— धातुविशेषः टउ इति प्रसिद्धः ।
अग्नौ सुवर्णमक्षीणं सीसे च ताम्रे पञ्च दशावसि ॥
याज्ञ०—२-१७८

**त्रपुसम्**— कर्कटीभेदः ।
कंटिआलिकाकुडि इति भाषायाम् ।

**त्रयम्बकम्**— करतलम् ।
त्रयम्बकं करतलमिति कात्यायनस्मृतौ—२८-१८
स एष नेति नेति त्रयम्बकाः पुरोडाशा
इति हरिहरभाष्ये ॥ पारस्करः—२-६-५
त्रयम्बकं करतलमिति गोभिलस्मृतिः—३-१५०

**त्रयी**— ऋक्यजुः सामात्मकास्त्रयो वेदाः
त्रैविद्येभ्यस्त्रयीविद्यां दण्डनीतिं च शाश्वतीम् ।
आन्वीक्षिकीं चात्मविद्यां वार्त्तारम्भांश्च लोकतः ॥
मनुः—७-४३

**त्रसरम्**— त्रसरं-टसर इति प्रसिद्धम् ।
आविकं त्रसरं चैव परिधाने परित्यजेत् ।
शस्तं प्रावरणे प्रोक्तं स्पर्शदोषो नहि द्वयोः ॥
लघ्वाश्वलायनस्मृतिः—१-३०

**त्रसरेणुः**— सर्वावरदर्शनयोग्यरेणुः ।
जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः ।
प्रथमं तत्प्रमाणानां त्रसरेणुं प्रचक्षते ॥
मनुः—८-१३२

जालान्तरप्रविष्टसूर्यरश्मिस्थितं रजः इत्यर्थः
अयं च त्रसरेणुः त्रिंशत्परमाण्वात्मकः ।

त्रसरेणुस्तु विज्ञेयस्त्रिशतापरमाणुभिरिति
वैद्यकशद्वसिन्धूद्धृत वैद्यकपरिभाषादीपे ।
त्रसरेणुः द्यणुकत्रयात्मक इति ब्रह्मवैवर्त्ते ।
परमाणुद्वयेनाणुस्त्रसरेणुस्तु ते त्रयः ॥ इति

**त्रायमाणा**— हिमवत्प्रसिद्ध-स्वनामख्यात-लता इति
वैद्यकशब्दसिन्धुः । बला इति बहुला इति च ख्याता
इति शब्दकल्पद्रुमे ॥

**त्रिककुत्**— नीलपर्वतः त्रिकूट पर्वत इति शब्दकल्पद्रुमे
त्रिककुत हिमालयस्य अंशविशेष इति इतिहासे
काणेसिद्धान्तः तीर्थसूच्याम्

**त्रिगर्त्तः**— लाहोराख्यदेशैकभागः इति शद्वकल्पद्रुमे ।
ततस्त्रिगर्त्ताः कौन्तेयं दार्वाः कोकनदास्तथा ।
क्षत्रिया बहवो राजन्नुपावर्त्तन्त सर्वशः ॥
महाभा०—२-२७-१८

**त्रिगव्यस्नानम्**— दधि क्षीरं घृतं चैव त्रिगव्यं
परिकीर्तितम् । पूजाप्रकाशे—१६२

**त्रिजन्म**— जन्मताराात्रयमिति हेमाद्रिः ॥ परिशेष—३२४
जन्मनक्षत्रचंद्रतिथिरूपत्रयमिति दिव्यसिंहमहापात्राः
श्राद्धदीपे ।
त्रिजन्मनि त्रिपादे च कविनन्दामघासु च ।
काम्यश्राद्धं न कुर्वीत व्यतिपाते दिनक्षये ॥

**त्रिजातकम्**— लवंगैलापत्रकाणां समाहारः ।
लवंगैला गंधपत्राणीति माधवाचार्य्याः
रागखाडव चोष्यैश्च त्रिजातकसमन्वितैः ।

दत्तैस्तुमासं प्रीयन्ते श्राद्धेषु पितरोनृणाम् ।
इति श्राद्धदेयेमार्कण्डेये ॥ पराशरमाधव श्राद्ध—७०५

**त्रिणाचिकेतः**—त्रिणाचिकेतो नामाथर्वणां व्रतम्, तच्चारी
अयं वाव यः पवते इत्यनुवाकत्रयं वा । तद्विद्वानिति
बौधायनविवरणे गोविन्दस्वामी ।
नाचिकेता नामकश्चिदृषिरासीत ।
तस्मै यमेनोपदिष्टश्चयनविशेषो नाचिकेतशब्दे-
नाभिधीयते इति प्रतिपादितं तैत्तिरीयब्राह्मणे
(काठ—३-८) विस्तरशः कठोपनिषदि च ॥
तदर्थं यद्व्रतं नाचिकेतं नाम ॥
यो नाचिकेताख्यं व्रतं वारत्रयमचिनोत् स त्रिणाचिकेत-
तद्विज्ञाता तदध्येता तदनुष्ठानवान् वेति
कठोपनिषद्भाष्ये ।
त्रिणाचिकेतोऽध्वर्युवेदभागस्तद् व्रतं च ।
तद्योगात्पुरुषोऽपि त्रिणाचिकेत इति कुल्लूकः-३-१८५
नाचिकेतोऽग्निर्बह्वीषु शाखासु अभिधीयते ।
तैत्तिरीयके कठवल्लिषु शतपथ इति च ॥
तं यो वेदं मंत्रब्राह्मणेन सहाधीते सत्रिणाचिकेतः ।
नाचिकेतानुवाकांस्त्रीनित्येके ॥ विराजोऽनुवाकाध्या-
यीत्यन्ये । इत्यापस्तम्बवृत्तौ हरदत्तः—२-८-१८-२२
त्रिणाचिकेतं यजुर्वेदैकदेशः तद्व्रतं च तद्व्रताचरणेन
यस्तदध्यायी स त्रिणाचिकेतः इति
विज्ञानेश्वरः—१ २२०

**त्रितैलम्**— त्रितैलस्नापितं देवं त्रिरक्तेनानुलेपयेत ।
नवनीतं घृतं तैलं त्रितैलमिति कीर्त्तितम् ॥ इति
पूजाप्रकाशोद्धृतविष्णुधर्मोत्तरे पूजा—१६१

**त्रिदंडी**— संन्यासी
वागदंडोथ मनोदंडः कायदंडस्तथैव च ।
यस्यैते निहिता बुद्धौ त्रिदण्डीति स उच्यते ॥
मनुः—१२-१०
वाग्दण्डो मौनता प्रोक्ता कर्मदंडस्त्वनीहता ॥
मानसस्य तु दंडस्य प्राणायामो विधीयते ॥ इति
पराशरमाधवे दक्षः ।
वाग्दण्डोऽथ मनोदण्डः कर्मदण्डश्च ते त्रयः ।
यस्यैते तु त्रयो दण्डाः स त्रिदण्डीति कथ्यते ॥
दक्षस्मृतिः—७-३०

**त्रिपत्रम्**— विल्वं च तुलसीपत्रं जातीपत्रं तथैव च ।
त्रिपत्रमेतन्निर्दिष्टं देवदेवस्य पूजने ॥ इति
पूजाप्रकाशोद्धृत विष्णुधर्मोत्तरे ॥ पूजा—१६१

**त्रिपदनक्षत्रम्**— तस्य नक्षत्रस्य पादत्रये एकोराशिः
अपरस्मिन् पादे चान्यो राशिः ।
तानि च कृत्तिकापुनर्वसूत्तरफाल्गुनीविशाखोत्तारा-
षाढ़ापूर्वभाद्रपदनक्षत्राणि ।

**त्रिपिष्टपप्रासादः**- अष्टासप्रासादाः त्रिपिष्टपसंज्ञका भवन्ति
प्रासादशब्दो द्रष्टव्यः मत्स्य पु० अ०—२६८

**त्रिपुटः**— खोडिआचणा इति प्रसिद्धः वुट इति प्रसिद्धश्च ।
त्रिपुटः तालके गोक्षुरक्षुपे मटर इति ख्यातः द्विदलक्षुपे
शिम्बधान्यभेदे खेमारि इति ख्याते चेति ।
वैद्यकवब्दन्धिुः
"त्रिपुटः खण्डिकोऽपि स्यात" इति भावप्रकाशे
खण्डिक शब्दस्य खेसारी इत्यपभ्रंश सम्भवति ।

**त्रिपुण्ड्रम्**— त्रयाणां पुंड्राणाम् इक्षुवदाकाराणां समाहारः
"भस्मादिकृतकपालस्थतिर्य्यग्रेखात्रयम्"
इति शब्दकल्पद्रुमे ।
विना भस्मत्रिपुंड्रेण विना रुद्राक्षमालया ।
पूजितोऽपि महादेवो न स्यात्तस्य फलप्रदः ॥
अन्यत्र विना माल्लूरपत्रेण विफलं शिवपूजन-
मित्युत्तरार्द्ध पाठः ।
"वक्रालालाटगास्तिस्रो भस्मरेखास्त्रिपुंड्रकम्"
इति हारावली—६२

**त्रिपुरोत्सवः**— कार्त्तिकपूर्णिमासंध्यायां विधेय उत्सवः
तदुक्तं भविष्ये—
पौर्णमास्यां तु संध्यायां कर्त्तव्यं त्रिपुरोत्सवः ।
दद्यादनेन मन्त्रेण सुदीपांश्च सुरालये ॥
इत्यादिना ॥

**त्रिपुष्करम्**— (१) उपवीतम् इति हैमाद्रिः ।
कट्यां त्रिपुष्करं कृत्वा गन्धैर्यश्च विलिंपति ।
पितृयज्ञे भवेच्छिद्रं निराशैः पितृभिर्गतैः ॥
इति शातातपः
न कुर्य्यां नोदके संगो न चैले न त्रिपुष्करे ।
नागारे नासने नान्ने यस्य वै मोक्षवित्तु सः ॥ इति
वसिष्ठः—१०-२३
उपवीतम् इति श्राद्धप्रकाशे—२२३
(२) ब्रह्मकततीर्थविशेषः पुष्करहृदत्रयरूपं इति केचित्
(३) मृतस्य तिथिवारनक्षत्रगतपुष्कर-
दोषत्रयसमवायश्च ।
(४) त्रिपदनक्षत्राणि—
कृत्तिका पुनर्वसूत्तरफाल्गुनीविशाखोत्तराषाढ़ा

पूर्वभाद्रपदाख्यानि नक्षत्राणि त्रिपुष्कराणि इति
हेमाद्रिः ॥

नंदायां भार्गवदिने चतुर्दश्यां त्रिपुष्करे ।
तत्र श्राद्धं न कुर्वीत गृही पुत्रधनक्षयात् ॥ इति

**त्रिप्रायकम्**— (श्राद्धम्)
विप्राणां भुक्तिमात्रं स्यादाभान्त्येतरसमाचरेत् ॥ ७४
संभान्त्यथ मृताहस्य समारभ्यो विधीयते ।
सर्वशेषं समादाय पिण्डांस्त्रीनेव निर्वपेत् ॥ ७५
अवशिष्टं प्राशयेच्च त्रिप्रायकविधौ तथा ॥
पूर्वांगिरसे—७६
ज्ञातिप्रायं प्रकल्पयेत् इन्यन्यत्र स्मृतौ ।
आत्मानं पातयेद्घोरे नरके रौरवाभिधे ।
नष्टे त्रिप्रायके श्राद्धे पूर्वस्मिन् हविषि क्वचित् ।
पूर्वाङ्गिरस—७१

**त्रिफलम्**— नारंगैश्च तथा चाम्लै द्राक्षया च भृगूत्तम ।
त्रिफलं तु बलिः प्रोक्तः सततं केशवप्रियः ॥ इति
पूजाप्रकाशोद्धृतविष्णुधर्मोत्तरे । पूजा—१६१

**त्रिफलस्नानम्**— जातीफलं च बिल्वं च तथैवामलकं फलम्
अभीष्टं तत्कृतं राम त्रिफलस्नानमुच्यते ॥ इति
पूजाप्रकाशोद्धृत विष्णुधर्मोत्तरे ।
त्रिभिः संस्नापितं देवं सौभाग्यं महदाप्नुयात् ।
त्रिभिः फलैः स्नापयित्वा त्रिसारेणानुलेपयेत् ॥
विष्णुधर्मोत्तर पु०—२-११०-२१

**त्रिमधुः**— ऋग्वेदैकदेशः तद्व्रतं च,
तद्व्रताचरणेन तदधीत इति त्रिमधुरिति
विज्ञानेश्वरः—१-२१९
मधुवाता ऋतायत इति त्यृचस्त्रिमधुस्तत्र हि
प्रत्यृचं त्रयो मधुशब्दा इह तु तदध्यायो पुरुषस्त्रि-
मधुरिति हरदत्तः ।
त्रिमधुस्त्रिसुपर्णस्त्रिणाचिकेतश्चतुर्मेधः पञ्चाग्नि-
र्ज्येष्ठसामिको वेदाध्याय्यनूचानपुत्रः
श्रोत्रिय इत्येते श्राद्धे भुञ्जानाः पंक्तिपावना
भवन्ति ॥ आप०—२-७-१८-२२

**त्रिमधुरम्**— "आज्यं क्षीरं मधु तथा मधुरत्रयमुच्यते"
इति लिङ्गपुराणे परिभाषाप्रकाश—११४
क्षौद्रमिक्षुरसं क्षीरं तथा त्रिमधुरं स्मृतमिति
पूजाप्रकाशोद्धृत विष्णुधर्मोत्तरे । पूजा—१६१
सरस्वत्यै त्रिमधुरं वरुणाय रसोदनम् ।
वाडवान्नं धनपतौ तव मित्रे त्रिलोचन ॥ इति भविष्ये

**त्रिमधुरबलिः**— धूपं दहेत्त्रिशीतेन दद्यात्त्रिमधुरं बलिम् ।
मधूकपुष्पाणि तथा द्राक्षां खर्जूरमेव च ॥
विष्णुधर्मोत्तर पु०—२-११०
सर्वभूतैः सहाप्नोति सख्यमेत्र न संशयः

**त्रियुगम्**— (१) प्रपितामहप्रभृतिपितृपर्यन्तमिथुनत्रयम्
वेदश्च वेदी च त्रियुगं यत्र सीदति ।
स वै दुर्ब्राह्मणः प्रोक्तो ब्रह्मवादिषु गर्हितः ॥
इति हेमाद्रौ हारीतः ।
(२) या ओषधीः पूर्वाजाता देवेभ्यस्त्रियुगं पुरा
मनैनु बभ्रूणामहं शतं धामानि सप्त च ॥
अत्र महीधरः युगशब्दः कालवाची । त्रयाणां युगानां
समाहारः । त्रियुगं-त्रिकालं वसन्ते प्रावृषिशरदि चेति

**त्रिरक्तपुष्पम्**— कुंकुमं रक्तपद्मानि रक्तानि कुसुमानि च ।
एतत्त्रिकं तु निर्दिष्टं कुंकुमं केशवप्रियम् ॥
इति पूजाप्रकाशोद्धृतविष्णुधर्मे—१६३

**त्रिरसस्नानम्**— घृततैलमधुभिः स्नानं त्रिरसस्नानमिति नरसिंहवाजपेयिनः नित्याचारप्रदीपे ।
त्रिरसस्नानमितिलेखः प्रामादिकः ।
त्रिरसस्नापितंदेवंत्रिसुगन्धेन लेपितम् ।
कृत्वा दत्त्वा त्रिसूत्रं च बलिं कामाद्विमुच्यते ॥
विष्णुधर्मोत्तर पु०—२-११०-७

**त्रिलोचनयात्रा**— वैशाखशुक्लतृतीयायां त्रिलोचनयात्रोक्ता काशीखण्डे इति मयूखे ।

**त्रिवर्गः**— धर्मार्थकामाः ।
धर्मार्थावुच्यते श्रेयः कामार्थौ धर्म एव च ।
अर्थ एवेहवा श्रेयस्त्रिवर्ग इति तु स्थितिः ॥
मनुः—२-२२४

**त्रिवृत्**— (१) त्रिवृच्छब्दो नवके सर्वत्र वेदे इति काठकगृह्यभाष्ये—४-१-१२

(२) नवगुणम् इति पूजाप्रकाशे मित्रमिश्रः ॥
त्रिवृच्छुक्लं च पीतं च पट्टसूत्रादिनिर्मितम् ।
यज्ञोपवीतं गोविन्दे दत्त्वा वेदान्तगो भवेत् ॥
इति नरसिंहपुराणे ।

त्रिगुणं कौशं सौत्रं वातिवृत् यज्ञोपवीतम् ।
बौधा०—१-५-५

कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत् ।
शणसूत्रमयं राज्ञो वैश्यस्याविकसौत्रिकम् ॥
मनुः—२-४४

"नवसूत्रं नव वै त्रिवृत्" इति श्रुतिः इति स्मृतिचन्द्रिकायाम् संस्कार—८१
तत्र च दत्तात्रेयः—
अधोवृतैस्त्रिभिः सूत्रैः पुनश्चोर्ध्ववृतैस्त्रिवृत् । इति

**त्रिवृद्वेदः**— वेदत्रयाणां पृथक् पृथक् मन्त्रब्राह्मणानि त्रिवृद्वेदो ज्ञातव्य इति कुल्लूकाभिप्रायः ।
ऋचो यजूंषि चान्यानि सामानि विविधानि च ।
एष ज्ञेयस्त्रिवृद्वेदो यो वेदैनं स वेदवित् ॥
मनुः—११-२६४
आद्यं यत्त्र्यक्षरं ब्रह्म त्रयी यस्मिन् प्रतिष्ठिता ।
स गुह्योऽन्यस्त्रिवृद्वेदो यस्तं वेद स वेदवित् ॥
मनुः—११-२६५

**त्रिवेदाः**— येऽक्षरमक्षमुत्तमं च पुरुषं वेदयन्ते ते त्रिवेदा इति नीलकण्ठः महाभा० उद्—४३-४१
आख्यानपञ्चमैर्वेदैर्भूयिष्ठं कथ्यते जनः ।
तथा चान्ये चतुर्वेदास्त्रिवेदाश्च तथापरे ॥
इति सनत्सुजातीये ॥

**त्रिशंकुदेशः**— पृथ्वीचंद्रोदये स्कांदे—
त्रिशंकोर्वर्जयेद्देशं सर्वं द्वादशयोजनम् ।
उत्तरेण महानद्या दक्षिणेन तु कीकटात् ॥
देशस्त्रैशंकवो नाम श्राद्धकर्मणि वर्जितः इति हेमाद्रिः
देवलस्मृतौ अपि-देवलः—४
परिभाषाप्रकाशे च—५१

**त्रिशीतधूपः**— कर्पूरचन्दनोशीरैस्त्रिशीतं परिकीर्त्तितम्

इति पूजाप्रकाशे—१५६

त्रिशीतै कुसुमैः पूज्यं धूपं दद्यात्त्रिशीतलम् ।
त्रिशीतं च बलिं दत्त्वा राजकोपाद् विमुच्यते ॥
विष्णुधर्मोत्तर पु०—२-११०-१६

**त्रिशीतपुष्पम्**–नीलोत्पलं रक्तपद्मं जातीपुष्पाणि भार्गव ।
विष्णोः प्रियाणि पुष्पाणि त्रिशीतानि विनिर्दिशेत् ॥
इति पूजा प्र०—१५६
त्रिशीतधूपशब्दो द्रष्टव्यः ।

**त्रिशीतबलिः**–लाजसक्तुपयः क्षौद्रं त्रिशीतश्च बलिः स्मृत
पूजा० प्र०—१५६
त्रिशीतधूपशब्दो द्रष्टव्यः ।

**त्रिशीतस्नानम्**— घृतं क्षीरं तथा क्षौद्रं त्रिशीतं स्नानमुच्यते ॥ पू० प्र० ।
त्रिशीतस्नापितं देवं त्रिशीतेनानुलेपयेत् ।
त्रिशीतैः कुसुमैः पूज्यं धूपं दद्यात्त्रिशीतलम् ॥
विष्णुधर्मोत्तर पु०—२-११०-१६

**त्रिशीतानुलेपनम्**– जातीफलं सकर्पूरं चन्दनं च भृगूत्तम ।
त्रिशीतमेतत् कथितं देवदेवानुलेपनम् ॥ पू० प्र०–१५६
त्रिशीतस्नानशब्दो द्रष्टव्यः ।

**त्रिशीर्षा**— रुद्रशिरो वैश्वानरशिरोऽथर्वशिरश्चेति त्रयाणामध्येता त्रिशीर्षा इति हेमाद्रिः ।

**त्रिशुक्ल**— (१) त्रिशुक्लबलिः ।
घृतौदनं पायसं च तथा दध्योदनं द्विज ।
त्रिशुक्लस्तु बलिः पूर्वं सर्वकामप्रदः शुभः ॥ इति नित्याचारप्रदीपे पूजाप्रकाशे च—१५५

(२) त्रीणि कुलविद्यावित्तानि शुक्लानि विशुद्धानि यस्यासौ त्रिशुक्लः इति हेमाद्रिः । परिशेष—३५२
एवमन्वयविद्याभ्यां वित्तेन च समुच्छ्रितः ।
त्रिशुक्ला नाम विप्रेन्द्राः पूज्यन्ते सवनादिषु ॥ इति देवलः
धर्मकर्मयशांसि त्रीणि शुक्लानि यस्येति लक्षणप्रकाशे
त्रिभिर्माता पित्राचार्य्यैः शिक्षितत्वेन शुद्धः इति पराशरव्याख्याने माधवाचार्य्याः—१-३७
तत्र देवलः ।
त्रिशुक्लः शुक्लवृत्तिश्च घृणालुः संयतेन्द्रियः ।
विमुक्तो योनिदोषेभ्यो ब्राह्मणः पात्रमुच्यते ॥ १६८
चतुष्किष्कुश्चतुर्दंष्ट्रस्त्रिशुक्लो दशपद्मवान् ।
षडुन्नतो दश बृहत् त्रिभिर्व्याप्नोति राघवः ।
इति रामायणे ।

**त्रिशुक्लबलिः**— त्रिशुक्लशब्दो द्रष्टव्यः ।
विष्णुधर्म—२-११०-४६

**त्रिशुक्लानुलेपनम्**— "त्रिशुक्लं कथितं राम कर्पूरोशीर चन्दना" इति विष्णुधर्मोत्तरे पूजाप्रकाशे—१५५

**त्रिशूकबलिः**— गोधूमयवशाल्यन्यै स्त्रिशूकं परिचक्षते ।
पूजा प्रकाशे—१५६

**त्रिशूली**— महाकालनाम्ना प्रसिद्धा लता
मूलं धार्यं त्रिशूल्या इति नाक्षत्रिकाः ।

**त्रिषवणस्नायी**— त्रिकालस्नानशीलः ।

**त्रिसमम्**— त्वल्के सरलवङ्गैस्तु त्रिसमं मुनिभिः स्मृतम् ।
इति स्कान्दे परिभाषाप्रकाशोद्धृते—११४

**त्रिसरम्**— गुणत्रयम् ।
वामावर्त्तं त्रिगुणं कृत्वा प्रदक्षिणा वर्तं नव ।
गुणं विधाय तदेवं त्रिसरं कृत्वा ग्रन्थिमेकं विदध्यात
इति हरिहरभाष्ये ॥ पारस्करः—२-५

**त्रिसर्षपम्**— रक्तास्तु सर्षपा नाम तथा कृष्णास्तु सर्षपाः
सर्षपत्रयमित्युक्तं यथा ते शुक्लसर्षपाः ॥ इति

**त्रिसारधूपः**— चन्दनागुरुकालेयैस्त्रिसारः परिकीर्त्तितः ।
इति पूजाप्रकाशे वराहवाक्यम् १५८

**त्रिसुगंधानुलेपनम्**— कर्पूरकुंकुमचंदनैरनुलेपनमिति
नरसिंहवाजपेयी ।
त्रिरसस्नापितं देवं त्रिसुगन्धेन लेपितम् ।
कृत्वा दत्त्वा त्रिसूत्रं च वलिं कामाद् विमुच्यते ॥
विष्णुधर्मोत्तर पु०—२-११०-७

**त्रिसुपर्णः**— त्रिसुपर्णः ब्रह्ममेतु मामित्यनुवाकत्रयमिति
लक्ष्मीधरः त्रिसुपर्णः बह्वृचां वेदभागस्तद्व्रतं च तद्
योगात पुरुषोऽपि त्रिसुपर्ण इति कुल्लूकः
मनुः—३-१८५
"चतुष्कपर्दा युवतिः सुपेशा" इत्यादि स्तृयुचस्त्रिसुपर्णः
अन्ये तु ब्रह्ममेतुमामिति इति हरदत्तः
आप०—२-७-१७-२२
आपस्तम्बवचनं त्रिमधुशब्दे द्रष्टव्यम् ।
त्रिसुपर्णमन्त्रऋग्यजुषोरेकदेशः तद्व्रतं च तद्व्रताचरणेन
यस्तदधीते स त्रिसुपर्णिकः इति विज्ञानेश्वरः या-१-२१९
चतुष्कपदर्चः पूर्णः पाठो यथा—
चतुष्कपदेतितृच सध्रिर्वैरूप ऋषिः विश्वेदेवा
देवता त्रिष्टुप्छन्दः मध्यायाः जगतीछंदः ऋ ८-६-१६
वर्गः । चतुष्कपर्दा युवतिः सुपेशा घृतप्रतीकावयुनानि
वस्ते । तस्यां सुपर्णा वृषणा निषेदतुर्यत्र देवादधिरे
भागधेयम् ।
एकः सुपर्णः स समुद्रमाविवेश स इदं विश्वं भुवनं
विचष्टे । तं पाकेन मनसा पश्यमन्ति तस्तं
मातारेलहिसउरेलहि मातरम् ।
सुपर्णं विप्राः कवयो वचोभिरेकं सन्तं बहुधा कल्पयन्ति
छंदांसि च दधतो अध्वरेषु ग्रहान्त्सोमस्यमिमते
द्वादश ॥

**त्रिसुपर्णिकः**— त्रिसुपर्णाख्य पङ्क्तिपावनब्राह्मणविशेषः ।
त्रिसुपर्णं ऋग् यजुषोरेकदेशः तद्व्रतं च तद्
व्रताचरणेन यस्तदधीते स त्रिसुपर्णिकः इति
विज्ञानेश्वरः याज्ञ०—१-२१९

**त्रिस्नेहस्नानम्**— नवनीतं घृतं तैलं त्रिस्नेहमितिशब्दितम्
इति वीरमित्रोदये पूजाप्रकाशे —३६४

**त्रिस्पृशा**— वैष्णवैकादशीविशेषः । यथा
अरुणोदय आद्ये स्याद् द्वादशी सकलं दिनम् ।
अन्ते त्रयोदशीप्रातस्त्रिस्पृशा च हरेः प्रिया ॥ इति

**त्रिहलिकाग्रामः**— शालग्रामः स च श्राद्धदेशरूपेण
विष्णुना दर्शितः—८५-२४
तण्डुलिका श्रम इति वा पाठ इति वैजयन्त्याम ॥

**त्रुटिः**— सूक्ष्मकालविशेषः ।
द्वौनिमेषौ टित्रुर्ज्ञेया प्राणो दशत्रुटिः स्मृतः इति

विष्णुधर्मोत्तरे—१-७३-२
कालसारे संक्रान्तिप्रकरणे देवीपुराणवचनम् ।
सुस्थे नरे सुखासीने यावत् स्पन्दति लोचनम् ॥
तस्य त्रिंशत्तमो भागस्तत्परः परिकीर्त्तितः ।
तत्पराच्छतभागस्तु त्रुटिरित्यभिधीयते ॥
इति देवी पु० देवीपुराणे तु शतभागमिति पाठः
२४-२२-२३
सूक्ष्मैलायां त्रुटिः स्त्री स्यात् कालेऽल्पे संशयेऽपि सा"
इत्यमरः—३-३-३७

**त्रेणी**— त्रिषु स्थानेषु श्वेता (शलली)
त्रेण्या शलल्या पारस्करः—१-१५-४

**त्रेता**— आहवनीय- गार्हपत्य-दक्षिणाग्नयः ।
पवनः पावनस्त्रेता यस्य पंचाग्नयो गृहे ।
सायं प्रातः प्रदीप्यन्ते स विप्रः पङ्क्तिपावनः ॥ इति
(२) सत्यद्वापरान्तवर्त्ती युगविशेषः कार्त्तिकशुक्लनवम्यां
तस्योत्पत्तिः । प्रमाणं युगदिशब्दे द्रष्टव्यम् ।
तस्यस्थितिकालः नरमानेन षण्णवति सहस्राधिक-
द्वादशलक्षसंवत्सराः मनुः—१७०

**त्रैककुदम्**— स्रोतोंमनाख्य नीलपर्वतशिलाचूर्ण-
जमंजनमिति हेमाद्रिः ।
त्रैककुदं सुवीरांजनमिति हरिहरः पारस्करः-३-३-११
सौवीरमंजनमिति पारस्करभाष्ये हरिहरः-२-१४-१२

**त्रैदेशिकतीर्थम्**— देवतीर्थम् । अङ्गुलीनामग्रभागः ।
अङ्गुष्ठमूलस्य तले ब्राह्मतीर्थं प्रचक्षते ।
कायमङ्गुलिमूलेऽग्रे दैवं पित्र्यं तयोरधः ।
मनुः—२-५८

**त्रैयम्बकम्**— करतलप्रमाणम् ।
त्रैयम्बक प्रमाणात् गोभिलः—३-१०-१२
त्रैयम्बकं करतलमपूपा मण्डकाः स्मृताः ।
पालाशा गोलकाश्चैव लोहचूर्णं तु चीवरम् ॥
इति चन्द्रकान्तभाष्ये गोभिल गृ०—३-१०-६

**त्रैविद्यम्**— तिस्रो विद्या अधीयन्ते इति त्रिविद्याः
तेषां समूहः त्रैविद्यम् । इति विज्ञानेश्वरः—१-६
चत्वारो वेदधर्मज्ञाः पर्षत् त्रैविद्यमेव वा ।
सा ब्रूते यं सधर्मः स्यादेको वाध्यात्मवित्तमः ॥
याज्ञ०—१-६

**त्रैविद्यः**— ऋग्यजुः सामवेदास्त्रैविद्यं तेन चात्र तद्वये-
तारस्त्रयो ब्राह्मणा लक्ष्यन्ते । इत्यपरार्कः ।
त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्मपाठकः ।
त्रयश्चाश्रमिणः पूर्वे परिषत्स्याद्दशावरा ॥
मनुः—१२-१११
त्रैविद्या वेदत्रयाध्यायिन इति कुल्लूकः ॥
मनुः—६-१८८
सर्वेसामप्यभावे तु ब्राह्मणारिक्थभागिनः ।
त्रैविद्याः शुचयो दान्तास्तथा धर्मो न हीयते ॥
मनुः—६-१८८

**त्रैविद्यकम्**— तिसृषु विद्यासु वेदत्रयात्मिकासु भवं ग्रहणं
प्रयोजनं वा व्रतं तत् त्रैविद्यकमिति देवपालः
काठक गृ०—४-१-१
वेदत्रयाध्ययनार्थमिति आदित्यदर्शनभाष्ये ।

त्रैशंकवोदेशः— उत्तरेण महानद्या दक्षिणेन तु कीकटात् ।
देश स्त्रैशंकवीतामश्राद्धकर्मविवर्जित ॥

इति वायुपुराणे ।

त्र्यवरापरिषत्— ऋग्यजुः सामवेदविदां परिषत् ।
ऋग्वेदविद्यजुर्विच्च सामवेदविदेव च ।
त्र्यवरा परिषज्ज्ञेया धर्मसंशयनिर्णये ॥

मनुः—१२-११२

त्र्यहैहिकः— ईहायां भवम् ऐहिकम् धनम् ।
त्र्यहमैहिकमस्येति त्र्यहैहिकः । दिनत्रयार्थं संचितान्न इति यावत् ।
कुशूल धान्यको वास्यात कुम्भीधान्यक एव वा ।
त्र्यहैहिको वापि भवेदश्वस्तनिक एव वा ॥

मनुः—४-७

त्वक्— चर्म, स्पर्शनेन्द्रियं च ।
श्रोत्रं त्वक्चक्षुषी जिह्वा नासिका चैव पञ्चमी ।
पायूपस्थं हस्तपादं वाक् चैव दशमी स्मृता ॥
तस्य षोढ़ा शरीराणि षट्त्वचो धारयन्ति च ।
षड़ङ्गानि तथास्थ्नां च सह षष्ठ्याशतत्रयम् ॥

याज्ञ०—३-८४

त्वक्सारः — वेणुवृक्षः मनुः—१०-३-१
चण्डालात् पाण्डुसोपाकस्त्वक्सारव्यवहारवान् ।
आहिण्डिको निषादेन वैदेह्यामेव जायते ॥

मनुः—१०-३७

त्वष्टिः— (१) "काष्ठतक्षणम् त्वष्टिस्त्वायोगवस्य च"
(२) कलह इति मित्रमिश्रः मनुः—१०-४८

(३) दर्भाश्चैवासने दद्यान्नतु पाणौ कदाचन ।
देव पितृमनुष्याणां स्यात्त्वष्टिः शाश्वती तथा ॥

इति प्रचेताः । श्राद्धप्रकाशे—१६६

त्वाष्ट्रम्— (१) त्वाष्ट्रं चित्रानक्षत्रमिति हेमाद्रिः ।
"रूपवतः सुतान् त्वाष्ट्रे" इति विष्णुस्मृतौ—७८-१६
(२) त्वाष्ट्रः- दैत्यविशेषः ।
"इन्द्रास्त्रिशीर्षाणं त्वाष्ट्रं हत्वा" इति वसिष्ठः-५-८

## द

दंशः— मशकविशेषः विशालाकारः डाउंश इति ख्यातः
वनमक्षिका इत्यमरः—२-५-७
तथैव नन्दपण्डितः विष्णुः—४४-१७
स्वेदजं दंशमशकम् इति स्वेदजोदाहरणे मनुः—१-४५
पुनश्च कर्मविपाके—
धान्यं हृत्वा भवत्याखुः कांस्यं हंसो जलं प्लवः ।
मधु दंशः पयः काको रसं श्वा नकुलो घृतम् ॥

मनुः—१२-६२

दंशितः— (१) धृतवर्मा ।
यो रथानां सहस्राणि दंशितानां दशैव तु ।
अदन्यहनि तेजस्वि निजघ्ने वसुसम्भवः ॥

महाभा० कर्ण—२-११

संनद्धोवर्मितः सज्जो दंशितो व्यूढ़कंकटः इति

अमरः—२-८-६५

(२) वारणा यत्र सौवर्णा पृष्ठे भासन्ति दंशिताः
सुपार्श्वं सुग्रहं चैव कस्यैतद्धनुरुत्तमम् ॥

महाभा० विरा०—४२-२

इत्यत्र दंशितः भासमान इति नीलकण्ठः ।

**दक्षिणः**— (१) वैदिकाग्निविशेषः ।
अन्वाहार्यपचनशब्दो द्रष्टव्यः ।
(२) दक्षिण दिग्भवः ।
दक्षिणेन मृतं शूद्रं पुरद्वारेण निर्हरेत् इति मनुः-५-९२
(३) सरलः ।
दक्षिणा दक्षिणाचारो दिशं येनाजयत्प्रभुः
महाभा०—४-५-२७
(४) वामेतरः ।
उद्धृते दक्षिणे पाणावुपवीत्युच्यते द्विजः ।
सव्ये प्राचीन आवीती निवीती कण्ठसज्जने ॥
मनुः—२-६३
(५) अनुकूलः ।

**दक्षिणजान्वक्तः**— भूमिगतदक्षिणजानुक इति
गोभिलीयचन्द्रकान्तभाष्ये—१-३-१

**दक्षिणपञ्चनदः**— विशिष्टश्राद्धदेशः विष्णुः—८५-५५
कृष्णा-वेणा-तुंगा-भद्रा-कोणानां पञ्चानां नदीनां
समाहारदेशः दक्षिणपञ्चनद इति वैजयन्ती ।

**दक्षिणमार्गः**— अजवीथी मृगवीथी वैश्वानरीवीथी
चेति तिस्रः सूर्यस्य दक्षिणोमार्गः देवीभागवते-८-१५
स च मार्गः महाभारते प्रदर्शितः
दक्षिणेन तु पन्थानं यं भास्वन्तं प्रचक्षते ।
एते क्रियावतां लोका ये श्मशानानि भेजिरे ॥
महाभा० शान्ति—१६-१४
आपस्तम्बोऽप्याह—
अष्टाशीति सहस्राणि ये प्रजामीषिर ऋषयः ।
दक्षिणेनार्यम्णः पन्थानं ते श्मशानानि भेजिरे ॥
तस्य मार्गस्य पितृयान इति नामान्तरम् ॥
तस्य मार्गस्य विवरणमाह याज्ञवल्क्यः ।
यज्ञेन तपसा दानैर्ये हि स्वर्गजितो नराः ।
धूमं निशां कृष्णपक्षं दक्षिणायनमेव च ॥ १९५
पितृलोकं चन्द्रमसं वायुं वृष्टिं जलं महीम् ।
क्रमात्ते सम्भवन्तीह पुनरेव व्रजन्ति च ॥
याज्ञ०—३-१९६

**दक्षिणा**— (१) दानक्रिया इति कुल्लूकः ।
संभोजनीसाभिहितापैशाची दक्षिणाद्विजैः ।
इहैवास्ते तु सा लोके गौरन्धे वैकवेश्मनि ॥
मनुः—३-१४१
अत्र दक्षिणादानक्रिया ।
(२) समस्मानं गीयमानं कर्मवेतनं दक्षिणा
पूजापूर्वकं दक्षिणा च न प्रतिग्रहो वेतनरूपत्वात्तस्या
इति दायभागे—६
यज्ञादिकर्मापूर्वलाभाय-ऋत्विक् प्रभृतिभ्यो या
दीयते सा दक्षिणा । सा हि परिक्रियार्था भवति ।
दक्षिणाशब्दः परिक्रयार्थे द्रव्ये वर्त्तते ।
येन ऋत्विजामानतिर्भवतीति हरिहरभाष्ये
पारस्कर गृ०—१-११-३
दक्षिणापरिक्रयद्रव्यमिति स एव पारस्कर गृ०-३-८-१६
(३) दिग्विशेषः
"पितॄणां वा एषा दिग् या दक्षिणा" विष्णुः—४-१३
(४) ब्रह्मवादिनीविशेषः निषच्छब्दो द्रष्टव्यः ।

**दक्षिणाग्निः**— अन्वाहार्यपचनशब्दो द्रष्टव्यः ।
दत्तासु दक्षिणास्वावौ तृप्तो भूत्वा यतोऽभवत ॥ इति
शब्दकल्पद्रुमोद्धृतवराह पुराणे ।

**दक्षिणापरः**— नैर्ऋतकोणः। गोभिलः—१-६-१४

**दक्षिणापरा**—(दिक्)— नैर्ऋती दिक् आपस्तम्बः
१-११-३१-२

**दक्षिणाप्रवणः**— दक्षिणतोऽवनतीदेशः इति
विज्ञानेश्वरः—१-२२७

प्रवणं कर्मनिम्नमिति गोभिलीय चन्द्रकान्तभाष्ये
१-१-६

**दक्षिणायनम्**— सूर्यस्य दक्षिणदिग् गमनम्।
कर्कटावस्थिते भानौ दक्षिणायन उच्यते इति।

**दण्डः**— (१) राजदंडः।
तस्यार्थे सर्वभूतानां गोप्तारं धर्ममात्मजम्।
ब्रह्मतेजोमयं दंडमसृजत् पूर्वमीश्वरः॥ मनुः—७-१४
यत्र श्यामो लोहिताक्षो दण्डश्चरति पापहा।
प्रजास्तत्र न मुह्यन्ति नेता चेत्साधु पश्यति॥
मनुः—७-२५

दण्डः शास्ति प्रजा सर्वा दण्ड एवाभिरक्षति।
दण्डः सुप्तेषु जागर्त्ति दण्डं धर्म विदुर्बुधाः॥
मनुः—७-१८

महाभा० शान्ति—१५-२ मात्स्ये च॥
न ब्रह्मचार्य्यधीयीत कल्याणि गौर्नदुह्यते।
न कन्योद्वहनं गच्छेद् यदि दण्डो न पालयेत्॥
महाभा० शान्ति—१५-३७

यस्माददान्तान् दमयत्यशिष्टान् दण्डयत्यपि।
दमनाद् दण्डनाच्चैव तस्माद्दण्डं विदुर्बुधाः॥
महाभा० शान्ति—१५-८

(२) दण्डयते अनेनेति दण्डः (पुं) हस्त्यश्वरथपदातयः
इति कुल्लूकः मनुः—७-५६८

दण्डो हस्त्यश्वरथ पत्तिलक्षणमिति विज्ञानेश्वरः
याज्ञ०—१-३५३

स्वाम्यमात्यौ पुरं राष्ट्रं कोशदण्डौ सुहृत्तथा।
सप्त प्रकृतयो ह्येताः सप्ताङ्गं राज्यमुच्यते॥
मनुः—६-२६४

(३) लगुडादिः।
ब्राह्मणो बैल्वपालाशौ क्षत्रियो वाटखादिरौ।
पैलवौदुम्बरौ वैश्यो दण्डानर्हन्ति धर्मतः॥
मनुः—२-४५

अङ्गुष्ठमात्र स्थूलस्तु बाहुमात्र प्रमाणकः।
सार्द्रश्च सपलाशश्च गोदण्डः परिकीर्त्तितः॥
मयस्मृतिः—४१

(४) कार्यसाधनोपायविशेषः।
उपायाः साम दानं च भेदो दण्डस्तथैव च।
सम्यक् प्रयुक्ताः सिद्धयेयुर्दण्डस्त्वगतिका गतिः॥
याज्ञ०—१-३४६

आश्रमी यदि वा वर्णी पूज्यो वाथ गुरुर्महान्।
ना दण्डयोनामराज्ञोऽस्ते यः स्वधर्मे न तिष्ठति॥
मत्स्य० पु०—२२४-५

दण्डस्य भीतैस्त्रिदशैः समेतैर्भागोधृतः
शूलधरस्य यज्ञे।
दत्तं कुमारे ध्वजिनी-पतित्वं वरं शिशूनां च
भयाद्बलस्य॥ २२०-१८

(५) दमनम्
वाग्दण्डोऽथ मनोदण्डः कामदण्डस्तथैव च।
यस्यैते निहिता बुद्धौ त्रिदण्डीति स उच्यते॥

मनुः—१२-१०

(६) करचतुष्टयपरिमाणः ।

चतुः करात्मको दण्ड इति शुक्रनीतौ —१-१६८

दशहस्तेन दण्डेन त्रिंशद्दण्डा निवर्त्तनम् ।

दशतान्येव विस्तारो गोचर्मतन्महाफलम् ॥

बृहस्पतिः—८

दशहस्तेन दण्डेन विंशदण्डा निवर्त्तनमिति लीलावती। इत्यादि ॥

(७) कालभेदः ।

अर्धमुहूर्त्तात्मकः कालः नाडीपर्य्यायः ।

(८) मानयष्टिविशेषः दशहस्त परिमितः

दण्डोदशहस्त इति नन्दपण्डितः केशववैजयन्त्याम् ॥

वापी दण्डत्रयादूर्ध्वं दशवर्गा नृपोत्तम ।

कर्त्तव्या सर्वतोभारा द्वित्रिश्चैकमथापि वा ॥

इति देवीपुराणवचनं केशववैजयन्त्याम् ॥

विष्णुः—६१-१

(९) दण्डो यमे मानभेदे लगुडे दमसैन्ययोः ।

व्यूहभेदे प्रकाण्डेऽश्वे काण मन्थानयोरपि ।

अभिमाने ग्रहे दण्डश्चण्डांशोः पारिपार्श्विके ॥

इति विश्वः

**दण्डखेदी**— बहुकृत्वोऽनुभूतदण्डः कौटल्यः—३-२०

**दण्डघ्नः**— दण्डपारुष्यकृत गुण्डा इति ख्यातः ।

यस्य स्तेनः पुरे नास्ति नान्यस्त्रीगो न दुष्टवाक् ।

न साहसिकदण्डघ्नौ स राजा शक्रलोकभाक् ॥

मनुः—८-३८६

**दण्डदासः**— दण्डशुद्ध्यर्थं स्वीकृतदासभावः ॥

मनुः—८-४१४

ध्वजाहृतो भक्तदासो गृहजः क्रीतदत्रिमौ ।

पौत्रिको दण्डदासश्च सप्तैते दासयोनयः ॥ इति

**दण्डध्वजः**— राज्ञाश्वपदाद्यंकनेन कृतदण्ड इति हेमाद्रौ।

तत्र यमः दण्डध्वजाश्च ये विप्राः इत्यादि ॥

**दण्डपारुष्यम्**— दण्ड्यते अनेनेति दण्डो देहस्तेन यत् पारुष्यं विरुद्धाचरणं जंगमादेर्द्रव्यस्य तद्दण्ड-पारुष्यमिति विज्ञानेश्वरः—२-२१२

उक्तंच नारदेन

परगोत्रेष्वभिद्रोहो हस्तपादायुधादिभिः ।

भस्मादिभिश्चोपघातो दण्डपारुष्यमुच्यते ॥इति-१५-४

परगात्रेषु स्थावरजंगमात्मक द्रव्येषु ग्रावादिभिर्हस्तादिभिर्वा प्रहरणं पङ्कपुरीषादि संस्पर्शनेन च मनोदुःखोत्पादनं तदुभयं दण्डपारुष्यम् इति विज्ञानेश्वराभिप्रायः ॥

**दण्डपालः**— सैन्यसेनामुखादि नेता । श्रीमूला—१-१२

**दण्डवासिकः**-- चोरग्रहणार्थं नियुक्तपुरुषाणां दण्डवासिक-संज्ञा ।

गृहे तु मुषिते राजा दापयेद्दण्डवासिकान् ।

आरक्षकान् राष्ट्रिकांश्च यदि चौर न लभ्यते ॥

इति नारद० स०—१६-७८

दण्डवासिकस्थाने चोरग्राहांस्तु दापयेदिति पाठान्तरम् तेषां दाप्यमानानां दण्डवासिकादीनां च यदि मोषे संशयः स्यात् मुषितः शपथं कारयितव्यः

नारदभाष्यम्—१६-७९

**दण्डालुः**— खम्बआलु इति प्रसिद्धः मूलविशेषः
ताम्बूलपत्री दंडालुर्गन्धालुः सोमवल्कलः इति
द्रव्याभिधानमिति वैद्यकशब्दसिन्धौ ।

**दत्तम्**— दत्तं सप्तविधमुक्तं नारदेन—५-७
पण्यमूल्यं भृतिस्तुष्ट्या स्नेहात्प्रत्युपकारतः ।
स्त्रीशुल्कानुग्रहार्थाय दत्तं दानविदे विदुः ॥ इति

**दत्तकः**— (१) मातापितृभ्यां दत्तः पुत्रः
दद्यात मातापिता वा यं स पुत्रो दत्तको भवेत् इति
याज्ञ०—२-१३०
मातापिता वा दद्यातां यमद्भिः पुत्रमापदि ।
सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्रिमः सुतः ।
मनुः—९-१६८
अत्र मातापितरौ दद्यातामिति मुख्यः पक्षः ।
पिता दद्यादिति मध्यमः पक्षः । माता दद्यादिति अधमः
पक्षः । न स्त्री दद्यात् प्रतिगृह्णीयादिति वसिष्ठवचनात्
सधवाया भर्त्तुरनुज्ञया पुत्रग्रहणेऽधिकारो वर्त्तते
विधवायास्तु भर्त्तुरभावात् तदनुमत्यसम्भवेन
दत्तपुत्रग्रहणे अधिकारो नास्तीति नन्दपण्डितः ।
व्यवहारमयूख निर्णयसिन्धुकारादयो नैतदनुमन्यन्ते ।

**दत्तात्मा**— (दत्तः आत्मा येन)- स्वयं दत्तः पुत्रः ।
दत्तात्मा तु स्वयं दत्तः इति कात्यायनः
मातापितृविहीनो यस्त्यक्तेता वा स्यादकारणात् ।
आत्मानं स्पर्शयेद्यस्मै स्वयंदत्तस्तु स मृतः ॥
मनुः—९-१७७

**दत्तानपकर्मः**— दत्ताप्रदानिकं नाम विवादपदम् ।
दत्तस्यानपाकर्म च— मनुः—८-४

**दत्ताप्रदानिकम्**— विवादविशेषः ।
दत्वा द्रव्यमसम्यग्यः पुनरादातुमिच्छति ।
दत्ताप्रदानिकं नाम तद्विवाद पदं स्मृतम् ॥
नारदसंहिता—५-१

**दत्रिमः**— मातृपितृभ्यां दत्तः पुत्रः दत्तक इति ख्यातः ।
मातापिता वा दद्यातां यमद्भिः पुत्रमापदि ।
सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्रिमः सुतः ॥
मनुः—९-१६८

**दद्रुणः**— दद्रुरोगवान् ।
सुवर्णस्तेयी कुनखी । वस्त्रापहारी श्वित्री ।
हिरण्यापहारी दद्रुणः इति पराशरमाधवे शङ्खलिखितौ
प्रायश्चित-पृ०—५१७

**दधित्थः**— कपित्थवृक्षः ।
दधित्थं कपित्थमिति निर्णयसिन्धौ—२९४
(निर्णयसागर प्रकाशनम्)
तत्र चन्द्रिकायां हारीतः—
न वटप्लक्षोदुम्बरशेलुदधित्थनीपमातुलिङ्गानि भक्षयेत्
इति हेमाद्रौ च परिशेषे—५६७

**दधिधानी**— दधिमाण्डम् ।
दधिधीयतेऽस्यामितिविग्रहः दधिधानी सधर्माः स्त्रियः
स्युः बौधायनः—२-२-११

**दधिधेनुः**— दानार्थं दधिनिर्मिता धेनुः वराहपुराणं द्रष्टव्या

**दधिमंत्रः**— ओं दधिक्राव्णो अकारिषं जिष्णोरश्वस्य-
वाजिनः । सुरभिनोमुखा करत्प्रणआयुंषि तारिषत् ।
शुक्लयजुः—२२-३२

**दधिशाकः**— दहिदहिका इति प्रसिद्धा लता भवितुमर्हति

**दध्योदनम्**— मधुराम्लेन गोदध्ना शुद्धान्नं तु विमिश्रितम् ।
तण्डुलं द्विगुणेनैव मरीचक्षोदसंयुक्तम् ॥
लवणार्द्रकसंयुक्तमेतद् दध्योदनं स्मृतम् ॥
इत्याचारेन्दौ—१६८

**दन्तकाष्ठम्**— दन्तधावनार्थं काष्ठम् ।
सर्वे कण्टकिनः पुण्याः क्षीरिणश्च यशस्विनः।
तिक्तं कषायं कटुकं सुगन्धिकण्टकान्वितम् ।
क्षीरिणो वृक्षगुल्माद्या भक्षयेद्दन्तधावनम् ॥

**दन्तकाष्ठमन्त्रः**— अन्नाद्याय व्यूहध्वम् इत्यादिः ।
आयुर्बलं यशोवर्चः प्रजा पशुवसूनि च ।
ब्रह्मप्रज्ञां च मेधां च त्वं नो देहि वनस्पते ॥
इति स्कांदे—३५-८४

**दन्तवेष्टौ**— प्राणायतनविशेषौ ।
दन्तवेष्टौ दन्तपाल्यौ इति विज्ञानेश्वरः याज्ञ०—३-९६

**दन्तशठम्**— दंतशठं जम्बीरफलम् इति नरसिंहवाजपेयी ।
दन्तशठः कपित्थ इत्यमरः—२-४-२१
उदुम्बरं कपित्थं च तथा दन्तशठं तथा ।
एवमादीनि देवाय न देयानि कदाचन ॥
इति विष्णुधर्मोत्तर तृतीयकाण्डे इति नित्याचारप्रदीपे
१-३७६

**दंतोलूखलिकः**— वानप्रस्थविशेषः । यः केवलं दन्तैः फलमूलदीनि चर्वयित्वा जीवनं धारयति ।
अयं च चतुर्विधेष्वन्यतमः ॥
अग्निपक्वाशनो वा स्याद्दन्तोलूखलिकोऽपि वा ॥
इति मनुः—४-१७
बौधायनधर्मसूत्रे इन्द्रावसिक्तेषु प्रकारविशेषोऽयम् ॥

**दमः** -- (१) बाह्येंद्रिय निरोधः । शमस्त्वन्तरिंद्रियनिग्रह दमः इति तयोर्भेदः । अन्तःकरणसंयमो दम इति
विज्ञानेश्वरः याज्ञ०—१-१२२
विहितेषु कर्मस्वग्लानिर्दम इति हरदत्तः
आप०— १-३-१८

(२) आत्मगुणविशेषः ।
बाह्यमाध्यात्मिकं वापि दुःखमुत्पाद्यते परैः ।
न कुप्यति न वा हन्ति दम इत्यभिधीयते ॥
अत्रिसंहिता—३६
विकारहेतु विषयसन्निधानेऽपि अविक्रियत्वं मनसो दमः मनसो दमनं दम इति सनन्दवचनात्
इति कुल्लूकः—६-६२
दमः इन्द्रियजय इति विष्णुधर्मोत्तरे—३-२-६६
इन्द्रियाणां जयो लोके दम इत्यभिधीयते ।
नादान्तस्य क्रियाः काश्चिद् भवन्तीह द्विजोत्तमाः-५-२
नादान्तः सिद्धिमाप्नोति नादान्तो गतिमीप्सिताम् ।
नादान्तः श्रियमाप्नोति नादान्तः किंचिदेव तु ॥ ३ ॥

(३) अनुद्धतता—
सत्यं भूतहितं प्रोक्तं मनसो दमनं दमः ।
तपः स्वधर्मवर्तित्वं शौचं संकरवर्जितम् ॥
इति महाभारते परिभाषाप्रकाशोद्धृते—३४

(४) दण्डः—
सकामां दूषयन् तुल्येनांगुलिच्छेदमाप्नुयात् ।

द्विशतं तु दमं दाप्यः प्रसङ्गविनिवृत्तये ॥

मनुः—८-३६८

**दमकः**— गवादीनां विनेता ।

हस्तिगोऽश्वोष्ट्रदमको नक्षत्रैर्यश्च जीवति ।
पक्षिणां पोषको यश्च युद्धाचार्यस्तथैव च ॥

मनुः—३-१६२

**दमनम्**— गवादीनां विनयसम्पादनम् ।

दमने वा निरोधे वा संघाते चैव योजने ।
स्तम्भशृङ्खलपाशैश्च मृते पादोनमाचरेत् ॥
इति आपस्तम्बस्मृतिः—१-१८

**दमनः**— दमनकवृक्षः इति कालदीपकारः स च "दअणा" इति भाषायां प्रसिद्धः ।

**दमनचतुर्दशी**— चैत्रशुक्लचतुर्दशी ।

मधुमासे तु संप्राप्ते शुक्लपक्षे चतुर्दशी ।
प्रोक्ता दमनभञ्जोति सिद्धिदा च महोत्सवा ॥

इति कालसारे ।

अद्य श्रीश्रीजगन्नाथदेवस्य श्रीश्रीलिङ्गराजदेवस्य च यात्रा ॥

**दमनोत्सवः**— चैत्रशुक्लद्वादश्यां दमनोत्सवः

इति निर्णयसिंधौ ।

**दम्पती**— जायापती ।

द्वावेतावशुची स्यातां दम्पती शयनं गतौ ।
शयनादुत्थिता नारी शुचिः स्यादशुचिः पुमान् ॥

अङ्गिरः स्मृतिः—५-३

**दम्भः**— धर्मव्याजेन लोकवंचनम् ।

**दम्भी**— लोकरंजनार्थमेव कर्मानुष्ठायी दंभीति विज्ञानेश्वरः

याज्ञ०—१-१३०

दंभिहैतुकपाखण्डि बकवृत्तींश्च वर्जयेत् ॥ इति

**दया**— आपन्न रक्षणं दयेति विज्ञानेश्वरः याज्ञ०—१-१२२

प्राणिमात्रविपत्प्रतिकारेच्छा दयेति हेमाद्रिः ।
परस्मिन् बंधुवर्गे वा मित्रे द्वेष्ये रिपौ तथा ॥
आत्मवद्वर्त्तितव्यं हि दयैषा परिकीर्त्तिता ॥

अत्रिसंहिता—४१

आत्मवत् सर्वभूतेषु यद्‌हिताय शिवाय च ।
वर्त्तते सततं हृष्टः कृत्स्ना ह्येषा दया स्मृता ॥
इति संस्कारप्रकाशे बृहस्पतिः ।
स्वदुःखेष्विव कारुण्यं परदुःखेषु सौहृदम् ॥
दयेति मुनयः प्राहुः साक्षाद्धर्मस्य साधनम् ॥

इति कूर्म पु०—२-१५ ।

आपन्नस्य द्वेष्टुरपि रक्षणं दयेति संस्काररत्नमाला
परे वा बन्धुवर्गे वा मित्रे द्वेष्टरि वा सदा ।
आपन्ने रक्षितव्यं तु दयैषा परिकीर्त्तिता ॥
इति कृत्यरत्नाकरे बृहस्पतिः कृत्य—१५
दया हितचिंतनमिति मस्करिः ।
यत्नादपि परक्लेशं हर्त्तुं या हृदि जायते ।
इच्छा भूमि सुरश्रेष्ठ सा दया परिकीर्त्तिता ॥इति
पाद्मे क्रियायोगसारे ।
"दया सर्वभूतानुकम्पनमिति हारीतः"
नित्याचारप्रदीपे—२-४२६

**दयितः**— दयितं याऽन्यदेशस्थं मृतं श्रुत्वा पतिव्रता ।
समारोहति शीर्षेऽग्नौ तस्याः शक्तिं निबोधत ॥
इति विवादरत्नाकरे व्यासः—४४१

**दरदः**— क्रियालोपवशात् शूद्रत्वं गतः क्षत्रियः
औड्रशद्वो द्रष्टव्यः ।

**दर्दुरम्**— पुण्यक्षेत्रविशेषः ।
कुरुक्षेत्रं शमतीर्थं कांची च पुरुषोत्तमम् ।
पुष्करं दर्दुरं क्षेत्रं वाराहं विधिनिर्मितम् ॥ २२
बदर्य्याख्यं महापुण्यं क्षेत्रं सर्वार्थसाधनमिति स्कान्दे
वैष्णवे वदरिकिमहात्म्ये ॥ अ०—१-२३
दर्दुरं ताम्रपर्णीनदीसमीपे इति वार्हस्पत्यार्थशास्त्रे
१४-११

**दर्दुरः**— मण्डूकः ।
कौशेयं तित्तिरिर्हृत्वा क्षौमं हृत्वा तु दर्दुरः ।
कार्पासतान्तवं क्रौञ्चो गोधागां वाग्गुदो गुडम् ॥
मनुः—१२-६४

**दर्दुरा**—अश्लक्ष्णा इति मित्रमिश्रः ।
आसने सुषिरं यस्याश्चक्रेणैकेन संयुता ।
दर्दुरा बहुचक्रा च लग्नचक्राप्यधोमुखी ॥ इति
पूजाप्रकाशे वर्ज्यशालग्रामशिलानिर्णये । भाषायां तु
भंगयोग्यसारशून्यमृत्पात्रादौ ददरा शद्वस्य
व्यवहार दृश्यते ।

**दर्पः**— (१) वर्द्धमानतिथिः ।
खर्वो दर्प स्तथा हिंस्त्रिविधं तिथिलक्षणम् ।
खर्वो नाम तिथेः साम्यं दर्पो वृद्धिः प्रकीर्त्तितः ॥
(२) दर्पः कस्तूरिका इति नरसिंहवाजपेयी,
नित्याचार—१-१३७
कर्पूरं चंदनं दर्पं कुंकुमं च समांशकम्
सर्वगंधमिति प्रोक्त मिति
(३) गर्वः । स्वगुणदाढ्य ज्ञानेन परावज्ञानं दर्प इति ।
चण्डेश्वरः विवादरत्ना—२५५
अवनिष्ठीवतो दर्पाद्द्वावोष्ठौ छेदयेन्नृपः ।
अवमूत्रयतो मेढ्रमवशर्द्धयतो गुदम् ॥
मनुः—८-२८२

**दर्भः**— कुशजातः ।
समूलस्तु भवेद्दर्भः पितॄणां श्राद्धकर्मणि ।
इति श्राद्धविवेके यमः ।
कुशाकाशावल्वजाश्च तथान्येती क्ष्णरोमशाः ।
मौंजश्च शाद्वलश्चैव षड्दर्भाः परिकीर्त्तिता ॥ इति
गोभिलभाष्ये—१-५-१८
कालसारे तु—
काशाः कुशा वल्वजातश्च तथा ये तीक्ष्णशः शूकाः ।
पिञ्जला शाद्वलाश्चैव षड्दर्भाः परिकीर्त्तिता ॥
इति ब्राह्म इति कालसारोद्धृतपाठः ।
कुशाः काशायवादूर्वा उशीराश्च सकुन्दुराः ।
गोधूमा व्रीहयो मुञ्जा दशदर्भाः सवल्वजाः ॥
इति हेमाद्रौ अत्रिः ।
कुशाः काशास्तथादूर्वायवाव्रीहय एव च ।
वल्वजाः पुण्डरीकाणि सप्तधा वर्हिरुच्यते ॥
इति तत्र यमः ।
पिण्डवर्हिः कुशाः काशा दूर्वा मुञ्जाश्च वल्वजाः ।

मुञ्जेक्षु व्रीहिगोधूम यवकुन्दुरु वालकाः ॥
इति तत्र उशनाः हेमः श्राद्ध—६४२
(२) कुशविशेषः ।
अप्रसूताः स्मृतादर्भाः प्रसूतास्तु कुशा स्मृताः ।
समूलाः कुतपाः प्रोक्ता छिन्नाग्रास्तृण संज्ञिताः ॥
इति कौशिकः हेमाद्रौ श्राद्धकल्पे—६३७

**दर्भपिंजूली—** अनंतगर्भिणं साग्रं कौशं द्वितलमेव च ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ॥
कात्यायनः—२-१०
एतदेव तु पिंजुल्यालक्षणं समुदाहृतम् ।
आज्यस्योत्पवनार्थं यत्तदप्येतावदेव तु ॥
एतत्प्रमाणामेवैके कौशीमेवाद्रमंजरीम् ।
शुष्कां च शीर्णकुसुमां पिंजूलीं परिचक्षते ।
इति वीरमित्रोदये ।
इमां पिंजूलीम्, एके मुख्याः आचक्षते ॥

**दर्विः—** दर्वी ।
होतव्ये च हुते चैव पाणिशूर्पास्य दर्विभिः ।
न कुर्यादग्निधमनं कुर्यादूवा व्यजनादिना ॥
गोभिलस्मृतिः—१-१३५

**दर्वी—** प्रादेशमात्रा द्व्यङ्गुष्ठपर्वविस्तीर्णा पालाशाद्यन्यतमयज्ञियवृक्षोद्भवा इति हरिहरः पारस्करः—२-१४-१०
काष्ठनिर्मितमन्नप्रदानसाधनम् ।
मेक्षणलक्षणक्षितापीयं द्वांगुलपृथ्वग्रा ।
मेक्षणं तु चतुर्थभागोनमिति मित्रमिश्राणामाशयः
परिभाषाप्रकाशे—१०६

वृत्तं चाङ्गुष्ठपृथ्वग्रमवदानक्रियाक्षमम् ।
एषैव दर्वी यस्तत्र विशेषं तमहं ब्रुवे ॥ ७४ ॥
दर्वीद्व्यङ्गुष्ठपृथ्वग्रा तुरीयोनं तु मेक्षणम् ॥
मुसलोलूखले वार्क्षे स्वायते सुदृढे तथा ॥ ७५ ॥
इच्छा प्रमाणे भवतः ॥ गोभिलस्मृतिः—२-७६
दर्वी शाकादिपरिवेषणार्था इति महाभारतव्याख्याने
विरा०—८-१
अथापरो भीमबलः श्रिया ज्वलन्नुपाययौ सिंहविलासविक्रमः ।
खजां च दर्वीं च करेण धारयन्नसिं च कालाङ्गमकोषमव्रणम् ॥

**दर्शः—** अमावास्या ।
न पैतृयज्ञियो होमो लौकिकेऽग्नौ विधीयते ।
न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः ॥
मनुः—३-२८२

**दर्शनम्—** धर्मब्रह्मस्वरूपावेक्षणमिति नीलकण्ठः ।
महाभा० विरा०—१-२८-२१

**दर्शना—** शुक्लतृतीया रात्रिः—कालमाधव ।
वायुश्च सुखसंस्पर्शो निष्प्रतीपं च दर्शनम् ।
न भयं त्वाविशेत्तत्र यत्र राजा युधिष्ठिरः ॥ इति

**दर्शयागः—** अमावास्यायामन्वाधानं कृत्वा प्रतिपदि यः यागः क्रियते दर्शयागः ।

**दर्शा—** शुक्लप्रतिपद्रात्रिः कालमाधवः—२

**दलम्—** पाटितभागविशेषः पाति इति ख्यातः

शुष्कैस्तृणैर्वा काष्ठैर्वा पत्रैर्वेणुदलेन वा ।
मृण्मयैर्भाजनैर्वापि अन्तर्धाय वसुन्धराम् ।।

इति वायुपुराणे ।

वेणुर्वंशः तस्य दलं पाटितभागविशेषः
तत्पत्राणां "पत्रैरित्यनेन लब्धत्वात्" इति आह्निक-
प्रकाशे मित्रमिश्रः ।

भार्य्या पुत्रश्च दासश्च प्रेष्यो भ्राता च सोदरः ।
प्राप्तापराधास्ताड्याः स्यू रज्वा वेणुदलेन वा ।।

मनुः—८-२९९

अत्रापि दलशब्दस्य पत्रार्थे प्रयोगो विरुध्यते ।
वैदलशब्दे च दलशब्दस्य त्वगर्थतैव ।।

**दशक्षाराः**— तिलमुद्गकशिग्रूणां कोकिलाक्षपलाशयोः ।
काकजंघा तथावश्चिंचाश्वत्थवटस्य च ।
एभिस्तु दशाभिः क्षारैः शुद्धिर्भवति कांस्यके ।।

मिता—१-११०

**दशपापानि**— परद्रव्येष्वभिध्यानं मनसानिष्टचिंतनम् ।
वितथाभिनिवेशश्च त्रिविधं कर्म मानसम् ।। ३ ।।
पारुष्यमनृतं चैव पिशुन्यं चापि सर्वशः ।
असंबद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् ।। ४ ।।
अदत्तानामुपादानं हिंसा चैवाविधानतः ।
परदारोपसेवा च शारीरं त्रिविधं स्मृतम् ।।

मनुः—१२-५

**दशबंधः**— दशमांशः ।
अब्रुवन् हि नरः साक्ष्यमृणं सदशबन्धकम् ।
राज्ञा सर्वं प्रदाप्यः स्यात् षट्चत्वारिंशकेऽहनि ।।

याज्ञ०—२-७६

**दशमहादानानि**— कनकाश्वतिला नागा दासीरथमहीगृहाः ।
कन्या च कपिला धेनुर्महादानानि वै दश ।।

अग्नि पु०—२०९-२३

गोभूतिल हिरण्याज्यवासो धान्य गुडानि च ।
रूप्यं लवणमित्याहु र्दशदानान्यनुक्रमात् ।।
इति मुमूर्षुदशदानान्याह जातुकर्ण्यः शुद्धिप्रकाशे-१५२

**दशमानः**— पणः ।
मानस्तण्डुलमात्रः स्याद्दशमानः पणः स्मृतः ।

**दशसंस्काराः**— गर्भाधानादि कर्णवेधान्ताः नव विवाहश्चैक इति दशसंस्काराः ।
गर्भाधानं पुंसवनं सीमन्तो जातकर्म च ।
नामक्रिया निष्क्रमोऽन्नप्राशनं वपनक्रिया ।। १४ ।।
कर्णवेधो व्रतादेशो वेदारम्भक्रियाविधिः ।
केशान्तः स्नानमुद्वाहो विवाहाग्निपरिग्रहः ।। १५
त्रेताग्निसंग्रहश्चैव संस्काराः षोडशस्मृताः ।
नवैताः कर्णवेधान्ता मन्त्रवर्जं क्रियाः स्त्रियाः ।। १६ ।।
विवाहो मन्त्रतस्तस्याः शूद्रस्यामन्त्रतो दश ।।

व्यासस्मृतिः—१-१४-१७

**दशस्तोभम्**— सामविशेषः इन्द्रनरोनेमधिमाहवंते इत्यस्यामृचि अरण्यगाने गीयते इति चंद्रकान्तभाष्ये ।
इन्द्रनर इत्यस्य वसिष्ठ ऋषिः त्रिष्टुप् छंदः इन्द्रोदेवता ।
इन्द्रं नरो नेमधिताहवं ते यत्पार्या युनजतेधियस्ताः

शूरीनृपाता श्रवसश्चकाम आगोमति व्रजे भजात्वं नः ॥

साम पू०—४-१-३

**दशहरा—** ज्येष्ठशुक्ल दशमी ।

गङ्गा हि तस्मिन् दिने स्नातस्य दशविध पापानि हरति ।

दशविध पापानि दशपापानि इति शब्दे द्रष्टव्यानि ॥

शुक्लपक्षस्य दशमी ज्यष्ठे मासि द्विजोत्तमाः ।

हरते दशपापानि तस्माद्दशहरा स्मृताः ॥ १५ ॥

यस्तस्यां हलिनं कृष्णं पश्येद् भद्रां सुसंयतः ।

सर्वपापविविर्मुक्तो विष्णुलोकं व्रजेन्नरः ॥ १६ ॥

ब्रह्म० पु०—६३-१६

**दशहोता—** चितिः स्रु कचित्तमाज्यम् वाग्वेदि ॥ आधीतं वर्हिरित्यादिको मन्त्र इति कल्पतरुः ।

**दशा—** (१) वस्त्रप्रान्तभागः ।

शरः क्षत्रियया ग्राह्यः प्रतोदो वैश्यकन्यया ।

वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदने ॥

मनुः—३-४४

दशां विवर्जयेत् प्राज्ञ इति शङ्खः—१४-१७

(२) दशमीतिथिः ।

एकादशी दशाविद्धा द्वादशी सकलापरे ।

उपोष्या दशमीविद्धा ऋषिरुद्दालकोऽब्रवीद ॥

इति कालदीपे ।

(३) ग्रहावस्थान कालः ।

जातकं चाथ विज्ञाय दशाकाले सुशोभने ।

अष्टवर्गबले शुद्धे यात्राकालः प्रशस्यते ॥

विष्णुधर्मोत्तर पु०—२-१६६-२८

अत्र दशा ग्रहभोगकालः ।

दशा सूर्य्यस्य षष्ठाद्वा इन्दोः पञ्चदशैव तु ।

अष्टौ वर्षाणि भौमस्य दशमप्रदशा बुधे ॥ ७८ ॥

दशाद्वानि दशा पङ्कोरूनविंशद् गुरोर्दशा ।

राहोर्द्वादशवर्षाणि भार्गवस्यैक विंशतिः ॥

अग्नि पु०—१२१-७६

जन्मरुक्षे च लग्ने च दशास्वन्तर्दशासु च ।

रक्षामि सततं तस्य पीड़ा चान्यग्रहस्य च ॥

इति स्कन्द प्रभास—४६-५५

(४) वर्त्तिः वलिता इति लोके प्रसिद्धा ।

फलमूलानि धान्यानि दीपाः शुक्लदशान्विताः ।

घृतपूर्णाश्च कर्त्तव्याः संप्रद्योतित मण्डपाः ॥

दशा वर्त्तिरिति कृत्यरत्नाकरे—२१६

**दशापवित्रम्—** वस्त्रदशारूपं पवित्रम् ।

यज्ञपात्राणां स्रुक्स्रुवादीनां यज्ञकर्माणि प्रयुज्यमानानां दक्षिणेन हस्तेन दर्भै दशापवित्रेण वा ।

यथाशास्त्रं कर्मांगतया मार्जनं कर्त्तव्यमिति

विज्ञानेश्वरः—१-१८१

**दशावरापरिषद्—** यत्र परिषदि सभ्यानां दशसंख्या अवरा सा ।

यथा—

त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्मपाठकः ।

त्रयश्चाश्रमिणः पूर्वे परिषत् स्याद्दशावरा ॥

मनुः—१२-१११

चातुर्विद्यं विकल्पी च अंगविद्धर्मपाठकः ।

आश्रमस्था त्रयो विप्रा पर्षदेषा दशावरा ॥

वसिष्ठः—३-२०

चातुर्वैद्यमिति वसिष्ठ वाक्यापेक्षया बौधायनीये
विशेषः-बौधा०—१-१-१-६

**दशी**— दशग्रामपतिः।
"दशीकुलं तु भंजीत" मनुः—७-११६
अस्य नायक इति संज्ञान्तरम्।
अधिकृतो दशग्रामे नायक स च कीर्त्तित इति
शुक्रनीति—१-१९२
ग्रामस्याधिपतिं कुर्याद्दशग्रामपतिं तथा।
विंशतीशं शतेशं च सहस्रपतिमेव च।
मनुः—७-११५

**दस्युः**- (१) क्रूरकर्मा। पश्यतोहर इति सरस्वतीविलासे।
विक्रोशंत्यो यस्य राष्ट्रान्ह्रियन्ते दस्युभिः प्रजाः।
सम्पश्यतः सभृत्यस्य मृतः स न तु जीवति॥
मनुः—७-१४३
(२) चौर इति मेधातिथिः।
नाध्यधीनो न वक्तव्यो न दस्युर्न विकर्मकृत्।
न वृद्धो न शिशुर्नैको नान्त्यो न विकलेन्द्रियः॥
मनुः—८-६६

**दहरः**— दहरोऽल्प मूषकः छुच्छूंदरी वेति विज्ञानेश्वरः
याज्ञ०—३-२७०
स्वल्पकायोमूषकः छुछुंदरीत्येके इति हरदत्तः।
गौतमः—३-४-१६
दहरः अल्प इति छांदोग्यव्याख्याने श्री शंकराचार्याः
दहरः गुंडुची मूषा इति ख्यात दीर्घलांगुलविशिष्टः
वृक्षेषु वर्त्तमानः मूषिको भवितुमर्हति सः
हिन्दीभाषायां चुहि।
श्वमार्जारनकुलमण्डूकसर्पदहरमूषिकान् हत्वा कृच्छ्रं
द्वादशरात्रं चरेत्।
इति मिताक्षरायां वसिष्ठः याज्ञ०—३-२७०
उपलब्ध वसिष्ठस्मृतौ तु दहरस्थाने दर्दुर इति पाठः
वसिष्ठः—२१-२४

**दह्रः**— रात्रेस्तृतीयो भागः सर्वोपररात्रः।
तस्य त्रेधा विभक्तस्य आद्यांशः महारात्रः अन्यांशः
दह्र इति हरदत्तः आपस्तम्बः—१-३-६-२३
दह्रेऽपरशत्रे स्तनयित्नुवा।

**दाक्षायणम्**— सुवर्णम् इति अपरार्कविज्ञानेश्वरौ।
दाक्षायणी ब्रह्मसूत्री वेणुमान् सकमंडलुः।
कुर्य्यात् प्रदक्षिणं देवमृद्गोविप्रवनस्पतीन्॥
याज्ञ०—१-१३३

**दाक्षायणः**— श्रौतकर्मविशेष इति कुल्लूकः।
ऋक्षेष्ट्याग्रहणं चैव चातुर्मास्यानि चाहरेत्।
तुरायणं चक्रमशो दाक्षस्यायनमेव च॥
दाक्षायण यज्ञो नाम दर्शपूर्णमासविकृतिविशेषः।
स च दाक्षायणेन दृष्टत्वात् दाक्षायणं यज्ञ इति
चिन्नस्वामी बौधा०—१-१३-३०
पंचदशवर्षावधि तया दर्शपूर्णमासयोरेव।
प्रतिपर्वावृत्त्यानुष्ठानेन प्रकारविशेषो याज्ञिक प्रसिद्धः।

**दाढ़िका**— श्मश्रु।
केशेषु गृह्णतो हस्तौ छेदयेदविचारयन्।
पादयोर्दाढ़िकायां च ग्रीवायां वृषणेषु च॥
मनुः—८-२०३

**दाण्डिकः**— निग्रहाधिकारी।
अपराध त्रयोज्यदंडाधिकृत इति हेमाद्रिः।
राज्ञादंडाधिकारे नियुक्त इति हरदत्तः।

दाता— शुक्लपक्षरात्रेः प्रथमो मुहूर्त्तः कालमाधव—२
दाता प्रदाता इत्यादि तैत्तिरीयश्रुतिः।

दात्यूहः— उत्कलेषु डाहुक इति ख्यातः पक्षिविशेषः।
दात्यूहः कालकंठ डाउक इति प्रसिद्ध इति लक्ष्मीधरः
डाहुक इति गदाधरराजगुरुः
चातक इति विज्ञानेश्वरः याज्ञ०—१-१७२
क्रव्यादपक्षिदात्यूह शुकप्रतुदटिट्टिभान्।
सारसैकशफान् हंसान् सर्वांश्ग्रामवासिनः।
इति याज्ञ०—१-१७२

दात्रम्— तृणच्छेदनोपकरणम् "दाआ" इति प्रसिद्धम्।
वक्रक्रकचविशेषः
प्रयच्छ पशुमिति दर्भाहाराय दात्रं प्रयच्छति॥
कौशिक सू०—१-१-२४
कुद्दाल-दात्र-पिटकं तद्वत्स्थाल्यादिभाजनम्।
यत्र तत्रैव क्षिप्तानि तवदद्यु प्रतिश्रयम्॥
इति मार्कण्डेय पु०—५०-८६

दानम्— (१) स्व स्वत्वध्वंसपूर्विका परस्वत्वापत्तिर्दानम्।
तच्च कामदान-क्रीडादान-हर्षदानादिभेदन भिद्यते।
(२) कार्य्यसाधनोपायविशेषः।
सर्वेषामप्युपायानां दानं श्रेष्ठतमं मतम्।
सुदत्तेनेह भवति दानेनोभयलोकजित्॥
न सोऽस्ति राजन् दानेन वशगो यो न जायते।
दानेन वशगा देवा भवन्ती हसदानृणा॥
न केवलं दानपराजयन्ति भूलोकमेकं पुरुषप्रवीराः।
जयन्ति ते राजसुरेन्द्रलोकं सुदुर्जयंयो विबुधाधिवासः॥
मत्स्य पु०—२२३-८
दानं यज्ञानां वरूथं दक्षिणा। लोके दातारं
सर्वभूतान्युपजीवन्ति। दानेन अरातीरपानुदन्ति।
दानेन द्विषन्तो नता भवन्ति। दाने सर्वं प्रतिष्ठित॥
तस्माद्दानं परमं वदन्ति॥ इति श्रुतिः।

दानपत्रम्— भूमिं दत्त्वातुयत्पत्रं कुर्याच्चन्द्रार्ककालिकम्।
अनाच्छेद्यमनाहार्य्यं दानलेख्यं तु तद्विदुः॥

दान्तः— अनुद्धतः इन्द्रियचापल्यरहितः।
ये शान्तदान्ताः श्रुतिपूर्णकर्णाः जितेन्द्रियाः
प्राणिवधान्निवृत्ताः।
प्रतिग्रहे संकुचिताग्रहस्तास्ते ब्राह्मणा
स्तारयितुं समर्थाः॥ वसिष्ठः—६-२५

दामकम्— धेनुबन्धनहेतुः पाश इति माधवाचार्य्याः
योक्त्रदामकडोरैश्च कण्टाभरणभूषणैः।
गृहे वापि वने वापि बद्धा स्याद्गौर्मृता यदि।
तदेव बन्धनं विद्यात् कामाकामकृतं च तत्।
पराशरः—६-६
लोकास्तु धान्यादिमर्दन कालिकं बलीवर्दगलबंधरज्जुं
दाउणी इति वदन्ति। मन्मते सा अत्र विवक्षिता
योक्त्र समभिव्याहारात्। लाङ्गलयोजनादौ बलीवर्द
बन्धनरज्जुः योक्त्रमित्युच्यते।

दांभिकः— लोकवंशीकरणार्थं धर्मकारीत्यपरार्कः
लोकरंजनार्थमेव कर्मानुष्ठायी इति विज्ञानेश्वरः।
राजान्तेवासी याज्येभ्यः सीदन्निच्छेद्धनं क्षुधा।

दम्भिहैतुकपाखण्डिवकवृत्तींश्च वर्जयेत् ॥ याज्ञ०-१-१३०

दांभिको वंचक इति विज्ञानेश्वरः—१-१६२

**दायः**— (१) अन्वयागतं धनमिति मेधातिथिः।

असंसृष्टं विभजनीय धनं दाय इति मयूखकारः

विभक्तव्यं पितृद्रव्यं दायमाहुर्मनीषिण इति

व्यवहारमयूखोद्धृतनिघण्टौ।

दायशब्देन यद्धनं स्वामीसंबन्धादेवनिमित्तात्।

अन्यस्य स्वं भवति स च द्विविधः।

अप्रतिबंधः सप्रतिबंधश्च। तत्र पुत्राणां पौत्राणां च

पुत्रत्वेन पौत्रत्वेन च पितृधनं पितामहधनं

च स्वं भवति इत्यप्रतिबंधो दायः।

पितृव्यभ्रात्रादीनां तु पुत्राभावे स्वाम्यभावे च

स्वं भवतीति सप्रतिबंधो दायः।

एवं तत्पुत्रादिष्वप्यूहनीयः इति विज्ञानेश्वरः—२-११३

स्वामिस्वत्वनाशानन्तरं यत्त्रान्यस्य सम्बन्धिनः

स्वमुत्पद्यते तत्रैव दायशब्द इति जिमूतवाहनः।

(२) दानम्।

यो यथा निक्षिपेद्धस्ते यमर्थं यस्य मानवः।

स तथैव ग्रहीतव्यो यथा दायस्तथा ग्रहः॥

मनुः—८-१८०

अस्वामिना कृतो यस्तु दायो विक्रय एव वा।

अकृतः स तु विज्ञेयो व्यवहारे यथास्थितिः॥

मनुः—८-१९९

मिथएव प्रदातव्यो यथादायस्तथाग्रहः। मनुः-८-१९५

अत्र दायः निक्षेपादिना स्थापनमिति कुल्लूकः।

**दायादः**— पुत्रादिरुत्तराधिकारी।

दर्शनप्रातिभाव्ये तु विधिः स्यात् पूर्वचोदितः।

दानप्रति-भुविप्रेते दायादानोपदापयेत्॥

मनुः—८-१६०

येषु पुत्रेषु पित्रादिधनहरत्वेद दायादत्वं पिण्डादि-

दातृत्वेन वन्धुत्वं चोभयं।

पुनश्च दायादानां पुत्रादिसंनिकृष्टदायहरान्तराभावे

दायहरत्वं विद्यते ते दायादवान्धवाः।

पुत्रान् द्वादश यानाह नृणां स्वायम्भुवो मनुः।

तेषां षड् बन्धुदयादाः षड़दायादवान्धवाः॥

मनुः—९-१५८

**दायदवांधवाः**— औरसः क्षेत्रजश्चैव दत्त कृत्रिम एव च।

गूढोत्पन्नोऽपविद्धश्च दायादाबांधवाश्च षट्॥

मनुः—९-१५९

स्वयमुत्पादितः स्वक्षेत्रे संस्कृतायां प्रथमः। १३।

तदलाभे नियुक्तायां क्षेत्रजोद्वितीयः तृतीयः

पुत्रिका-१५ पौनर्भवश्चतुर्थः-१८ कानीन. पञ्चमः-२१

गृहे च गुढोत्पन्नः षष्ठः—२४

इत्येते दायादा वान्धवास्त्रातारो महतो भयादित्याहुः

वसिष्ठः—१७ अयाय।

**दारकः**— अनुपनीत इति श्राद्धकाण्डे कल्पतरुः॥

कुमार इति नन्दपण्डितः॥

"जाते च दारके जातकर्म"　　विष्णुः—२७-४

**दारः**— भार्या।

तस्मादेवं विच्छ्रोत्रियस्य दारेण नोपहासमिच्छेत

पारस्करः—१-११-५

"आचार्यवदाचार्य्यदारे वृत्तिः" आप०—१-७-२७

अत्र एकवचनान्त शब्दः।

मातृवत् परदारांश्च परद्रव्याणि लोष्ठवत्।

आत्मवत् सर्वभूतानि यः पश्यति स पश्यति ॥

आपस्तम्बस्मृतिः—१०-१२

दार शब्दः पुंलिङ्ग बहुवचनान्तः भार्य्यार्थः।

आपदर्थे धनं रक्षेद्दारान्रक्षेद्धनैरपि ॥

मनुः—७-२१३

**दालिः**— (१) पायसं चन्द्रसंकाशं सितशर्करया युतम्।

भक्तं कुमुदवर्णाभं मुद्गडालिस्तथैव च ॥

जैमि० अश्व—६-३५

**दाली**— डालीति प्रसिद्धा।

तथा वै मुद्गद्दाली च पर्पटा वाटिका तथा ॥

इति स्कन्द, ब्रह्म, धर्मारण्य—१३-२३

**दार्वाघाटः**— काष्ठकुट्टकः (पक्षी विशेषः) इति कल्पतरुः

**दाशः**— (१) दानपात्रम्।

(२) कैवर्त्तः मनुः—१०-३४ अमरकोश।दौ

तालव्यान्तपाठो दृश्यते।

(३) नाविकः।

यन्नाविकिंचिद्दाशानां विशोर्येतापराधतः।

तद्दाशैरेव दातव्यं सामागम्य स्वतोंशतः ॥

मनुः—८-४०८

**दाशतयी**— ऋग्वेदशाखा।

अवयवा यस्य संघस्य स दशतयः संघः।

तत्रभवा दाशतयी। इति पातंजलमहाभाष्ये

प्रदीपकारः—४-१-२

कर्माणि याभिः कथितानि राज्ञा दानानि

चोच्चावचमध्यमानि।

नाराशंसीरित्यृचस्ताः प्रतीयाद्याभिः स्तुति-

र्दाशतयेषु राज्ञाम् ॥ बृहद्देवता—३-१५४

न स्वक् संस्तविकी दाशतयीषु विद्यते ॥ निरुक्ते-७-३

दशमण्डलावयव प्रविभागेन तायते विस्तीर्यते इति

दशतय ऋग्वेदः तस्य शाखा दाशतय्यः इमि दुर्गवृत्तौ

**दासः**— (१) दानपात्रम्।

(२) कैवर्त्तः नौचालकः मनुः—१०-३४

निषादोमार्गवं सूते दासं नौकर्मजीविनम्।

कैवर्त्तमिति यं प्राहुरार्यावर्त्त निवासिनः ॥ इति

(३) गृहजनादयः पंचदशविधाः दासाः

गृहजातस्तथाक्रितो लब्धोदायादुपागतः।

अनाकालभृतस्तद्वदहितः स्वामिनाचयः ॥

मोक्षितो महतश्चर्णाद् युद्धमाप्तः पणेजितः।

तवाहमित्युपगतः प्रवज्या वसितः कृतः ॥

भक्त दासश्च विजेयस्तथैव वड़वाहृतः।

विक्रेता चात्मनः शास्त्रे दासाः पंचदश स्मृताः ॥

नारदसंहिता—६-२४

ध्वजाहृतोभक्तदासो गृहजः क्रीतदत्रिमो।

पैतृको दंडदासश्च सप्तैते दासयोनयः ॥

इति मनुः—८४१५

(४) जातिविशेषः

शूद्रकन्या समुत्पन्नो ब्राह्मणेन तु संस्कृतः।

संस्कारात्तु भवेद्दासः असंस्कारात्तु नापितः ॥ इति

**दासकर्मकरः**— आत्मानं दासं कृत्वा यः कर्म कुरुते स इति हरदत्तः ।

**दासपत्रम्**— वस्त्रान्नहीनः कान्तारे लिखितं कुरुते तु यत् ।
कर्माणि ते करिष्यामि दासपत्रं तदुच्यते ॥

**दासवीथिः**— मलनिर्हारमार्गः ।
गृहपृष्ठे दासवीथिं मलनिर्हरणस्थलम् ।
शुक्रनीतिसारः—१-२६७

**दिक्पालः**– (१) गोचरे यस्य मुष्येत तेन चौरः प्रयत्नतः ।
ग्राह्यो दाप्योऽथवा मोषं पदं यदि न निर्गतम् ॥
नारदसंहिता—१६-७६
निर्गते तु पदे तस्मात् न चेदन्यत्र पातितः ।
सामन्तान् मार्गपालांश्च दिक्पालांश्चैव दापयेत् ॥
दिक्पालो दिक्षु नियुक्तः स च स्थानपाल इति मिताक्षरा इति दण्डविवेके ।

**दिग्दाहः**— दिग्दाहे यत्र ज्वलिता इव दिशो दृश्यन्ते इति विज्ञानेश्वरः याज्ञ०—१-१५
दिग्दाहः दिशां पीतिमदर्शनम् इति वैजयन्त्यां
नन्दपण्डितः—३०-६
अग्निवर्ण्णा तु दिङ्मुग्रा दिग्दाह इति विश्रुतः ।
विष्णुधर्मोत्तरे—६-६-१५
पांसुवर्षे दिशादाहे सन्ध्यानीहारभीतपु ।
धावतः पूतिगन्धे च शिष्टे च गृहमागते ॥
याज्ञ०—१-१५०

**दिग्लाभः**— देशान्तरानुरूपलाभ इति विवादरत्नाकरे ।

**दिधिपूः**- (१) कनीयस्यामूढायां अविवाहिताज्येष्ठ भगिनी
ज्येष्ठायां विद्यमानायां-कन्यायामूह्यतेऽनुजा ।
साचाग्रे दिधिपूर्ज्ञेया पूर्वा तु दिधिपुर्मता ॥
इति प्रायश्चित्तविवेके देवलः ।
(२) द्विरूढा ।

**दिधिपूपतिः**– दिधिपुः द्विरूढा तस्याः पति दिधिपूपतिः।
भ्रातुर्मृतस्य भार्य्यायां योऽनुरज्येत कामतः ।
धर्मेणापि नियुक्तायां स ज्ञेयो दिधिपूपतिः ॥
मनुः—३-१७३

**दिनक्षयः**— क्षीणा तिथिः ।
यत्र सूर्योदये एकातिथिः । मध्ये अनन्तरातिथिः ।
रात्रिशेषे चान्या ।
त्र्यहस्पृशि तिथौ स्नानं दानं च जप एव च ।
सहस्रगुणितं प्राहुरिदमेव दिनक्षये ॥
नित्याचारपद्धतिः—१२३
दिनक्षयमृते देवि नोपोस्या दशमीयुता ।
सैवोपोष्या तदा पुण्या परतश्चेत्त्रयोदशी ॥
पुरुषार्थचिन्तामणिः—१७२

**दिवसः**— अहोरात्रम् ।
तिथिनैकेन दिवसश्चान्द्रमाने प्रकीर्त्तितः ।
अहोरात्रेण चैकेन सावनो दिवसः स्मृतः ।
आदित्यभागभोगेन सौरो दिवस उच्यते ॥ १७
चन्द्रनक्षत्र भोगेन नाक्षत्रो दिवसः स्मृतः
विष्णुधर्मोत्तरे—१-७३-१८

**दियाकीर्त्तिः**— चंडालः ।

दिवाकीर्त्तिमुदक्यां च पतितं सूतिकां तथा ।
शवं तत्स्पृष्टिनं चैव स्पृष्ट्वा स्नानेन शुद्ध्यति ॥
मनुः—५-८५

**दिवाकीर्त्यः**— दिवाकीर्त्तनीयः शतरुद्रादिमन्त्रः ।
दिवाकीर्त्यैश्च सौरैश्च मंत्रैरन्यैश्च शक्तितः" इत्यादि

**दिवाचराः**— खञ्जरीटक-दात्यूहशुकराजीव-कुक्कुटाः।
भारद्वाजश्च सारङ्ग इति ज्ञेया दिवाचराः ॥
अग्नि पु०—२३१-१७

**दिव्यम्**— (१) दिव्यं नाम दैविकं प्रमाणम् ।
तच्च लिखितसाक्षि भुक्तिरूपत्रिविधमानुषप्रमाणाभावे ग्राह्यम् ।
तच्च तुलाग्न्यादि भेदेनानेकविधम् ।
तुलाग्न्यापो विषं कोशो दिव्यानीह विशुद्धये ।
महाभियोगेष्वेतानि शीर्षकस्थेऽभियोक्तरि ॥
इति याज्ञ०—२-९५
घटोऽग्निरुदकं चैव विषं कोषस्तथैव च ।
तण्डुलाश्चैव दिव्यानि सप्तमस्तप्तमापकः ॥
इति मिताक्षरायां पितामहः ।
सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः ।
गो बीजकांचनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ॥
इति साक्षिप्रश्नविधाने मनुः—८-११५
निष्के तु सत्यवचनं द्विनिष्के पादलम्भनम् ।
त्रिकादर्वाक् तु पुण्यं स्यात्कोशपानमतः परम् ॥
तप्तघृतान् मुद्रिकाग्रहणादिप्रकाश अन्येऽप्युक्ताः धर्मशास्त्रेषु ।

(२) दृश्यमाने सूर्ये वर्षणम् ।
दृश्यमाने तथा सूर्ये दिव्यं प्रोक्तं च वर्षणम् ।
दृश्यमाने तथा चन्द्रे सामृतं परिकीर्त्तितम् ॥
विष्णुधर्मोत्तर—३-६-१८

**दिव्यस्नानम्**— यत्तु सातपवर्षेण स्नानं तद्दिव्यमुच्यते इति पराशरस्तु
कालेवाऽप्यथवाकाले सूर्ये मेघविवर्जिते ।
तस्मिन् दृष्टे तु यत्स्नानं तद्दिव्यमिति चोच्यते ॥

**दीक्षणीयेष्टिः**— इष्टिविशेषः । यत्र व्रीहिमयः पुरोडाशः हव्यम् पंचप्रयाजाः अग्नीषोमावाज्यभागौ ।
अग्नाविष्णूदेवता ।

**दीक्षा**— नियमः एताश्चान्याश्च सेवेत दीक्षा विप्रो वने बसन् इति ।
विविधाश्चौपनिषदीरात्मसंसिद्धये श्रुतीः ॥
मनुः—६-२९

**दीनारः**— मुद्राविशेषः चित्रक इति तस्य नामान्तरम् ।
दीनारो रौप्यकैरष्टाविंशत्या परिकीर्त्तितः ॥
सुवर्णस्य सप्ततितमो भागो रौप्यक उच्यते ।
इति नित्याचारप्रदीपे विष्णुगुप्तः ।
कार्षापणोण्डिका ज्ञेया ताश्चतस्रस्तु धानकः ।
ते द्वादश सुवर्णस्तुदीनारश्चित्रकः स्मृत ॥
इति कात्यायनः
कार्षापणोऽण्डिका ज्ञेया ताश्चतस्रस्तु धानकः ।
तद्द्वादश सुवर्णस्तु दीनाराख्यः स एव च ॥ इति
नारदसंहिता—१९-११८

आमेरिकादिषु प्रवर्त्तितः साम्प्रतिको डोलार शब्द
अस्यैवापभ्रंशो नवेति चिन्त्यः ।

**दीपनदी**— नरकविशेषः ।
दीपनदीउष्णतोयानदी वैतरण्याख्या ।
इति वैजयन्त्याम् विष्णुः—४३-२०
तस्याः पूयनदी इति पाठान्तरम् ।

**दीपयन्**— कृष्णपक्ष दिवसस्य चतुर्थो मुहूर्त्तं कालमाधव-२

**दीपावली**— मार्गशिरकृष्णचतुर्दश्यादिदिनत्रये
दीपावल्युत्सवः ।

**दीपोच्छिष्टम्**— दीपावशिष्टं तैलम् ।
दीपोच्छिष्टं तु यत्तैलं रात्रौ रथ्याहृतं च यत् ।
अभ्यङ्गाच्चैव यच्छिष्टं भुक्त्वा नक्तेन शुद्ध्यति ॥
इति मिताक्षरायां षट्त्रिंशन्मतम्—३-२८६

**दीप्यमानः**—कृष्णपक्ष दिवसस्यपञ्चमो मुहूर्त्तं कालमाधव-२

**दीप्तः**— कृष्णपक्षदिवसस्य तृतीयो मुहूर्त्तः कालमाधवः- २

**दीर्घसोमाः**— उक्थ्यषोड़श्यतिरात्रसंस्थाः
दीर्घसोमपदवाच्याः ।
तासां प्रकृतिभूताग्निष्टोमापेक्षयाधिकाल साध्यत्वात् ॥

**दीर्घिका**— अयुतत्र य धनुः परिमितजलाशयः दीर्घिका ।
तच्चतुर्गुणा महादीर्घिका ।
सहस्रेण तड़ागः स्यादयुतेन तु सागरः ।
त्रिगुणा दीर्घिका प्रोक्ता महच्चतुगतं पूर्वाणा ॥

इति नित्याचारप्रदीपे विष्णुपुराणम् ॥

**दीवितारः**— अक्षक्रीताकर्त्तारः ।

**दुःखासिका**— दुःखेन स्थितिः ।
दुःखासिका कलिर्भेदश्छिद्रपीड़ा परस्परम् ।
प्रतिकूल फलत्रस्य द्विदारस्य न संशयः ।
इति दक्षः ।
दुःखासिका—दुःखेन वसनमिति स्मृतिचन्द्रिका
व्यवहार—५८४

**दुकूलम्**— वस्त्रजातिशिशेषः ।
प्रक्षाल्य त्रसरं शुद्धं दुकूलं च सदा शुचि ।
लघ्वाश्वलायनः—१-३०
कौशीयं क्षौमकार्पासं दुकूलमहत्तं तथा ॥
श्राद्धे त्वेतानि यो दद्यात् कालानाप्नोति चोत्तमान् ॥
ब्रह्म०—२२०-१४०

**दुग्धमन्त्रः**— आप्यायस्वसमेतुते विश्वतः सोमवृष्णयम् ।
भवावाजस्य संगथे अस्य गौतम ऋषि गायत्री छन्दः ।
सोमो देवता यजुः—१२-११२

**दुन्दुभिः**— भेरी इति कृत्यरत्नाकरे—५८४
दुन्दुभि ये प्रयच्छन्ति कीर्त्तिमन्तो भवन्ति ते ॥

**दुरितम्**— (१) पापम् ।
(२) उपपातकम् मिता—३-३२६
दुरितानां दुरिष्टानां पापानां महतामपि ।
कृच्छ्रं चान्द्रायणं चैव सर्वपाप प्रणाशनम् ॥
इति उशनाः।

**दुरिष्टम्**— (१) पातकम् इति मिता—३-२२६
दुरित शब्दो द्रष्टव्यः।

**दुरोदरम्**— द्यूतम्।
न नृत्येदतिरागेण न वा वाद्यानि वादयेत्।
न शयीत स्त्रिया स्त्रह द्र्ं न सेवेत दुरोदरम्॥
इति यमसप्तमीव्रते कृत्यरत्नाकरे—१२५

**दुर्गम्**— धन्वदुर्गं महीदुर्गमप्दुर्गं वार्क्षमेव च।
नृदुर्गं गिरिदुर्गं वा समाश्रित्य वसेत् पुरम्॥
मनुः—७-७०
यंत्रायुधाट्टालचयोपपन्नं समग्रधान्यौषधिसंप्रयुक्तम्।
वणिग्जनैश्चावृतमावसेत दुर्गं सुगुप्तं नृपतिः सदैव॥
मात्स्ये—२१६-८७

**दुर्गपालः**— प्राकारादिरक्षी इति श्रीमूला—१-१२

**दुर्गा** दुर्गाप्रकाशिका ऋक्।
जातवेदसे सुनवामेत्यादिसूक्तम् इति कल्पतरौ।
कश्यपो मारीचः। अग्निः जातवेदा अग्निर्वा। त्रिष्टुप्
जातवेदसे सुनवामसोममरातीयतो निदहाति वेदः।
स नः पर्षदति दुर्गाणि विश्वानावेव सिंधुं दुरि-
तान्यग्निः॥ ऋग् ४०—१-७-७

**दुर्गामन्त्रः**— ओं उत्तिष्ठपुरुषि किं स्वपिषि भयं मे
समुपस्थितम्।
यदि शक्यमशक्यं हुँ दुर्गे भगवति शमय स्वाहा॥

**दुर्गाषष्ठी** आश्विन-शुक्लषष्ठी (आरण्यषष्ठ्यां द्रष्टव्यः)

**दुर्गोत्सवः**— दुर्गोत्सवे षट्पक्षा भवन्ति। दिनैः
षोड़शभिर्नवभिरथपंचभिस्त्रिभिर्द्वाभ्याम्।
एकेन च यद् विहितं क्रमशः प्रस्तौमि तद् विधान-
महम्।
(१) षोड़शदिनपक्षः।
कृष्णाष्टमीं समारभ्य यावच्छुक्लाष्टमी भवेत्।
दिवसे दिवसे पूर्वप्रोक्तं कर्म प्रशस्यते॥
इति दुर्गाकल्पे।
(२) नवरात्रपक्षः।
आश्विने मासि शुक्ले तु कर्त्तव्यं नवरात्रकम्।
प्रतिपदादिक्रमेणैव यावच्च नवमी भवेत्॥
इति भविष्योत्तरे।
(३) पंचदिनपक्षः। पंचम्यादिनवम्यन्तः।
(४) त्रिदिनपक्षः।
त्रिदिनं वापि कर्त्तव्यं सप्तम्यादिदिनत्रयम् इति
रुद्रयामलभविष्ययोः।
(५) द्विदिनपक्षः भविष्यस्कान्दयोः।
अष्टम्यां च नवम्यां च जगन्मातरमम्बिकाम्।
पूजयित्वाश्विने मासि विशोको जायते नरः॥
(६) एकदिनपक्षे भविष्योत्तरे
नवम्यां पूजिता देवी ददात्यनवमं फलम् इति॥

**दुर्नग्नः**— दुश्चर्मा इति मयूखे।

**दुर्वलः**— नपुंसकः गौतम अ०—१५
दुर्वलो दुश्चर्मा इति कुल्लूकः।
जटिलं चानधीयानं दुर्वलं कितवं तथा।
याजयन्ति च ये पूगांस्तांश्च श्राद्धे न भोजयेत्॥

मनुः—३-१५१

**दुर्वालः**— खलतिः । वेष्टितशेफ इत्यन्ये इति हरदत्तः
गौतमः—२-६-१८

स्खलितलोहितकेशो विकेरोन्द्रियो वा इति मेधातिथि
एतन्मतेऽस्यनिर्वचनं यथा- दूर्वाशाद्वलेनाप्यलं
तस्य वासो भवति इति स हि दूर्वयेव प्राप्रियते
लज्जया च वाससामभावे तावन्मात्रेणापि दधाति
शेफम् ॥ इति ३-१५१
हीनप्रजननकोषः इति लक्ष्मीधरः । स एव श्राद्धकाण्डे
लोहितकेश इत्यर्थमाह खलत्यर्थमपि ।
दुर्वालः खल्वाटकः कपिलकेशो वा अत्यन्तकोपनो
वा इति स्मृतिचन्द्रिकायां श्राद्धकाण्डे—१६९-१७०

**दुर्ब्राह्मणः**— अपवेदश्च वेदी च त्रियुगं यस्य सीदति ।
स वै दुर्ब्राह्मणः प्रोक्तो ब्राह्मवादिषु गर्हितः ॥
इति हेमाद्रौ हारीतः ।

**दुर्भरः**— धिगवण्यामायोगवाज्जातः जाति विशेषः ।
दुर्भरः लोके डोर इत्याचारेंदौ ।

**दुर्विवक्ता**— दुर्निरूपमर्थं सहसा निर्णीय यो दुर्विवक्ति
अन्यथा निर्णयति सः ॥
मूलं तूलं वृहती दुर्विवक्तुः प्रजांपशूनायतनं हिनस्ति ।
धर्मप्रह्लाद न कुमालनाय रुदन् ह मृत्युव्युकाच प्रश्नम् ॥
आप०—१-११-३२-२४

**दुश्चर्मा**— कुष्ठी ।
ब्रह्महा क्षयरोगी स्यात् सुरापः श्यावदन्तकः ॥
हेमहारी तु कुनखी दुश्चर्मा गुरुतल्पगः ॥

याज्ञ०—३-२०६

**दुष्कृतिः**— पातकी ।
अस्रं गमयति प्रेतान् कोपोऽरीननृतं शुनः ।
पापस्पर्शस्तु रक्षांसि दुष्कृतीनवधूननम् ॥
मनुः—३-२३०

**दुष्टाभूमिः**— श्वशूकरादिसंपर्कदूषिता भूमिः ।
श्वशूकरश्वरोष्ट्रादिसंस्पृष्टा दुष्टतां व्रजेत् ।
इति देवलः मिताक्षरायाम्—१-१८८

**दुष्प्रलंभः**— विसंवादयितुं मिथ्याफलाख्यानेन वंचयितु-
मशक्य इति हरदत्तः— आप०—१-७-२०-५

**दुहित्रामिषम्**— खड्गमांसमिति हेमाद्रिः ।
वाध्रीणिसामिषं लोहं कालशाकं तथा मधु ।
दुहित्रामिषमन्नं च दत्तान्यात्मकुलोद्भवैः ॥
इति तत्रत्यब्रह्मपुराणे ।

**दूतः**— दूताश्च ये प्रकटमेव राजान्तरं प्रति गतागतमाचरन्ति
ते त्रिविधाः निःसृष्टार्थाः संदिष्टार्थाः शासनहराश्चेति
तत्र निःसृष्टार्थाः राजकार्याणि देशकालोचितानि
स्वयमेव कथयितुं क्षमाः उक्तमात्रं ये परस्मै
निवेदयन्ति ते संदिष्टार्थाः । शासनहरास्तु
राजलेखहारिणः इति विज्ञानेश्वरः ।
याज्ञ०—१-३२८

निसृष्टार्थो मितार्थश्च तथा शासनहारकः ।
सामर्थ्यात् पादतो हीनो दूतस्तु त्रिविधः स्मृतः ॥
इति अग्नि० पु०—२४१-८

अमात्ये दंड आयत्तो दंडे वैनायिकी क्रिया॥
नृपतौ कोशराष्ट्रे च दूते संधिविपर्ययौ ॥ इति
मनुः—७-३५

**दूरप्रचारः**— दूरयात्रा ।
गावो दूरप्रचारेण हिरण्यलाभलिप्सया ।
स्त्री विनश्यति गर्भेण ब्राह्मणो राजसेवया ॥
प्रजापतिस्मृतिः—४६०

**दूर्वा**— तृणविशेषः ।
कुन्दं मुकुन्दे तुलसी गणेशे धत्तूरविल्वं तगरं तथार्कें ।
दूर्वार्कभृङ्गजगदम्बिकायां वर्ज्यं शिवे केतकशङ्खवारी ॥
इति आचारभूषणे—१८५

**दूर्वामन्त्रः**— ओं काण्डात् काण्डात् परोहन्ति परुषं
परुषस्परि एवानो दूर्वे प्रतनु सहस्रेण शतेन च ॥
शु० यजुः—१३-२०

**दूर्वाष्टमी**— भाद्रशुक्लाष्टमी ।
मासि भाद्रपदे शुक्ला या भवेदष्टमी नृप ।
दूर्वाष्टमीति विज्ञेया पूर्वविद्धा प्रशस्यते ॥
इति गदाधरपद्धतौ कालसारे ॥

**दूषिका**— अक्षिमलः ।
वसा शुक्रमसृङ्मज्जा मूत्रविट् घ्राणकर्णविट् ।
श्लेस्माश्रु दूषिका स्वेदो द्वादशैते नृणां मलाः ॥
मनुः—५-१३५

दूषिका अक्षिमल इति कुल्लूकः ।

**दृढ़कारी**— आरब्धस्य कर्मणः क्रूराचारैरसम्बसन् ।

अहिंस्रो दमदानाभ्यां जयेत्स्वर्गं तथाव्रतः ॥
मनुः—४-२४६

**दृतिः**— चर्मनिर्मितं जलानयपापात्रम् ।
दृतिः चर्मकोश इत्याचारसारे ॥
इन्द्रियाणां तु सर्वेषां यद्येकं क्षरतीन्द्रियम् ।
तेनास्य क्षरति प्रज्ञा दृतेः पत्रादिवोदकम् ॥
मनुः—१-६६

**दृषत्**— शिल इति भाषायां प्रसिद्धा ।
पाषाणमयी पेषणकाले पेषणीयद्रव्याश्रयभूता
दृषदित्युच्यते इति श्रौतपदार्थ-निर्वचने ।
मरुच्छा इति दृषदि इति विष्णुस्मृतौ—६७-१३

**दृषद्वती**— ब्रह्मावर्त्तस्य उत्तरसीम्नि वर्त्तमाना नदी ।
सरस्वती दृषद्वत्योर्देवनद्योर्यदन्तरम् ॥
तं देवनिर्मितं देशं ब्रह्मावर्त्तं प्रचक्षते ॥
मनुः—२-१७

**दृष्टा**— शुक्लद्वितीया रात्रिः । कालमाधवः—२

**दृष्टान्तः**— दृष्टान्तो लौकिकोदाहरणम् ।
इति नीलकण्ठः महाभा० उद्—१७५-४५
सतायाश्वासयामास दृष्टान्तागम हेतुभिः ।
सान्त्वयामास कार्ये च प्रतियज्ञे द्विजैः सह ॥
"आगमाद् दृष्टान्ताच्च" वसिष्ठः—१६-१०

**देवकुलम्**— देवतायतनम् ।
इति देवपालः काठक० गृ०—२-७-३

**देवकृतम्**- देवकृतस्यैन स इत्यादिः मन्त्रः शु० यजुः—८-१३

अघमर्षणं देवकृतं शुद्धवत्यस्तरत्समाः इति वसिष्ठः
२८-११

देवकृतेत्यादिमन्त्राणां प्रजापति ऋषिर्यजुश्छंदः
अग्निर्देवता शकलाधाने विनियोगः ।
देवकृतस्यैनसोवयजनमसि, मनुष्यकृतस्यैन
सोवयजनमसि पितृकृतस्यैनसोवयजनमस्यात्मकृतस्यैन
सोवयजनमस्येन स एनसोवयजनमसि यश्चाहमेनो
विद्वांश्चकार यच्चाविद्वांस्तस्य सर्वस्यैनसोऽवयजनमसि ।

**देवखातम्**— देवैः खातमिति यत्स्मर्यते इति हेमाद्रिः ।
मनुः—४-२०३
"देवखातविले गुहा" गह्वरमिति अमरः—२-४-६
अकृत्रिमो जलाशय इति मन्मतम् ॥

**देवतीर्थम्**— अङ्गुलीनामग्रभागः ।
अङ्गुलीमध्ये देवं तीर्थं इत्यग्निवेश्य गृ०—२-६१
कायमंगुलि मूलेऽग्रे दैवमिति मनुः—२-५६
सम्पूर्णः श्लोकः कायतीर्थशब्दे द्रष्टव्यः ।

**देवतुमुलम्**— अन्तरिक्षे गीतवाद्यादिकं गन्धर्वाधिकृतं
देवतुमुलम् इति देवपालभाष्ये ।
"आकालिकं देवतुमुलम्" इति काठक गृ०—१-६-७

**देवद्रोणी**— देवयात्रा इति हारावलिः—१००-२६
देवयात्रा इति मित्रमिश्रश्च शुद्धिप्रकाशे—१२८
देवद्रोण्यां विवाहेषु यज्ञेषु प्रकृतेषु च ।
वित्तापेक्षं भवेदिष्टं तडागं पूर्त्तमुच्यते ॥
आरामश्च विशेषेण देवद्रोण्यस्तथैव च इति यमः—६६
देवद्रोणी स्वयंभूलिंगाद्यवस्थानगह्वरम् इति रघुनन्दन"
इति शब्दकल्पद्रुमे ।

**देवधान्यम्**— धान्यविशेषः । नीवार इति आचारेन्दौ
दे धान इति गौड़ेषु । जोयार इति हिन्दी भाषा
इति शब्दकल्पद्रुमे यवनाल इति हेमचन्द्रः ।

**देवनम्**— द्यूतक्रीड़ा ।
प्रकाशमेतद् भास्कर्यं यद्देवनसमाह्वयौ ।
तयोर्नित्यं प्रतिघाते नृपतिर्यत्नवान् भवेत् ॥
मनुः—९-२२२

**देवनिकायः**— (१) देवनिवासस्थानम् ।
एते मनूंस्तु सप्तान्यानसृजन् भूरितेजसः ।
देवान् देवनिकायांश्च महर्षींश्चामितौजसं ॥
मनुः—१-३६
अत्र देवनिकायान् देवनिवासस्थानानि इति कुल्लूकः ।
(२) देवसंघविशेषः ।
सान्तिदेवनिकायाश्च संकल्पाजनयन्ति ये ।
वाचा दृष्टया तथा स्पर्शात् संघर्षणेति पंचधा ॥
आश्रम—३०-२२
"अथ सधर्मिणाम् । स्यान्निकाय" इत्यमरः—२-६-४२
निकायस्तु पुमान्लक्ष्ये सधर्मिप्राणिसंहतौ ।
समुच्चये संहतानां निकाये परमात्मनि ॥ इति मेदिनी

**देवयजनम्**— यज्ञभूमिः देवा इज्यन्ते यत्र ।
इदं च देवयजनम् इति श्रीमद्भागवते ॥

**देवयज्ञः**— होमः ।

ऋषियज्ञं देवयज्ञं भूतयज्ञं च सर्वदा ।
नृयज्ञं पितृयज्ञं च यथाशक्ति न हापयेत् ॥
मनुः—४-२१

अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् ।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥
मनुः—३-७०

शालाग्नौ लौकिके वाथ जले भूम्यामथापि वा ।
वैश्वदेवश्च कर्त्तव्यो देवयज्ञः स वै स्मृतः ॥
कूर्म० पु०—२-१८ अध्याये ।

**देवयानम्**
**देवयानमार्गः** } यस्तु श्राद्धे कुरुतेसंगतानि न देवयानेन पथा स याति । महाभारते ।

अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ।
भ० गीता—८-२४

क्रमात्ते संभवन्त्यर्चिरहः शुक्लं तथोत्तरम् ।
अयनं देवलोकं च सवितारं सवैद्युतम् ।
करोति पुनरावृत्तिस्तेषामिह न विद्यते ॥
याज्ञ०—३-१९४

ये च दानपराः सत्यव्रतपरायणाः दम्भरहिताः सम्मक्स्मार्त्तकर्मानुष्ठानपराः दयाक्षान्त्यनसूयाशौचानायासमङ्गलाकार्पण्यास्पृहैर्युक्तास्तथा संगत्यागिनोऽर्चिरहः शुक्लपक्षोत्तरायणसुरसद्मसूर्यवैद्युतेषु मुक्तिमार्गेषु विश्राम्य तैः प्रस्थापिताः परमपदं प्राप्नुवन्ति
गौ०ध० सू० परि—१-१-११

अत्र सवितारं च वैद्युतमिति न लिखित्वा सवितारं सवैद्युतमिति विलिख्य सवितुः विद्युदपेक्षया मुख्यत्वं दूरवर्त्तित्वं विश्राममधामत्वं च प्रदर्शितं योगीश्वरेण याज्ञवल्क्येन इति मन्मतम् ॥

**देवरः**— भर्त्तुः भ्राता इति कुल्लूकः ।

यस्या म्रियेत कन्याया वाचासत्ये कृते पतिः ।
तामनेन विधानेन निजोर्विदेत देवरः ॥ मनुः—९-६९

देवरो भर्त्तुः कनीयान् भ्रात इति विज्ञानेश्वरः-१-६८

पत्युर्भ्राता देवरः कनिष्ठ इत्युपदेश इति
गौतमीयवृत्तौ हरदत्तः—२-९-४

उत्कलेषु पत्युः कनिष्ठे भ्रातरि देवरशब्दव्यवहारः ज्येष्ठे तु ज्येष्ठश्वशुरशब्दः । दायभागे तु ज्येष्ठे भ्रातृ श्वशुरशब्दप्रवृत्तिः, तेन देवरशब्दः कनिष्ठ अवशिष्यते ॥

**देवरातः**— शुनशेपः ।

विश्वामित्राय देवैर्दत्तत्वात् देवरात इति संज्ञा यस्य ।
"स ह देवरातो वैश्वामित्र आस" ऐ० ब्रा०—३३-५

**देवरात्रिः**— देवं क्वचिदर्चयित्वा तत्रैव रात्रिजागरणं इति श्रीमूला ।

तीर्थाभिषेचनं महाकच्छवर्द्धनं······देवरात्रिं च कारयेत् कौट०—४-६

**देवलः**
**देवलकः** } वित्तार्थं देवसेवको ब्राह्मणः ।
देवार्चनपरो विप्रो वित्तार्थी वत्सरत्रयम् ।
स वै देवलको नामहव्यकव्येषु गर्हितः ॥
इति स्मृतिचन्द्रिकायां स्मृत्यन्तरे ॥

**देवविद्या**— निरुक्तम् ।

देवविद्यां निरुक्तमिति श्रीशङ्कराचार्य्याः
छान्दोग्य, उ०—७-१-२

**देवव्रतम्**— नक्तमब्दं गुरित्वा तु गवासार्द्धं कुटुम्बिने ।

हैमं चक्रं त्रिशूलं च दद्याद् विप्राय वाससी ॥
शिवरुद्रो नतोस्मीति शिवलोके स मोदते ।
एतद् देवव्रतं नाम महापातकनाशनम् ॥
इति समयप्रदीपोद्धृते मात्स्ये-पु—११०

**देवव्रती—** उपकुर्वाणकः (ब्रह्मचारी) इति मित्रमिश्रः ।
अतिथिः श्रोत्रियो देवव्रती यतिधर्मा नैष्ठिकः
इत्यादि शंखलिखितौ ।
वस्तुतस्तु अत्र वेदव्रती इति पाठः युज्यते ।

**देवसेना—** षष्ठीदेवी स्कन्दपत्नी ।
प्रधानांशस्वरूपा या देवसेना च नारद ।
मातृकास्तु पूज्यतमा सा च षष्ठी प्रकीर्त्तिता ॥
शिशूनां प्रतिविश्वेषु प्रतिपालनकारिणी ।
तपस्विनी विष्णुभक्ता कार्त्तिकेयस्य कामिनी ॥
इति ब्रह्मवैवर्त्ते प्रकृति—१-७३-७४

**देविता—** अक्षादिक्रीडाकृत् ।

**देशः—** (१) ग्रामसमुदायो देशः इति मेधातिथिः
मनुः—८-२१९
यो ग्रामदेशसंघानां कृत्वा सत्येन संविद्रम् ।
विसंवदेन्नरो लोभात्त राष्ट्राद् विप्रवासयेत् ॥
मनुः—८-२१९
(२) साक्षी ।
प्रतिज्ञाय देशं निर्दिशेत्युक्ते न निर्दिशति
हीनदेशमदेशं वा निर्दिशति कौट०—३-१

**देशदृष्टः—** यस्य देशस्य यो धर्मः प्रवृत्तः सार्वकालिकः ।
श्रुतिस्मृत्यविरोधेन देशदृष्ट स उच्यते ॥
इति व्यवहारनिर्णये व्यवहारप्रकाशः—१०

**देशाचारः—** देशप्रशिद्ध आचारः ।
देशजातिकुलधर्मा आम्नायैरविरुद्धाः प्रमाणम्
इति गौतमः—२-२-२०
उदुह्यते दाक्षिणात्यैर्मातुलस्य सुता द्विजैः ॥
मध्यदेशे कर्मकराः शिल्पिनश्च गवाशिनः ॥
मत्स्यादाश्च नराः पूर्वे व्यभिचाररता स्त्रियः ।
उत्तरे मद्यपा नार्यः स्पृश्या नृणां रजस्वलाः ॥
अनेन कर्मणा नैते प्रायश्चित्तदमार्हकाः ॥ इति
बौधायनस्तु पञ्चधा विप्रतिपत्तिर्दक्षिणतस्तथोत्तरतः
यानि दक्षिणतस्तानि व्याख्यायामः—१२
यथैतदनुपेतेन सहभोजनं स्त्रियासह भोजनं
पर्युषितभोजनं मातुलपितृष्वसृदुहितृगमनमिति । ३
अथोत्तरतः ऊर्णाविक्रयः शीधुपानमुभयतोदन्दिर्व्यव-
हारः आयुधीयकं समुद्रसंयानमिति ॥ ४ इतर
इतरस्मिन् कुर्वन् दुष्यति इतरदितरस्मिन् ॥ ११५
तत्र तत्र देशप्रमाण्यमेव स्यात् ॥ बौधा०—१-१-२

**देशाध्यक्षः—** ग्रामशताध्यक्षाणामुपरिवर्त्तमानः अधिकारी
पुरुषविशेषः तत्रस्थश्च स्व स्व ग्रामाधिपान् कुर्यात् ।
दशाध्यक्षान् (८) शताध्यक्षान्—९ देशाध्यक्षांश्च
अयं देशाध्यक्षः सहस्राधिपतिः राजप्रतिनिधिः ।
ग्रामदोषाणां ग्रामाध्यक्षः परिहारं कुर्यात्
अशक्तो दशग्रामाध्यक्षाय निवेदयेत् ।
सोप्यशक्तः शताध्यक्षाय सोप्यशक्तो देशाध्यक्षाय

देशाध्यक्षोपि सर्वात्मना दोषमुच्छिन्द्यात् ॥

विष्णुः—३-१५

**देशान्तरम्**— पृथक्देशः तल्लक्षणं यथा—

वाचो यत्र विभिद्यन्ते गिरिर्वा व्यवधायकः ।

महानद्यन्तरं यत्र यद्देशान्तरमुच्यते ॥

देशनामनदीभेदान्निकटोऽपि भवेद्यदि ।

तत्तु देशान्तरं प्रोक्तं स्वयमेव स्वयम्भुवा ॥

दशरात्रेण या वार्त्ता यत्र न श्रूयतेऽथवा ॥

इति वृद्धमनुः ।

देशान्तरं वदन्त्येके षष्टि योजनमायतम् ।

चत्वारिंशद् वदन्त्येके त्रिंशदेके तथैव च ॥

इति बृहस्पतिः ।

**देशिनी**— तर्जनी । अङ्गुष्ठसमीपवर्त्तिनी अंगुलिः ।

सा हि तर्जयति तर्जने साधनं भवति ॥ सा अपि वस्तुनिर्द्देशे साधनं भवति अतः सा प्रादेशिनी इति उच्यते ।

कनिष्ठा देशिन्यङ्गुष्ठमूलान्यग्रं करस्य च ।

प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् ॥

याज्ञ०—१-१९

**देश्यः**— साक्षी ।

४६ अपह्नवेऽधमर्णस्य देहीत्युक्तस्य संसदि ।

अभियोक्ता दिशेद्देश्यं करणं वान्यदुद्दिशेत् ॥

मनुः—८-५२

देश्यं धनप्रयोगदेशवर्त्तिनं साक्षिणमिति कुल्लूकः ।

**देहली**— द्वारस्य । अधस्तादद्दारु इति हरदत्तः ।

तस्याधोवेदिकेत्यन्ये ।

देहल्यामन्तरिक्षाय स्वाहा इत्याप०—२-२-४-२

**दैवम्**— (१) पूर्वजन्मकृतं कर्म ।

दैवे पुरुषकारे च कर्मसिद्धिर्व्यवस्थिता ।

तत्र दैवमभिव्यक्तं पौरुषं पौर्वदैहिकम् ॥

याज्ञ०—१-३४९

स्वमेव कर्म दैवाख्यं विद्धि देहान्तरार्जितम् ॥

मत्स्य पु०—२२०-२

(२) उत्पातज्ञानम् ।

दैवमुत्पातज्ञानमिति श्रीशङ्कराचार्य्याः ॥

छान्दोग्य० उ—७-१-२

**दैवतीर्थम्**— अंगुलिकनिष्ठिकामूले दैवतीर्थमिति

वसिष्ठः—३-६४-६६

अङ्गुलीनाम् अग्रे दैवमिति मनुः—२-५९

मनुश्लोकः कायतीर्थशब्दे द्रष्टव्यः ।

मार्जनाचमनबलिकर्मभोजनानि दैवेन इति हारीतः

एतेन मनोरभिप्रायः हारीतेन गृहीत इति ज्ञायते ।

**दैवविवाहः**— यज्ञे तु वितते सम्यगृत्विजे कर्म कुर्वते ।

अलंकृत्य सुतादानं दैवं धर्मं प्रचक्षते ॥

मनुः—३-२८

**दैवश्राद्धम्**— आभ्युदयिकश्राद्धम् ।

दैवे आभ्युदयिके इति विज्ञानेश्वरः—१-२२७

७१ अथ दैविकश्राद्धम् । तत्र पूर्वाह्णः कर्मकालः ।

पूर्वाह्णे दैविककर्म अपराह्णे तु पैतृकम् ।

एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम् ॥
इति मात्स्योक्तेः ।
पूर्वाह्णे दैविकं श्राद्धं कार्यमभ्युदयार्थिना ।
इति शातातपोक्तेश्च इति कालसारे ।

**दैवसंस्कारः**— द्विविध एव संस्कारो भवति ब्राह्मो दैवश्च
तत्र गर्भाधानादिः स्मार्त्तो ब्राह्मः ।
पाकयज्ञा हविर्यज्ञा सोम्याश्चेति दैव इति हारीतः
संस्कारप्रकाशे—१३५

**दोग्ध्री**— आब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामित्यादि
योगक्षेमोनः कल्पन्तामित्यन्ता इति हेमाद्रिः ।
आमंत्रितो जपेद्दोग्ध्रीमिति तत्र भृगुः ।
नीलकण्ठभट्टस्तु उपह्वये सुदुघामित्यादिं हि
कृण्वतीत्यादिं वा दोग्ध्रीमाह ॥

**दोलपूर्णिमा**— फाल्गुनपूर्णिमा ।
नरो दोलागतं दृष्ट्वा गोविन्दं त्रिदशार्चितम् ।
फाल्गुन्यां संयतो भूत्वा गोविन्दस्य पुरं व्रजेत् ॥
इति कालसारोद्धृते ब्राह्मे ।
प्रकाशितब्रह्मपुराणे तु गोविन्दपुरुषोत्तममिति पाठः
ब्रह्म० पु०—६३-१७

**दोलोत्सवः**— चैत्रशुक्लैकादश्यां दोलोत्सव उक्तो
निर्णयसिंधौ ।

**दोषनिर्णयः**— दोषदूरीकरणमिति गोविन्दस्वामी
बोधा०—१-१-१७
निर्णयः नितरांनयः अपनोदनमिति स एव ।

**दोहदः**— गर्भिणीप्रियम् ।
दोहदः गर्भिण्याभिलाष इति शब्दकल्पद्रुमे ।
दोहदो गर्भलक्षणे । अभिलाषे तथा गर्भे इति हैमः ।
इच्छामात्रमित्यमरः—१-७-२७
दोहृदस्य प्रदानेन गर्भो दोषमवाप्नुयात् ।
वैरूप्यं मरणं वापि तस्मात् कार्य्यं प्रियं स्त्रियाः ॥
याज्ञ०—३-७८

अत्र दोहदस्य इति पाठान्तरम् ।

**दौवारिकः**— प्रतिहारी श्रीमूला—१-१२

**दौहित्रम्**— (१) खड्गपात्रम् ।
दौहित्रं खड्गशृंगं तु ललाटे यद्धि जायते ।
तस्य शृंगस्य यत् पात्रं दौहित्रमिति तद् विदुः ॥
इति कालसारे शातातपः ।
(२) क्षीरविशेषः
अमावस्या गते सोमे यातु खादति गौस्तृणम् ।
तस्या गोर्यद् भवेत् क्षीरं तद् दौहित्रमुदाहृतम् ॥
इति श्राद्धकल्पलता—६५

**दौहित्रः**— दुहितुरपत्यं पुमान् ।
व्रतस्थमपि दौहित्रं श्राद्धे यत्नेन भोजयेत् ।
कुतपं चासने दद्यात्तिलैश्च विकिरेन्महीम् ॥
मनुः—३-२३४

**दौहृदम्**— दोहृदशब्दस्य पाठभेदोऽयम् ।

**द्यूतम्**— (१) अप्राणिभिः साधनैः क्रियमणा क्रीड़ा ।
अप्राणिभिर्यत्क्रियते तल्लोके द्यूतमुच्यते ।

प्राणिभिः क्रियते यस्तु स विज्ञेयः समाह्वयः ॥

मनुः—९-२२३

(२) द्यूतोपकरणानि ।

काकिन्यो वध्रिकाश्चैव शलाका मौर्य एव च ।
अक्षाः सबीजाः कुहका द्यूतोपकरणानि षट् ॥

इत्यपरार्के मनुः ।

मनुस्मृतेः प्रकाशनेषु नायमुपलभ्यते श्लोकः ।

**द्योता**— अनुपादेयायाः कन्याया प्रकारविशेषः ।

दत्तां गुप्तां द्योतामृषभां शरभां विनतां विकटां मुण्डां मण्डूषिकां सांकारिकां राज्ञां पालीं मित्रां स्वनुजां वर्षकारीं च वर्जयेत् ॥ आपस्तम्ब—गृ०—१-३-१२

अत्र द्योता विषमदृष्टिः अनाकुला पिङ्गाक्षी बभ्रुकेशी वेति तात्पर्य्यदर्शनम् ॥

**द्रंक्षणः**—टङ्कद्वयपरिमितः परिमाणविशेषः कोल-क्षुद्रकवटकापरपर्य्यायः खारीशब्दे द्रष्टव्यः ।

**द्रप्सम्**— तरलं दधि ।

द्रप्सं दधि घनेतरत् इत्यमरः—२-९-५१

कृमिकीटपतङ्गाद्यैर्दूषिता यत्र मेदिनी ।
द्रप्सैः प्रकर्षोच्छिष्टैर्वा वान्तैर्वा दुष्टतां व्रजेत् ॥

**द्रप्सा**— घनीभूतश्लेष्मा इति आह्निकप्रकाशे

मित्रमिश्रः पृ०—१०९

द्रप्साविद्धां तनुं लक्ष्य दृष्ट्वा वाप्यशुचिर्भवेत् ॥

इति तत्र देवलः ।

**द्रम्मः**— मुद्राविशेषः ।

वराटकानां दशकद्वयं यत्सा काकिणी ताश्च पणश्चतस्रः ।
ते षोडश द्रम्म इहावगम्यो द्रम्मैस्तथा षोड़शभिश्च निष्कः ॥ इति लीलावत्याम् ॥

नाणकं मुद्रादि चिह्नितं द्रम्मनिष्कादि इति मिताक्षरायां विज्ञानेश्वरः—२-२४०

**द्रविड़ः**— (१) वृषलत्वं गतः क्षत्रियः ।

शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः ।
वृषलत्वं गता लोके ब्राह्मणादर्शनेन च ॥
पौण्ड्रकाश्चौड्रद्रविड़ाः काम्बोजा यवनाः शकाः ॥

इत्यादि मनुः—१०-४४

(२) देशविशेषः ।

कर्णाटाश्चैव तैलङ्गा गुर्जराराष्ट्रवासिनः ।
आन्ध्राश्च द्राविड़ाः पञ्च विन्ध्यदक्षिणवासिनः ॥

इति स्कन्दपुराणे ।

**द्राक्षम्**— द्राक्षाभवं मद्यम् । खर्जूरशब्दो द्रष्टव्यः ।

**द्राविणम्**— वंशवेतसादिपात्रम् ।

"मृद्भाण्डं दहनाच्छुद्धं द्राविणं मार्जनाच्छुचि"

इति पण्डितसर्वस्वे

**द्रु**— काष्ठम् ।

आददीताथ षड्भागं द्रुमांसमधुसर्पिषाम् ।
गन्धौषधिरसानां च पुष्पमूलफलस्य च ॥

मनुः—७-१३१

**द्रुघणः**— शस्त्रविशेषः ।

द्रुघणो मुद्गरेऽपि स्याद् द्रुहिणे च परश्वधे ॥

इत्यमरटीकायां व्याख्यासुधायाम्—१-१-१६

द्रुघणस्त्वायसाङ्गः स्याद् वक्रग्रीवो बृहच्छिराः ।
पञ्चाशदङ्गुलोत्सेधो मुष्टिसम्मितमण्डलः ।
उत्क्षेपणं प्रपातश्च स्फोटनं दारणं तथा ॥
चत्वार्येतानि द्रुघणे वल्गितानि श्रितानि वै ॥
इति हलायुधकोशव्याख्यायाम् ।

**द्रुपदा**— द्रुपदादिवमुमुचान इत्यादिमन्त्रः ।
आपत्काले तु विप्रेण भुक्तं शूद्रगृहे यदि ।
मनस्तापेन शुध्येत द्रुपदां वा शतं जपेत् ॥
आपस्तम्बस्मृतिः—८-२०

**द्रेक्काणः**— राशेस्तृतीयोभाग ज्योतिःशास्त्रप्रसिद्धः ।
गुरुशुक्रबुधेन्दूनां द्रेक्काणा दिवसांशकाः ।
तेषामुदयहोरा च पुंसवेऽति शुभावहाः ॥
इति बृहस्पतिः परिभाषाप्रकाशे— १६६

**द्रोढ़ा**— द्रोहकारी ।
"चिरकारी भवेद्रोगी" इति स्थाने
चिरकारी भवेद्रोढ़ा इति हेमाद्रौ पाठः ॥
सम्पूर्णः श्लोकः "चिरकारी" शब्दे द्रष्टव्यः ॥

**द्रोणः**— (१) परिमाणविशेषः चतुर्विंशत्यधिकसहस्रमुष्टि परिमितः ॥
अष्टमुष्टिर्भवेत् किंचित् किंचिदष्टौ च पुष्कलम् ॥
पुष्कलानि च चत्वारि आढकः परिकीर्तितः ॥
चतुराढ़को भवेद्द्रोणः ॥ इति
षट्पञ्चाशदधिकपलशतद्वयं द्रोण इति हेमाद्रिः
भावप्रकाशेऽपि तथैवोक्तं खारीशब्दे द्रष्टव्यम् ॥
कलशः घटः नल्वणः अर्मणः उन्मानं राशिः
इत्येते अस्य पर्यायशब्दाः ।
पलं कुडवः प्रस्थः आढ़को द्रोण एव च ।
धान्यमानेषु बोद्धव्याः क्रमशोऽमी चतुर्गुणाः ॥
(२) द्रोणनामतीर्थविशेषः ।
उपास्नातं स्थूलसिक्तं तूष्णीं गङ्गं महाह्रदम् ।
द्रोणं चेदशको गन्तुं मा त्वा ताप्ताः कृताकृते ॥
इति पातञ्जलमहाभाष्योद्धृतं वचनम् ॥
(३) वनवायसः द्रोणकाकसंज्ञकः ।
द्रोणकाको दग्धकाको वृद्धकाको वनाश्रय इति
त्रिकाण्डशेषः ॥
कृष्णकाक इति मेदिनी ॥
(४) चतुःशतधनुपरिमितजलाशयोऽपि ।
शतेन धनुभिः पुष्करिणी, त्रिभिः शतैर्दीर्घिका;
चतुर्भिर्द्रोणः, पञ्चभिस्तडागः द्रोणाद्द दशगुणा वापी
इति जलाशयतत्त्वे इति हलायुधकोशव्याख्याने ॥
(५) पुष्पविशेषः ।
द्रोणपुष्पे तथैकस्मिन् मह्यं च विनिवेदिते ।
दश दत्त्वा सुवर्णानि फलं तदधिकं सुत ॥
स्कान्दे० वै० मार्ग—७-१७ मह्यं विष्णवे ॥
श्वेतवर्णक्षुद्रपुष्प वृक्षविशेषः "घलघसिआ" इति
"हलकसिआ" इति च भाषा इति शब्दकल्पद्रुमे
ब्रह्मविष्णुशिवादीनां द्रोणपुष्पं सदा प्रियम् ।
ततो दुर्गे प्रयच्छामि पवित्रं ते सुरेश्वरि ॥
द्रोणपुष्पैस्तथा वीर जातिपुष्पैश्च पूजयेत् ॥
उत्कलदेशे गयस इति वदन्ति ।
(६) पर्वतविशेषः ।
चतुर्थः पर्वतो द्रोणो यत्रौषध्यो महागिरौ ।
विशल्यकरणी चैव मृतसञ्जीवनी तथा ॥
इति मात्स्ये—१२१-५६

(७) कांसमानकः ।

आचितं शकटं प्राहुः द्रोणः स्यात् कांसमानकः ।

इति परिशिष्टप्रकाशे

सर्वाद्रोणदुघा गावो रामे राज्यं प्रशासति ॥

महाभा० शान्ति०—२०-५८

(८) शाकविशेषः श्राद्धदेयत्वेन वायुपुराणे पठितः—

कालशाकं महाशाकं द्रोणशाकं तथार्द्रकम् ।

बिल्वामलकमृद्वीका पनसाम्रातदाडिमम् ॥ इति

द्रोणोऽस्त्रियामाढके स्यादाढकानां चतुष्टये ।

पुमान् कृपीपतौ कृष्णकाके स्त्री नीवृदन्तरे ॥

तथा काष्ठाम्बुवाहिन्यां गवादन्यामपीष्यते ॥

इति मेदिनी—१५-१८

**द्रोणकलशः**— जुहू सदृशे महापुष्करे द्वे पत्रे, ते द्रोणकलशपदवाच्ये इति श्रौतपदार्थनिर्वचने ॥

**द्रोणपाठकः**— द्रोणपाठकः धर्मशास्त्रपाठक इति गदाधरः कात्यायनश्राद्धकल्पसूत्रव्याख्याने—८-५

**द्रोणपुष्पम्**— द्रोणशब्दे द्रष्टव्यम् ।

**द्रोणपुष्पी**— करम्बुक इति शान्तिमयूखे नीलकण्ठः ।

**द्रोणमुखम्**— द्रोणमुखम् अष्टशतग्रामप्रधानाधिष्ठानमिति श्रीमूला ॥

धर्मस्थास्त्रयस्त्रयोऽमात्या जनपदसन्धि-

संग्रहणद्रोणमुखस्थानीयेषु व्यवहारिकानर्थान् कुर्युः ॥

कौटल्यः—३-१

**द्रोणमुखपथम्**— उपत्यकामार्गः ।

**द्रोणशाकम्**— गूम इति प्रसिद्धमिति निर्णयसिन्धौ । कालशाकमित्यादिवचनं द्रोणशब्दे द्रष्टव्यम् ॥

**द्रोणिका**— द्रोणपरिमितधान्याद्युत्पादनयोग्या भूमिः ॥

विप्रस्य वृत्तिहीनस्य सदाचाररतस्य च ॥

द्रोणिकां पृथिवीं दत्त्वा यत्फलं लभते शृणु ॥

बृहन्नारदीय पु०—११-१३०

**द्रोणी**— (१) परिमाणविशेषः द्रोणचतुष्टयात्मकः ।

खारीशब्दे द्रष्टव्यः ॥

(२) काष्ठाम्बुवाहिनी । अमरः—१-१०-११

सेकपात्रविशेष इति शूलपाणिः प्रायश्चित्तविवेकः-३३२

काष्ठपाषाणकृतनौकाकाराम्बुसेचनीतिव्याख्यासुधा ।

तदेव वस्तु यन्त इत्युच्यते उत्कलेषु । तेनैव

कृषिक्षेत्रेषु अधः प्रदेशादूर्ध्वं नीयते जलं कर्षकैः ॥

प्रपास्वरण्ये घटके च सौरे द्रोण्यां जलं कोशविनिर्गतं च

श्वपाकचण्डालपरिग्रहेषु पीत्वा जलं पञ्चगव्येन शुद्ध्येत्

इति मिताक्षरायामापस्तम्बः—३-२८६

प्रपास्वरण्येघटकस्य कूपे द्रोण्यां जलं कोशविनिर्गतं च ।

श्वपाकचण्डालपरिग्रहेतु पीत्वाजलं पञ्चगव्येनशुद्धिः ॥

अत्रिस्मृतिः—१३२

कोषगतास्तथाप इति प्रायश्चित्तविवेके यमः ॥

द्वितीयार्द्धं तु भिन्नम्—३३२

(३) कालशाकारपात्रविशेषः ।

भरद्वाजस्य चस्कन्नं द्रोण्यां शुक्रमवर्द्धत ॥

महाभा०—१-६३-१०३

**द्रोणीमुखम्**— सोत्सेधवप्रकारं च सर्वतः परिखावृतम् ।

योजनार्द्धं विष्कम्भनष्टभागायतं पुरम् ॥

प्रागुदक्प्लवनं शस्तं शुद्धवंशं बहिर्गमम् ।
तदर्द्धेन तथा खेटं तत्पादेन च कर्वकम् ॥
न्यूनं द्रोणमुखं तस्मादष्टभागेन चोच्यते ॥

**द्वन्द्वः**— परस्परविरोधः ।
द्वन्द्वं कलह इति मित्रमिश्रः परिभाषाप्रकाशे—३४
कर्मणां च विवेकार्थं धर्माधर्मौ व्यवेचयत् ।
द्वन्द्वैरयोजयेच्चेमाः सुखदुःखादिभिः प्रजाः ॥
मनुः—१-२६

**द्वात्रिंशदपराधाः**— अपराधास्तथा विष्णोर्द्वात्रिंशत परिकीर्त्तिताः ।
यानैर्वा पादुकैर्वापि गमनं भगवद् गृहे ॥
देवोत्सवाद्यसेवा च अप्रणामस्तदग्रतः ।
एकहस्तप्रणामश्च तत् पुरस्तात्प्रदक्षिणम् ॥
उच्छिष्टे च तथाऽशौचे भगवद्वन्दनादिकम् ।
पादप्रसारणं चाग्रे तथा पर्यङ्कबन्धनम् ॥
शयनं भाषणं चैव मिथ्याभाषणमेव च ।
उच्चैर्भाषा वृथा जल्पो रोदनादि च विग्रहः ॥
निग्रहानुग्रहौ चैव स्त्रीष्वसरक्तभाषणम् ।
अश्लीलकथनं चैव अधोवायुविमोचनम् ॥
कम्बलास्तरणं चैव परनिन्दा परस्तुतिः ।
शक्तौ गौणोपचारश्च अनिवेदितभक्षणम् ॥
तत्कालभवानां च फलादिनामनर्पणम् ।
विनियुक्तविशिष्टस्याप्रदानं व्यजनादिनः ॥
गुरौ मौनं निजस्तोत्रं देवतानिन्दनं तथा ।
तमेव प्रणमेत् प्राज्ञो विष्णुक्षेत्रे विनेतरान् ॥
इति वैखानसाचार्योक्ताः आचारेन्दौ—१७५

**द्वादशदेवताः**— वातोदेवता इत्यादिमन्त्रः ।
अग्निर्देवता इत्यादिको मन्त्र इति नित्याचारप्रदीपे
२ १०६

**द्वादशादित्याः**- इन्द्रो धाता भगः पूषा मित्रोऽथवरुणोऽर्यमा
अत्रिर्विवस्वांस्त्वष्टा च सविता विष्णुरेव च ॥
एते वै द्वादशादित्या देवानां प्रवरा मता इति
हेमाद्रौ योगियाज्ञवल्क्यः ।
धातार्यमच मित्रश्च वरुणोंऽशुर्भगस्तथा ।
इन्द्रो विवस्वान् पूषा च पर्जन्यो दशमः स्मृतः ॥
ततस्त्वष्टा ततो विष्णुरजघन्यो जघन्यजः ॥
इत्येते द्वादशादित्या नामभिः परिकीर्त्तिताः ॥
इति मिताक्षरायाम्—२-१००
मासभेदेन आदित्याः ब्रह्म पु०—३१-१७-१८
विष्णुर्धाता भगः पूषा मित्रेन्द्रो वरुणोर्यमा ।
विवस्वानं शुमांस्त्वष्टा पर्यन्यो द्वादशः स्मृतः ॥ १२ ॥
इत्येते द्वादशादित्याः पृथक्प्वेन व्यवस्थिताः ।
उत्तिष्ठन्ति सदा ह्येते मासैर्द्वादशभिः क्रमात ॥ १८ ॥
आभिर्द्वादशभिस्तेन सवित्रा परमात्मना ।
कृत्स्नं जगदिदं व्याप्तं मूर्त्तिभिश्च द्विजोत्तमाः ॥
ब्रह्म० पु०—३०-४२
इन्द्रो धाता च पर्यन्यस्त्वष्टा पूषार्यमा भगः ।
विवस्वान् विष्णुरंशश्च वरुणो मित्रएव च ॥ २६ ॥
आभिर्द्वादशभिस्तेन सूर्य्येण परमात्मना ।
कृत्स्नं जगदिदं व्याप्तं मूर्त्तिभिश्च द्विजोत्तमाः ॥ २७ ॥
तस्य या प्रथमामूर्त्तिरादित्यस्येन्द्रसंज्ञिता ।
स्थिता सा देवराजत्वे देवानां रिपुनाशिनी ॥ २८ ॥
द्वितीया तस्य या मूर्त्तिर्नाम्ना धातेति कीर्त्तिता ।

स्थिता प्रजापतित्वेन विविधाः सृजते प्रजाः ॥ २९ ॥
तृतीयार्कस्य या मूर्त्तिः पर्यन्य इति विश्रुता ।
मेघेष्वेवस्थिता सा तु वर्षते च गभस्तिभिः ॥ ३० ॥
चतुर्थी तस्य या मूर्त्तिर्नाम्ना त्वष्टेति विश्रुता ।
स्थिता वनस्पतौ सातु ओषधीषु च सर्वतः ॥ ३१ ॥
पञ्चमो तस्या या मूर्त्तिनाम्ना पूषेति विश्रुता ।
अन्ने व्यवसिता सा तु प्रजा पुष्णाति नित्यशः ॥ ३२ ॥
मूर्त्तिः षष्ठी रवेर्यातु अर्य्यमा इति विश्रुता ।
वायोः सुसरणा सा तु देवेष्विव समाश्रिता ॥ ३३ ॥
भानोर्या सप्तमीमूर्त्तिः नाम्ना भगेति विश्रुता ।
मूर्त्तिष्ववस्थिता सा तु शरीरेषु च देहिनाम् ॥ ३४ ॥
मूर्त्तिर्या त्वष्टमी तस्य विवस्वानिति विश्रुता ।
अग्नौ प्रतिष्ठिता सातु पचत्यन्नं शरीरिणाम् ॥ ३५ ॥
नवमी शुभ्रभानोर्या मुर्त्तिर्विष्णुश्च नामतः ।
प्रादुर्भवति सा नित्यं देवानामरिसूदनी ॥ ३६ ॥
दशमी तस्य या मूर्त्तिरंशुमानिति विश्रुता ।
वायौ प्रतिष्ठिता सा तु प्रह्लादयति वै प्रजाः ॥ ३७ ॥
मूर्तिस्त्वेकादशी भानोर्नाम्ना वरुणसंज्ञिता ।
जलेष्ववस्थिता सा तु प्रजां पुष्णाति नित्यशः ॥ ३८ ॥
मूर्त्ति या द्वादशी भानोर्नाम्ना मित्रेति संज्ञिता ।
लोकानां सा हितार्थाय स्थिता चन्द्रसरित्तटे ॥ ३९ ॥
(चन्द्रस्यमण्डले इति पाठान्तरम्)
वायुभक्षस्तपस्तेपे स्थित्वा मैत्रेण चक्षुषा ।
अनुग्रहन् सदा भक्तान् वरैर्नानाविधैस्तु सः ॥
एवं सा जगतां मूर्त्ति हिताय विहिता पुरा ।
तत्र मित्रः स्थितो यस्मात्तस्मान्मित्रं परं स्मृतम् ॥ ४१

**द्वापरः**— तृतीयमानुषं युगम् ।
भाद्रकृष्णत्रयोदश्यां तस्योत्पत्तिः युगादिशब्दे लेख्या ।
नरमानेन चतुःषष्टिसहस्राधिकाष्टलक्ष (८६४०००)
सम्वत्सरास्तस्य स्थितिकालः । मनुः—१-७०

**द्विजः**— (१) ब्राह्मणक्षत्रियवैश्याः ।
मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जिबन्धनात् ।
ब्राह्मणक्षत्रियविशस्तस्मादेते द्विजाः स्मृताः ॥
याज्ञ०— -३९

(२) दन्ताः । ... ते हि द्विर्जायन्ते ।
व्रतचूडा द्विजानां तु प्रतीतिषु यथाक्रमम् ।
दशाहत्र्यहएकाहै शुद्ध्यन्त्यपि हि निर्गुणाः ॥
इति श्राद्धदीपे जावालः ।

**द्विजवाचनकम्**— पुण्याहवाचनमिति हेमाद्रिः ।
होमे चैवार्चनायासु क्रियास्वाचमने तथा ।
नैकवस्त्रः प्रवर्त्तेत द्विजवाचनके जपे ॥ इति
वीरमित्रोदये परिभाषाप्रकाशे—८३

**द्वितीयिनः**— मैत्रावरुणो ब्राह्मणाच्छंसी प्रतिप्रस्थाता
प्रस्तोता च द्वितीयिन इत्युच्यते ।
सर्वेषामर्धिनो मुख्यास्तदर्धेनार्धिनोऽपरे ।
तृतीयिनस्तृतीयांशाश्चतुर्थांशाश्च पादिनः ॥
मनुः—८-२१०

**द्विदलम्**— मुद्गादि, डालि इति प्रसिद्धम् ।
यस्मिन् शस्ये दलद्वयमस्ति तत् ।
माषमुद्गमसूराश्च चणकाश्चकुलत्थकाः ।
निष्पावाराजमाषाश्च आढ्क्यं द्विदलं स्मृतम् ।

इति स्कान्दे ।

**द्विदेवजा**— विशाखानक्षत्रे जाता कन्या ।
धवाग्रजां हन्ति सुरेन्द्रजाता तथैव पत्न्या भगिनी पुमांश्च
द्विदेवजा देवरमाशु हन्याद्भार्यानुजामाशु हि हन्ति सनुः
इति नृसिंहप्रसादे इति गदाधरभाष्ये पारस्कर गृ०-
१-१६

**द्विदेवनक्षत्रम्**— विशाखानक्षत्रम् ।
इन्द्राग्निदैवते ऋक्षे पौर्णमास्यां तथैव च ।
पूजां कृत्वा भवेद् ब्रह्मन् विगता यो न संशयः ॥
इन्द्राग्नि दैवतं-विशाखा-कृत्यरत्नाकरः—१६६

**द्विनामा**— ब्राह्मणः ।
द्वे हि नाम्नी ब्राह्मणस्य कर्त्तव्य, तत्र यद् रहस्यं
जातकर्मण्युक्तं पुत्रे जाते नाम धीयते इति ।
प्रयोजनं परैरभिचारे क्रियमाणेऽनुचारदप्रकटं,
प्रकटंत्वेकादशादौ व्यावहारिकम् ।
तथा च श्रुतिः तस्माद्ब्राह्मणो द्विनामेति इति
देवपालभाष्ये ॥
यस्माद् ब्राह्मणो द्विनामार्धुक् इति श्रुतिरिति भाषान्तरे
काठक० गृ०—३-१२-४

**द्विपी**— व्याघ्रविशेषः ।
चित्रक इति कल्पतरुः । महाव्याघ्र इति हेमाद्रिः ।

**द्विराषाढ़ः**— तदाह अत्रिः ।
मिथुनस्थो यदा भानुरमावास्याद्वयं स्पृशेत् ।
द्विराषाढ़ः स विज्ञेयो विष्णुः स्वपिति कर्कटे ॥
माधवाद्येषु मासेषु षट्सु दर्शद्वयं यदा ।
द्विराषाढ़ः स विज्ञेयो विष्णुः स्वपिति कर्कटे ॥
अधिमासो यदा दक्षिणायनात् प्राक् मेषादित्रिके
पतति, तदा द्विराषाढ़ः प्रथमे वर्षे एव सम्पद्यते,
इति हेमाद्रिः ॥

**द्विर्नग्नः**— विधर्मा इति कल्पतरुः श्राद्धकाण्डे—७६
द्विर्नग्नः दूश्चर्मा । अथवा उभयोः वेदस्याग्नेश्च
विच्छेदः यस्य स द्विर्नग्नः तदुक्तम्—
यस्य वेदश्च वेदी च विच्छिद्येत त्रिपूरुषम् ।
द्विर्नग्नः स तु विज्ञेयः श्राद्धकर्मणि निन्दितः ॥
इति गदाधरभाष्ये हारीतः कात्यायन श्राद्ध सू०—१-११

**द्विवेदः**— द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत् ।
इति वाच्यवाचकयोरभेदेन कृत्स्नो नामरूपात्मकः ।
प्रपञ्च उच्यते । परं च तदतीतमिति द्वयं यः वेत्ति
सः द्विवेदः ।
द्विवेदाश्चैक वेदाश्चाप्य नृचश्च तथा परे । इति
सनत्सुजातीये । महाभा० उद्०—४३-४२

**द्विशफः**— गवादिः ।

**द्विस्नेहस्नानम्**-घृतक्षीराभ्यां स्नानमिति नरसिंहवाजपेयी
द्विस्नेह स्नपितं देवं शीतोष्णेनानुलेपितम् ।
पञ्चभिः स्नापयित्वा च रसैर्देवं जनार्दनम् ॥
विष्णुधर्मोत्तर पु०—२-११०-६

**द्विस्पृक्**- (एकादशी) दशमी द्वादशीस्पर्शिनी एकादशी

द्विस्पृगेकादशी यत्र तत्र सन्निहितो हरिः ॥

इति कौर्मे ।

तामेवोपवसेत् काममकामो विष्णुतत्परः ।

दशमीं द्वादशीं च या स्पृशत्येकस्मिन् वासरे सा द्विस्पृक् । पुरुषार्थचिन्तामणिः—१७२

**द्वीपम्**— उन्नतभूभागः ।

द्वीपमुन्नतमाख्यातं शादा चैवेष्टकाः स्मृताः ।
किलिनं सजलं प्रोक्तं दूरखातोदको मरुः ॥

इति कात्यायनः—२६-७

"मण्डलं द्वीपसम्मितं वा" इति गोभिल

गृ०—४-७-१३

उत्कलेषु उन्नताभूमिः द्वीप इत्युच्यते ।
सोयमस्यैवापभ्रंश इति मन्ये ॥

**द्वेषः**— अप्रीतिः मनुः—२-१

विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः ।
हृदयेनाभ्यनुज्ञातो यो धर्मस्तं निबोधत ॥

**द्वैधम्**— राजनीतिगत गुणषट्केष्वन्यतमः । तच्च—

युद्धक्षेत्रे बलानां द्विधावस्थापनम् ।
बलस्य स्वामिनश्चैव स्थितिः कार्यार्थसिद्धये ।
द्विविधं कीर्त्यते द्वैधं षाड्गुण्यगुणवेदिभिः ॥

मनुः—७-१६७

**दौहृदम्**— गर्भिण्यभिलाषितम् ।

गर्भस्यैकं हृदयं गर्भिण्याश्चापरामित्येवं द्विहृदया (गर्भिणी) तस्याः स्त्रिया यदभिलषितं तत् द्वौहृदम् ॥

इति विज्ञानेश्वरः ।

तत्रापि सुश्रुते—

द्विहृदयां नारीं दौहृदिनीमाचक्षते,तदभिलषितं वीर्यवन्तं चिरायुषं पुत्रं जनयति इति मिताक्षरा ।

द्वौहृदस्या प्रदानेन गर्भो दोषमवाप्नुयात् ।
वैरूप्यं मरणं वापि तस्मात् कार्य्यं प्रियं स्त्रियाः ॥

याज्ञ०—३-७६

रघुवंशादिषु दौर्हृदमितिपाठः सुदक्षिणादोहृतलक्षणं दधाविति ॥

**द्व्यामुष्यायणः**— द्वयोः पुत्त्रः ।

अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः ।
उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः ॥

याज्ञ०—२-७७

दत्तकादयोऽपि परबीजजाता द्व्यामुष्यायणा भवन्ति ॥

व्यामुष्यायणका ये स्युर्दत्तकक्रीतकादयः ।
गोत्रद्वयेऽप्यनुद्वाहः शौङ्गशैशिरयोर्यथा ॥
इति दत्तकमीमांसोद्धृतपारिजाते ॥

# ध

**धटः**— तुलादण्डस्योपरिवर्त्तमानः शिक्यद्वयधारकः स्वमनंविषमत्वेन द्रव्यसमविषमत्वज्ञापके दण्डविशेषः

उदकं च प्रदातव्यं धटस्योपरि पण्डितैः ।
यस्मिन्न प्लवते तोयं स विज्ञेयः समो धटः ॥
इति मिताक्षरायां नारदादिवचनम् ॥ २-१००

**धटकः**— परिमाणविशेषः ।

तद्यथा ज्योतिःशास्त्रे लीलावत्याम् ।

तुल्या यवाभ्यां कथिताऽत्र गुञ्जा
वल्लस्त्रिगुञ्जो धरणं च तेऽष्टौ ॥
गद्याणकस्तद्द्वयमिन्द्रतुल्यै (१४)—
वल्लैस्तथैको धटकः प्रदिष्टः ॥ इति

**धटदिव्यम्**— तुलादिव्यम् ।
तत्स्वरूपं तुलादिव्याख्याने द्रष्टव्यम् ॥

**धनकः**— कपित्थवृक्ष इति लक्ष्मीधरः ।
कदम्बः कुटजश्चैव धनलोर्जुनकस्तथा ।
एभिरभ्यर्च्चनं कुर्याद् विधिदृष्टेन कर्मणा ॥
धनकः कपित्थ इति कृत्यरत्नाकरे—२०८

**धनुः**— (१) परिमाणविशेषः हस्तचतुष्टयात्मकः (२) चापः । (३) राशिविशेषः ।

**धन्यम्**— धनाय हितं शास्त्रम् । अर्थशास्त्रमित्यर्थः ।
बुद्धिवृद्धिकराण्याशु धन्यानि च हिमानि च ।
नित्यं शास्त्राण्यवेक्षेत निगमांश्चैव वैदिकान् ॥
मनुः—४-१९

**धन्व**— मरुस्थलम् ।
समानौमरुधन्वानौ इत्यमरः—२-१-५
धन्वात्तु मरुदेशेनाक्लीव चापे स्थलेऽपि च ।
इत्यमरव्याख्याने ।
धन्वदुर्गं महीदुर्ग मप्दुर्गं वार्क्षमेव वा ।
नृदुर्गं गिरिदुर्गं वा समाश्रित्य वसेत्पुरम् ॥
मनुः—७-७०

**धन्वधुर्गम्**— मरुवेष्टितचतुर्दिशं पञ्चयोजनमनुदकमिति कुल्लूकः ।

**धन्वनः**— द्रामण इति प्रसिद्धो वृक्षः ।

**धमनिका**— बट्टुआ इति प्रसिद्धा ।
करधार्य्येषु टमनिका सूत्रमयी इति श्रीमूला—२-१८

**धमनी**— प्राणादिवायुवाहिन्यः शिराः ।
धमन्यो नाम नाभेरुद्भूताश्चतुर्विंशतिसंख्याः
प्राणादिवायुवाहिन्यः शाखाभेदेन द्विशतं भवन्ति ॥
धमनीनां शते द्वे चेति योगीश्वरः—३-१००

**धमितम्**— धूमपानम् ।
आसने पादमारूढो वस्त्रस्याद्धमधःकृतम् ।
मुखेन धमितं भुंक्ते द्विजश्चान्द्रायणं चरेत् ॥
वृ० यमस्मृतिः—३-३१
मुखेन धमितं भुंक्ते तुल्यं गोमांसभक्षणम् ॥
अङ्गिरस्मृतिः—६३

**धरकः**— उन्मानकर्त्ता तुलाधारक इति श्रीमूला ।
धरकस्य माथवस्य वा पण्यमूल्यादष्टभागं
हस्तदोषेणाचरतो ऽदिशतो दण्डः ॥
इति कोटलीये—४-२-८०

**धरणः**— टङ्कस्य पर्यायः ।
माषैश्चतुर्भिः शाणः स्याद्धरणः स निगद्यते ।
इत्यायुर्वेदीयभावप्रकाशे परिभाषाप्रकाशे ॥

ज्योतिःशास्त्रे तु—

तुल्या यवाभ्यां कथितात्र गुञ्जा वल्लस्त्रिगुञ्जो धरणं चतेऽष्टौ। इति लीलावत्याम् ॥

**धरिमा**— उन्मानम्।

तथा धरिममेयानां शतादभ्यधिके वधः।

सुवर्णरजतादीनामुत्तमानां च वाससाम् ॥

मनुः—८-३२१

धरणं धरिमा तुला, तेन मीयन्ते परिच्छिद्यन्ते इति मेधातिथिः।

धरिमेण तुलया मीयन्ते इति अपरार्कः।

धरिमा तुला इति मन्वर्थ विवृतिरिति धर्मकोशे ॥

धरिमेन तुलया मीयन्ते इति धरिममेयानि सुवर्ण-रजतादीनि इति वैजयन्त्यां नन्दपण्डितः ॥

विष्णुः—५-१३

**धर्मः**— (१) विहितकर्मजन्यो विहितकर्मरूपश्च धर्मः। कर्मजन्योऽभ्युदयनिःश्रेयसहेतुरपूर्वाख्य आत्मगुणो धर्म इति गौतमसूत्रव्याख्याने हरदत्तः ॥ १-१-१

चोदनालक्षणोऽर्थो धर्म इति जैमिनिः ॥ तेन वेद-प्रमाणकं श्रेयः साधनं ज्योतिष्टोमादि ॥

कर्म तज्जन्यापूर्वश्च धर्मएव।

वेदप्रमाणकः श्रेयःसाधनं धर्म इति जैमिनेरभिप्राय इति कुल्लूकः ॥ मनोर्धर्मलक्षणमपि अस्य अविसम्वादि

विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः।

हृदयेनाभ्यनुज्ञातो यो धर्मस्तं निबोधत ॥ इति

मनुः—२-१

कुल्लूकस्त्वस्यार्थं पद्यैराह। यथा—

वेदविद्भिरिति इति प्रयुञ्जानो विशेषणम्।

वेदादेव परिज्ञातो धर्म इत्युक्तवान् मनुः ॥

हृदयेनाभिमुख्येन ज्ञात इत्यपि निर्दिशन्।

श्रेयः साधनमित्याह तत्र ह्यभिमुखं मनः ॥

वेदप्रमाणकः श्रेयसाधनं धर्म इत्यतः।

मनूक्तमेव मुनयः प्रणिन्युर्धर्मलक्षणम् ॥ इति

वसिष्ठेन इत्थमेव धर्मलक्षणं सप्रयोजनमुक्तम्।

अथातः पुरुषनिःश्रेयसार्थं धर्मजिज्ञासा ॥ १-१।

श्रुतिस्मृतिविहितो धर्मः। १-४

तदलाभे शिष्टाचारः प्रमाणम् ॥ १-५

अगृह्यमाणकारणो धर्मः—१-७ इति।

गौतमोऽपि—

ओं वेदो धर्ममूलम् ॥ १-१

तद्विदां च स्मृतिशीले ॥ १-२ इति

बौधायनोऽपि—

उपदिष्टो धर्मः प्रतिवेदम् ॥ १-१-१

स्मार्त्तो द्वितीयः ॥ १-१-३

तृतीयः शिष्टागमः ॥ १-१-४

हारीतश्च श्रुतिप्रमाणको धर्म इति

विहितकर्मजन्यो धर्म इत्यपि नैयायिकाः ॥

भविष्यपुराणेऽपि—

धर्मः श्रेयः समुद्दिष्टः श्रेयोऽभ्युदयलक्षणम्।

स तु पञ्चविधः प्रोक्तो वेदमूलः सनातन ॥ इति

इत्येवं सर्वैरेव धर्मस्य वेदप्रमाणकत्वं श्रेयःसाधनत्वं च प्रतिपादितम् ॥

वेदस्यधर्ममूलत्वेऽपि स्मृत्यादीनां वेदानुगतत्वेन धर्ममूलत्वमविरुद्धम्। अतएव मनुना (२-६)

वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्।

आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥ इत्युक्तम्
अत्र स्मृतिशीलयोर्वेदश्च विषयतया धर्ममूलत्वम् ।
साधुपदेन शिष्टा एव विवक्षिताः शिष्टलक्षणमुक्तं
वसिष्ठेन पारम्पर्यगतो येषां वेदः सपरिबृंहणः ।
ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः ॥ ६-४३
मनुनापि—
धर्मेणाधिगतो यैस्तु वेदः सपरिबृंहणः ।
ते शिष्टा ब्राह्मणा ज्ञेया श्रुतिप्रत्यक्षहेतवः ॥
इति मनुः—१२-१०६
एतेन शिष्टाचारस्यापि वेदमूलत्वंसुसिद्धम् ।
आत्मतुष्टिस्तु वैकल्पिकेषु विषयेषु व्यवस्थापिका,
ते च विषयाः श्रुतिद्वैधं तु यत्र स्यात्तत्र धर्मावुभौ
स्मृतौ इति वचनात् साक्षात् परम्पराया वा वेदमूला
इति सर्वथा वेदस्यैव धर्ममूलत्वमिति ॥
एतेन वेदो धर्ममूलम् । उपदिष्टो धर्मः प्रतिवेदम्
इत्यादि गौतम बौधायनादीनां मनुवचनेन सह
एकवाक्यता प्रतिपाद्यते॥
याज्ञवल्क्योऽपि श्रुत्यादीनि सविशेषमाह
पुराणन्यायमीमांसा धर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥ १-३
देशे काल उपायेन द्रव्यं श्रद्धा समन्वितम् ।
पात्रे प्रदीयते यत्तत् सकलं धर्मलक्षणम् ॥ १-६
श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
सम्यक् सङ्कल्पजः कामो धर्ममूलमिदं स्मृतम् इति-१-७
अत्रोक्तानां पुराणादीनां वेदोपबृंहकत्वेन वेदे अन्तर्भावः
तेषु यस्य यस्मिन् वांशे वेदेन सह विरोधः स्यात् तस्य
तस्मिन् वांशे प्रामाण्याभावोऽवगन्तव्यो विरोधाधि
करणन्यायेन देशे काल इति विहितकर्मणः
स्वरूपप्रदर्शनमात्रम् ।
एतेन धर्मस्य क्रियारूपता प्रदर्शिता । सम्यक् संकल्पज
कामो वेदाविरुद्धे व्यापारे मनोनिवेशः एतदेव
वैशिष्ट्यं याज्ञवल्क्यस्य ॥ मनोरात्मतुष्टि
द्विधाव्याख्याता योगीश्वरेण वेद प्रतिपादिते
वेदाविरुद्धे व्यापारे च तस्याः प्रमाण्यमिति
मनुयाज्ञवल्क्ययोरभिन्नं मतम् ॥
विहितमपि कर्मप्रवृत्तनिवृत्तभेदेन भिद्यते ।
तदुक्तं मनुना— (१८-८८)
सुखाभ्युदयिकं चैव नैःश्रेयसिकमेव च ।
प्रवृत्तं च निवृत्तं च द्विविधं कर्मवैदिकम् ॥ इति
इह चामुत्र वा काम्यं प्रवृत्तं कर्म कीर्त्यते ।
निष्कामं ज्ञानपूर्वं तु निवृत्तमुपदिश्यते ॥ १८-८९
प्रवृत्तं कर्म संसेव्य देवानामेति साम्यताम् ।
निवृत्तं सेवमानस्तु भूतान्यत्येति पञ्च वै ॥ १२-९०
एतेन कर्मद्वैविध्येन धर्मद्वैविध्यं तद्गतफलद्वैविध्यं
च प्रदर्शितं मनुना । योगीश्वरस्तु अमुमेवार्थमनुद्य
निवृत्तलक्षणं मोक्षधर्मं परमधर्ममाह— (१-८)
अयं तु परमो धर्मो यद्योगेनात्मदर्शनम् इति ॥
मोक्षस्य चरमाभिलाषविषयत्वेन परमपुरुषार्थत्वं
सर्वैरङ्गीकृतम् ॥
तेन सुतरामस्य प्राधान्यं प्रवृत्तधर्मस्य तु तत्सहायकत्वे
तदङ्गतामात्रम् । तदेव स्पष्टीकृतं वसिष्ठेन अथातः
पुरुषनिःश्रेयसार्थे धर्मजिज्ञासा इति
श्रीमद्भागवतेऽपि तत् प्रदर्शितम्—१-२ (९-१०)
धर्मस्य ह्यपवर्गस्य नार्थोऽर्थायोपकल्पते ।
नार्थस्य धर्मैकान्तस्य कामो लाभाय हि स्मृतः ।
कामस्य नेन्द्रियप्रीतिर्लाभो जीवेत यावता

जीवस्य तत्त्वजिज्ञासा नार्थो यश्चेह कर्मभिः ॥ इति प्रवृत्तधर्मस्तु वर्णधर्माश्रमधर्म-वर्णाश्रमधर्मगुणधर्म निमित्तधर्मभेदेन भविष्यपुराणे पञ्चधा प्रतिपादितः । तद्यथा—

वर्णधर्मः स्मृतस्त्वेक आश्रमाणामतः परम् ।
वर्णाश्रमस्तृतीयस्तु गौणो नैमित्तिकस्तथा ॥
वर्णत्वमेकमाश्रित्य यो धर्मः सम्प्रवर्त्तते ।
वर्णधर्मः स उक्तस्तु यथोपनयनं नृप ॥
यस्त्वाश्रमं समाश्रित्य अधिकारः प्रवर्त्तते ।
स खल्वाश्रमधर्मस्तु भिक्षादण्डादिको यथा ।
वर्णत्वमाश्रमत्वं च योधिकृत्य प्रवर्त्तते ।
स वर्णाश्रमधर्मस्तु मौञ्जीया मेखला यथा ॥
यो गुणेन प्रवर्त्तेत गुणधर्मः स उच्यते ।
यथा मूर्द्धाभिषिक्तस्य प्रजानां परिपालनम् ॥
निमित्तमेकमाश्रित्य यो धर्मः सम्प्रवर्त्तते ।
नैमित्तिकः स विज्ञेयः प्रायश्चितविधिर्यथा ॥

एतदतिरिक्तः षष्ठः साधारणधर्मश्च मनुनोक्तः
१०-६३

अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।
एतं सामासिकं धर्मं चातुर्वर्ण्येऽब्रवीन्मनुः ॥

याज्ञवल्क्योऽपि—

सत्यमस्तेयमक्रोधो ह्रीः शौचं धीर्धृतिर्दमः ।
संयतेन्द्रियता विद्याधर्मः सर्व उदाहृतः ॥ ३-६६

परिभाषाप्रकाशे बृहस्पतिश्च—

दयाक्षमानसूया च शौचानायासमङ्गलम् ।
अकार्पण्यमस्पृहत्वं सर्वसाधारणानि च ॥

तत्रैव महाभारतेऽपि—

सत्यं दमस्तपः शौचं सन्तोषो ह्रीः क्षमार्जवम् ।
ज्ञानं शमो दया ध्यानमेवं धर्मः सनातनः ॥

सनातनः कालमात्राधिकारको न ब्राह्मणत्वाद्यधिकारान्तरापेक्ष इत्यर्थ इति मित्रमिश्राः । तथा—

आनृशंस्यमहिंसा चाप्रमादः सन्विभागिता ॥
श्राद्धकर्मातिथेयं च सत्यमक्रोध एव च ॥
स्वेषु दारेषु सन्तोषः शौचं नित्यानसूयता ॥
आत्मज्ञानं तितिक्षा च धर्मः साधारणो नृप ॥

विष्णुश्च—

क्षमा सत्यं दमः शौचं दानमिन्द्रियसंयमः ।
अहिंसा गुरुशुश्रुषा तीर्थानुसरणं दया ॥
आर्जवं लोभशून्यत्वं देवब्राह्मण पूजनम् ।
अनभ्यसूया च तथा धर्मः सामान्य उच्यते ॥
इति पृ०—३७

पुलस्त्यश्च—

अहिंसा सत्यवादश्च सत्यं शौचं दया क्षमा ।
वर्णिनां लिङ्गिनां चैव सामान्यो धर्म उच्यते ॥ २२

मनुरपि—

धृतिः क्षमा दमोऽस्तेयं शौचामिन्द्रियनिग्रहः ।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥ ६-६८

कूर्मपुराणे च द्वितीयाध्याये—

क्षमादमो दयादानमलोभस्त्याग एव च ।
आर्जवं चानसूया च तीर्थानुसरणं तथा ॥
सत्यं सन्तोषमास्तिक्यं श्रद्धा चेन्द्रियनिग्रहः ।
देवताभ्यर्चनं पूजा ब्राह्मणानां विशेषतः ॥
अहिंसा प्रियवादित्वमप्यैशून्यमकल्कता ।
सामासिकमिमं धर्मं चतुर्वर्ण्यो ब्रवीन्मनुः ॥ इति

एतेन प्रवृत्तधर्मः षड्विधः निवृत्तधर्मस्त्वेकविध एवेति सकलोऽयं धर्मः शरीरस्य संसारस्य आत्मनश्च

उपकारकतया धारक इति सिद्धम् । अतएव महाभारते "धारणाद्धर्ममेवाहुः इति"
श्रुतिरपि धर्मो विश्वस्य जगतः प्रतिष्ठा लोके धर्मिष्ठं प्रजा उपसर्पन्ति, धर्मेण पापमपनुदति, धर्मे सर्वं प्रतिष्ठितं तस्माद्धर्मं परमं वदन्ति इति
(परिभाषाप्रकाशे) तैत्तिरीय० आर०—१०-६३
नारायणोपनिषद्—७६
धर्मस्य सामान्यस्वरूपमाहापस्तम्बः
यं त्वार्य्याः क्रियमाणं प्रशंसन्ति
स धर्मो यं गर्हन्ते सोऽधर्मः आपस्त०—१-७-२०-७
देवलः—
श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्य्यताम् ।
आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥
इति परिभाषाप्रकाशे—३५
(२) पारम्परिक आचारः ।
यो धर्मः कर्मयच्चैषामुपस्थानविधिश्च यः ।
यच्चैषां वृत्त्युपादानमनुमन्येत तत्तथा ॥
इति नारदः—१०-३
अत्र धर्मः पारम्परिक आचार इति विवादरत्नाकरे
१८०
(३) प्रयुक्तधनग्रहणप्रकारविशेषः ।
धर्मेण व्यवहारेण छलेनाचरितेन च ।
प्रयुक्तं साधयेदर्थं पञ्चमेन बलेन च ॥
मनुः—८-४९
धर्मस्वरूपमाह बृहस्पतिः ।
सुहृत्सम्बन्धि सन्दिष्टैः साम्ना चानुगमेन च ।
प्रायेण वा ऋणि दाप्यो धर्म एष उदाहृतः ॥ इति विवादरत्नाकरे तु धर्म्य इति पाठः ॥

(४) विष्णुः ।
अभ्युदयनिःश्रेयसे साधनीभूय धारयतीति धर्म इति नन्दपण्डितः विष्णुः—९८-८८
धर्मोः पुण्ययमन्यायस्वभावाचारसोमपा इत्यमरः
३-३-१३६
धर्मोऽस्त्री पुण्य आचारे स्वभावोपमयोः क्रतौ ।
अहिंसोपनिषन्न्याये नाधनुर्यमसोमपे ॥ इति मेदिनी
धर्मशब्दस्य क्लीबलिङ्गत्वं तानि धर्माणि प्रथमान्यासन् इत्यत्र द्रष्टव्यम् ॥

**धर्मघटः** / **धर्मघटकः** — ग्रीष्मे प्रत्यहं धर्मार्थं विहितं जलपूर्णघटदानम् तदुक्तं भविष्ये निर्णयसिन्धूद्धृते—
प्रत्यहं धर्मघटको वस्त्रसंवेष्टिताननः ।
ब्राह्मणस्य गृहे देयः शीतामलजलः शुचिः ॥
एष धर्मघटो दत्तो ब्रह्मविष्णुशिवात्मकः ।
अस्य प्रदानात् सफला मम सन्तु मनोरथाः ।
कालसारोद्धृत-भविष्यान्तरे तु—
प्रपां दातुमशक्तो च विशेषाद्धर्ममाप्नुयात् ।
प्रत्यहं धर्मघटकः कर्पटीवेष्टिताननः ।
ब्राह्मणस्य गृहे देयः शीतामलजलः शुचिः ॥
इत्यादिः सम्पूर्णो विधिः द्रष्टव्यः ।

**धर्मदः**— विष्णुः ।
धर्ममपूर्वविशेषं विघ्नवारणेन ददाति साधयतीति धर्म इति वैजयन्त्याम् ॥ विष्णुः—९८-८९

**धर्मद्रवः**— द्रवाकारेण परिणतो धर्मः गङ्गानदीत्यर्थः
गङ्गा धर्मद्रवः पुण्या यमुना च सरस्वती ।

अन्तर्गत रजो योगाः सर्वाहःस्वपि चामलाः ॥
इति स्मृतिचन्द्रिकायां यमः ।
धर्मजनको द्रवो वारिरूपो यस्याः ।
विष्णुपादाग्रसम्भूते गङ्गे त्रिपथगामिनी ।
धर्मद्रवीति विख्याते पापं मे हर जाह्नवि ॥

**धर्मध्वजः**— सूर्य्यः इति चण्डेश्वरः ।
कथा वा भास्करस्येह तद्गीतककथाऽपि वा ।
धर्मश्रवणमिष्टं च सदाधर्मध्वजस्य च ॥
भभिष्य० पु० कृत्यरत्नाकरे—५२५
सूर्य्यः
चतुर्मासे तु संप्राप्ते कुर्य्यात् पुस्तकवाचनम् ।
कथा वा भास्करस्येह तद्गीतिकमथापि वा ॥
धर्मश्रवणमिष्टं तु सदा धर्मध्वजस्य तु ।
वाचकं पूजयित्वा तु तस्मात् कार्य्यं तु श्रद्धया ॥
इति कृत्यकल्पतरौ व्रतकाण्डे—१४४

**धर्मध्वजी**— धर्मः ध्वज इव यस्य अस्ति सः ।
धर्मध्वजी लिङ्गवृत्तिरित्यमरः—२-८-५४
धर्मध्वजी सदा लुब्धश्छाद्मिको लोकदम्भकः ।
बैडालव्रतिको ज्ञेयो हिंस्रः सर्वाभिसन्धकः ॥
मनुः—४-१९५

**धर्मपाठकः**— धर्मशास्त्राध्येता ।
दश वा वेदशास्त्रज्ञास्त्रयो वा धर्मपाठकाः ।
यद्ब्रूयुः कार्य उत्पन्ने स धर्मो धर्मसंशये ॥
इति महाभा० शान्ति राज—३६-१०
वेदविद्याव्रतस्नातः कुलशीलसमन्वितः ।
अनेकधर्मशास्त्रज्ञः प्रोच्यते धर्मपाठकः ॥ इति
उत्तराङ्गिरसे—५-५
धर्मपाठकः धर्मशास्त्रज्ञ इति नित्याचारप्रदीपे-१-६६

**धर्मपुरस्कारः**- आचार्यस्यार्थे भिक्षणं धर्मस्तत्पुरस्करोतीती
धर्मपुरस्कारः । इति हरदत्तः । आप०—२-३-६५

**धर्मप्रकृतिः**— धर्माध्यक्षः ।
दुर्गाध्यक्षो बलाध्यक्षो धर्माध्यक्षश्च नृपतिः ।
पुरोधा वैद्यदैवज्ञौ सप्तप्रकृतयस्त्विमाः ॥
अत्र धर्माध्यक्षः धर्मप्रकृतिः अन्ये अर्थ प्रकृतयः
इति भारतभावदीपे ॥ शान्ति—८०-२४

**धर्मप्रतिरूपकः**— धर्माभासः धर्मस्य छलनामात्रमित्यर्थ ।
शक्तः परजने दाता स्वजने दुःखजीविनि ।
मध्वापातो विषास्वादः स धर्मप्रतिरूपकः ॥
मनुः—११-९

**धर्मप्रवक्ता**— व्यवहारद्रष्टा ।
जातिमात्रोपजीवी वा कामं स्याद् ब्राह्मणब्रुवः ।
धर्मप्रवक्ता नृपतेर्न तु शूद्रः कथंचन ॥ मनुः—८-२०

**धर्मभ्राता**— धर्मभ्राता समानाचार्य्यक इति पराशर-
माधवे व्यवहारकाण्डे—३६५
धर्मभ्राता सखा इति श्रीमूला ॥
प्रतिपन्नो भ्राता भ्रातृत्वेन अनुमित इति विज्ञानेश्वरः
२-१३७
वानप्रस्थयतिब्रह्मचारिणां रिक्थभागिनः ।

क्रमेणाचार्य्यवच्छिष्यं धर्मभ्रात्रेकतीर्थिनः ॥

याज्ञ०—२-१३७

**धर्मवसुप्रदः**— विष्णुः ।

धर्मं च वसुद्रव्यं च प्रकर्षेण अल्पादपिकार्पणः

अतिशयेन ददातीति धर्मवसुप्रद इति वैजयन्त्याम् ॥

विष्णुः—९८-९२

**धर्मवादः**— धर्मशास्त्रनिर्देशः ।

यावच्च कन्यामृतवः स्पृशन्ति तुल्यैः सकामाम-
भियाच्यमानाम् ।

भ्रूणानि तावन्ति हतानि ताभ्यां मातापितृभ्या-
मितिधर्मवादः ॥

वसिष्ठः—१७-६३ महाभा०—१८-२३

**धर्मशास्त्रम्**— मन्वादिनिर्मिता स्मृतिः ।

श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः ।

ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ ॥

मनुः—२-१०

पुराणन्यायमीमांसा धर्मशास्त्राणि च द्विजाः ।

साङ्गवेदाश्च सर्वस्य विष्णो रूपं प्रकीर्त्तितम् ॥

बृहन्नारदीय पु०—३७-९६

**धर्मशास्त्रप्रणेतारः** } स्मृतिकर्त्तारः वेदार्थस्मर्त्तार इति
**धर्मशास्त्रप्रयोजकाः** } यावत् ।

मन्वत्रिविष्णुहारीत याज्ञवल्क्योशनोऽङ्गिराः ।

यमापस्तम्बसम्बर्त्त कात्यायनबृहस्पती ॥

पराशरव्यासशङ्खलिखिता दक्षगौतमौ ।

शातातपो वसिष्ठश्च धर्मशास्त्रप्रयोजकाः ॥

याज्ञ०—१-४-५

तेषां मन्वङ्गिरो व्यासगौतमात्र्युशनो यमाः ।

वसिष्ठदक्षसम्बर्त्त शातातपपराशराः ॥

विष्ण्वापस्तम्बहारीताः शङ्खः कात्यायनो भृगुः ।

प्रचेता नारदो योगी बौधायनपितामहौ ।

सुमन्तुः काश्यपो बभ्रुः पैठीनो व्याघ्र एव च ।

सत्यव्रतो भरद्वाजो गार्ग्यः कार्ष्णाजिनिस्तथा ॥

जाबालिर्जमदग्निश्च लौगाक्षिर्ब्रह्मसम्भवः ।

इति धर्मप्रणेतारः षट्त्रिंशदृषयः स्मृताः ॥

इति परिभाषाप्रकाशे पैठीनसिः—१५

ब्रह्मसम्भवो ब्रह्मगर्गः इति परिभाषाप्रकाशे

मित्रमिश्रः—१६

कल्पतरौ शङ्खलिखितौ—

स्मृतिधर्मशास्त्राणि । तेषां प्रणेतारो मनु विष्णु
यमदक्षाङ्गिरोऽत्रिबृहस्पत्युशनआपस्तम्बवसिष्ठ
कात्यायनपराशरव्यासशङ्खलिखितसम्बर्त्त गौतम
शातातपहारीतयाज्ञवल्क्यप्राचेतसादय इति ।
अत्र आदिपदेन बुधदेवलसोमयमदग्नि विश्वामित्र
प्रजापति नारद पैठीनसि पितामह बौधायन छागलेय
जाबाल च्यवन मरीचिकश्यप उक्ता इति कल्पतरौ।

पराशरोऽपि—१-१२-१५

धर्मं कथय मे तात अनुग्राह्योऽहं तव ॥ १२

श्रुता मे मानवाधर्मा वासिष्ठाः काश्यपा स्तथा ।

गार्गेया गौतमश्चैव तथाचौशसनसाः स्मृताः ॥ १३

अत्रे र्विष्णोश्च साम्बर्त्ता दाक्षा आङ्गिरसास्तथा ।

शातातपाश्च हारीता याज्ञवल्क्यकृताश्च नो ॥ १४

कात्यायनकृताश्चैव प्राचेतसकृताश्च ये ।

आपस्तम्बकृताधर्माः शङ्खस्य लिखितस्य च ॥ १५
अग्निपुराणे—१६२-१-२
मनुर्विष्णुर्याज्ञवल्क्यो हारीतोऽत्रिर्यमोऽङ्गिराः ।
वसिष्ठदक्षसम्वर्त्तशातातपपराशराः ॥ १६
आपस्तम्बोशनाव्यासाः कात्यायनबृहस्पती ।
गौतमः शङ्खलिखितौ धर्ममेते यथाब्रुवन् ॥ इति
चतुर्विंशतिमतसंग्रहे चतुर्विंशतिः स्मृतिकारा
उक्ता यथा—
मनुना याज्ञवल्क्येन विश्वामित्रेण चात्रिणाः ।
विष्णुना च वसिष्ठेन व्यासेनोशनसा तथा ॥
आपस्तम्बेन वत्सेन हारीत गुरु नारदैः ।
पराशरेण गर्गेण गौतमेन यमेन च ॥
शातातपेन शङ्खेन संवर्त्तेन तथैव च ।
बौधायनेन सांख्येन दक्षेणाङ्गिरसाः तथा ॥
चतुर्विंशतिभिः शास्त्रं दृष्टं लोकहिते रतैः ।
धर्मसंरक्षणर्थाय संक्षेपेण महात्मभिः ॥
चतुर्विंशतिमतसंग्रहे—२
संस्कारप्रकाशोद्धृत प्रयोगपारिजाते च—
मनुर्बृहस्पतिर्दक्षो गौतमोऽथ यमोङ्गिराः ।
योगीश्वरः प्रचेताश्च शातातपराशरौ ॥
सम्वर्त्तोशनसौ शङ्खलिखितावत्रिरेव च ।
विष्ण्वापस्तम्बहारीता धर्मशास्त्रप्रवर्त्तकाः ॥
एते ह्यष्टादश प्रोक्ता मुनयो नियतव्रताः ।
जाबालिर्नाचिकेतश्च स्कन्दो लौगाक्षिकाश्यपौ ।
व्यासः सनत्कुमारश्च शन्तनुर्जनकस्तथा ॥
व्याघ्रकात्यायनश्चैव जातुकर्ण्यः कपिञ्जलः ।
बौधायनश्च काणादो विश्वामित्रस्तथैव च ॥
पैठीनसिर्गोभिलश्चेत्युपस्मृतिविधायकाः ।
वसिष्ठो नारदश्चैव सुमन्तुश्च पितामहः ।
विष्णुः कार्ष्णाजिनि सत्यव्रतो गार्ग्यश्च देवलः ॥
जमदग्निर्भरद्वाजः पुलस्त्यः पुलहः क्रतुः ।
आत्रेयश्च गवेयश्च मरीचिर्वत्स एव च ॥
पारस्करश्चर्ष्यशृङ्गो वैजवापस्तथैव च ।
इत्येते स्मृतिकर्त्तार एकविंशतिरीरिताः ॥
एतैर्यानि प्रणीतानि धर्मशास्त्राणि वै पुरा इति
एते एव उपस्मृति कर्त्तारो मदनरत्नेऽप्युक्ता
इति मित्रमिश्राः ।

सरस्वतीविलासे तु—
मन्वङ्गिरोव्यासगौतमात्रेययमवसिष्ठदक्षसम्वर्त्तशातातप
पराशरविष्ण्वापस्तम्बहारीतशङ्खकात्यायनगुरु
प्रचेतोनारदयोगीश्वरबौधायनपितामहसुमन्तु
कश्यपबभ्रुपैठीनसीव्याघ्रपादसत्यव्रतभरद्वाजगार्ग्य-
कार्ष्णाजिनिजाबालिजमदग्निलौगाक्षिवत्समरीचिदेवल
पारस्करलिखित छागलेयत्रिभिः प्रणीताः स्मृतयः ।
जाबालिनाचिकेतस्कन्दलौगाक्षिकश्यपव्याससनत्कुमार-
शन्तनुजनकव्याघ्रकात्यायनजातुकर्णिकपिञ्जल-
बौधायनकणादविश्वामित्र (पैठीनसि गोभिल)
प्रणीता उपस्मृतयः ।
जाबालिलौगाक्षिव्यासादयः पूर्वोक्ता न भवन्ति ॥ इति

**धर्मशास्त्री**— धर्मशास्त्रज्ञः ।

**धर्मसंकटः**— धर्मसंशयः ।

**धर्मसन्निपातः**— धर्मे सहान्वयः ।
धर्मकृत्ये परस्परसम्बन्धस्थापनमित्यर्थः ।
माता पुत्रस्य भूयांसि कर्माण्यारभते । तस्यां

शुश्रूषा नित्या पतितायामपि—१-१

न तु धर्मसन्निपातः स्याद् ॥ आपस्त—१-१०-२८-१०

**धर्मस्थः**— व्यवहारविचारकः ।

प्राड् विवाक इति कुल्लूकः ॥

साक्षिणः सन्तिमेत्युक्ता दिशेत्युक्तो दिशेन्नयः ।

धर्मस्थः कारणैरेतै हीनं तमपि निर्द्दिशेत ॥

मनुः—८-५७

**धर्माङ्गः**— विष्णुः ।

धर्मस्य ज्योतिष्टोमादेः अङ्गम् आद्यन्तयोः स्मरणीयत्वात्

इति वैजयन्त्याम् । विष्णुः—१-६८-६०

**धर्माधिकरणम्**— न्यायालयः, विचारसभा ।

धर्मशास्त्रविचारेण सारासारविवेचनम् ।

यत्राधिक्रियते स्थाने धर्माधिकरणं हि तत् ॥

इति कात्यायनः ।

**धर्माधिकरणं**— धर्माध्यक्षः ।

समः शत्रौ च मित्रे च सर्वशास्त्रविशारदः ।

विप्रमुख्यः कुलीनश्च धर्माधिकरणो भवेत् ॥

मत्स्य पु० अ०-१८६ (शब्दकल्पद्रुमे)

**धर्मारण्यम्**— गंगास्थः तीर्थविशेषः ।

प्रथमेहि विधिः प्रोक्तो द्वितीये दिवसे ब्रजेत् ।

धर्मारण्यं तत्र धर्मो यस्माद् यज्ञमकारयत् ॥

इति वायुपुराणे ।

**धर्मासनम्**— विचारासनम् ।

धर्मासनमधिष्ठाय सवीताङ्गः समाहितः ।

प्रणम्य लोकपालेभ्यः कार्य्यदर्शनमारभेत् ॥

मनुः—८-२३

**धात्री**— (१) माता ।

पुनर्धात्रीं पुनर्गर्भमोजस्तस्य प्रधावति ।

अष्टमे मास्यतो गर्भो जातः प्राणैर्वियुज्यते ॥

याज्ञ०—३-८२

(२) आमलकीवृक्षः ।

धात्रीकाष्ठं दन्तधावनाय प्रशस्तमिति शेलुशब्दे द्रष्टव्यम्

(३) पृथिवी ।

(४) उपमाता, धाइ इति प्रसिद्धा ।

**धात्रीफलम्**— आमलकीफलम् ।

**धात्रेयिका** } उपमाता, धाई इति प्रसिद्ध
**धात्रेयी** } कदलीलवली धात्रीफलान्यगुड़मैक्षवम् ।

अतैलपक्वं मुनयो हविष्याणि प्रचक्षते ॥

इति कालसारोद्धृत भविष्योत्तरे ॥

धात्री, उपमाता

वासुदेवोऽभिशप्तस्तु निशाकरमरीचिषु ।

स्थितश्चतुर्थ्यामथापि प्रमादाद् वीक्ष्य मानवः ॥

पठेद्धात्रेयिकावाक्यं प्राङ्मुखोदङ् मुखोऽपि वा ॥

धात्रेयिका वाक्यम्—

सिंहः प्रसेनमवधीत् सिंहो जाम्बवता हतः ।

सुकुमारकमारोदीस्तव ह्येष स्यमन्तक ॥ इति

**धानः** } परिमाणविशेषः ।
**धानकः** } कार्षापणोऽण्विका ज्ञेया ताश्चतस्रस्तु धानकः ।

तद् द्वादश सुवर्णस्तु दीनाराख्यः स एव च ॥

नारदसंहिता—१८-११८

ताम्रकर्षं कृता मुद्रा विज्ञेयः कार्षिकः पणः ।

स एव चन्द्रिका प्रोक्ता ताश्चतस्रस्तु धानकाः ॥
ता द्वादश सुवर्णस्तु दीनाराख्यः स एव तु इति
व्यवहारप्रकाशे बृहस्पतिः—१७६

**धानाः**— भृष्टायवा इति विज्ञानेश्वरः याज्ञ०—१-२१४
नित्यबहुवचनान्तोऽयं शब्दः स्त्रीलिङ्गः आकारान्तः ।
धाना दधि च सक्तूंश्च श्रीकामो वर्जयेन्निशि ।
इति मिताक्षरायां वृद्धशातातपः—३-२८६
तत्स्वरूपं यथा—
अक्षतास्तु यवाः प्रोक्ता भृष्टाधाना भवन्ति ते ॥
भृष्टास्तु व्रीहयो लाजा घटः खाण्डिक उच्यते ॥
कात्यायनस्मृतिः—२८-१
भृष्टयवा व्रीहयो वा धाना इति आचारसारे गदाधरः ।
धाना भृष्टयवे स्त्रिय इत्यमरः । २-६-४७
यवादमश्च ये भृष्टा धानास्ते परिकीर्त्तिताः ।
इति राजनिघण्टुः—६
धाना भृष्टयवेऽङ्कुरे धान्याके चूर्णसक्तुषु इति हैमः

**धान्यम्**— व्रीह्यादि ।
व्रीहयश्चमे यवाश्च मे माषाश्च मे तिलाश्च
मे मुद्गाश्च मे खल्वाश्च मे पियङ्गवश्च मेऽणवश्च
मे श्यामाकाश्च मे नीवाराश्च मे गोधूमाश्च मे
मसूराश्च मे यज्ञेन कल्पन्ताम् ॥ शु० यजु०—१८-१६
यवगोधूमधान्यानि तिलाः कङ्गुकुलत्थकाः ।
माषा मुद्गामसूराश्च निष्पावाः श्यामसर्षपाः ॥
गवेधुकाः सनीवारा आढ्क्योऽथ कुलत्थिकाः ।
चणकास्तिलकाश्चेति धानान्यष्टादशैन्वतु ॥
इति नित्याचारप्रदीपोद्धृतस्कान्दे—पृ०—१३६
चर्मसु यत्पच्यते तद्धान्यमिति पातञ्जलमहाभाष्ये ॥
कलायगोधूमाढ़की यवयावनालशालि-चणक-
मसूरातसी-मुद्गतिलकुलत्थ-श्यामाकमाषराजमाष
वर्त्तुलहरिक-कङ्गुतेरणीषु, इत्यष्टादश धान्यानि ॥
इति वैद्यकनिघण्टौ ॥
शालयो रक्तशाल्याद्या व्रीहयः षष्टिकादयः ।
यवादिकं सूकधान्यं मुद्गाद्यं शिम्बिधान्यकम् ॥
कङ्ग्वादिकं क्षुद्रधान्यं तृणधान्यं च तत्स्मृतम् ।
रक्तशालिर्महाशालिः कलमाषष्टिकापरा ॥
खञ्जरीटोपसाही च जीरकान्या कपिञ्जला ।
सौगन्धो शूकजा चान्या तिलवासी कचोरका ॥
गरुड़ारुकवन्ती च कलमान्या तथापरा ।
बिल्वजा मागधी पीता ता अष्टादश शालयः ॥
कङ्गु श्चतुर्विधः प्रोक्तः श्यामाकश्चीनकः कटः ।
कोद्रवो द्विविधः प्रोक्तः वंशबीजं शरोद्भवम् ॥
कुसुम्भबीजं तोली च या नरो च गवेधुकः ।
द्विजाङ्गजा राजनी च क्षुद्रधान्यगणस्त्वयम् ।
त्रिधा यवश्च गोधूमो मुद्गः षड्विध ईरितः ॥
द्विविधः प्रोच्यते माषो राजमासस्त्रिधामतः ।
मकुष्ट स्तुवरी त्रेधा निष्पावक मसूरकौ ।
त्रेधा चणक उद्दिष्टः कलायश्च त्रिपुंड्रकः ॥
धान्यं शालिव्रीहिशूकशिम्बि क्षुद्रधान्य भेदेन
पञ्चविधम् । इत्यादि वैद्यकशब्दसिन्धौ ।

**धान्यकरणम्**— खलम् ।
अयोनिकण्डनं गोस्थानं धान्यकरणं लवनमिति
पञ्च उञ्छस्थानानि इति नित्याचारे हारीतः ।

**धान्यधेनुः**— दानार्थं धान्यनिर्मित धेनुः ।
वराहपुराणं द्रष्टव्यम् ।

**धान्याचलः**— दानार्थं धान्यनिर्मितपर्वतः मत्स्यपुराणे द्रष्टव्यः ।

**धामार्गवः**— कोषातकी भेदः कोषातकी शब्दे द्रष्टव्यः ।

धामार्गवस्तु पुंसि स्यादपामार्गे च घोषके

इति मेदिनी—२६-५६

**धाय्या**— अग्निप्रज्वलनमन्त्रः ।

**धारणम्**— उपवासः । आहारं विना शरीरस्य धारणमिति निर्णयसिन्धुव्याख्यायाम् ।

सर्वेष्वेवोपवासेषु दिवापारणमिष्यते ।

अन्यथा पुण्यहानिः स्याद्दते धारणपारणात् ॥

**धारणकः**— अधमर्णः ।

तत्कालकृतमूल्यो वा तत्र तिष्ठेदवृद्धिकः।

विना धारणकाद्वापि विक्रीणीत ससाक्षिकम् ।

याज्ञ०—२-६३

**धारणा**— (१) निश्चयः ।

तेषां न दद्याद् यदि तु तद्धिरण्यं यथाविधि ।

उभौ निगृह्य दाप्यःस्यादिति धर्मस्य धारणा ॥

मनुः—८-१८७

अत्र धारणा निश्चय इति कुल्लूकः

(२) शास्त्रमर्यादा ॥

वनस्पतीनां सर्वेषामुपभोगो यथा यथा ।

तथा तथा दमः कार्यो हिंसायामिति धारणा ॥

मनुः—८-२८५

धर्मधारणा शास्त्रमर्यादा इति मन्वर्थचन्द्रिका ॥

(३) प्राणायामत्रयम् ।

प्राणायामत्रयात्मिका एका धारणा, तास्तिस्रो योगशब्दवाच्याः इति विज्ञानेश्वरः ३-२०१

धारयेत्तत्र चात्मानं धारणां धारयन् बुधः इति

(४) द्वादशप्राणायामाः ।

प्रणायामा दश द्वौ च धारणा साभिधीयते ।

द्वे धारणे स्मृते योगे ॥ इति मार्कण्डेय पु०—३६-३५

धारणा द्वादशायामा ध्यानं द्वादश धारणाः ।

ध्यानं द्वादशकं यावत् समाधिरभिधीयते ॥

कूर्म० पु०-२-११—अध्याय ।

(५) चतुश्चत्वारिंशदुत्तरशतं १४४ प्राणायामाः ।

प्राणायामद्विषट्केन प्रत्याहार उदाहृतः ।

प्रत्याहारैर्द्वादशभिर्धारणा परिकीर्त्तिता ॥

स्कन्द-काशी—४१-४६

(६) परंब्रह्मादौ-मनसो धारणं धारणा इति कुल्लूकः

प्राणायामैर्दहेद्दोषान् धारणाभिश्च किल्विषम् ॥

प्रत्याहारेण संसर्गान् ध्यानेनानीश्वरान् गुणान् ॥

मनुः—६-७२

अद्वितीयवस्तुनि अन्तरेन्द्रियधारणंधारणेति

वेदान्तसारः ।

तस्मात् समस्तशक्तीनामाधारे तत्र चेतसः ।

कुर्वीत संस्थितिं सातु विज्ञेया शुद्धधारणा ॥

इति विष्णु० पु०—६-७-७६

ब्रह्मात्मचिन्ताध्यानं स्याद्धारणा मनसो धृतिः ।

अहं ब्रह्मेत्यवस्थानं समाधिर्ब्रह्मणः स्थितिः ॥

इति गारुडे ४६-अध्याये ।

"मनसः संयमस्तज्ज्ञैर्धारणेति निगद्यते"

शङ्खस्मृतिः—७-१५

**धारणाध्ययनम्**— शास्त्रदृढीकरणार्थमध्ययनम् ।
पशुमण्डूकमार्जारश्वसर्पनकुलेषु च ।
अन्तरागमने विद्यादनध्यायमहर्निशम् ॥
इति मनुः—४ १२६
तद्धारणाध्ययनविषयम् ।
गौतमीये तु ग्रहणाध्ययनविषयमितिहरदत्तः
१-१६०
गुरोः सकाशादध्ययनं ग्रहणाध्ययनम् ।
अभ्यासार्थं दृढीकरणार्थं वा
स्वयमध्ययनं धारणाध्ययनम् ।
गुरोः सकाशादपि भ्रमनिराकरणाय
प्रश्नपूर्वकमध्ययनं धारणाध्ययनम्
उपाकर्मोत्सर्जनं च वनस्थानामपीष्यते ।
धारणाध्ययनाङ्गत्वाद् गृहिणां ब्रह्मचारिणाम् ॥
इति गोभिलभाष्ये—३-३-१५

**धारणिकः**— अधमर्णः ।
"धनिक धारणिकयोश्चरितमवेक्षेत" कौट—३-११

**धारा**— निरवच्छिन्नप्रवाहः ।
"सहस्राक्षं शतधारमृषिभिः पावनं कृतम्"
याज्ञ०—१-२८०
न दुष्येत् सन्तताधारा वातोद्धूताश्च रेणवः ।
स्त्रियो वृद्धाश्च बालाश्च न दुष्यन्ति कदाचन ।
आपस्तम्बस्मृतिः—२-३

**धारिका**— पक्वान्नविशेष इति कृत्यरत्नाकरे चण्डेश्वरः ।
लड्डुकान् श्वेतवर्त्तीं च संयावमथ पूरिकाः ।
धारिका घृतपूर्णाश्च पिष्टापूर्पाश्च मण्डकान् ।
क्षीरशाकं च दध्यन्नमण्डं चाशोकवर्त्तिकाः ।
माघाविक्रमशो दद्यादेतानि करकोपरि
कृत्यरत्नाकरः—५०२

**धारी**— यः ग्रन्थं मुखे धारयति ।
अज्ञेभ्यो ग्रन्थिनः श्रेष्ठा ग्रन्थिभ्यो धारिणो वराः ।
धारिभ्यो ज्ञानिनः श्रेष्ठा ज्ञानिभ्यो व्यवसायिनः ॥
मनुः—१२-१०३

**धारोष्णम्**— अल्पोष्णम् ।
दोहनकाले क्षीरे यदुष्णं तद्युक्तं क्षीरम् ।
पिलायास्तु दुग्धाया धारोष्णं यः पयः पिबेत् ।
एष व्यासकृतः कृच्छ्रः श्वपाकमपि शोधयेत् ॥
अत्रिसंहिता—१३०

**धार्मिकः**— यः धर्ममाचरति ।

**धिग्वणः**— ब्राह्मणादायोगव्यां जातः ।
ब्राह्मणादुग्रकन्यायामावृतो नाम जायते ।।
आभीरोम्बष्ठकन्यायामायोगव्यां तु धिग्वणः ॥
मनुः—१०-१५

**धिग्वणी**— धिग्वणजातीया स्त्री ।
धिग्वणी मोचिणी इत्याचारेन्दौ ।

**धिष्ण्यम्**— (१) नक्षत्रम् ।
हस्तो मूलं श्रवणः पुनर्वसु मृगशिरास्तथा पुष्यः ।
पुंसंज्ञितेषु कार्येष्वेतानि शुभानि धिष्ण्यानि ॥
इति हेमाद्रौ स्मृतिचन्द्रिकायामपि-संस्कार—४४

(२) गृहम् ।

स्वर्गे लोके श्ववतां नास्ति धिष्ण्यमिष्टा पूर्त्त क्रोधवशाहरन्ति ।

ततो विचार्य्य क्रियतां धर्मराज त्यज श्वानं नात्र नृशंसमस्ति ॥

इति महाभा०—१७-३-१०

(३) स्थानम् ।

तद्भ्रू विजृम्भः परमेष्ठिधिष्ण्यं—

मापोऽस्य तालु रस एव जिह्वा ॥ भागवते—२-१-३०

"धिष्ण्यं स्थानाग्निसद्मसु शक्तावृक्षे च"

इति मेदिनी ।

**धीः**— हिताहितविवेक इति विज्ञानेश्वरः याज्ञ०—३-६६

शास्त्रादितत्त्वज्ञानमिति कुल्लूकः—६-९२

धृतिः क्षमादमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।

धीर्विद्यासत्यमक्रोधो दशकं धर्म धर्मलक्षणम् ।॥

मनुः—६-९२

**धीवरः**- वैश्यात् क्षत्रियायां जातः इति गौतमः—१-४-१७

उत्कलेषु कैवर्त्ता एव धीवरा उच्यन्ते ॥

मार्गवदासेत्यादिसंज्ञकास्ते निषादादायोगव्यां जाताः ।

निषादो मार्गवं सूते दासं नौकर्मजीविनम् ।

कैवर्त्तमिति यं प्राहुरार्य्यावर्त्तनिवासिनः ॥

मनुः—१०-३४

**धूपः**— सुगन्धधूमः ।

विष्णुधर्मोत्तरे-अमृताधूपः ।

अगुरु चन्दनं मुस्ता सिह्लकं वृषणं तथा ।

समभागं तु कर्त्तव्यं धूपोऽयममृताह्वयः ॥

अनन्तधूपः—

श्रीखण्डं ग्रन्थिसहितमगुरुसिह्लकं यथा ।

मुस्तामिन्दुं च धूतेशं शर्करा च ददेदिह ॥

इत्येषोऽनन्तधूपश्च कथितो देवसत्तम ।

प्रबोधधूपः—

कृष्णागुरुं सिह्लकं च वालकं वृषणं तथा ।

चन्दनं तगरं मुस्ता प्रबोधः शर्करान्वितः ॥

प्राजापत्यधूपः—

कर्पूरं चन्दनं मांसी त्वक् पत्रैलालवङ्गकम् ।

अगुरुं सिह्लकं धूपं प्राजापत्यं प्रचक्षते ॥

महाङ्गधूपः—

श्रीखण्डं नागरं कुष्टं कर्पूरं सिह्लकं तथा ।

महाङ्गोऽयं स्मृतो धूपः प्रियो देवस्य सर्वदा ॥

यक्षधूपः—

कर्पूरं चन्दनं कुष्ठमुशीरं सिह्लकं तथा ।

ग्रन्थिकं वृषणं चैव कुङ्कुमं गुञ्जनं तथा ॥

हरीतकी तथोशीरं यक्षधूप उदाहृतः ॥

विजयधूपः—

वृषणं सिह्लकं विप्रश्रीखण्डमगुरुं तथा ।

कर्पूरं च तथा मुस्तां शर्करां सत्वचं द्विज ॥

इत्येष विजयो धूपः स्वयं देवेन निर्मितः ॥

**धूपनः**— शालवृक्ष निर्यासः ।

झुणा इति भाषायाम् इति शब्दकल्पद्रुमे ।

**धूमशिखा**— वेतनम् ।

यत् कर्मकराय भृतिरूपेण दीयये इति धर्मकोशे

पैतृकं क्रीतमाधेयमन्वाधेयं प्रतिग्रहम् ॥

यज्ञादुपगमो वेणिस्तथा धूमशिखाष्टमी ॥

वसिष्ठः—१६-१६

**धूर्त्तः**— द्यूतक्रीड़ाप्रवर्त्तकः ।

**धूस्तूरः**— उन्मत्तवृक्षः ।

दुरदुरा इति प्रसिद्धः शिवप्रियपुष्पवृक्षविशेषः ।

**धृतचारकम्**— चिरस्थितचारफलम् चारोली इति प्रसिद्ध इति निर्णयसिन्धौ—२६४ (निर्णय सागर) वचनं तु कपाल शब्दे द्रष्टव्यम् ॥

**धृतिः**— धैर्यम् ।

इष्ट वियोगेऽनिष्टप्राप्तो वा प्रचलितचित्तस्य यथा— पूर्वमवस्थानम् इति विज्ञानेश्वर—३-६६

धृत्या यया धारयते मनः प्राणेन्द्रियक्रियाः ।
योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्विकी ॥ ३३
यया तु धर्मकामार्थान् धृत्याधारयतेऽर्जुन ।
प्रसङ्गेन लाकाङ्क्षी धृतिः सा पार्थ राजसी ॥ ३४
यया स्वप्नं भयं शोकं विषादं मदमेव च ।
न विमुञ्चति दुर्मेधा धृतिः सा तामसी मता ॥ ३५

भगवद्गीता—१८-३३-३५

**ध्यानम्**- (१) ध्यानम् अभिमतदेवानुचिन्तनमिति हेमाद्रिः

ब्रह्मचर्यं दया क्षान्तिर्ध्यानं सत्यमकल्पता ।
अहिंसाऽस्तेयमाधुर्यं दमश्चेति दमा दश ॥

याज्ञ०—३-३१२

(२) ध्यानं नाम १७२८

अष्टाविंशत्युत्तरसप्तदशशतं प्राणायामाः ।

तदुक्तं स्कान्दे काशीखण्डे एकचत्वारिंशदध्याये—

प्राणायामद्विषट्केन प्रत्याहार उदाहृतः ।
प्रत्याहारैर्द्वादशभिर्धारणा परिकीर्त्तिता ॥ ४४
भवेदीश्वरसंगत्यै ध्यानं द्वादशधारणम् ।
ध्यानं द्वादशकेनैव समाधिरभिधीयते ॥ ४५
समाधेः परतो ज्योतिरनन्यस्वप्रकाशकम् ।
तस्मिन् दृष्टे क्रियाकाण्डं यातायातं निवर्त्तते ॥ ४६

कूर्मपुराणे तु—

धारणा द्वादशायाम ध्यानं द्वादशधारणाः ।
ध्यानं द्वादशकं यावत् समाधिरभिधीयते ॥

कूर्म पु०—२-११३ (अध्यायः)

अत्रिस्मृतौ—

उपलब्धिः स्मृतिर्ध्यानं संकल्पः प्रणवं प्रति ।
कल्पना भावना चिन्ता ध्यानमित्यभिधीयते ॥

अत्रिस्मृतिः—१-५

महाभारते—

ज्ञानं तत्त्वार्थसम्बोध शमश्चित्तप्रशान्तता ।
दया भूतहिते चित्तं ध्यानं निर्विषयं मन्यं ॥

इति परिभाषा प्रकाशे—३४

**ध्यानी**— वानप्रस्थः ।

अलाभे सति भिक्षूणां भोजयेद्ध्यानिनः शुभान् ।
इति श्राद्धमयूखे ब्रह्मपुराणम् ।

**ध्रियमाणः**— (१) वर्त्तमान, जीवन् इत्यर्थः ।

ध्रियमाणे तु पितरि पूर्वेषामेव निर्वपेत् ।
विप्रवद्वापि तं श्राद्धे स्वकं पितरमाशयेत् ॥

मनुः—३-२२०

(२) स्थाप्यमानः ।

सकेशानि प्रच्छिद्यानडुहे गोमयपिण्डे प्रास्यत्युत्तरतो ध्रियमाणे ॥ पारस्करः—२-१-१२

**ध्रुवः**— उत्तरदिग्वर्त्ती तारकाविशेषः ।

अस्तमिते ध्रुवं दर्शयति-ध्रुवमासि ध्रुवं त्वा पश्यामि ध्रुवे धिपोष्येमयी ।
मह्यं त्वादाद् वृहस्पतिर्मया पत्या प्रजावती संजीव

शरदः शतम् इति ॥ पारस्कर गृ०—१-८-१६

**ध्रुवा**— (१) भिक्षावृत्तिः ।
सन्दर्शनीति तस्या नामान्तरम् ।
तल्लक्षणंयथा-बोधा० धर्म—३-२-६
ध्रुवायां वर्त्तमानः शुक्लेन वाससा शिरो वेष्टयति
भूत्यै त्वा शिरोवेष्टयामिति ।
ब्रह्मवर्चसमसि ब्रह्मवर्चसाय त्वेति कृष्णाजिनमादत्ते ।
अब्लिंगाभिः पवित्रम् । बलमसि बलायत्वेति
कमण्डलुम् ।
धान्यमसि पुष्टयै त्वेति वीवधम् ।
सखा मा गोपयेति दण्डम् ।
अथोपनिष्क्रम्य व्याहृतीर्जपित्वा दिशामनुमन्त्रणं
जपति पृथिवी चान्तरीक्षं च द्यौश्च नक्षत्राणि
च या देशः ।
अग्निर्वायुश्च सूर्यश्च पान्तु मां पथि देवता इति
मानस्तोकीयं जपित्वा ग्रामं प्रविश्य गृहद्वारे
गृहद्वार आत्मान वीवधेन सह सन्दर्शनाद्
सन्दर्शनीत्याचक्षते ॥ इति
(२) स्रुग्भेदः ॥ अमरः—२-७-२५
विकङ्कतकाष्ठनिर्मिता जुहूसदृशी होमार्थं स्रुवेण
गृह्यमाणस्याज्यस्याधारभूता यागसमाप्तिपर्यन्तं
वेद्यां विद्यमानतया स्थिरत्वदर्शनात् ध्रुवति
अत्र चलिता भवतीति व्युत्पत्त्याध्रुवा पदवाच्या ।
इति श्रौतपदार्थनिर्वचने ।
तस्य ह वा एतस्य ब्रह्मयज्ञस्य वागेव जुहूर्मन
उपभृत चक्षुध्रुवा" इत्यादि बोधा०—२-११-८

**ध्रुवाणि**— रोहिणी उत्तरात्रयं ध्रुवनक्षत्राणि इति हेमाद्रौ

**ध्वजः**— (१) चिह्नम् ।
गुरुतल्पे भगः कार्यः सुरापाने सुराध्वजः ॥
स्तेये च श्वपदं कार्यं ब्रह्महण्यशिराः पुमान् ॥
मनुः—९-२३७
(२) चतुरस्रवस्त्रयुक्तो दण्डः ॥
पताका तु तिर्यक्छिन्न वस्त्रयुक्तो दण्ड इति तयोर्भेदः
केशववैजयन्ती द्रष्टव्या, विष्णुः—६३-२८

**ध्वजवान्**— ध्वजवान् मद्यविक्रयजीवी, शौण्डिक इति
कुल्लूकः ।
न राज्ञः प्रतिगृह्णीयादराजन्य प्रसूतितः ।
सूना चक्रध्वजवतां वेशेनैव च जीवताम् ॥
मनुः—४-८४

**ध्वजाहृतम्**— धनम् । रणेजितं धनम् ।
संग्रामादाहृतं यत्तु विद्राव्य द्विषतां बलम् ।
स्वाम्यर्थे जीवितं त्यक्त्वा तद्ध्वजाहृतमुच्यते ॥
इयि दायभागे कात्यायनः । कात्यायनस्मृति-
सारोद्धारे—८७८

**ध्वजाहृतः**- दासविशेषः स च संग्रामे स्वामिसकाशात् जितः
ध्वजाहृतो भक्तदासो गृहजः क्रीतदत्त्रिमौ ।
पौत्रिको दण्डदासश्च सप्तैते दासयोनयः ॥
मनुः—८-४१५
ध्वजा गृहदासीति व्यवहारप्रकाशे मित्रमिश्रः पृ०-३२०

**ध्वजिनी**— सीमा । ध्वजतुल्यैः वृक्षादिभिरन्विता सीमा ।
ध्वजिनी मत्सिनी चैव नैधानी भयवर्जिता ।
राजशासननीता च सीमा पञ्चविधा स्मृता ॥
इति नारदः मिताक्षरायाम्—२-१५२

**ध्वाङ्क्षः**— काकः । मत्स्यादपक्षिविशेषश्च ।
काकमत्स्यात्खगौ ध्वांक्षौ इत्यमरः—३-३-२१६
ध्वांक्षो मत्स्यात् खगे काके भिक्षुके तक्षकेऽपि च
इति मेदिनी ॥